# मृच्छकटिकम्।

[ प्रकरणम् ]

कविवर-शूद्रकनृपति-विरचितम्।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया,

तथा तदात्मजाभ्यां

पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्या-
रत्नाभ्यां परिवर्त्तितया परिवर्द्धितया च टीकया समलङ्कृत्य
प्रकाशितम्।

षष्ठसंस्करणम्।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम्।

ई १८३८।

प्रकाशक— पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २न०, रमानाथ मजुमदार ष्ट्रीट्
आम्हार्ष्ट ष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# रङ्गप्रविष्टाभिनयपात्राणि ।

## पुरुषाः ।

| | | |
|---|---|---|
| प्रस्तावनायाम् ··· | सूत्रधारः | ··· प्रधाननटः । |
| प्रथमाङ्के ··· | मैत्रेयः | ··· चारुदत्तस्य प्रियवयस्यः । |
| | चारुदत्तः | ··· द्विजसार्थवाहः दरिद्री युवा । |
| | विटः | ··· शकारसहचरः । |
| | संस्थानकः (शकारः) | ··· राज्ञः पालकस्य श्यालकः । |
| | चेटः | ··· शकारदासः । |
| | वर्द्धमानकः | ··· चारुदत्तस्य दासः । |
| द्वितीयाङ्के ··· | संवाहकः | ··· द्यूतेन निःशेषपरिक्षीणविभवः कश्चन जनः ; यः पश्चात् शाक्यश्रमणकः संवृत्तः । |
| | माथुरः | ··· सभिकः । |
| | द्यूतकरः, दर्दुरकः | ··· द्यूतकारौ । |
| | कर्णपूरकः | ··· वसन्तसेनायाः हस्तिपकः । |
| तृतीयाङ्के ··· | शर्विलकः | ··· ब्राह्मणचौरः, आर्यकबन्धुः, मदनिकाप्रणयी । |
| चतुर्थाङ्के ··· | चेटः | ··· वसन्तसेनायाः दासः । |
| | बन्धुलः | ··· वेश्यापुत्रः । |
| पञ्चमाङ्के ··· | कुम्भीलकः | ··· वसन्तसेनायाः दासः । |
| षष्ठाङ्के ··· | रोहसेनः | ··· चारुदत्तस्य पुत्रः । |
| | स्थावरकः | ··· संस्थानकस्य धर्मप्राणः दासः । |
| | आर्यकः | ··· गोपालबालकः, पश्चात् राजा । |
| | वीरकः, चन्दनकः | ··· नगरपालौ । |
| अष्टमाङ्के ··· | भिक्षुः | ··· |

| | | | |
|---|---|---|---|
| नवमाङ्के ... | शोधनकः ... | | |
| | अधिकरणिकः ... | | |
| | श्रेष्ठी ... | | |
| | कायस्थः ... | | |
| | राजपुरुषाः ... | | |
| दशमाङ्के ... | आहीन्तः } गोहः } | ... चाण्डालद्वय । | |
| | नागरिकाः । | | |

## स्त्रियः ।

| | | | |
|---|---|---|---|
| प्रस्तावनायाम् ... | नटी ... | सूत्रधारपत्नी । | |
| प्रथमाङ्के ... | रदनिका ... | चारुदत्तस्य दासी । | |
| | वसन्तसेना ... | चारुदत्तानुरागिणी गणिका । | |
| द्वितीयाङ्के ... | चेटी ... | वसन्तसेनायाः दासी । | |
| | मदनिका ... | वसन्तसेनायाः अपरा दासी । | |
| तृतीयाङ्के ... | धूता ... | चारुदत्तस्य पत्नी । | |
| पञ्चमाङ्के ... | छत्रधारिणी ... | | |
| षष्ठाङ्के ... | चेटी ... | चारुदत्तस्य अपरा दासी । | |
| नवमाङ्के ... | वृद्धा ... | वसन्तसेनायाः माता । | |

नायकश्चारुदत्तो धीरप्रशान्तः । अनुरक्ता वेश्या वसन्तसेना, कुलजा स्वकीया मध्या धूता च नायिके आलम्बनविभावौ । प्रावृट्समयोदयादयः उद्दीपनविभावाः । अन्योऽन्यालापाचिक्रियादयोऽनुभावाः । निर्वेदादयो व्यभिचारिणः । रतिः स्थायी । सम्भोगशृङ्गाररसोऽङ्गी । करुणहास्यादयोऽङ्गरसाः । विटचेटविदूषकाद्याः सहायाः । रीतिः लाटी । प्रसादाख्यो गुणः । प्रस्तावना कथोद्घातरूपा ।

## विशेष-द्रष्टव्यम् ।

ग्रन्थस्यास्य विस्तृताभिनवसमालोचना या पूर्वसंस्करणे मूलग्रन्थेन सहैव मुद्रिता आसीत्, संस्करणेऽस्मिन् सा पृथक्पुस्तकाकारेण मुद्रिता, पादोनराजतमुद्रालभ्या च (॥।०) ।

# मृच्छकटिकम् ।

## प्रथमोऽङ्कः ।

### नान्दी । (क)

पर्य्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ १ ॥

---

टीकाकृन्मङ्गलाचरणम् ।

स्मारं स्मारं त्रिभुवनपतिं शैलराजात्मजेशं
ध्यायं ध्यायं गुरुपदयुगं ज्ञानदृष्टिप्रदं तत् ।
दुर्ज्ञेयांशप्रकटनपरां शब्दकोशैः सुबोधां
निर्मातीमां विवृतिममलामेष सारांशपूर्णाम् ॥

(क) नन्दयतीति नान्दी, शुभशंसनेन लोकानामानन्दजननात नान्दीति संज्ञा ; तदुक्तम् ;—"आशीर्वचनसंयुक्ता स्तुतिः (नित्यं) यस्मात् प्रयुज्यते । देवद्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥" इति । सा चात्र अष्टपदा "पदैर्युक्ता द्वादशभि-रष्टाभिर्वा पदैरुत" इति वचनात् । अष्टपदत्वादिकन्तु सुविविच्य लिखितमस्माभि: अभिज्ञानशकुन्तलस्य अभिनवटीकायाम् ।

निर्विघ्नेन प्रारम्भितग्रन्थपरिसमाप्तिकामः कविः शम्भुसमाधिवर्णनरूपमङ्गल-माचरति, पर्य्यङ्केति ।—पर्य्यङ्कः,—योगपट्टः, योगाभ्यासार्थं योगिभिः पट्टमेतं धार्य्यते इति हि योगशास्त्रे प्रसिद्धं, विवृतमेतत् तत्रैव विस्तरेण, तस्य ग्रन्थिबन्धाय—ग्रन्थिरचनार्थं, सर्पेणैव तत्सम्पादनाय इति भावः, द्विगुणितः,—द्वाभ्यां गुणितः, द्विरावृत्तीकृत इत्यर्थः, यो भुजगेन—सर्पेण, आश्लेषः,—वेष्टनं, तेन संवीते—संरुद्धे, जानुनी—जङ्घोरुमध्यभागौ यस्य तादृशस्य, अथवा,—पर्य्यङ्कस्य—आसनविशेषस्य, ग्रन्थिः,—ग्रथनं, रचनमित्यर्थः, तस्य बन्धः तस्मिन् द्विगुणितः,—द्वाभ्यां गुणितः, द्विरावृत्त

अपि च,—

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः।
गौरीभुजलता यत्र विद्युल्लेखेव राजति ॥ २ ॥

इत्यर्थः, यो भुजगः,—सर्पः, तस्य आश्लेषेण—वेष्टनेन, संवीते—संयते, जानुनी यस्य तथोक्तस्य, अन्तः,—अभ्यन्तरे, प्राणानां—शरीरस्थवायूनाम्, अवरोधेन—निरोधेन, उपरतं—विशेषेण निहतं, सकलं ज्ञानं—बाह्यवस्तववबोधः यस्य सः, अत एव बद्धानि—विषयेभ्यः संयतानि, इन्द्रियाणि येन सः, अन्तर्निगृहीतेन्द्रिय इत्यर्थः, समाधिसमये इन्द्रियनिग्रहस्यावश्यकत्वात्; यदुक्तं योगसारे,—"करणान्यवहिष्कृत्य स्थाणुर्वाऽवलात्मकः। आत्मानं हृदये ध्यायन्नासाग्रन्यस्तलोचनः॥" इति, ततश्च अन्तःप्राणरोधव्युपरतसकलज्ञानश्चासौ बद्धेन्द्रियश्चेति तादृशस्य, [ विशेषणयोरेकस्य विशेष्यत्वकल्पनया नीललोहितादिवत् समासः ] कुम्भकेन इन्द्रियनिग्रहेण च बाह्यज्ञान-रहितस्येत्यर्थः, तत्त्वदृष्ट्या—सम्यग्दर्शनेन, ब्रह्मदर्शनेन वा, ( "तत्त्वं ब्रह्मणि याथार्थ्ये" इत्यमरः ) आत्मनि—स्वस्मिन्, व्यपगतकरणं—निरिन्द्रियं, देहसम्बन्धाभावादिति भावः; करणं चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति त्रयोदशविधम्; "करणं त्रयोदशविधम्" इति साङ्ख्योक्तेः; यद्वा,—क्रियाविशेषणमेतत्; तथात्वे करणं—हेतुः, व्यपगतं करणं यत्र तत् व्यपगतकरणम्—अहेतुकं यथा स्यात् तथा इत्यर्थः, शुद्धसत्त्व-विग्रहस्य योगज्ञानमयस्य योगगम्यस्य योगिभिश्चिन्त्यमानस्य हि भगवतः शम्भोः योग-करणे कारणानावश्यकत्वात् इति भावः; आत्मानं—परमात्मानमेव, न तु अन्यत् किमपि, पश्यतः,—साक्षात्कुर्वतः, स्वभिन्नत्वेन परमात्मनोऽभावादित्याशयः, शम्भोः,—हरस्य, शर्वेन—संहारोन्मुखत्वात् सृष्टिविमुखेन इति यावत्, ईक्षणेन—दृष्ट्या, घटितः,—कृतः, यो लयः,—प्रलयः तस्मिन्, प्रलयसमये इत्यर्थः, ब्रह्मणि—परमात्मनि, लग्नः,—निहितः, समाधिः,—समाधानं, चित्तैकाग्र्यमित्यर्थः, एकाग्रतया ब्रह्मचिन्तनमिति यावत्, ( कर्तृ ) वः,—युष्मान्, रक्षस्यानिति भावः, पातु—रक्षतु। स्रग्धरा वृत्तं,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात्। अस्य खलु श्लोकस्य नान्दीत्वात् मङ्गलार्थम् आदौ म-गणः सन्निवेशितः, तथा च भामहः,—"चेम सर्वगुरुर्दत्ते म-गणो भूमिदैवतः" इति। अस्य प्रस्तारसङ्ख्या २०२०११ तमी० ॥ १ ॥

पुनरप्यस्यैव भवानीपतेः स्वरूपवर्णनात्मकं मङ्गलमाचरन्नाह, पात्विति।—श्यामा-म्बुदोपमः,—नवजलधरच्छविः, नीलवर्ण इत्यर्थः, नीलकण्ठस्य—हरस्य, कण्ठः,—गलदेशः, वः,—युष्मान्, पातु—रक्षतु। यत्र—यस्मिन् कण्ठे, गौरीभुजलता—

नान्द्यन्ते (ख) सूत्रधारः (ग) ।

सूत्र । अलमनेन परिषत्कुतूहलविमर्दकारिणा परिश्रमेण (घ) । एवमहमार्य्यमिश्रान् प्रणिपत्य विज्ञापयामि, यदिदं वयं

---

गौर्य्याः—पार्वत्याः, भुज एव लता—भुजवल्लीत्यर्थः, वेष्टनसाधर्म्यात् भुजे लतात्वारोपः ; विद्युल्लेखा इव—सौदामनीरेखावत्, विराजते—विशेषेण राजते, शोभते इत्यर्थः । [ अत्र गौरीभुजयोरभेदेन लतात्वाध्यवसानाद्रूपकं, तथा विद्युल्लेखेवत्यादावुपमा चेति रूपकानुप्राणितोपमाऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम्,—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ।

अस्मिन्नेव श्लोकद्वये काव्यार्थसूचकः कश्चिदर्थो लक्षणीयः "श्लोकैः काव्यार्थसूचकैः" इत्यालङ्कारिकवचनात् । स यथा,—"संवीतजानोः" इति पदेन उपचारोक्तवसन्तसेनाबधस्य चारुदत्तस्य संयमनम् ; "अन्तःप्राणावरोधव्यपगतसकलज्ञानरुद्धेन्द्रियस्य" इति वाक्येन राजद्वारोपस्थापितस्य चारुदत्तस्य अवस्थावर्णनम् ; यद्वा,—लिङ्गविपरिणामेन "अन्तःप्राणावरोध……रुद्धेन्द्रियायाः" इत्युक्त्या शकारहस्तेन कण्ठनिपीडनमृतायाः वसन्तसेनायाः अवस्थावर्णनम् ; तत्त्वदृष्ट्या आत्मदर्शनादिना परब्रह्मचिन्तनं हि रूपकं, तच्च तदानीं मपत्ताया: चारुदत्तपदव्याः अन्तर्भाववर्णनम् इति । द्वितीयश्लोके हि नीलकण्ठपदेन चारुदत्तस्य, तथा गौरीपदेन सुरूपायाः वसन्तसेनायाः उपलक्षणम् । "श्यामाम्बुदोपमः कण्ठः" इति उपमाबलेन वसन्तसेनायाः कण्ठे निपीडनजन्यः कालिमा, उभयत्र लिङ्गविपरिणामेन वसन्तसेनायाः कण्ठः चारुदत्तस्य हस्तस्य बोध्यते, इति सुधीभिः अनुध्यातव्यः ॥ २ ॥

(ख) नान्द्याः,—उक्तलक्षणाया आशीर्वादरूपाया अष्टपदात्मिकायाः इत्यर्थः, अन्ते—अवसाने ।

(ग) सूत्रधारः,—तन्नामा प्रधाननटः, "नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥" इति लक्षणात् । "सूत्रधारः पठेन्नान्दीम्" इति नियमात् ; कथयतीति पदम् अध्याहार्य्यम्, एवं सर्वत्र ।

(घ) परिषदित्यादि ।—परिषीदन्तीति व्युत्पत्त्या परिषच्छब्दोऽत्र सभ्यवाचकः ; परिषदां—सभ्यानां, यत् कुतूहलम्—अभिनवनाट्यदर्शने चाञ्चल्यं, व्यग्रता इति यावत्, "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" इति दर्पणोक्तेः, तस्य विमर्दः,—व्याघातः, समयातिपातादिति भावः, तत्कारिणा—तज्जनकेन, परिश्रमेण—नान्दीपाठाडम्बरजनितप्रयासेनेत्यर्थः ।

मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः। एतत्कविः (ङ) किल,—

द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च।
द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः॥ ३॥

(ङ) आर्य्यमिश्रान्—आर्य्याः,—मान्याः, मिश्राः,—बहुदर्शितया सम्भ्रान्ताः, आर्य्याश्च ते मिश्राश्चेति तान्—सम्माननीयसभ्यानिति यावत्। मृच्छकटिकं—मृदा निर्मिता शकटिका—क्षुद्रशकटं यत्रेति ["अत इनिठनौ" (५।२।११५ पा०) इति ठन्] मृदः शकटिका अस्मिन्निति वा बहुव्रीहिः [प्राचीनपुस्तकेषु "मृच्छकटिका" इति स्त्रीलिङ्गपाठः दृश्यते, तत्र षष्ठीसमास एव, षष्ठे अङ्के चैतत् स्फुटीभविष्यति] प्रकरणं प्रक्रियते प्रस्ताव्यते यदितिव्युत्पत्त्या रूपकभेदः, तदुक्तं,—"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्। शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्॥ सापायधर्म-कामार्थ-परो धीरप्रशान्तकः। नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्॥ तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः। कितवद्यूतकारादि-विटचेटकसङ्कुलः॥" इति; अन्यत् सर्वं नाटकवत् ज्ञेयम्। अत्र प्रकरणे नायकः चारुदत्तः ब्राह्मणः धीरप्रशान्तः; तल्लक्षणं यथा,—"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्" इति। नायिका चात्र वसन्तसेना वेश्या, प्रतिनायिका च चारुदत्त-ब्राह्मणी धूता कुलजा। अत्र शृङ्गार-रसोऽङ्गी, तेन कुलजा-वेश्ययोरुभयोरपि नायिकयोः सद्भावात्, तथा कितवद्यूतकारादि-सङ्कुलत्वात् प्रकरणस्यास्य तृतीयभेद एवान्तर्भाव इति बोध्यम्। अन्यच्च प्रकरणलक्षणं यथा,—"यत्र क्वचित् स्वबुद्ध्या वस्तु शरीरञ्च नायकञ्चैव। विरचयति समुत्पाद्य तज्ज्ञेयं प्रकरणं नाम॥" इति। प्रयोक्तुम्—अभिनेतुं, व्यवसिताः,—प्रवृत्ताः। एतत्कविः,—एतस्य प्रकरणस्य रचयिता इत्यर्थः।

कवेः अलौकिकाकारप्रतिभाप्रभावादिमत्त्वात् तत्प्रणीतकाव्यादिकमपि गुणवद्भवतीति प्रकरणगौरवं प्रतिपिपादयिषुस्तस्य स्वरूपवर्णनमारभते; द्विरदेन्द्रगतिरिति।—द्विरदेन्द्रस्य—गजपतेः, गतिरिव गतिर्यस्य सः, गजेन्द्रमन्दगमन इत्यर्थः, चकोरनेत्रः,—चकोरस्य—स्वनामप्रसिद्धपक्षिविशेषस्य, नेत्रे इव नेत्रे यस्य सः, चकोरवत् मनोहरनयन इत्यर्थः, परिपूर्णः,—सकलकलोपेतः, इन्दुरिव मुखं यस्य सः, सकलकलापतिसुन्दरानन इत्यर्थः, सुविग्रहः,—सुन्दरशरीरः, द्विजमुख्यतमः,—द्विजेषु मुख्यतमः, क्षत्रियश्रेष्ठ इत्यर्थः, ("त्रयो वर्णा द्विजाः" इति वचनात् क्षत्रियस्यापि द्विजत्वं नानुपपन्नम्)। अगाधम्—

अपि च,—

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादात् व्यपगततिमिरे चक्षुषी चोपलभ्य ।
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा
लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥ ४ ॥

अतलस्पर्शम्, अपरिमितमित्यर्थः, सत्त्वं—बलं, गुणो वा यस्य सः, गम्भीरस्वभाव इति वाऽर्थः, शूद्रक इति प्रथितः,—शूद्रक इति नाम्ना प्रख्यातः, कविः,—काव्यरचयिता, बभूव । अत्र उपमा नाम अलङ्कारः । मालभारिणी वृत्तं, तल्लक्षणं यथा,—"विषमे स-स-जा यदा गुरू चेत् स-भ-रा येन तु मालभारिणीयम्" इति ॥ ३ ॥

कवेः शिक्षां, तपस्यां, पुत्रे राज्यसमर्पणम्, अश्वमेधयागानुष्ठानं, जीवनकालञ्च वर्णयति, ऋग्वेदमिति ।—शूद्रकः,—एतद्ग्रन्थप्रणेता कविः, ऋग्वेदं, सामवेदं, गणितम्—अङ्कशास्त्रं, कलां—चतुःषष्टिप्रकारां नृत्यगीतादिरूपां विद्यां, तथा वैशिकीं—वैश्यजातिसम्बन्धिनीं, हस्तिशिक्षां—हस्तिपालनचालनादिकौशलं, ज्ञात्वा—विज्ञाय. यद्वा,—वैशिकीमिति कलामित्यस्य विशेषणम्, "वेशो वेश्याजनाश्रयः" इति कोषात् वेश्याजनविषयिणीमित्यर्थः, अथवा,—वेशः,—अग्निवेशाख्यः कश्चित् राजा, तत्कृतां कलां—चतुःषष्टिकलाप्रतिपादकप्रबन्धरूपां कामविद्यामित्यर्थः ; शर्वप्रसादात्—शिवानुग्रहात्, व्यपगततिमिरे—व्यपगतं—विनष्टं, तिमिरम्—अज्ञानरूपान्धकारः, रोगविशेषो वा याभ्यां तादृशे, चक्षुषी उपलभ्य च—ज्ञानचक्षुषी चर्ममये वा चक्षुषी प्राप्य इत्यर्थः, पुत्रं—निजसुतं, राजानं—राजपदारूढमित्यर्थः, वीक्ष्य—दृष्ट्वा, पुत्रं राज्यस्थं कृत्वा इति यावत्, परमसमुदयेन—परमः,—सातिशयः, समुदयः,—समुन्नतिः यस्मात्, अथवा,—परमः,—महान्, समुदयः,—समुद्योगः यस्य, किंवा,—परमः समुदयः,—समृद्धिः यत्र तादृशेन, अश्वमेधेन [ धान्येन धनवान् इत्यादिवत् अभेदे तृतीया ] इष्ट्वा—अश्वमेधयागं कृत्वा इत्यर्थः, तथा दशदिनसहितं शताब्दं—दशदिनाधिकशतवत्सरपरिमितम्, आयुः,—जीवनकालं, लब्ध्वा च—तावत्कालं जीवित्वा चेत्यर्थः, अग्निं प्रविष्टः,—यज्ञीयाग्नौ प्राणांस्तत्याज इत्यर्थः । एषा उक्तिः सूत्रधारस्यैवेति ज्ञेया । केचित् तु,—"लब्ध्वा चायुः शताब्दम्···अग्निं प्रविष्टः" इति जातकादिगणनद्वारा शर्वप्रसादलब्धज्ञानचक्षुषा वा स्वीयभाविघटनाऽऽवलीमवगत्य कविना स्वयमेव रचितमिदम् ; "अग्निं प्रविष्टः", इत्यतीतकालप्रयोगस्तु ग्रन्थरचनोत्तरं सूत्रधारकर्तृकाभिनेयवचनापेक्षया सङ्गच्छते इत्याहुः, तत्तु वातूलताविजृम्भणत्वाद्धेयम्,

अपि च,—

समरव्यसनी प्रमादशून्यः ककुदो वेदविदां तपोधनश्च ।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥ ५ ॥

अस्याश्च तत्कृतौ,—

अवन्तिपुर्य्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः ।
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥ ६ ॥

अग्निप्रवेशश्च सर्वस्वारनामके यज्ञविशेषे यथा शरभङ्गमुनिना कृतस्तद्वत् बोद्धव्यः । स्रग्धरा वृत्तम् ॥ ४ ॥

पुनश्च शूद्रकं विशेषयति, समरव्यसनीति ।—यः शूद्रकः समरव्यसनी—युद्धासक्तः, सततं समरपटुरिति यावत्, प्रमादशून्यः,—अवहितः, अवधानतावानित्यर्थः, ( "प्रमादोऽनवधानता" इत्यमरः ) वेदविदां ककुदः,—प्रधानं, श्रेष्ठ इत्यर्थः, ( "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः ) तपोधनः,—तपोनिष्ठः, परवारणबाहुयुद्धलुब्धः,—परेषां वारणैः,—हस्तिभिः सह, बाहुयुद्धे लुब्धः,—कृतबाहुयुद्ध इत्यर्थः, परे—शत्रव एव, वारणाः तैः सह बाहुयुद्धे लुब्ध इति वाऽर्थः, अथवा,—परवारणौ—शत्रुजयिनौ, यौ बाहू ताभ्यां युद्धे लुब्धः,—बाहुयुद्धप्रिय इत्यर्थः ; तथा क्षितिपालः,—भूपतिश्च, बभूव—आसीत् ; किलेति प्रसिद्धौ । मालभारिणी वृत्तम् ॥ ५ ॥

कवेः स्वरूपमुक्त्वा इदानीम् एतत्प्रकरणीयनायकस्य स्वरूपवर्णनमारभते, अवन्तिपुर्य्यामिति ।—अवन्तिपुर्य्याम्—उज्जयिनीनगर्य्यां, द्विजसार्थवाहः,—द्विजः,—ब्राह्मणः, तथा सार्थवाहः,—वाणिज्यव्यवसायी च, यद्वा,—द्विजानां—ब्राह्मणादीनां, सार्थं—समूहं, वहति—अन्नपानादिना पोषयति, अथवा,—तान् वाहयति—दानशीलत्वात् सर्वप्रकारेण चालयति, यद्वा,—सार्थं—वणिक्समूहं, वाहयति—क्रयविक्रयार्थम् इतस्ततः प्रेषयति इति सार्थवाहः, स्वीयार्थेन व्यापारिकैः व्यापारकर्त्ता इत्यर्थः, [ सर्वत्र "कर्मण्यण्" ( ३।२।१ पा० ) इत्यण् ; "सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके" इति मेदिनी ] ; दरिद्रः,—निर्द्धनः, चारुदत्तः,—चारुदत्त इति नाम्ना किल प्रसिद्धः, युवा,—युवकः, आसीदिति शेषः ; वसन्तशोभा इव—वासन्ती श्रीरिव, वसन्तसेना—तदाख्या काचित्, गणिका—वेश्या च, ( "वारस्त्री गणिका वेश्या" इत्यमरः ) यस्य—चारुदत्तस्य, गुणानुरक्ता—गुणैः,—दयादाक्षिण्यादिभिः, सुरतक्रियाविशेषैः वा, अनुरक्ता—अनुरागिणी, आसीदिति शेषः । अत्र उपमाऽलङ्कारः । उपेन्द्रवज्रा वृत्तम्,—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ॥ ६ ॥

तयोरिदं सत्सुरतोत्सवाश्रयं, नयप्रचारं, व्यवहारदुष्टताम्।
खलस्वभावं भवितव्यतां तथा चकार सर्वं किल शूद्रको नृपः॥ ७॥

[परिक्रम्यावलोक्य च] अये! शून्येयमस्मत्सङ्गीतशाला!! क्व नु गताः कुशीलवाः (च) भविष्यन्ति? [विचिन्त्य] आं ज्ञातम्;—

शून्यमपुत्रस्य गृहं, चिरशून्यं नास्ति यस्य सन्मित्रम्।
मूर्खस्य दिशः शून्याः, सर्वं शून्यं दरिद्रस्य॥ ८॥

साम्प्रतमस्य प्रकरणस्य वर्णनीयविषयान् सङ्क्षेपेणाह, तयोरिति।—इदं—प्रकरणं तयोः,—चारुदत्त-वसन्तसेनयोः, सत्सुरतोत्सवाश्रयं—सत्—उत्तमः, यः सुरतोत्सवः,—निधुवनलीला, स एव आश्रयः,—अवलम्बनं यस्य तत् तादृशम्। शूद्रको नृपः,—शूद्रकाख्यो नृपतिः, अत्र यदेति पदमध्याहार्य्यं, नयप्रचारं—नयस्य—नीत्याः, प्रचारं—गतिं, व्यवहारदुष्टतां—दुष्टव्यवहारम्, अथवा,—व्यवहाराः,—अष्टादशविधानि विवादपदानि, तेषां तेषु वा दुष्टतां, खलस्वभावं—दुर्ज्जनचरित्रं, तथा भवितव्यताम्—अवश्यम्भाविनीं नियतिम्, एतत् सर्वं चकार—प्रणिनाय, किलेति प्रसिद्धौ। वंशस्थविलं वृत्तं,—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति लक्षणात्॥ ७॥

(च) कुशीलवाः,—नाट्यप्रयोक्तारः, ("नटाश्चारणाश्च कुशीलवाः" इत्यमरः)।

अनाश्रवकुशीलवानामनुपस्थितेः कारणान्तरमनुपलभमानः स्वस्य दारिद्र्यमेव तत्कारणत्वेन निर्दिशति, शून्यमिति।—अपुत्रस्य—पुत्रहीनस्य, गृहम्—आलयः, शून्यं—शून्यवत् प्रतीयमानमित्यर्थः, यस्य सत्—साधु, अकृत्रिममिति यावत्, मित्रं नास्ति तस्य च गृहं चिरशून्यं—चिराय शून्यं, न कदाऽपि सुखकरमित्यर्थः, मूर्खस्य दिशः, सर्वा एवेति शेषः, शून्याः,—यत्र यत्र स गच्छति, तत्रैव विफलाशः प्रतिनिवर्त्तते इत्यर्थः, दरिद्रस्य निर्धनस्य, सर्वं शून्यं—न किमपि तस्यायत्तमिति भावः, मम तु निर्धनत्वेन कुशीलवानामनायत्ततया यथेच्छचारितेति "आं ज्ञातम्" इत्यस्याभिप्रायः। अत्र "सर्वं शून्यं दरिद्रस्य" इति प्रस्तुतम्, अन्यत् सर्वमप्रस्तुतं, तयोः शून्यत्वरूपैकधर्मेण सम्बन्धात् दीपकालङ्कार इति केचित्, वस्तुतस्तु,—यतो दरिद्रस्य सर्वं शून्यम्, अत एव मम निर्धनस्य शून्या सङ्गीतशाला इत्यप्रस्तुतकारणात् प्रस्तुतकार्य्यं प्रतीयते इत्यप्रस्तुतप्रशंसा; अपुत्रादेः गृहादि शून्यमिव दरिद्रस्य सर्वंशून्यमिति बिम्बप्रतिबिम्बभावे पर्य्यवसानात् निदर्शना वा। आर्य्या वृत्तं,—"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या॥" इति लक्षणात्॥ ८॥

कृतश्च सङ्गीतकं मया। अनेन चिरसङ्गीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करबीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते (छ); तत् यावत् गृहिणीमाहूय पृच्छामि, अस्ति किञ्चित् प्रातराशो (ज) न वेति। एषोऽस्मि भोः! कार्य्यवशात् प्रयोगवशाच्च (झ) प्राकृतभाषी संवृत्तः,—

अविद अविद भोः! (ञ)चिरसंगीदोवासणेण सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अंगाइं, ता जाव गेहं

* अविद अविद भोः! चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया

(छ) चिरसङ्गीतोपासनेन—चिरं—दीर्घकालं, सङ्गीतस्य यत् उपासनं—सेवनं, तेन, दीर्घकालव्यापिसङ्गीतकलाऽनुशीलनजनितपरिश्रमेणेत्यर्थः। प्रचण्डदिनकरकिरणोच्छुष्कपुष्करबीजमिव—प्रचण्डाः,—तीक्ष्णाः, ये दिनकरकिरणाः,—सूर्य्यरश्मयः, तैः उच्छुष्कं विशेषतः समुपजातशोषं, पुष्करस्य—पद्मस्य, बीजमिव, प्रचलिते—विघूर्णिते, चक्षुषो बहिर्निर्गमनोन्मुखे इति यावत्, तारके—कनीनिके ययोः ताहशे, ("तारकाऽक्ष्णः कनीनिका" इत्यमरः) मम अक्षिणी—चक्षुषी, क्षुधा—बुभुक्षया, खटखटायेते—खटखटेति ध्वन्यनुकरणशब्दं कुर्व्वाते, क्षुधार्त्तस्य भोजनालाभे चक्षुषोः सरसत्वापायात् शिथिलयोश्चञ्चलतारकत्वेन ताहशशब्दस्य सम्भावनादुत्प्रेक्षाऽलङ्कारो ध्वन्यते, स पुष्करबीजमिवेति उपमाऽनुप्राणिततया सविशेषं हृदयग्राहीति बोध्यम्। खटखटायेते इति असम्बद्धप्रलापेन आगामिनः शकारासम्बद्धभाषणस्य सूचनमिति केचित्।

(ज) किञ्चित्—किमिति प्रश्नार्थकमव्ययमिदम्। प्रातराशः,—प्रातः अश्यते—भक्ष्यतेऽसौ इति प्रातराशः,—प्रातर्भोज्यः, प्रातःकालभोजनीय इत्यर्थः।

(झ) कार्य्यवशात्—प्रयोजनपारतन्त्र्यात्, प्रयोजनञ्च प्राकृतभाषिण्या स्त्रिया सह संलापः, "स्त्रीषु नाप्राकृतं वदेत्" इति शास्त्रादिति भावः। एवमन्यत्रापि कार्य्यवशात् भाषाव्यतिक्रमः बोध्यः, "कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाव्यतिक्रमः" इति वचनात्। प्रयोगवशात्—काठिन्यादिविरहेण सुखप्रयोगयोग्यत्वादित्यर्थः।

(ञ) अविदशब्दोऽत्र खेदद्योतकमव्ययं, कष्टं कष्टमित्यर्थः; प्राञ्चस्त्वेतत्समुदायस्यैव "अदृष्टश्रुतसम्प्राप्तावविदाविद भोः पदम्" इत्येवमर्थमाहुः।

गदुअ आणामि, अत्थि किंपि कुटुंबिणीए उववादिदं (ट) ण वेत्ति। [ परिक्रम्यावलोक्य च ] एदं तं अम्हाणं गेहं, ता पविसामि। [ प्रविश्यावलोक्य च ] हीमाणहे! किं णु क्खु अम्हाणं गेहे अवरं विअ संविहाणअं वट्टदि !! आआमितंडुलोदअप्पवाहा रच्छा, लोहकड़ाहपरिवत्तणकसणसारा किदविसेसआ विअ जुअदो अहिअदरं सोहदि भूमी; सिणिद्धेण गंधेण उद्दीवंती विअ अहिअं बाधेदि मं बुभुक्खा; ता किं पुव्वविहिदं णिहाणं उववसं [ उव्वसं ] भवे ? आदु अहं ज्जेव बुभुक्खादो ओदणमअं जीअलोअं पेक्खामि !! णत्थि किल पादरासो अम्हाणं गेहे, पाणाच्चअं [ पाणाधिअं ] बाधेदि मं बुभुक्खा; इध सव्वं णवं विअ संविहाणअं वट्टदि; एक्का वण्णअं पोसेदि, अवरा सुमणाइं गुंफेदि। [ विचिन्त्य ]। किं ण्णेदं ? भोदु, कुटुंबिणीं सद्दाविअ परमत्थं (ठ) जाणिस्सं। [ नेपथ्याभिमुखमवलोक्य ] अज्जे! इदो दाव। *

---

स्नानानि अन्नानि, तत् यावत् गृहं गत्वा जानामि, अस्ति किमपि कुटुम्बिन्या उपपादितं न वेति। इदं तदस्माकं गृहं, तत् प्रविशामि। आश्चर्य्यम्! किं न खलु अस्माकं गृहे अपरमिव संविधानकं वर्त्तते !! आयामितण्डुलोदकप्रवाहा रथ्या, लौहकटाहपरिवर्त्तनकृष्णसारा कृतविशेषका इव युवती अधिकतरं शोभते भूमिः; स्निग्धेन गन्धेन उद्दीप्यमानेव अधिकं बाधते मां बुभुक्षा; तत् किं पूर्वविहितं निधानम् उपपन्नम् [ "उव्वसं" इति पाठे "उत्पन्नम्" इति सं ] भवेत्? अथवा, अहमेव बुभुक्षातः ओदनमयं जीवलोकं प्रेक्षे !! नास्ति किल प्रातराशोऽस्माकं गृहे, प्राणात्ययं [ "पाणाधिअं" इति पाठान्तरे "प्राणाधिकम्" इति सं ] बाधते मां बुभुक्षा; इह सर्वं नवमिव संविधानकं वर्त्तते; एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति। किं नु इदम्? भवतु, कुटुम्बिनीं शब्दायित्वा परमार्थं ज्ञास्यामि। आर्य्ये! इतस्तावत्।

(ट) कुटुम्बिन्या—गृहिण्या, ("दाराः स्युः कुटुम्बिनी" इत्यमरः)। उपपादितं—सम्पादितं, रचितमिति यावत्।

(ठ) प्राकृते "हीमाणहे" इति विस्मयद्योतकमव्ययम्। संविधानकं—समुद्-

नटी। [प्रविश्य] अज्ज ! इअम्हि। *

सूत्र। अज्जे ! साअदं दे ? †

नटी। आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदु त्ति ?। ‡

सूत्र। अज्जे ! चिरसंगीदोवासणेण—[इत्यादि पठित्वा] अत्थि किंपि अम्हाणं गेहे असिदव्वं (ड) ण वेत्ति ? §

नटी। अज्ज ! सव्वं अत्थि। ¶

सूत्र। किं किं अत्थि ? **

* आर्य्य ! इयमस्मि।

† आर्य्ये ! स्वागतं ते ?

‡ आज्ञापयतु आर्य्यः, को नियोगोऽनुष्ठीयतामिति ?

§ आर्य्ये ! चिरसङ्गीतोपासनेन—अस्ति किमपि अस्माकं गेहे अशितव्यं न वेति ?

¶ आर्य्य ! सर्वमस्ति।

** किं किमस्ति ?

योगः, आयोजनमित्यर्थः। आयामिततण्डुलोदकप्रवाहाः,—आयामिनः,—दीर्घाः, तण्डुलोदकानां—धौततण्डुलजलानां, प्रवाहाः,—प्रसाराः यस्यां तादृशी। लौह-कटाहपरिवर्त्तनकृष्णसारा—लौहकटाहस्य—लौहनिर्मितपात्रविशेषस्य, परिवर्त्तनेन—इतस्ततो घर्षणेन, कृष्णा—कृष्णवर्णा, सारा—शवला च, कृष्णवर्णमिश्रितत्वादिति भावः, कृतविशेषका—कृतं—रचितं, विशेषयति अन्येभ्यः पृथक् करोति, शोभयति वेति विशेषकं—तिलकं यया सा, तिलकालङ्कृतेत्यर्थः, ["कृतविशेषका" इत्यत्र कात् पूर्वाकारस्य न इत्त्वं, क्षिपकादित्वात्]; पूर्वविहितं पूर्वैः,—पूर्वपुरुषैः, विहितं—सञ्चितं, निधानं—निधीयते इति निधानं निधिः, भूगर्भनिहितधनम् इत्यर्थः, उपपन्नं—लब्धं, तथात्वे एव उत्सवसम्भव इति भावः। प्राणात्ययं—प्राणानाम् अत्ययः,—नाशः यत्रेति क्रियाविशेषणम्। एका—काचित् स्त्री। वर्णकं—कस्तूर्य्यादिकं समालम्भनम्। सुमनसः,—पुष्पाणि, ("स्त्रियः सुमनसः पुष्पम्" इत्यमरः। विभाषया बहुत्वञ्चास्य शब्दस्य) गुम्फति ग्रथ्नाति, मालां रचयतीत्यर्थः। शब्दायित्वा आहूय, परमार्थं—यथार्थम्।

(ड) असितव्यं—खाद्यम्।

नटी। तं जधा,—गुड़ोदणं, घिअं, दहीं, तंडुलाइं, अज्जेण अत्तव्वं रसाअणं सव्वं अत्थि त्ति ; एव्वं दे देवा आसासेदु। * (ढ)

सूत्र। किं अम्हाणं गेहे सव्वं अत्थि ? आदु परिहससि ? †

नटी। [स्वगतम्] परिहसिस्सं दाव। [प्रकाशम्] अज्ज ! अत्थि आवणे। ‡

सूत्र। [सक्रोधम्] आः अणज्जे ! एव्वं दे आसा छिज्जिस्सदि, अभावं अ गमिस्ससि, जं दाणिं अहं वरंडलंबुओ विअ दूरं उक्खिविअ पाडिदो। § (ण)

नटी। मरिसेदु मरिसेदु अज्जो ; परिहासो क्खु मए किदो। ¶

---

* तत् यथा,—गुड़ौदनं, घृतं, दधि, तण्डुलाः, आर्य्येण अत्तव्यं रसायनं सर्वमस्तीति ; एवं ते देवा आशंसन्तु।

† किम् !! अस्माकं गेहे सर्वमस्ति ? अथवा परिहससि ?

‡ परिहसिष्यामि तावत्। आर्य्य ! अस्ति आपणे।

§ आः !! अनार्य्ये ! एवं ते आशा छेत्स्यति, अभावञ्च गमिष्यसि, यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः।

¶ मृष्यतु मृष्यत्वार्य्यः ; परिहासः खलु मया कृतः।

---

(ढ) गुड़ौदनं गुड़मिश्रितमन्नं, पायसं वा। अत्तव्यं भोक्तव्यम्। रसायनं —रसस्य अयनम्—आश्रयभूतं, सरसमित्यर्थः। "एवं ते देवा आशंसन्तु" इति मन्दिग्धवाक्योपन्यासः।

(ण) आशा—अभिलषितप्राप्तीच्छा, छेत्स्यति—नङ्क्ष्यति, आशाभङ्गो भविष्यतीत्यर्थः। अभावं—क्षयञ्च। गमिष्यसि—प्राप्स्यसि। "अभावञ्च गमिष्यसि" इत्यनेन वसन्तसेनायाः भाविप्रवहणविपर्य्यास-घटने सूचिते इति केचित्। वरण्डलम्बुक इव लोष्टमिव, वरण्डः,—दीर्घकाष्ठं, तस्य लम्बुकः,—तत्प्रान्तनिबद्धो मृत्तिकास्तूपः, स हि ग्रीष्मे जलोद्धारार्थं दूरमुत्थाप्याधः पात्यते। इष्टकाघटिते उन्नती दीर्घौ भित्तिप्रदेशौ वरण्डः, तत्र लम्बुकः,—अवयवस्वरूपः, इष्टकाद्यैरिति शार्य्यः, सोऽसंयोजनार्थं दूरमुत्थाप्यते अनन्तरं निपतति च इति।

सूत्र। ता किं उण इदं णवं विअ संविहाणअं वट्टदि ? एका वण्णअं पीसेदि, अवरा सुमणाइं गुंफेदि, इअं अ पंचवण्णकुसुमोवहारसोहिदा भूमी। *

नटी। अज्ज ! उववासो गहिदो। † (त)

सूत्र। किं-णामहेओ अअं उववासो ? ‡

नटी। अहिरूववदी णाम। § (थ)

सूत्र। अज्जे ! इहलोइओ, आदु पारलोइओ ? ¶

नटी। अज्ज ! पारलोइओ। **

सूत्र। [सरोषम्] पेक्खंतु पेक्खंतु अज्जमिस्सा ! मदीएण भत्तपरिव्वएण (द) पारलोइओ भत्ता अण्णेसीअदि !! ††

* तत् किं पुनरिदं नवमिव संविधानकं वर्त्तते ? एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयञ्च पञ्चवर्णकुसुमोपहारशोभिता भूमिः।

† आर्य्य ! उपवासो गृहीतः।

‡ किं-नामधेयोऽयमुपवासः ?

§ अभिरूपपतिर्नाम।

¶ आर्य्ये ! इहलौकिकः, अथवा पारलौकिकः ?

** आर्य्य ! पारलौकिकः।

†† प्रेक्षन्तां प्रेक्षन्ताम् आर्य्यमिश्राः ! मदीयेन भक्तपरिव्ययेन पारलौकिको भर्त्ता अन्विष्यते !!

(त) उपवासः,—उपवासरूपं व्रतमित्यर्थः। [उपोष्यतेऽस्मिन्निति अधिकरणार्थकघञन्तोऽयमुपवासशब्दः]।

(थ) अभिरूपपतिः,—अभिरूपः,—मनोज्ञः, ("अभिरूपो बुध-मनोज्ञयोः" इति कोषः) पतिः,—भर्त्ता येन, उपवासस्य फलं मनोहरपतिलाभ इति भावः।

(द) भक्तपरिव्ययेन—भक्तस्य—अन्नस्य, परिव्ययः,—वितरणं तेन, ("भक्तमन्ने तत्परे च" इति हेमचन्द्रः)। पारलौकिकः,—परलोके भवः पारलौकिकः, जन्मान्तरलभ्य इत्यर्थः, [पारलौकिक इत्युक्त्या पालकव्युदासेन भावी नायकान्तरलाभः सूच्यते]।

नटी। अज्ज! पसीद पसीद; तुमं ज्जेव मम जम्मंतरेवि भत्ता भविस्ससि त्ति उववसिदम्हि। *

सूत्र। अध अअं उववासो केण उवदिट्ठो? †

नटी। अज्जस्स ज्जेव पिअवअस्सेण चुण्णवुड्ढेण। ‡

सूत्र। [सकोपम्] आः दासीए पुत्ता चुण्णवुड्ढा! कदा णु क्खु तुमं कुविदेण रण्णा पालएण णववहूकेसकलावं विअ ससुअंधं कप्पिज्जंतं [बज्झंतं] पेक्खिस्सं? § (ध)

नटी। पसीददु पसीददु अज्जो। णं अज्जस्स ज्जेव पारलोइओ अअं उववासो अणुचिट्ठीअदि। ¶ [इति पादयोः पतति]।

सूत्र। अज्जे! उट्ठेहि उट्ठेहि, कधेहि कधेहि इध उववासे केण कज्जं? **

नटी। अम्हारिसजणजोग्गेण बम्हणेण उवणिमंतिदेण। ††

सूत्र। तेण हि गच्छदु अज्जा; अहंपि अम्हारिसजणजोग्गं बम्हणं उवणिमंतेमि। ‡‡

---

* आर्य्ये! प्रसीद प्रसीद। त्वमेव मम जन्मान्तरेऽपि भर्त्ता भविष्यसि इत्युपोषिताऽस्मि।

† अथ अयमुपवासः केनोपदिष्टः?

‡ आर्य्यस्यैव प्रियवयस्येन चूर्णवृद्धेन।

§ आः दास्याः पुत्र चूर्णवृद्ध! कदा नु खलु त्वां कुपितेन राज्ञा पालकेन नववधूकेशकलापमिव ससुगन्धं कर्त्त्यमानं ["कप्पिज्जंतं" इत्यत्र "बज्झंतं" इति पाठान्तरम्। "बध्यमानम्" इति सं] प्रेक्षिष्ये?

¶ प्रसीदतु प्रसीदतु आर्य्यः। ननु आर्य्यस्यैव पारलौकिकोऽयमुपवासोऽनुष्ठीयते।

** आर्य्ये! उत्तिष्ठ उत्तिष्ठ, कथय कथय अत्रोपवासे केन कार्य्यम्?

†† अस्मादृशजनयोग्येन ब्राह्मणेन उपनिमन्त्रितेन।

‡‡ तेन हि गच्छतु आर्य्या; अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।

---

(ध) आः इत्याक्षेपसूचकमव्ययम्; यथा पालको राजा स्त्रीभ्यः कुपितः बधार्हतया तासां केशकलापं छित्त्वा ता विरूपा विधत्ते, तथा त्वामपि असौ छेत्स्यतीति समुदितार्थः। अनेन संहाराके चारुदत्तस्य नियमः सूचितः।

नटी। जं अज्जो आणवेदि। * [इति निष्क्रान्ता]।

नट। [परिक्रम्य] हीमाणहे! ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अम्हारिसजणजोग्गो बम्हणो अण्णेसिदव्वो! [विलोक्य] एसो चारुदत्तस्स मित्तं मित्तेओ इदो ज्जेव आअच्छदि; भोदु, पुच्छिस्सं दाव। अज्ज मित्तेअ! अम्हाणं गेहे अग्गिदं अग्गणी भोदु [अधिदी भोदु] अज्जो। †

[नेपथ्ये] (न) भो! अण्णं बम्हणं उवणिमंतेदु भवं; वावुदो (प) दाणिं अहं। ‡

नट। अज्ज! संपण्णं भोअणं णिस्सवत्तं अ। अवि अ, दक्खिणा कावि दे भविस्सदि। § (फ)

---

* यदार्य्य आज्ञापयति।

† आश्चर्य्यम्! तत् कथं मया एवं सुसमृद्धायामुज्जयिन्यामस्माद्दृशजनयोग्यो ब्राह्मणोऽन्वेष्टव्यः! एष चारुदत्तस्य मित्रं मैत्रेय इत एवागच्छति; भवतु, प्रच्छामि तावत्। आर्य्य मैत्रेय! अस्माकं गेहे अग्रितमग्रणीर्भवतु ["अधिदी भोदु" इति पाठे—"अतिथिर्भवतु" इति सं] आर्य्यः।

‡ भोः! अन्यं ब्राह्मणमुपनिमन्त्रयतु भवान्, व्यापृत इदानीमहम्।

§ आर्य्य! सम्पन्नं भोजनं निःसपत्नञ्च। अपि च, दक्षिणा काऽपि ते भविष्यति।

---

(न) नेपथ्ये—वेशपरिग्रहशालायाम् ("अन्तर्जवनिकामाहुर्नेपथ्यम्" इति कोषः)। केचित्तु नेपथ्यं रङ्ग इत्याहुः, ("नेपथ्यं स्यादलङ्कारे रङ्गच्छायां नपुंसकम्" इति मेदिन्युक्तेः)।

(प) व्यापृतः,—व्यस्तः, कार्य्यान्तरेषु व्यासक्त इति यावत्।

(फ) भोजनं—भोज्यद्रव्यम्। सम्पन्नं—प्रस्तुतं, नात्र विलम्बेन कार्य्यातिपातसम्भव इति भावः। निःसपत्नं—निःशत्रुकम्, अबाधमित्यर्थः, [सह एकार्थं पतति यतते इति व्युत्पत्त्या] सपत्नस्य—विपक्षस्यापरस्य इत्यर्थः, अभावो यत्र तत्तथोक्तं, बहुभिः सार्द्धं भोजने विलम्बस्य व्याघातस्य च सम्भवः, तच्छङ्का चात्र नास्ति, अत्र बहूनामनिमन्त्रितत्वादिति। किञ्च दरिद्रगृहे बहूनां भोजनोत्सवे व्ययाधिक्यसम्भावनया भोजनोपचारद्रव्याणाम् असम्यग्भाव एव भवितुमर्हति, एकस्य पुनः

[पुनर्नेपथ्ये] भो! जं दाणिं पढमं ज्जेव पच्चादिट्ठोसि, ता को दाणिं दे णिब्बंधो पदे पदे मं अणुसंधिदुं? * (ब)

सूत्र। पच्चादिट्ठोम्हि एदिणा। भोदु, अस्सं बम्हणं उवणिमंतेमि। † [इति निष्क्रान्तः]।

[इति आमुखम्] (भ)।

[प्रविश्य प्रावारहस्तो (म) मैत्रेयः। "अस्सं बम्हणं—" इति पूर्वोक्तं पठित्वा]

आदु, मए मित्तेण परस्स आमंतणआइं भक्खिदव्वाइं!! [पच्छिदव्वाइं] हा अवत्थे! तुलोअसि!! जो दाणिं अहं तत्त-

* भोः! यदिदानीं प्रथममेव प्रत्यादिष्टोऽसि, तत् क इदानीं ते निर्बन्धः पदे पदे मामनुसन्धातुम्?

† प्रत्यादिष्टोऽस्मि एतेन। भवतु, अन्यं ब्राह्मणमुपनिमन्त्रयामि।

‡ अथवा, मया मैत्रेयेण परस्य आमन्त्रणकानि भक्षयितव्यानि!! ["पच्छिदव्वाइं" इति पाठे—"समाहितव्यानि" इति मे] हा अवस्थे! तुलयसि!! यः इदानीमहं

निमन्त्रणं न तत्सम्भवः इति वा भावः। यद्वा,—निःसपत्नं—निःशत्रुकं, ममालये नान्यः कश्चिदपरोऽस्ति, यः किल त्वां भुञ्जानमालोक्य निन्दिष्यतीति भावः। दक्षिणा—भोजनकर्मणः माङ्गलार्थं देयं मुद्रादिकमित्यर्थः, एतत्तु अस्य निमन्त्रणग्रहणं प्रलोभनप्रदर्शनार्थम्।

(ब) प्रत्यादिष्टः,—निराकृतः, प्रत्याख्यात इत्यर्थः, ("प्रत्यादेशो निराकृतिः" इत्यमरः)। निर्बन्धः,—अत्याग्रहः। पदे पदे—पुनः पुनरित्यर्थः। अनुसन्धातुम्—अनुरोद्धुं, निमन्त्रयितुमित्यर्थः। ["पदे पदे मं" इत्यत्र "मम उवदेसं" इति क्वचित्पाठः]।

(भ) आमुखं—प्रस्तावना। तदुक्तं दर्पणे,—"नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥" इति। सा चात्र सूत्रधारस्य वाक्यार्थमादाय मैत्रेयरूपपात्रस्य प्रवेशात् कथोद्घातरूपा। तदुक्तं तत्रैव,—"सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा। भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते॥" इति।

(म) प्रावारहस्तः,—[प्रव्रियतेऽनेन इति वाक्ये "वृणोतेराच्छादने" (३।३।५४ पा०) इति पाक्षिके घञि] प्रावारः,—उत्तरीयवस्त्रं, स हस्ते यस्य सः, कृतभोजनीयः

भवदो चारुदत्तस्स रिद्धीए अहोरत्तं पअत्तणसिद्धेहिं उग्गारसुरहि-गंधेहिं मोदकेहिं ज्जेव असिदो अब्भंतरचदुस्सालअदुआरे उवविट्ठो मल्लअसदपरिवुदो चित्तअरो विअ अंगुलीहिं छिविअ छिविअ अवणेमि, णअरचत्तरवुसहो विअ रोमंथाअमाणो चिट्ठामि ; सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि। एसो अ अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुम-वासिदो पावारओ अणुप्पेसिदो, सिद्धीकिदद्देवकज्जस्स अज्ज-चारुदत्तस्स उवणेदव्वो त्ति ; ता जाव अज्जचारुदत्तं पेक्खामि। [ परिक्रम्यावलोक्य च ] एसो चारुदत्तो सिद्धीकिदद्देवकज्जो गिहदेव-दाणं बलिं (य) करेंतो [ हरंतो ] इदो ज्जेव आअच्छदि। ॐ

तत्रभवत: चारुदत्तस्य ऋद्ध्या अहोरात्रं प्रयत्नसिद्धै: उद्गारसुरभिगन्धिभिर्मोदकैरेवाशित: अभ्यन्तरचतु:शालकद्वारे उपविष्ट: मल्लकशतपरिवृत: चित्रकर इव अङ्गुलीभि: स्पृष्ट्वा स्पृष्ट्वा अपनयामि, नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि, स इदानीम् अहं तस्य दरिद्रतया यत्र तत्र चरित्वा गेहपारावत इव आवासनिमित्तमिहागच्छामि। एष च आर्य्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासित: प्रावारको-ऽनुप्रेषित:, सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्योपनेतव्य इति ; तत् यावत् आर्य्य-चारुदत्तं पश्यामि। एष चारुदत्त: सिद्धीकृतदेवकार्य्य: गृहदेवतानां बलिं कुर्व्वन् ["हरन्तो" इति पाठे,—"हरन्" इति सं। उपहरन् इत्यर्थ: ] इत एवागच्छति।

इत्यर्थ:, ("द्वौ प्रावारोत्तरासङ्गौ" इत्यमर: ) ["गड्वादिभ्य: परा सप्तमी" इति वार्त्तिकेन इलपदस्य परप्रयोग: ]।

(य) आमन्त्रणकानि—आमन्त्रणे—निमन्त्रणे प्रस्तुतानि द्रव्याणि। तूलयसि—तूलं करोषि, तूलवत् लघुं करोषि इत्यर्थ:, मामिति शेष:। ऋद्ध्या—सम्पत्त्या। उद्गारेति।—उद्गारेण—अशितद्रव्यस्य ऊर्द्ध्वगामिवायुवशादुद्गमनेन, सुरभि:,—सौरभान्वित:, गन्ध: येषां तथोक्तैरित्यर्थ:, मोदकास्तावदेवं सौरभशालिन:, यत् न केवलं तेषामशनकाल एव सौरभोद्गम:, अपि तु अशनोत्तरमपि यावदुद्गारं तस्य अवस्थितिरिति भाव:। अशित:,—तृप्त:। मल्लकशतपरिवृत:,—मल्लकाणां—व्यञ्ज-

[ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च]।

चारु। [ऊर्ध्वमवलोक्य सनिर्वेदं निश्वस्य च]—

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्व्वः।
तास्वेव सम्प्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः॥ ९॥

[इति मन्दं मन्दं परिक्रम्य उपविशति]।

मादिपात्राणां, "दीना" इति नाम्ना प्रसिद्धानामित्यर्थः, शतैः,—बहुशतसङ्ख्यकैः गण्डकैरित्यर्थः, चौरादिमखाद्यपरिपूरितैरिति भावः, परिवृतः,—परिव्याप्तः; चित्रकरपत्रे,—वर्णपात्रशतपरिवृतः। अपनयामि—त्यजामि, नाशयामीति यावत्, अतितृप्तत्वादिति भावः, तत्पात्रमिति शेषः। यथा चित्रकरः तूलिकया वर्णिकाभाण्डं स्वल्पं स्वल्पं स्पृष्ट्वैव परित्यजति,, तद्वदिति भावः। नगरचत्वरवृषभः,—नगराङ्गनवृष इव। रोमन्थायमानः,—उद्गीर्य्य चर्व्वणं कुर्व्वाणः। गेहपारावत इव—गृहकपोत इव। आवासनिमित्तं—शयननिमित्तम्। इह—चारुदत्तगृहे इत्यर्थः। जातीकुसुमवासितः,—जातीकुसुमैः,—मालतीपुष्पैः, वासितः,—सुरभीकृतः। सिद्धीकृतदेवकार्य्यस्य—सम्पादितपूजाहोमादिकर्म्मणः। उपनेतव्यः,—दातव्यः। बलिं—पूजां, ("बलिः पूजोपहारयोः" इत्यमरः)।

विधिवशाद्दशाविपर्य्यासम्लानचित्तश्चारुदत्तः स्वकीयां पूर्व्वावस्थामनुस्मृत्य सनिर्वेदमाह, यासामिति।—यासां मद्गृहदेहलीनां—मम गृहाणि भवनानीति मद्गृहाणि, तेषां या देहल्यः,—द्वारपिण्डिकाः, बहिर्द्वारस्य "चौकाट" इति ख्याताः काष्ठखण्डविशेषाः, तासां ("गृहावग्रहणी देहली" इत्यमरः) बलिः,—तत्र दत्तपूजोपकरणाक्षतादिद्रव्यं, हंसैश्च—मरालैश्च, सारसगणैश्च—स्वनामख्यातपक्षिविशेषैश्च, विलुप्तपूर्वः,—पूर्वं विलुप्तः, ["पूर्वापर—" (२।१।५८ पा०) इति पूर्व्वनिपातः] भक्षित इत्यर्थः, सम्प्रति—इदानीं, विरूढतृणाङ्कुरासु—संस्काराभावात् सञ्जाततृणाङ्कुरासु, [तृणाङ्कुराणि विरूढानि यासु "निष्ठा" (२।२।३६ पा०) इति निष्ठायाः पूर्वनिपातः] तृणव्याप्तासु एव तासु—मद्गृहदेहलीषु, कीटमुखावलीढः,—कीटमुखैः,—कीटवदनैः, कीटप्रभृतिभिरिति वा, अवलीढः,—खण्डितः, आस्वादित इति वा, बीजानाम् अञ्जलिः,—समूहः, पतति—पतितो वर्त्तते इत्यर्थः। वसन्ततिलकं वृत्तं,—"उक्तं वसन्ततिलकं त-भ-जा ज-गौ गः" इति लक्षणात्॥ ९॥

विदू। एसो अज्जचारुदत्तो। ता जाव संपदं उवसप्पामि। [उपसृत्य] सोत्थि भवदे। वड्ढदु भवं। *

चारु। अये! सर्व्वकालमित्रं मैत्रेयः प्राप्तः। सखे! स्वागतम्? आस्यताम्।

विदू। जं भवं आणवेदि। [उपविश्य] भो वअस्स! एसो दे पिअवअस्सेण चुस्सवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो, सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स तुए उवणेदव्वो। † [इति समर्पयति]।

चारु। [गृहीत्वा सचिन्तः स्थितः]।

विदू। भो! इदं किं चिंतीअदि? ‡

चारु। वयस्य!—

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम्।
सुखात् तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति॥ १०॥

* एष आर्य्यचारुदत्तः। तत् यावत् साम्प्रतमुपसर्पामि। स्वस्ति भवते। वर्द्धतां भवान्।

†. यत् भवान् आज्ञापयति। भो वयस्य! एष ते प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः, सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्य त्वया उपनेतव्यः।

‡ भोः! इदं किं चिन्त्यते?

विलासिजनोचितं कुसुमसुरभीकृतं प्रावारकमुपलभ्य स्वीयवर्त्तमानावस्थाप्रतिकूलत्वं प्रदर्शयन्नाह, सुखमिति।—घनान्धकारेषु—निविड़तिमिराच्छन्नेषु देशेषु, दीपदर्शनं—प्रदीपप्रकाश इव, दुःखानि—कष्टानि, अनुभूय, स्थितस्येति शेषः, सुखम्—आनन्दः, हि—निश्चितं, शोभते—राजते, दुःखानुभवानन्तरं सुखानुभवः समधिकसन्तोषाय भवतीति भावः। तु—किन्तु, यो नरः,—पुरुषः, सुखात्—सुखभोगात् परमित्यर्थः, दरिद्रतां—निर्धनतां, याति—प्राप्नोति, स मृतः,—परेतः, मृतवत् संज्ञायुक्त इत्यर्थः, एव शरीरेण—देहेन, धृतः,—अवलम्बितः, शरीरमात्रावशिष्टः

विदू । भो वअस्स ! मरणादो दालिद्दादो वा कदरं दे रोअदि ? *

चारु । वयस्य !—

दारिद्र्यान्मरणात् वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं, दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥

विदू । भो वअस्स ! अलं संतावेण । पणइजणसंकामिद-विहवस्स सुरलोअपीदसेसस्स विअ पडिवच्चंदस्स परिक्खओ वि दे अहिअदरं रमणीओ । † (२)

* भो वयस्य ! मरणात् दारिद्र्याद्वा कतरत् ते रोचते ?

† भो वयस्य ! अलं सन्तापेन । प्रणयिजन-सङ्क्रामितविभवस्य सुरलोकपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि ते अधिकतरं रमणीयः ।

सन्नित्यर्थः, जीवति, अन्तःसारशून्यचर्मभस्त्रावदिति भावः, तज्जीवनं मरणमेवेति समुदितार्थः । अत्र प्रथमार्द्धे उपमाऽलङ्कारः, द्वितीयार्द्धे तु अप्रस्तुतप्रशंसा, सुखमनुभूयेदानीं दरिद्रस्य मम शरीरधारणं कृततुल्यमिति विशेषे प्रस्तुते तादृशसामान्यस्याभिहितत्वात् । "मृतो जीवति" इति विरोधप्रतीतिः विरोधाभासश्च, तत्समाधानन्तु मृत इत्यस्य तत्तत्क्रियाविरहेण विशेषकर्म्मानर्ह इत्यर्थकरणात् भवतीति ध्येयम् । वंशस्थविलं वृत्तम् ॥ १० ॥

दारिद्र्यमरणयोः कतरत् प्रियमिति पृच्छायां मरणस्यैव प्रेयस्त्वमाह, दारिद्र्यादिति ।—दारिद्र्यात्—दैन्यात्, मरणात्—जीवनत्यागाद्वा, तयोर्मध्ये इत्यर्थः, [ "पञ्चमी विभक्ते" ( २।३।४२ पा० ) इत्यनेन पञ्चमी ] मम [ अत्र रुच्यर्थधातुयोगे चतुर्थीप्राप्तावपि सम्बन्धविवक्षायां षष्ठी ] मरणं—मृत्युरेव, रोचते—प्रीणाति, दारिद्र्यं—दैन्यं, न रोचते इति शेषः ; यतः मरणं—मृत्युः, अल्पक्लेशम्—अल्पः, —दारिद्र्यात् न्यूनः, क्लेशः यत्र तत्, दारिद्र्यन्तु अनन्तकम्—अन्तरहितं, दुःखं—क्लेशरूपम्, अभिलषितनाशादिति भावः ; यद्वा,—मरणम् अल्पक्लेशम्—अल्पसमयदुःखदायि, दारिद्र्यम् अनन्तकं—जीवनकालव्यापित्वात् अनन्तकालव्यापि, दुःखं—दुःखदायि चेत्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । आर्य्या वृत्तम् ॥ ११ ॥

(२) प्रणयीति ।—प्रणयिजनसङ्क्रामितविभवस्य—प्रणयिजने—बन्धुजने, सङ्क्रामिताः, —दयाधर्म्मादिना प्रदत्ताः, विभवाः,—धनानि येन तस्य, [ एतेनास्य दया-

चारु। वयस्य! न ममार्थान् प्रति दैन्यम्। पश्य,—

एतत् तु मां दहति, यत् गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम्॥ १२॥

विदू। भो वअस्स! एदे क्खु दासीए पुत्ता अत्थकल्लवत्ता वरड़ाभीदा विअ गोवालदारआ अरसे जहिं जहिं ण खज्जंति (ल) तहिं तहिं गच्छंति। *

---

* एते खलु दास्याः पुत्रा अर्थकल्यवर्त्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते, तत्र तत्र गच्छन्ति।

---

धर्म्मादिरभिव्यज्यते, तेन च विभवहीनतायाः अतिरमणीयत्वम्;] सुरलोकपीतशेषस्य —सुरलोकैः,—देवैः, पीतशेषस्य—क्रमेण भुक्तावशिष्टस्य इत्यर्थः; प्रतिपच्चन्द्रस्य इव —शुक्लप्रतिपदि चन्द्रदर्शनाभावात् एतत् कृष्णचतुर्द्दश्या उपलक्षकम्। तथा च कामन्दकः,—"धर्म्मार्थं क्षीणकोषस्य क्षीणत्वमपि शोभते। सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव॥" इति। यथा वा,—"मणिः शाणालीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः। कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः॥" देवताभिः क्रमेणाल्पाल्पपीतं कृष्णपक्षीयक्षीणचन्द्रं पूर्णचन्द्रमपेक्ष्य लोको यथा सस्पृहं पश्यति, तद्वत् अर्थिसात्कृताशेषविभवं निर्द्धनं त्वां लोकोऽधिकतरं मन्यते इति भावः।

विदूषकेणोदितं दुःखस्यार्थाभावनिबन्धनत्वं निरस्य तस्य प्रकृतनिदानमाह, एतदिति।—भ्रमन्तः,—इतस्ततः चरन्तः, मधुकराः,—भ्रमराः, कालात्यये—मदक्षरणसमयावसाने, संशुष्काः,—शोषमधिगताः, सान्द्राः,—निबिड़ाः, मदलेखाः,—मदक्षरणरेखाः यस्मिन् तं, करिणः,—हस्तिनः, कपोलं—गण्डमिव, अतिथयः,—न विद्यते तिथिः द्वितीया येषां ते, अध्वयोगेन अभ्यागताः, एकदिनमात्रस्थायिन इत्यर्थः, क्षीणार्थं—धनहीनम्, इति—इति बुद्धा, अस्मदीयं गृहं—भवनं, परिवर्ज्जयन्ति—परित्यजन्ति, इति यत्, एतत्—अतिथिपरिवर्ज्जनं, तुकार एवार्थकः, तेन अतिथिपरिवर्ज्जनमेवेत्यर्थः, मां दहति—सन्तापयति। अत्रोपमाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ १२॥

(ल) दास्याः पुत्राः,—दासीपुत्रवत् अतिनीचा इत्यर्थः, अर्थकल्यवर्त्ताः,—

चारु । वयस्य !—

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता,
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत् तु मां दहति, नष्टधनाश्रयस्य
यत् सौहृदादपि जनाः शिथिलीभवन्ति ॥१३॥

अपि च,—

दारिद्र्यात् ह्रियमेति, ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति, शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्व्वापदामास्पदम् ॥१४॥

---

अर्थरूपाः कल्यवर्त्ताः, कल्यं—प्रत्यूषे, वर्त्तते एभिः इति कल्यवर्त्ताः,—प्रातराशाः, अर्थरूपप्रातर्भोज्या इत्यर्थः, प्रातराशानां दिनादाविव आवश्यकतया तत्साम्यं बोध्यम् ; दास्याः पुत्रा इत्यनेन अर्थानाम् अतिहेयता सूचिता । वरटाभीताः,—वरटाभ्यः,—"बोलता" इति प्रसिद्धेभ्यः दंशनकारिपतङ्गविशेषेभ्यः, ("गन्धोली वरटा द्वयोः" इत्यमरः) भीताः,—त्रस्ताः, खाद्यन्ते—भुज्यन्ते, अन्यत्र,—दश्यन्ते । यत्र यत्रोपभोग-दानादिक्रिया नास्ति, तत्रैव धनबाहुल्यमिति सन्दर्भार्थः । उपमाऽलङ्कारः ।

अन्यदपि चिन्ताकारणं दर्शयति, सत्यमिति ।—मे—मम, विभवनाशकृता—धनक्षयजनिता, चिन्ता—भावना, न अस्ति—न विद्यते, इति सत्यं—यथार्थमेव वदामीत्यर्थः, हि—यतः, धनानि—अर्थाः, भाग्यक्रमेण—अदृष्टवशेनैव, भवन्ति—आयान्ति, यान्ति—अपगच्छन्ति च । किं तर्हि चिन्ताकारणम् ? इत्याह, एतदिति ।—जनाः नष्टधनाश्रयस्य—नष्टः धनरूपः आश्रयः यस्य तादृशस्य, क्षीणधनस्य इत्यर्थः, यद्वा,—नष्टौ धनाश्रयौ—अर्थालयौ यस्य तथोक्तस्य, धन-शरणविहीनस्येत्यर्थः, सौहृदात्—बन्धुभावात्, अपि शिथिलीभवन्ति—अर्थशून्येन अनेन सह प्रयोजना-भावात् सर्वं बन्धुभावमपि परित्यजन्ति, "अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत्" इत्युक्तेः, इति यत्, एतत्तु—एतदेव, मां दहति—सन्तापयति । अत्र प्रथमार्द्धे काव्यलिङ्गालङ्कारः, तथा "नष्टधनाश्रयस्य" इत्यत्र प्रथमव्याख्यायां रूपकम्, इत्यनयोः सङ्करः । वसन्ततिलकं वृत्तम् ॥ १३ ॥

धनशून्यतस्य सर्वापत्कारणत्वमाकलयति, दारिद्र्यादिति ।—दारिद्र्यात्—

विदू। भो वअस्स ! तं ज्जेव अत्थकल्लवत्तं सुमरिअ अलं संतप्पिदेण। *

चारु। वयस्य ! दारिद्र्यं हि पुरुषस्य,—

निवासश्चिन्तायाः, परपरिभवो, वैरमपरं,
जुगुप्सा मित्राणां, स्वजनजनविद्वेषकरणम्।
वनं गन्तुं बुद्धिर्भवति च, कलत्रात् परिभवो,
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥१५॥

* भो वयस्य ! तमेव अर्थकल्यवर्त्तं स्मृत्वा अलं सन्तापितेन।

निर्द्धनत्वात्, ह्रियं—लज्जाम्, एति—प्राप्नोति, लोक इति शेषः, अभीष्टनिष्पादनासामर्थ्यात् इति बोध्यम्; ह्रीपरिगतः,—लज्जितः जनः, तेजसः,—बलात्, प्रभ्रश्यते—प्रच्युतो भवति, निस्तेजाः,—तेजोरहितः, परिभूयते—येन केनापि कारणेन लोकैर्निर्भयं तिरस्क्रियते इत्यर्थः, भीतिकारणतेजसोऽभावात् इत्यवधेयम्; परिभवात्—अवमानात्, निर्वेदं—स्वावमाननम्, अनुतापं वा, आपद्यते—प्राप्नोति, निर्विणः,—निर्वेदयुक्तः, शुचं—शोकम्, एति—प्राप्नोति, जीवनस्य वैयर्थ्यादिति भावः; शोकपिहितः,—शोकाक्रान्तः, बुद्ध्या—विवेकेनेत्यर्थः, परित्यज्यते—विहीयते, निर्बुद्धिः,—निर्विवेकः, क्षयं—नाशम्, एति—गच्छति; उक्तञ्च श्रीमद्भगवद्गीतायां,—"बुद्धिनाशात् प्रणश्यति" इति; अत्र अत एवेति ऊह्यम्, अहो इति आश्चर्यद्योतकमव्ययं, निधनता—दारिद्र्यं, सर्वापदां—सर्वासाम् आपदां—विपत्तीनाम्, आस्पदं—स्थानं, दारिद्र्यात् सर्वा एवापदो भवन्तीत्यर्थः। निधनशब्दो हि मरणे रूढ़ः, अत्र तु धनशून्यत्वे प्रयुक्तत्वात् प्रसिद्धिविरुद्धताख्यदोषः, स च चतुर्थपादस्य "निर्बुद्धिः क्षयमेत्यहो ! ह्यधनता सर्वापदामास्पदम्" इत्येवं परिवर्त्तनेन समाधातुं शक्यते। अत्र दारिद्र्यादेरुत्तरोत्तरं लज्जादीन् प्रति कारणतया कारणमालाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥१४॥

दारिद्र्यस्य सर्वापन्निदानत्वं प्रकारान्तरेणाह, निवास इति।—चिन्तायाः,—कथं मम व्ययनिर्वाहः भविष्यति, कथं वा एतावान् परिवारः पोषणीयः इत्येवंरूपायाः इत्यर्थः, निवासः,—आश्रयः, परपरिभवः,—परेषाम्—अन्येषां, परिभवः,—तिरस्कारस्थानम्, अन्यकर्तृकावमाननाऽऽस्पदमित्यर्थः, दरिद्राणामविश्वसनीयतयेति भावः, अपरम्—अन्यत्, वैरं—शत्रुभावः, शत्रुवत् विपज्जनकतयेति बोध्यम्; मित्राणां—बन्धूनां, जुगुप्सा—घृणास्थानमित्यर्थः, प्रत्युपकारासामर्थ्यादिति भावः;

तत् वयस्य ! कृतो मया गृहदेवताभ्यो बलिः। गच्छ, त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर। (व)

विदू। ण गमिस्सं।*

चारु। किमर्थम् ?

विदू। जदो एव्वं पूइज्जंता वि देवदा ण दे पसीदंति, ता को गुणो देवेसु अच्चिदेसु ? †

चारु। वयस्य ! मा मैवम्; गृहस्थस्य नित्योऽयं (श) विधिः,—

तपसा मनसा वाग्भिः पूजिता बलिकर्म्मभिः।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ? ॥१६॥

तत् गच्छ, मातृभ्यो बलिमुपहर।

---

* न गमिष्यामि।

† यत एव पूज्यमाना अपि देवता न ते प्रसीदन्ति, तत् को गुणो देवेषु अर्चितेषु ?

---

तथा स्वजनानाम्—आत्मीयजनानां, जनानां—साधारणलोकानाञ्च, विद्वेषकरणं—विद्वेषहेतुः, [ कर्त्तरि करणे वा ल्युट् ] सति दारिद्र्ये, वनम्—अरण्यं, गन्तुं—यातुं, बुद्धिः,—मतिः, भवति—जायते, अत्र चकारो हेतौ, यतः इति तदर्थः; कलत्रात्—भार्य्यायाः अपीत्यर्थः, परिभवः,—तिरस्कारः, भवतीति शेषः, वसनाभरणादिप्रार्थितालाभात् कलत्रस्याप्यननुरागी जायते, "माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते। भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते॥" इत्युक्तेरिति भावः, ( वनगमने कलत्रपरिभवो हेतुर्बोध्यः ) ( किं बहुना ) हृदिस्थः,—हृदयवर्त्ती, शोकाग्निः,—दुःखदहनः, न च दहति—न भस्मीकरोति, किन्तु सन्तापयति च—दुःसहनीयं तापमुत्पादयति चेत्यर्थः, दरिद्रमिति शेषः। अत्र दारिद्र्यस्य चिन्तानिवासादिरूपेणानेकधोल्लेखादुल्लेखालङ्कार इति केचित्। शिखरिणी वृत्तम्॥ १५॥

( व ) गृहदेवताभ्यः,—गृहाधिष्ठातृभ्यः देवेभ्यः, बलिः,—पूजा। मातृभ्यः,—ब्रह्माण्यादिमातृकाभ्यः। उपहर—प्रदेहि।

( श ) नित्यः,—अवश्यकर्त्तव्यः, "यदकरणे प्रत्यवायः स्यात् स नित्यः" इति शास्त्रवचनात्।

विदूषकेणोपेक्षितस्य बलिकर्मणः अवश्यकर्त्तव्यतां हितकरत्वञ्च दर्शयति, तपसेति।

विदू। भो! ण गमिस्सं, अस्सो कोवि पउंजीअदु। मम उण बम्हणस्स सव्वं ज्जेव विपरीदं परिणमदि, आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा। अस्सं अ,—एदाए पदोस-वेलाए इध राअमग्गे गणिआ विड़ा चेड़ा राअ-वल्लहा अ पुरिसा संचरंति; (ष) ता मंडूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावदिदो वज्झो दाणिं भविस्सं। तुमं इध उवविट्ठो किं करिस्ससि? *

चारु। भवतु, तिष्ठ, तावदहं समाधिं निर्वर्त्तयामि। (स)

[नेपथ्ये]। तिष्ठ वसन्तसेने! तिष्ठ।

---

* भोः! न गमिष्यामि, अन्यः कोऽपि प्रयुज्यताम्। मम पुनर्ब्राह्मणस्य सर्व्वमेव विपरीतं परिणमति, आदर्शगता इव छाया वामतो दक्षिणा, दक्षिणतो वामा। अन्यच्च,—एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राज-वल्लभाश्च पुरुषाः सञ्चरन्ति; तस्मात् मण्डूकलुब्धस्य कालसर्पस्य मूषिक इव अभि-मुखापतितो वध्य इदानीं भविष्यामि। त्वमिह उपविष्टः किं करिष्यसि?

---

—देवताः,—देवाः, तपसा—तपस्यया, मनसा—चेतसा, ध्यानेनेत्यर्थः, वाग्भिः,—वाक्यैः, स्तवपाठादिभिरित्यर्थः, बलिकर्म्मभिः,—पूजाकार्य्यैश्च, पूजिताः,—समर्चिताः सन्तः, नित्यं—नियतं, शमिनां—शान्तात्मनां, तुष्यन्ति—तोषमापद्यन्ते, तुष्टा उत्कृष्टं परलोकं शमिभ्यः प्रयच्छन्ति इति यावत्, "श्राद्धकृदतिथिप्रियो गृहस्थोऽपि मुच्यते" इति शास्त्रवचनात्; विचारितैः,—विचारणैः, किं—किं फलम्? नात्र विचारः कर्त्तव्य इत्यर्थः॥ १६॥

(ष) आदर्शस्य प्रतिबिम्बे वामो भागो दक्षिणे दृश्यते, दक्षिणश्च वामे, एवं वस्तुगतिः। "एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाः चेटा राजवल्लभाश्च पुरुषाः सञ्चरन्ति" इत्यनेन विटादीनां प्रवेशः सूचितः, "नासूचितस्य प्रवेशः" इति शास्त्रात्। तत्रापि "गणिका" इत्यनेन वसन्तसेनायाः, "राजवल्लभाः" इत्यनेन शकारस्य च प्रवेशः विशेषतो ज्ञेयः।

(स) समाधिं—नियमं, गृहदेवतापूजारूपमिति भावः, निर्वर्त्तयामि—सम्पादयामि।

[ ततः प्रविशति विट-शकार-चेटैरनुगम्यमाना (ह) वसन्तसेना ]।

विटः। वसन्तसेने! तिष्ठ तिष्ठ,—

किं त्वं भयेन परिवर्त्तितसौकुमार्य्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि?॥ १७॥

शकारः। चिट्ठ वशंतशेणिए! (क) चिट्ठ, *—

* तिष्ठ वसन्तसेनिके! तिष्ठ,—

(ह) विटः,—वेश्यानागरिकयोः परस्परं सन्देशं विटति—कथयतीति व्युत्पत्त्या सुचतुरः भद्रवंशीयः लम्पट इत्यर्थः, तथा चोक्तं,—"सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥" शकारः,—"मदमूर्खताऽभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः। सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥" इत्युक्तलक्षणः; चेटः,—हीनजातीयदासः।

मृदुमन्दगामिनीं वसन्तसेनां भीतिविह्वलतया द्रुतगामिनीमालोक्य तदनुसरणपरो विटः साभिप्रायमाह, किमिति।—त्वमिति "वसन्तसेने!" इति गद्यस्थामन्त्रणपदेन अन्वितम्; भयेन—त्रासेन, परिवर्त्तितं—द्रुततरगमनाय परित्यक्तं, सौकुमार्य्यं—गतिमार्दवं, मन्दगमनमिति यावत्, यया सा, तथा नृत्यप्रयोगे—नर्त्तनक्रियायां, विशदौ—निर्म्मलौ, निर्दोषावित्यर्थः, निर्दोषनर्त्तनक्रियाचतुरौ इति यावत्, चरणौ—पादौ, क्षिपन्ती—द्रुतं विन्यस्यन्ती, तथा उद्विग्नाः,—व्याकुलाः, अत एव चञ्चलाः,—अस्थिराश्च, कटाक्षाः,—अपाङ्गदृष्टयो यस्मिन् तत् यथा स्यात् तथा, ("कटाक्षोऽपाङ्गदर्शने" इत्यमरः) विसृष्टा—दत्ता, प्रेरितेति यावत्, दृष्टिर्यया तादृशी, कियति व्यवधाने पापिष्ठाः सन्तीति मुखमीषत् प्रत्यावर्त्त्य कटाक्षेण सभयमालोकयन्ती सतीत्यर्थः, व्याधानुसारचकिता—व्याधस्य—लुब्धकस्य, अनुसारः,—पश्चाद्धावनं, तेन चकिता—भीता, हरिणीव—मृगीव, किं—कथं, यासि?—गच्छसि? त्वत्प्रणयपाशबद्धान् अस्मान् दृष्ट्वा एवं मा भैषीरिति भावः। अत्र उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ १७॥

(क) शाकारीभाषिणः शकारस्योक्तौ "षसोः शः" इत्यनेन सर्व्वत्र तालव्यशकारो ज्ञेयः। तथा शकारस्य भाषा शाकारी वेदितव्या, "शकारो शाकारिः स्मृतः" इति वचनात्।

किं याशि, धावशि, पलाअशि, पक्खलंती,
वाशू ! पशीद ण मलीश्शशि चिट्ठ दाव ।
कामेण दज्झदि हु मे हलके तवश्शी,
अंगाललाशिपडिदे विअ मंशखण्डे * ॥ १८ ॥

चेटः । अज्जुए ! चिट्ठ चिट्ठ. †—
उत्ताशिता गच्छशि अंतिका मे
शंपुण्णपुच्छा विअ गिम्हमोरी ।

किं यासि, धावसि, पलायसे प्रस्खलन्ती,
वासु ! प्रसीद, न मरिष्यसि, तिष्ठ तावत् ।
कामेन दह्यते खलु मे हृदयं तपस्वि,
अङ्गारराशिपतितमिव मांसखण्डम् ॥

† आर्ये ! [ "अज्जुके !" इति पाठे—"गणिके !" इति तदाख्यानं, "नाट्योक्तौ गणिकाऽज्जुका" इत्यमरवचनात् ] तिष्ठ तिष्ठ,—
उत्त्रासिता गच्छसि अन्तिका मे
सम्पूर्णपुच्छेव ग्रीष्ममयूरी ।

विटवच्छकारोऽपि तां तादृक् पलायनपरामनुसरन्नाह, किं यासीति ।—वासु ! —बाले ! ( "बाला स्याद् वासुः" इत्यमरः ) त्वं प्रस्खलन्ती—पादस्खलनवती सती, बन्धुरभूमौ पदविक्षेपणादिति भावः ; किं—कथं, यासि, धावसि, पलायसे इत्येकार्थकत्वेन पौनरुक्त्यं शकारवचनत्वात् न दोषावहम् ; तदुक्तम् :—"अपार्थक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धञ्च शकारवचनं विदुः ॥" इति । अन्यच्च,—"आगमलिङ्गविहीनं देशकालन्यायसमयविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥" इति । एवमुत्तरत्रापि बोध्यम् । प्रसीद—मयि प्रसन्ना भव, न मरिष्यसि—न ते जीवननाशो भविष्यतीत्यर्थः, तिष्ठ—पलायनात् विरता भव, तावदिति वाक्यालङ्कारे । मे—मम, तपस्वि—अनुकम्पार्हं, हृदयम्—अन्तःकरणम्, अङ्गारराशिपतितम्—अग्निपुञ्जान्तर्गतं, मांसखण्डमिव, कामेन—मदनानलेनेत्यर्थः, दह्यते—सन्ताप्यते, खल्विति निश्चये । अत्र उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १८ ॥

विटशकारवच्चेटोऽपि तां तथाविधामनुसरन्नाह, उत्त्रासितेति ।—मे—मम, अन्तिका—ज्येष्ठा भगिनी, ( "अन्तिका भगिनी ज्येष्ठा" इत्यमरः ) अतिशयभीतेव

ओवग्गदो शामिअ भट्टके मे
वस्से गड़े कुक्कुड़शावके व्व ॥ १९ ॥

विटः। वसन्तसेने ! तिष्ठ तिष्ठ—
किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती ?।
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगुहेव विदार्य्यमाणा ॥ २० ॥

अववल्गति स्वामी च भट्टारको मे
वने गतः कुक्कुटशावक इव ॥

पूजार्हा इत्यर्थः, [केचित्तु अन्तिकादिति पञ्चम्यन्तं पठित्वा,—"मे—मम, अन्तिकात्—समीपात् गच्छसि" इत्यन्वयं कुर्व्वन्ति] त्वं सम्पूर्णपुच्छा—परिणतपुच्छशोभिता, ग्रीष्मम‌यूरीव—ग्रीष्मकालीनशिखिनीव, उत्त्रासिता—उद्गतत्रासा, भीतभीतेति यावत्, सती गच्छसि—यासि। वने गतः,—अरण्यस्थः, [गड़े इति।—"क्तस्-तद्-गमां क्तस्य ड़ः" इत्यनेन क्तस्य ड़त्वम्; "अत इदेतौ लुक् च" इत्यनेन अकारस्य एत्वञ्च] कुक्कुटशावक इव—कुक्कुटशिशुरिव, मे—मम, भट्टारकः,—राजा, ("भट्टारको नृपे नाट्यवाचा देवे तपोधने" इति मेदिनी) स्वामी—प्रभुः शकारः च, अववल्गति—[ओवग्गदीति अवपूर्वाद् वल्गतेर्लिङ् "ओदवापयोः" इत्यनेन अवस्य ओत्वम्] त्वत्सकाशं ससम्भ्रममागच्छतीत्यर्थः। अत्र उपमाऽलङ्कारः। इन्द्रवज्रा वृत्तम् ॥ १९ ॥

वसन्तसेनां सानुनयमनुकर्षन्नपि अनिवर्त्तमानामालोक्य विटः पुनरपि साग्रहमाह, किमिति।—टङ्कैः,—पाषाणदारणास्त्रैः, ("टङ्कः पाषाणदारणः" इत्यमरः) विदार्य्यमाणा—भिद्यमाना, विदारणक्षणे हि तेषां निर्म्मला दीप्तिः प्रसरतीति भावः, मनःशिलानां—रक्तवर्णोपधातुविशेषाणां, गुहा इव—कन्दर इव, खनिरिवेति यावत्, [मनःशिलशब्दस्य पुंस्त्वं जटाधरेणोक्तम्] रक्तोत्पलानां—रक्तकमलानां, प्रकराः,—समूहाः, तेषां कुड्मलम्—एकैकं मुकुलम्, उत्सृजन्ती—क्षिपन्ती, [अत्र उत्प्रेक्षा-द्योतकमिवशब्दमध्याहृत्य उत्सृजन्तीवेत्युत्प्रेक्षा] तथा पवनेन—वायुना, लोला—चञ्चला, दशा—अञ्चलभागो यस्य तत् तथोक्तं, रक्तांशुकं—रक्तवसनं, वहन्ती—धारयन्ती, अत एव विकम्पमाना—विधून्वाना, बालकदलीव—अभिनवरम्भातरुरिव,

शकारः। चिट्ठ वशंतशेणिए ! चिट्ठ,*—

मम मअणमणंगं मम्महं वड्ढअंती
णिशि अ शअणके मे णिद्दअं पक्खिवंती।
पशलशि भअभीदा पक्खलंती खलंती
मम वशमणुजादा लावणश्शेव कुंती † ॥ २१ ॥

विटः। वसन्तसेने !—

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता ? ।
वेगादहं प्रविसृतः पवनं निरुन्ध्यां
त्वन्निग्रहे तु वरगात्रि ! न मे प्रयत्नः ॥ २२ ॥

---

* तिष्ठ वसन्तसेने ! तिष्ठ,—

† मम मदनमनङ्गं मन्मथं वर्द्धयन्ती
निशि च शयनके मे निर्दयं प्रक्षिपन्ती।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुयाता रावणस्येव कुन्ती ॥

---

किं—कथं, यासि ? अत्र उत्प्रेक्षाऽनुप्राणित उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २० ॥

ममेति।—शयनके—शय्यायां, प्रसरसि—गच्छसि। [ "पक्खिवंती" इत्यत्र "आक्खिवंती" इति पाठे,—"आक्षिपन्ती" इति, तथा "णिद्दअं" इत्यस्य "निद्राम्" इति वा सं ] अन्यत् सर्वं पुनरुक्तत्वादिकं पूर्व्ववत् बोद्धव्यमिति। भयभीतेति भयशब्दः अपार्थकः। रावणस्येव कुन्तीति शास्त्रविरुद्धतया हतोपममिति ध्येयम्। मालिनी वृत्तम् ॥ २१ ॥

तथाऽपि वेगात् पलायमानामालोक्य पुनरपि विटः कथयति, किमिति।—त्वं पदैः,—पादविक्षेपैः, मम पदानि—पादविक्षेपान्, विशेषयन्ती—अतिक्रामन्ती, मत्तोऽपि समधिकं पादविक्षेपं कुर्व्वती सतीत्यर्थः, पतगेन्द्रात्—गरुड़ात्, यत् भयं तेन अभिभूता—आक्रान्ता, व्यालीव—भुजङ्गीव, किं—कथं, यासि ?—गच्छसि ? हे वरगात्रि !—वरं—श्रेष्ठं, कोमलमित्यर्थः, गात्रं यस्याः सा तत्सम्बुद्धौ, कोमलाङ्गि इत्यर्थः, अहं वेगात्—स्ववेगमाश्रित्य इत्यर्थः, [ ल्यब्लोपे पञ्चमी ] प्रविसृतः,—

शकारः।· भावे ! भावे ! * (ख)—

**एशा णाणकमूशिकामकशिका, मच्छाशिका, लाशिका,**
**णिण्णाशा, कुलणाशिका, अवशिका, कामश्श मंजूशिका।**
**एशा वेशवहू शुवेशणिलआ, वेशंगणा, वेशिआ,**
**एशे शे दशणामके मइ कले, अज्जावि मं णेच्छदि !! † ॥ २३ ॥**

* भाव ! भाव !—

† एषा नाणकमोषिकामकशिका, मत्स्याशिका, लासिका,
निर्नाशा, कुलनाशिका, अवशिका, कामस्य मञ्जूषिका।
एषा वेशवधूः सुवेशनिलया, वेशाङ्गना, वेशिका,
एतान्यस्या दश नामकानि मया कृतानि, अद्यापि मां नेच्छति !! ॥

चलितः सन्, पवनं—मारुतमपि, निरुन्ध्याम्—अतिक्रमितुं शक्नुयां, ["न रुन्ध्याम्" इति पाठे तु,—नकारः काकौ, न रुन्ध्याम्? अपि तु रुन्ध्यामेव इत्यर्थः] तु—किन्तु, त्वन्निग्रहे—तव निग्रहे—बलात्कारे. मे—मम, प्रयत्नः,—अभिलाषः, न; सुन्दरीं त्वां बलेन ग्रहीतुं नेच्छामीत्यर्थः। अत्र पूर्व्वार्द्धे उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २२ ॥

(ख) भाव !—हे विद्वन्! ("भावो विद्वान्" इत्यमरः)।

एषेति।—एषा—वसन्तसेना, नाणकं—बहुमूल्यं रत्नविशेषं, "तुलाशासनमानानां कूटकृन्नाणकस्य च। एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् ॥" इति याज्ञवल्क्य-वचनात्, मुष्णातीति नाणकमोषी—तस्करः, तस्य कामं कामन्ती—शासतीति तथोक्ता, वेश्या इत्यर्थः, लम्पटः प्रायशः तस्करो भवति तस्य कामदमनकारिणीति यावत्, "तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥" इति वचनात्। मत्स्याशिका—मत्स्यभोजिनी, मत्स्यप्रियेत्यर्थः, लासिका—नर्त्तनशीला, निर्नाशा—निश्चयेन नाशः,—ध्वंसो यस्याः [अत्र पञ्चम्यन्तान्यपदार्थो बहुव्रीहिर्बोध्यः] यया वा, सा, ध्वंसकारिणीत्यर्थः, ["निर्नासा" इति दन्त्यसकारयुक्तसंस्कृतानुकरणे तु,—निम्ननासा इत्यर्थः, "खाँदा" इति भाषा] कुलनाशिका—वंशनाशिनी; वेश्याकामुकानां पत्नीषु अनुरागाभावात् अजातपुत्रतया प्रायशः वंशविच्छित्तिर्भवतीति भावः, अवशिका—अवशीभूता, प्रचुरधनदानेनापि न कस्यापि वशवर्त्तिनी भवतीत्यर्थः, तथा कामस्य—मदनस्य, मञ्जूषिका—मञ्जूषा एव इति मञ्जूषिका—पेटिका, पात्रविशेषः इत्यर्थः, [स्वार्थे क-

विटः। प्रसरसि भयविक्लवा किमर्थं
प्रचलितकुण्डलघृष्टगण्डपार्श्वा ?।
विटजननखघट्टितेव वीणा,
जलधरगर्जितभीतसारसीव ॥ २४ ॥

शकारः। झाणज्झणंतबहुभूशणशद्दमिश्शं
किं दोवदी विअ पलाअशि लामभीदा ?।

झणज्झणमिति बहुभूषणशब्दमिश्रं
किं द्रौपदी इव पलायसे रामभीता ?।

प्रत्ययः, "प्रत्ययस्थात्—" (७।३।४४ पा०) इति पूर्व्वस्यात इत्त्वम्; "मञ्जुषाऽपि च मञ्जूषा पेटा च पेटिकेत्यपि" इति शब्दरत्नावली] एषा, सुवेशानां—शोभनालङ्कारपरिधानानां, निलया—स्थानभूता, सततं शोभनालङ्कारवसनविराजिता इत्यर्थः, वेशवधूः,—वेशस्य—वेश्याजनाश्रयस्य जनस्य, ("वेशो वेश्याजनाश्रयः" इत्यमरः) वधूः,—स्त्री, ("वधूर्जाया स्नुषा स्त्री च" इति कोषान्तरम्) वेशाङ्गना—वेशेषु—वेश्याजनाश्रयेषु, अङ्गना—उत्तमाङ्गसौष्ठववती स्त्री, वेश्याजनेषु परमा सुन्दरीत्यर्थः, वेशिका—वेशवती, अस्याः,—वसन्तसेनायाः, एतानि—पूर्व्वकथितानि, दश—दशसङ्ख्यकानि, नामानि मया कृतानि—रचितानि, अद्यापि—इदानीमपि, मां न इच्छति !!—अभिलषति !!। अत्र "वेशवधूः" "वेशाङ्गना" इत्यादौ एकार्थशब्दप्रयोगजन्यविरुद्धत्वादिदोषः शकारवचनत्वात् सोढव्यः। शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

विटस्तामनधिगच्छन् पुनरप्याह, प्रसरसीति।—प्रचलिताभ्यां—चञ्चलाभ्यां, द्रुतगमनादिति भावः, कुण्डलाभ्यां घृष्टौ—प्राप्तघर्षणौ, गण्डयोः पार्श्वौ यस्याः तादृशी, अत एव विटजनस्य—विलासिजनस्य, नखैः घट्टिता—घर्षिता, वीणा इव, (गण्डघर्षणेन कुण्डलयोर्मधुरशब्दवत्त्वादस्या वीणातुल्यत्वं बोध्यम्) तथा जलधरस्य—मेघस्य, गर्जितेन—गर्जनेन, भीता सारसीव भयविक्लवा—भीतिविधुरा सती, किमर्थं—किं निमित्तं, प्रसरसि ?—गच्छसि ? पुष्पिताग्रा वृत्तम्;—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ २४ ॥

एतावताऽपि तां स्वच्छन्दानुवर्त्तिनीं कर्त्तुमसमर्थः शकारः पुनरप्याह, झणज्झणमिति।—हे वसन्तसेने! त्वं किं—कथं, रामभीता—रामात्—दशरथात्मजात्, भीता—त्रस्ता, द्रौपदीव—द्रुपदात्मजेव, बहुभूषणशब्दमिश्रं—नानाविधालङ्कारध्वनिसमन्वितं, झणज्झणमिति—झणज्झणेत्यव्यक्तशब्दमित्यर्थः, कुर्व्वतीति शेषः, पला-

एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दं * ॥ २५ ॥

चेट:। लामेहि अ लाअवल्लहं, तो क्खाहिशि मच्छमंशकं।
एदेहिं मच्छमंशकेहिं शुणआ मलअं ण शेवंति † ॥२६॥

विट:। भवति वसन्तसेने !—
किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम्।

एष हरामि सहसेति यथा हनूमान्
विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥
रमय च राजवल्लभं, ततः खादिष्यसि मत्स्यमांसकम्।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥

यसे ?—द्रुतमन्यत्र यासि ? एषः,—त्वदनुसारी अहमित्यर्थः, हनूमान् यथा—पवन-नन्दन इव, विश्वावसोः,—स्वनामप्रसिद्धस्य कस्यचित् गन्धर्वाधिपतेः, तां—प्रसिद्धां, भगिनीं—स्वसारं, सुभद्रामिव—श्रीकृष्णस्य भगिनीमिव, सहसेति हठादेवेत्यर्थः, हरामि—गृह्णामि। शकारवाक्यत्वात् विरुक्ति-हतोपमत्वादिदोषः सोढव्यः। अत्र उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २५ ॥

एवमनुसरंश्चेटोऽपि तामलभमानः पुनराह, रमयेति।—हे वसन्तसेने! त्वं राजवल्लभं—राज्ञः अतिप्रियं, शकारमित्यर्थः, रमय—रतिदानेन सन्तोषय। कुतः? इत्याह, तत इति।—ततः,—तस्मात्, तद्रमणादित्यर्थः, मत्स्यमांसकं—मत्स्यमांसादि-सुखाद्यमित्यर्थः, खादिष्यसि—भक्षयिष्यसि, तस्मिन् सन्तुष्टे नानाविधसुस्वादुखाद्यं तव सुलभं सम्पत्स्यते इति भावः; एताभ्याम्—एतद्गृहस्थिताभ्यां, मत्स्यमांसाभ्यां, श्वानः,—कुक्कुराः, मृतकं—शवदेहं, न सेवन्ते—न खादन्ति, एतावन्ति प्रचुराणि मत्स्यमांसानि अस्य गृहे सन्ति, यत् तत्परितृप्ताः श्वानोऽपि मृतदेहेषु अश्रद्धाशालिनः सम्पद्यन्ते इति भावः। अत्र पूर्वार्द्धसाधकस्य हेतोः परार्द्धगतवाक्यपदार्थतया काव्य-लिङ्गमलङ्कारः। आर्या वृत्तम् ॥ २६ ॥

यथापूर्वं तामेवानुसरन् विटः तादृशरमणीयाकृतेः क्षिप्रगमनजन्यमतिसौन्दर्य्यं वर्णयन्नाह, किमिति।—त्वं कटीतटे—श्रोणिदेशे, निवेशितम्—अर्पितं, तारा-विचित्ररुचिरं—तारया—औज्ज्वल्यधर्म्मवत्त्वात् नक्षत्रसदृशेन मध्यमणिना, यद्वा,—

वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत् प्रयासि ? ॥ २७ ॥

शकारः। अम्हेहि चंडं अहिशालिअंती
वणे शिआली विअ कुक्कुलेहिं।
पलाशि शिग्घं तुलिदं शवेगं
शवेड्णं मे हलअं हलंती * ॥ २८ ॥

---

* अस्माभिश्चण्डमभिसार्य्यमाणा वने शृगालीव कुक्कुरैः।
पलायसे शीघ्रं त्वरितं सवेगं सवेष्टनं मम हृदयं हरन्ती ॥

---

ताराभिः,—मुक्ताभिः, ( राजनिघण्टौ स्त्रीलिङ्गोऽपि ताराशब्दः मुक्तावाचकतया निर्द्दिष्टः ) विचित्रम्—अद्भुतम्, अत एव रुचिरं—मनोहरं, रशनाकलापं—मेखला-भूषणं, ( "कलापो भूषणे बर्हे" इति कोषः ) उद्वहन्ती—धारयन्ती, निर्मथिता—विलेपिता, चूर्णा—चूर्णीकृता इत्यर्थः, मनःशिला—रक्तवर्णो उपधातुविशेषो यत्र तादृशेन, वक्त्रेण—मुखेन, उपलक्षिता सती, नगरदैवतवत्—नगराधिदेवता इव, त्रस्ताद्भुतं—सभयविस्मयं यथा तथा, [ "त्रस्ताद्भुतम्" इत्यत्र "त्रस्तद्रुतम्" इति पाठान्तरम् ] किं—कथं, प्रयासि ?—गच्छसि ? अत्र उत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २७ ॥

तथाविधेनापि प्रयासेनानुनेतुमक्षमः शकारः तामुद्दिश्य पुनरप्याचष्टे, अस्माभि-रिति।—चण्डं—द्रुतम्, [ एतत् क्रियाविशेषणम् ] अस्माभिः [ "अम्हेहि" इत्यत्र छन्दोऽनुरोधात् अनुस्वाराभावो द्रष्टव्यः ] अभिसार्य्यमाणा—क्रियमाणाऽभिसारा, त्वं, वने—अरण्ये, कुक्कुरैः,—श्वभिः, अभिसार्य्यमाणा इति शेषः, शृगालीव—शिवेव, सवेष्टनं—सावरणं, धैर्य्यादिपूर्णमित्यर्थः, [ क्वचित् "शवेड्णं" इत्यत्र "शवंटअं" इति पाठः, तत्र "सवृन्तकम्" इति संस्कृतम्। केचित्तु,—सवेष्टनं—समूलबन्धमिति व्याख्यानं समधिकश्रेयस्तया मन्यन्ते, तन्न अयुक्तं, हृदयस्य मूलबन्धासम्भवत्वात्, इत्यलं बहुवाग्विन्यासेन ] मम हृदयं—मनः, हरन्ती—चोरयन्ती, सवेगं—चञ्चलं, शीघ्रं, त्वरितं यथा तथा, पलायसे—पलायनं करोषि ; अनावृतस्य द्रव्यस्य सुहार्य्यत्वात् हरणं सहसा सम्भवति, मम तु धैर्य्यादिभिरावरणैरावृतं हृदयं हृत्वा त्वं त्वरितं प्रयासीति महदाश्चर्य्यमिति भावः। त्वरितं, शीघ्रं, चण्डमित्यादिपौनरुक्त्यादिदोषः शकारवचनात् सोढव्यः। अत्र उपमाऽलङ्कारः। उपजातिः वृत्तम् ॥ २८ ॥

वसं। पल्लवआ ! पल्लवआ ! परहुदिए ! परहुदिए ! *

शकारः। [सभयम्] भावे ! भावे ! मणुश्शे मणुश्शे। †

विटः। न भेतव्यं न भेतव्यम्।

वसं। माहविए ! माहविए ! ‡

विटः। [सहासम्] मूर्ख ! परिजनोऽन्विष्यते।

शकारः। भावे ! भावे ! इत्थिआं अण्णेशदि ? §

विटः। अथकिम्।

शकारः। इत्थिआणं शदं मालेमि, शूले हगे। ¶ (ग)

वसं। [शून्यमवलोक्य] हद्धी ! हद्धी ! कधं परिअणो वि परिब्भट्टो !! एत्थ मए अप्पा सअं ज्जेव्व रक्खिदव्वो। **

विटः। अन्विष्यतामन्विष्यताम्।

शकारः। वशंतशेणिए ! विलव विलव परहुदिअं वा पल्लवअं वा, शव्वं वा वशंतमाशं। (घ) मए अहिशालिअंतीं तुमं को पलित्ताइश्शदि ? ††—

* पल्लवक ! पल्लवक ! [ "पल्लवआ ! पल्लवआ !" इत्यत्र "पल्लविए ! पल्लविए !" इति पाठान्तरम् ; तत्र "पल्लविके ! पल्लविके !" इति सं ] परभृतिके ! परभृतिके !

† भाव ! भाव ! मनुष्या मनुष्याः।

‡ माधविके ! माधविके !

§ भाव ! भाव ! स्त्रियमन्विष्यति ?

¶ स्त्रीणां शतं मारयामि, शूरोऽहम्।

** हा धिक् ! हा धिक् ! कथं परिजनोऽपि परिभ्रष्टः !! अत्र मया आत्मा स्वयमेव रक्षितव्यः।

†† वसन्तसेनिके ! विलप विलप परभृतिकां वा पल्लवकं वा, सर्वं वा वसन्तमासम्। मया अभिसार्य्यमाणां त्वां कः परित्रास्यते ?—

(ग) स्त्रीनामश्रवणेन शकारस्य सगर्व्ववचनमिदम्।

(घ) अत्र विपन्नया वसन्तसेनया समाहूतायाः स्वपरिचारिकायाः कोकिलापर्य्यायकं परभृतिकेति नामाकर्ण्य शकारः परभृतिकाशब्दं कोकिलार्थपरतया योजितवानिति वक्रोक्तिरलङ्कारः।

किं भीमशेणे? जमदग्गिपुत्ते?
कुंतीशुदे वा? दशकंधले वा?।
एशे हगे गेण्हिअ केशहत्थे
दुश्शाशणश्शाणुकिदिं कलेमि *॥ २९॥

णं पेक्ख, णं पेक्ख, †—

अशी शुतिक्खे वलिदे अ मत्थके,
कप्पेम शीशं, उद मालएम वा।

* किं भीमसेनः? जमदग्निपुत्रः?
कुन्तीसुतो वा? दशकन्धरो वा?।
एषोऽहं गृहीत्वा केशहस्तं
दुःशासनस्यानुकृतिं करोमि॥

† ननु प्रेक्षस्व ननु प्रेक्षस्व,—

‡ असिः सुतीक्ष्णो वलितश्च मस्तकं,
कल्पामः शीर्षम्, उत मारयामो वा।

मयि त्वामाक्रामति वीरेषु न कोऽपि त्वां परित्रातुमर्हः इति सगर्व्वमभिदधानः शकारः प्रसिद्धवीराणां रक्षणासामर्थ्यं दर्शयति, किमिति।—किं भीमसेनः,—वृकोदरः, त्वां रक्षिष्यति इति शेषः, एवं सर्व्वत्र। जमदग्निपुत्रः,—परशुरामः, वा—अथवा, कुन्तीसुतः,—कुन्तीपुत्रः कर्णः, अर्ज्जुनो वा इत्यर्थः, अथवा दशकन्धरः,—दशग्रीवः रावणो वा? एषोऽहं केशहस्तं—केशकलापं, कुन्तलसमूहमित्यर्थः, ("पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः) तवेति शेषः, गृहीत्वा—धृत्वा, आकृष्येत्यर्थः, दुःशासनस्य—तन्नाम्नो धृतराष्ट्रपुत्रस्य, अनुकृतिं करोमि—तमनुकरोमीत्यर्थः; दुःशासनो यथा द्रौपद्याः केशेष्वाकृष्य निपीड़यामास, तथा अहमपि त्वां केशाकर्षणेन पीड़यितुमारभे, यदि कश्चित्ते रक्षकः स्यात्, स रक्षतु इति भावः। अत्र उपमाऽलङ्कारः। इन्द्रवज्रा वृत्तम्॥ २९॥

एतावता प्रयासेन तां केशेषु गृहीत्वा प्रहृष्टः शकारः भीषयन्नाह, असिरिति।—सुतीक्ष्णः,—निशितः, असिः,—कृपाणः, मम हस्ते वर्त्तते इति शेषः, मस्तकं—शिरश्च, तव इति भावः, वलितं—धृतं, त्वमिदानीं मे करायत्तेति भावः, शीर्षं—मस्तकं, कल्पामः,—छिन्द्मः, उत—अथवा, मारयामः,—ते प्राणविनाशं कुर्म्मः, अत एव,

अलं तवेदेण पलाइदेण,

मुमुक्षु जे होदि, ण शे क्खु जीअदि ‡ ॥ २० ॥

वसं। अज्ज! अबला क्खु अहं। *

विटः। अत एव धियसे।

शकारः। अदो ज्जेव्व ण मालीअशि। †

वसं। [स्वगतम्] कधं अणुणओ वि से भअं उप्पादेदि। भोदु एव्वं दाव; [प्रकाशम्] अज्ज! इमादो किंपि अलंकरणं तक्कीअदि? ‡ (ङ)

विटः। शान्तम्। भवति वसन्तसेने! न पुष्पमोषमर्हति उद्यानलता, तत् कृतमलङ्करणैः। (च)

---

अलं तवैतेन पलायितेन,
मुमूर्षुर्यो भवति, न स खलु जीवति ॥

* आर्य्य! अबला खलु अहम्।

† अत एव न मार्य्यसे।

‡ कथमनुनयोऽप्यस्य भयमुत्पादयति। भवतु एवं तावत्; आर्य्य! अस्मात् किमपि अलङ्करणं तर्क्यते?

---

तव एतेन—साम्प्रतमारब्धेन, पलायितेन—पलायनेन, अलं—व्यर्थं, न किमपि फलं भविष्यतीत्यर्थः, कुतः? इत्याह, मुमूर्षुरिति।—यः,—जनः, मुमूर्षुः,—आसन्नमृत्युः, भवति, सः,—जनः, खलु—निश्चितं, न जीवति—न प्राणिति, अस्मत्करगतत्वेन तव मृत्योरनिवार्य्यतया पलायनमनर्थकमिति भावः। अत्र द्वादशैकादशवर्णात्मिकाभ्यां वंशस्थविलोपेन्द्रवज्रावृत्ताभ्यां विजातीयोपजातिवृत्तं मनीषिभिर्विभाव्यमिति ॥ २० ॥

(ङ) अस्मात्—मत्स्वरूपाज्जनात्। तर्क्यते?—वितर्क्यते?

(च) शान्तं—विरतं भवतु, ईदृक् वाक्यं न वक्तव्यम् इत्यर्थः। पुष्पमोषं—कुसुमावचयम्। उद्यानलता—उद्यानस्थिता—सयत्नपरिरक्षितकृत्रिमवनगता, लता—वल्ली, (एतेनास्याः सयत्नवर्द्धितलावण्यम् अङ्गविलासपाटवञ्च दर्शितम्)। कृतम्—अलमित्यर्थः; यथा कुसुमसमृद्धा लता पुष्पावचयनेन शोभायाः परिभ्रश्यति, तथा तव गात्रात् अलङ्कारमोचनेन शोभाहानिः भविष्यति इति अप्रस्तुतप्रशंसाऽलङ्कारोऽत्र समुन्नेयः।

वस०। ता किं क्खु दाणिं ? *

शकारः। हगे देवपुलिशे मणुश्शे वाशुदेवके कामइदव्वे। †

वस०। [सक्रोधम्] शंतं शंतं। अवेहि, अणज्जं मंतेसि। ‡

शकारः। [सहस्ततालं विहस्य] भावे! भावे! पेक्ख दाव, अंतलेण शुशिणिद्धा एशा गणिआदालिआ णं, जेण मं भणादि, एहि, शंतेशि, किलिंतेशि त्ति। हगे ण गामंतलं ण णअलंतलं वा गडे। अज्जुके! शवामि भावश्श शीशं अत्तणकेहि पादेहिं; तव ज्जेव्व पश्चाणुपश्चिआए आहिंडंते (क) शंते किलिंते म्हि शंवुत्ते। §

विटः। [स्वगतम्] अये! कथं शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः। [प्रकाशम्] वसन्तसेने! वेशवासविरुद्धमभिहितं भवत्या। पश्य,—

* तत् किं खलु इदानीम्?

† अहं देवपुरुषो मनुष्यो वासुदेवः कामयितव्यः।

‡ शान्तं शान्तम्। अपेहि, अनार्य्यं मन्त्रयसि।

§ भाव! भाव! प्रेक्षस्व तावत्, अन्तरेण सुस्निग्धा एषा गणिकादारिका ननु, येन मां भणति, एहि, श्रान्तोऽसि, क्लान्तोऽसीति। अहं न ग्रामान्तरं न नगरान्तरं वा गतः। आर्य्यिके! शपे भावस्य शीर्षम् आत्मीयाभ्यां पादाभ्याम्; तवैव पृष्ठानुपृष्ठिकया आहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः।

(क) भाव!—विद्वन्!। अन्तरेण—मनसा। [केचित्तु,—"अंतलेण" इत्यत्र "मं अंतलेण" इति पाठान्तरं स्वीकृत्य "मामन्तरेण" इति संस्कृतमाहुः; तथा मयि इति व्याचक्षते च] यः नगरान्तरं ग्रामान्तरं वा गच्छति, स एव श्रान्तः क्लान्तश्च जायते, अहन्तु तादृशो न इति भावः। आर्य्यिके!—आर्य्ये! मान्ये! इत्यर्थः। भावस्य—विदुषः, विटस्य इत्यर्थः, शीर्षं—मूर्द्धानम्, आत्मीयाभ्यां—स्वकीयाभ्यां, पादाभ्यां—चरणाभ्यां, स्पृष्ट्वा इति अध्याहार्य्यम्; हस्ताभ्यामिति वक्तव्ये पादाभ्यामिति यदुक्तं, तत् सामाजिकानां परिहासाय शकारवचनत्वात् लोकन्यायविरुद्धमिति बोध्यम्। पृष्ठानुपृष्ठिकया—पश्चात् पश्चादित्यर्थः, आहिण्डमानः,—अनुगच्छन् इत्यर्थः।

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्य्यं पण्यभूतं शरीरं,
सममुपचर भद्रे ! सुप्रियं चाप्रियञ्च ॥ ३१ ॥

अपिच,—

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः,
फुल्लां नाम्यति वायसोऽपि हि लतां, या नामिता बर्हिणा ।

शकारकृतभयां "त्रातम्" इत्यनेन वसन्तसेनया प्रत्याख्यातमाकर्ण्य तदुक्तेः अयौक्तिकत्वं द्वाभ्यां श्लोकाभ्यामाह, तरुणजनेति ।—वेशवासः,—वेशे—वेश्यालये, वासः,—वसतिः, ("वेशो वेश्याजनाश्रयः" इत्यमरः) तरुणजनसहायः,—तरुण-जनः,—युवजनः, सहायः यस्य तादृशः, चिन्त्यताम्—अवधार्य्यतां, [ अत्र विध्यर्थे लोट् ] या हि गणिका भूत्वा तत्पल्लीमिवावतिष्ठन्ते, ताभिः युवजनान्वेषणस्यावश्य-कर्त्तव्यतया न त्वया वयमुपेक्षणीया इति भावः । "वेशवासः" इति पदस्य "वेशे—वेश्यालये, वासः यस्य तादृशः" इति बहुव्रीहिसमासनिष्पन्नत्वे तु—ये हि युवानः सुख-प्राप्तधनाः स्वजनान् हित्वा विलासमत्तैः सार्द्धं वेश्यालयमेवाधिवसन्ति, ते एव वेश्याभिः अन्विष्यन्ते, अतः त्वमपि अस्मान् परित्यज्य अन्यसहायं मा याचस्व इति भावः । हे भद्रे !—साधुशीले ! त्वं मार्गजाता—पथि समुत्पन्ना, सकलजनसंसर्गयोग्येति भावः, लतेव—वल्लीव, गणिका—वेश्या, साधारणीत्यर्थः, इति विगणय—मन्यस्व, आत्मान-मिति शेषः ; हि—यतः, पण्यभूतं—विक्रेयस्वरूपम्, अत एव धनहार्य्यम्—अर्थविनि-मयेन क्रय्यं, शरीरं—देहं, वहसि—धारयसि, अतः सुप्रियं—स्वाभिमतम्, अप्रियम् —अनभिमतञ्च, जनमिति शेषः, समं—तुल्यम्, उपचर—सेवस्व ;—"निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि । वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः ॥" इति वेश्यालक्षणप्रस्तावे आलङ्कारिकोक्तेः । अत्र "वयमप्रिया अपि त्वया सेव्याः" इति प्रस्तुतार्थः अप्रस्तुतेन अस्या गणिकात्वादिख्यापनेन अवगम्यते इत्यप्रस्तुतप्रशंसा, द्वितीये पादे उपमा, शेषार्द्धे च सुप्रियाप्रिययोः तुल्यरूपेण सेवायां धनहार्य्यत्वरूपपदार्थस्य हेतुतया काव्य-लिङ्गञ्चेत्येषामलङ्काराणां संसृष्टिः । वृत्तमत्र मालिनी नाम,—"न-न-म-य-य-युतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ३१ ॥

वाप्यामिति ।—विचक्षणः,—विद्वान्, द्विजवरः,—द्विजश्रेष्ठः, ब्राह्मण इत्यर्थः, तथा

ब्रह्मक्षत्रविशस्तरन्ति च यया नावा, तयैवेतरे,
त्वं वापीव लतेव नौरिव जनं वेश्याऽसि सर्वं भज ॥ ३२ ॥

वस। गुणो क्खु अणुराअस्स कालणं, ण उण बलक्कारो। *(ज)

शकारः। भावे! भावे! एशा गब्भदाशी (झ) कामदेवाअ-दणुज्जाणादो पहुदि ताह दलिद्दचालुदत्ताह अणुलत्ता, ण

* गुणः खलु अनुरागस्य कारणं, न पुनर्बलात्कारः।

+ भाव! भाव! एषा गर्भदासी कामदेवायतनोद्यानात् प्रभृति तस्य

मूर्खः,—अज्ञानः, वर्णाधमः,—सर्ववर्णनीचः, शूद्रोऽपीत्यर्थः, वाप्यां—दीर्घिकायाम्, एकस्यामेवेति भावः, स्नाति—अवगाहते, या—लता, बर्हिणा—मयूरेण, नामिता, [ "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" (ग०) इति मित्वस्य वैकल्पिकतया ह्रस्वाभावः] उपवेशनेनेति शेषः, वायसः,—काकोऽपि, फुल्लां—विकसितां, (तां) लतां नाम्यति—नमयति, [नमनं नामः भावे घञ्, नामं करोति इति वाक्ये णिच्, ततः क्विप्, "णेरनिटि" (६।४।५१ पा०) इति णिचो लोपः, ततो नाम्शब्दस्य कण्ड्वादेराकृति-गणत्वेन तत्र निवेशनात् "कण्ड्वादिभ्यो यक्" (३।१।२७ पा०) इत्यनेन यकि कृते नाम्यतीति रूपम्। नामं करोति इत्यर्थे णिचि "संज्ञापूर्व्वको विधिरनित्यः" इति नियमात् अपि गुणमकृत्वा वकारस्य यकारे कृते नाम्यतीत्यपरे] तथा ब्रह्मक्षत्रविशः,—ब्राह्मणक्षत्रियवैश्याः, यया नावा—तरण्या, तरन्ति—पारं गच्छन्ति, इतरे—शूद्रा-दयोऽपि, तयैव—नावा, तरन्तीति शेषः। त्वं वेश्या—गणिका, असि, अतः वापीव—सरसीव, लतेव—वल्लीव, नौरिव—तरणिरिव, सर्वं जनम्—अविशेषेण सकलं प्रार्थ-यितारमित्यर्थः, भज—सेवस्व, सर्व्वसाधारणत्वात् त्वया क्वचिदादरः क्वचिदा अनादरो न कर्त्तव्य इति भावः। अस्मिंश्च श्लोकद्वये उपदिष्टं नाम नाट्यलक्षणम्; तल्लक्षणं यथा दर्पणे,—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः" इति; तथाऽत्र प्रक्रमभङ्गः दोषोऽपि। इहैकस्या उपमेयभूताया वसन्तसेनायाः वापी लता-नावादिभिर्बहुभिरुपमानैः सादृश्यकथना [मालोपमाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

(ज) अत्र गुणिनः चारुदत्तस्याहमनुरक्ता, न पुनर्भवतामिति प्रस्तुते कार्य्ये कारणम् अभिहितमित्यप्रस्तुतप्रशंसाऽलङ्कारः।

(झ) गर्भदासी—आजन्मनः किङ्करी, साधारणादिति भावः।

मं कामेदि। वामदो तश्श घलं। जधा तव मम अ इत्थादो एशा ण पलिब्भंशदि, तधा कलेदु भावे। † (ञ)

विटः। [स्वगतम्] यदेव परिहर्त्तव्यं, तदेवोदाहरति मूर्खः। (ट) कथं वसन्तसेना आर्य्यचारुदत्तमनुरक्ता !! सुष्ठु खल्विदमुच्यते, "रत्नं रत्नेन सङ्गच्छते" इति। तद् गच्छतु, किमनेन मूर्खेण। [प्रकाशम्] काणेलीमातः! (ठ) वामतस्तस्य सार्थवाहस्य गृहम् ?

शकारः। अध इं, वामदो तश्श घलं। *

वस। [स्वगतम्] अम्हहे! वामदो तश्श गेहे त्ति जं सच्चं; अवरज्झन्तेण वि दुज्जणेण उवकिदं, जेण पिअसंगमं पाविदं। † (ड)

---

दरिद्रचारुदत्तस्यानुरक्ता, न मां कामयते। वामतस्तस्य गृहम्; यथा तव मम च हस्तात् एषा न परिभ्रश्यति, तथा करोतु भावः।

* अथ किं, वामतस्तस्य गृहम्।

† आश्चर्यम्! वामतस्तस्य गृहमिति यत् सत्यम्; अपराध्यताऽपि दुर्जनेन उपकृतं, येन प्रियसङ्गमः प्रापितः।

(ञ) अत्र उपदेशनं नाम नाट्यालङ्कारः; तल्लक्षणं यथा दर्पणे,—"शिक्षा स्यादुपदेशनम्" इति।

(ट) परिहर्त्तव्यं—परित्यक्तव्यम्। चारुदत्तस्य गृहमतिनिकटे वर्त्तते इति यत् वसन्तसेनायै वक्तुं नोचितं, तदेव मूर्खः कथयतीत्यर्थः।

(ठ) काणेलीमातः! काणेली—अविवाहिता स्त्री, व्यभिचारिणी वा, माता यस्य, तत्सम्बुद्धौ; [समासान्तविधेरनित्यत्वात् अत्र ककाराभावः। "विश्वेश्वरीं विश्वमातां चण्डिकां त्वां नमाम्यहम्" इत्यादिप्रयोगदर्शनात् आकारान्तो माताशब्दोऽप्यस्तीति केचित्, तन्मते—काणेलीमात! इति निर्विसर्गपदम्] तज्जभंजात इत्यर्थः।

(ड) अम्हहे इति परमाश्चर्य्यार्थकमव्ययम्। अत्र आनन्दो नाम निर्व्वहणाङ्गं प्रदर्शितम्; यथा दर्पणे,—"आनन्दो वाञ्छितागमः" इति।

शकारः। भावे! भावे! बलिए क्व अंधआले माशलाशिपविट्टा विअ मशिगुड़िआ (ढ) दीशंदी ज्जेव्व पणट्टा वशंतशेणिआ। *

विटः। अहो! बलवानन्धकारः। तथा हि,—

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना।
उन्मीलिताऽपि दृष्टिर्निमीलितेवान्धकारेण॥ ३३॥

अपिच,—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ ३४॥

* भाव! भाव! बलीयसि खलु अन्धकारे माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना।

(ढ) मसीगुटिका—अञ्जनवटिका; कीटविशेष इति केचित्।

बलवदन्धकाराच्छन्नदृष्टिर्विटः किमपि दुष्प्रसमः स्वीयामवस्थां वर्णयन्नाह, आलोकेति।—आलोके—दर्शने, विशाला—महती, तीक्ष्णदर्शनशक्तिसम्पन्नेत्यर्थः, मे—मम, दृष्टिः तिमिरप्रवेशविच्छिन्ना—तिमिरे—अन्धकारे, प्रवेशेन—आगमनेन, विच्छिन्ना—हीनशक्तिरित्यर्थः, तिमिरस्य—अन्धकारस्य, प्रवेशेन—आगमनेन, विच्छिन्ना—व्याप्ता, दर्शनशक्तिरहिता इति वाऽर्थः, अत एव उन्मीलिताऽपि—दर्शनार्थं कृतोन्मेषा अपि, अन्धकारेण—तिमिरेण, निमीलिता—मुद्रिता इव, जायते इति शेषः। उत्प्रेक्षाऽलङ्कारः। आर्या वृत्तम्॥ ३३॥

दृष्टिव्याघातकस्यान्धकारस्यातिगाढत्वं प्रकारान्तरेण वर्णयन्नाह, लिम्पतीति।—तमः—अन्धकारम्, अङ्गानि—देहावयवान्, लिम्पतीव—सचतीव, नभः,—आकाशम्, अञ्जनं—कज्जलं, वर्षतीव, दृष्टिः,—नेत्रम्, असत्पुरुषसेवेव—नीचपरिचर्या इव, विफलतां—फलराहित्यं, गता—प्राप्ता। अत्र प्रथमार्द्धे उत्प्रेक्षा, द्वितीये उपमा इत्यनयोः संसृष्टिः। नन्वियं पूर्वार्द्धप्रतिपादितोत्प्रेक्षा उपमैव कुतो न भवति इवपदस्य सादृश्यार्थकत्वे बाधकाभावात्? यत्तु,—उपमायामिवेन नित्यसमासानुशासनात् प्रकृते समासस्यासम्भवात् "नाम्नां समासो युक्तार्थः" इत्युक्तेराख्यातस्य नामत्वाभावात्, अतोऽत्र न सादृश्यमिवार्थ इति, तच्चिन्त्यम्; इवेन सह समासस्य नित्यत्वाभावस्य उपमाप्रकरणे एव दर्शितत्वात्; अन्यथा इवपदस्य सम्भावनापरत्वेऽपि समासानुपपत्तेः। न हि

शकारः। भावे! भावे! अस्सेशा म वशंतशेणिअं। *

विटः। काणेलीमातः! अस्ति किञ्चिच्चिह्नं, यदुपलक्षयसि।

शकारः। भावे! भावे! किं विअ? †

विटः। भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा। (ग)

शकारः। शुणामि मल्लगंधं, अंधआलपूलिदाए उण णाशि-आए शुव्वत्तं, उण ण पेक्खामि भूशणशद्दं। ‡

* भाव! भाव! अन्विष्यामि वसन्तसेनिकाम्।

† भाव! भाव! किमिव?

‡ शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया सुव्यक्तं, पुनर्न पश्यामि भूषणशब्दम्। ["णाशिआए शुव्वत्तं" इत्यत्र "णाशिआए ण शुव्वत्तं" "उण ण पेक्खामि" इत्यत्र "उण पेक्खामि" इति पाठान्तरम्। "नासिकया न सुव्यक्तं," "पुनः पश्यामि" इति सं]।

इवेन सह समासः साहश्येनेवात्र प्रमाणमस्ति, "इवेन समासो विभक्त्यलोपश्च" (वा०) इति सामान्यत एवोक्तेः। अथ यत्र समासप्राप्तिस्तत्रैव नियमः, आख्यातेन सह तु समासप्रसङ्ग एव नास्ति इति विनैव समासमयं प्रयोग इति चेत्? तर्हि साहश्यार्थतायामपि समासाप्रसङ्गेन विनैव समासमिवपदप्रयोगे बाधकाभावात् इति चेत्, मैवम्; उपमानाभावस्यैवोपमाबाधकत्वात्: तथा हि,—किमत्रोपमानम्? न तावत् कर्त्ता,वैयाकरणमते आख्यातार्थस्य कर्त्तुर्भावनायां विशेषणीभूतत्वेन तस्यैवार्थे साहश्ये स्वप्रतियोगिकत्वसम्बन्धेनान्वयासम्भवात्, अन्यविशेषणस्यान्यत्रान्वयायोगात्। तदेतदुक्तमाचार्य्यदण्डिना,—"कर्त्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रियापदे। स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम्॥" ननु लेपनमेवोपमानमस्त्विति चेत्, न; लेपनक्रिया-तमसोः साधारणधर्म्माभावात् लेपनस्यैव तद्धर्म्मत्वासम्भवात् धर्म्म-धर्म्मिभावस्य भेदनियतत्वात्; तदुक्तं,—"यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः। स एव धर्म्मो धर्म्मी चेत्यनुन्मत्तो न भाषते॥" तस्मादुपमानस्य दुर्लभतया नात्रोपमा सम्भवतीति; तदुक्तं,—"केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जायते। नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम्॥" इति। उत्तरार्द्धं तूपमैव, नोत्प्रेक्षा इति न विवादावसरः। अनुष्टुप् वृत्तम्॥ ३४॥

(ग) उपलक्षयसीति पूर्व्वोक्तायाः क्रियायाः कर्म्मपदमिदं बोध्यम्।

विटः। [जनान्तिकम्] (त) वसन्तसेने !—

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसन्धिलीना।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च, भीरु ! मुखराणि च नूपुराणि ॥ ३५ ॥

श्रुतम् ? वसन्तसेने !

वस। [स्वगतम्] सुदं गहिदं अ। [नाट्येन नूपुराणि उत्सार्य, माल्यानि चापनीय किञ्चित् परिक्रम्य हस्तेन परामृश्य] अम्हो ! भित्तिपरामरिससूइदं पक्खदुआरअं क्खु एदं। जाणामि अ संजोएण (थ) गेहस्स संवुदं पक्खदुआरअं। *

---

* श्रुतं गृहीतञ्च। अहो ! भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत्, जानामि च संयोगेन गेहस्य संवृतं पक्षद्वारकम्।

---

(त) जनान्तिकं—"त्रिपताककरेणान्यानपवार्यान्तरा कथाम्। अन्योऽन्याऽऽमन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥" इत्युक्तलक्षणकम्।

गाढान्धकारविलीनां वसन्तसेनामुद्दिश्य तस्या अदर्शनेऽपि माल्यगन्धाद्यनुमेयतामाह, काममिति।—हे भीरु !—भयशीले ! त्वं जलदोदरसन्धिलीना—मेघाभ्यन्तरविलीना, सौदामनी—विद्युदिव, (जलदोदरसन्धिलीनेत्यस्यायमभिप्रायः,—मेघसन्धिस्थाने घर्षणेन विद्युदुत्पद्यते, तादृशमेवसङ्घर्षमेघान्तराच्छन्नतार्थं जलदोदरपदं, तथैव च विद्युतः सुस्पष्टदर्शनाभावः सम्भवतीति) प्रदोषतिमिरेण—रजनीमुखोद्गततमसा, कामं—पर्याप्तरूपं, सम्यक्प्रकारेणेत्यर्थः, न दृश्यसे—नावलोक्यसे, तु—किन्तु, माल्यसमुद्भवः,—माल्यविनिःसृतः, अयम्—अनुभूयमानः, गन्धः,—सौरभः, त्वां सूचयिष्यति—ज्ञापयिष्यति, मुखराणि—मधुरं शब्दायमानानि, नूपुराणि—पादाङ्गदानि, पादभूषणानि चेत्यर्थः, सूचयिष्यन्ति इति विभक्तिविपरिणामेनान्वयः। अत्रोपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ ३५ ॥

(थ) भित्तेः,—गृहकुड्यस्य, परामर्शेन—अनुभवेन, स्पर्शेनेत्यर्थः, सूचितम्—अनुमितं, पक्षद्वारकं—पार्श्वद्वारकम्। संयोगेन—परस्परमिलनेन, अथवा—संयोगेन—करस्पर्शेन, स्पर्शेन्द्रियसंयोगजनितानुभवेनेत्यर्थः।

चारु। वयस्य! समाप्तजपोऽस्मि। तत् साम्प्रतं गच्छ, मातृभ्यो बलिमुपहर।

विदू। भो! ण गमिस्सं। *

चारु। धिक् कष्टम्!—

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते,
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति. शीलशशिनः कान्तिः परिम्लायते,
पापं कर्म्म च यत् परैरपि कृतं, तत् तस्य सम्भाव्यते॥३६॥

अपिच,—सङ्गं नैव हि कश्चिदस्य कुरुते, सम्भाषते नादरात्,
सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।

---

* भोः! न गमिष्यामि।

---

मातृभ्यो बलिप्रदानाय समादिष्टेन विदूषकेण कृतं प्रत्याख्यानमाकर्ण्यातिदुःखित-स्वारुदत्तः सनिर्वेदं दैन्यमेव एतद्दुःखनिदानमिति श्लोकद्वयेनाह, दारिद्र्यादिति।—बान्धवजनः,—सुहृज्जनः, पुरुषस्य—जनस्य, दारिद्र्यात्—अधनत्वात्, वाक्ये—वचसि, न सन्तिष्ठते—वाक्यं न गृह्णाति, न प्रतिपालयतीत्यर्थः, [ "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इति आत्मनेपदम्) प्रतापाभावात् इति भावः, सुस्निग्धाः,—अति-प्रणयिनः, सुहृदः,—बन्धवः, विमुखीभवन्ति—प्रातिकूल्यमापद्यन्ते, आपदः,—विपत्तयः, स्फारीभवन्ति—विस्तारमापद्यन्ते, सत्त्वं—बलं, ह्रासं—मन्दीभावम्, उपैति—प्राप्नोति, शीलशशिनः,—सद्वृत्तचन्द्रस्य, कान्तिः,—दीप्तिः, परिम्लायते—परितो म्लाना भवति, ह्रासं गच्छतीत्यर्थः, किञ्चेति चार्थः, परैः,—अन्यैरपि, कृतम्—आचरितं, यत् पापं—पापजनकं, कर्म्म—चौर्य्यादिकमित्यर्थः, तत्—पापजनकं कर्म्म, तस्य—दरिद्रस्य, सम्भाव्यते—अनुमीयते, दरिद्रतया इदमनेनैव कृतमिति निश्चीयते इत्यर्थः। अत्र शीलशशिन इति रूपकोपमयोः सन्देहसङ्करः। शार्दूलविक्रीडितं वृत्तम्॥३६॥

सङ्गमिति।—हि—यतः, कश्चित्—कोऽपि, जन इति शेषः, अस्य—दरिद्रस्य, सङ्गं—संसर्गं, नैव कुरुते, आदरात्—स्नेहात्, न सम्भाषते—नालपतीत्यर्थः, दरिद्र-मिति शेषः, उत्सवेषु—महेषु, आनन्दजनकव्यापारेष्वित्यर्थः, धनिनां—विभववतां,

दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया,
मन्ये, निर्द्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ३७ ॥

अपिच,—

दारिद्र्य ! शोचामि भवन्तमेव-
मस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये,
ममेति चिन्ता क्व गमिष्यसि त्वम् ? ॥ ३८ ॥

गृहं—भवनं, सम्प्राप्तः,—समागतः, दरिद्रः इति शेषः, सावज्ञं—सावहेलम्, आलोक्यते—दृश्यते, लोकैरिति शेषः, तथा अल्पच्छदः,—सामान्यपरिच्छदः, मलिनवेशो दरिद्र इत्यर्थः, लज्जया—मलिनवेशत्वप्रयुक्तत्रपयेत्यर्थः, महाजनस्य—उत्तमपरिच्छदवतो धनिन इत्यर्थः, दूरादेव विहरति—भ्रमति, अतः निर्द्धनता—दारिद्र्यम्, अपरम्—अन्यत्, षष्ठं—ब्रह्महत्यादिपञ्चविधातिरिक्तं, प्रकामं—पूर्णं, महापातकं—महापातकस्थानीया इत्यर्थः, इति मन्ये—सम्भावयामि। पातित्यजनकपातकविशेषमहापातकानां पञ्चविधत्वं मनुना प्रतिपादितम्; यथा,—"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥" इत्यस्य षष्ठविधत्वमुपपन्नमिति सारः। अत्र षष्ठमहापातकस्याप्रसिद्ध्या मन्ये इत्युत्प्रेक्षावाचकतया उत्प्रेक्षाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ३७॥

दारिद्र्येति।—हे दारिद्र्य!—दैन्य! भवन्तं—त्वां, शोचामि—तव भविष्यद्दशामनुचिन्तयन् दुःखमनुभवामीत्यर्थः, यतः, त्वं सुहृत् इति—अयं ममातिप्रियत्वेन बन्धुरिति, मत्वेति शेषः, अस्मच्छरीरे—मम देहे, [अस्माकं शरीरे इति विग्रहे बहुत्वम् "अस्मदो द्वयोश्च" (१।२।५९ पा०) इत्यनेन साधु] एवम्—इत्थं सुखेन, उषित्वा—वासं कृत्वा, मन्दभाग्ये—हतभाग्ये, मयि विपन्नदेहे—मृते सति, क्व—कुत्र, गमिष्यसीति मम चिन्ता—भावना; अस्मत्सदृक् कोऽपि ते सार्व्वकालिकः सुहृन्नास्ति इति अस्मदभावे तव निर्विवादमवस्थानस्थानं न पश्यामीति महती मे चिन्ता इति तात्पर्य्यम्। दारिद्र्यशब्दस्य नपुंसकत्वेन भवन्तमिति पुंस्त्वनिर्देशः प्रामादिकः, इति चिन्त्यम्, अत एवात्र च्युतसंस्कारता दोषोऽप्यस्ति। अर्थपरत्वात् पुंलिङ्गतेति केचित्। तं भवम्—उत्पत्तिं, शोचामि इति केषाचित् कुव्याख्या हेया। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम्॥ ३८॥

विदू। [सवैलक्ष्यम्] भो वअस्स ! जइ मए गंतव्वं, ता एसा वि मे सहाइणी रदणिआ भोदु। *

चारु। रदनिके ! मैत्रेयमनुगच्छ।

चेटी। जं अज्जो आणवेदि। †

विदू। भोदि रदणिए ! गेण्ह बलिं पदीवं अ; अहं अवावुदं पक्खदुआरअं करोमि। ‡ [तथा करोति]।

वस। मम अब्भुववत्तिणिमित्तं (द) विअ अवावुदं पक्खदुआरअं, ता जाव पविसामि। [दृष्ट्वा]। हद्धी ! हद्धी ! कधं पदीवो !! § [पटान्तेन निर्वाप्य प्रविष्टा]।

चारु। मैत्रेय ! किमेतत् ?

विदू। अवावुदपक्खदुआरएण पिंडीकिदेण (ध) वादेण णिव्वाविदो पदीवो। भोदि रदणिए ! णिक्कम तुमं पक्खदुआरएण; अहंपि अब्भंतरचदुस्सालादो पदीवं पज्जालिअ आअच्छामि। ¶ [इति निष्क्रान्तः]।

शकारः। भावे ! भावे ! अस्सेशामि वशंतशेणिअं। **

विटः। अन्विष्यताम् अन्विष्यताम्।

---

* भो वयस्य ! यदि मया गन्तव्यं, तदेषाऽपि मम सहायिनी रदनिका भवतु।

† यत् आर्य्य आज्ञापयति।

‡ भवति रदनिके ! गृहाण बलिं प्रदीपञ्च; अहम् अपावृतं पक्षद्वारकं करोमि।

§ मम अभ्युपपत्तिनिमित्तमिव अपावृतं पक्षद्वारकम्; तत् यावत् प्रविशामि। हा धिक् ! हा धिक् ! कथं प्रदीपः !!

¶ अपावृतपक्षद्वारेण पिण्डीकृतेन वातेन निर्वापितः प्रदीपः। भवति रदनिके ! निष्क्राम त्वं पक्षद्वारकेण, अहमपि अभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्य आगच्छामि।

** भाव ! भाव ! अन्विष्यामि वसन्तसेनिकाम्।

(द) अभ्युपपत्तिनिमित्तम्—अनुग्रहार्थम्।

(ध) पिण्डीकृतेन—राशीभूतेन।

शकारः। [ विटं धृत्वा ]। **भावे! भावे! गहिदा गहिदा।** *

विटः। **मूर्ख! नन्वहम्।**

शकारः। **इदो दाव पच्छन्नो भविअ एअंते भावे चिट्ठदु।** [ पुनरन्विष्य चेटं गृहीत्वा ] **भावे! भावे! गहिदा गहिदा।** †

चेटः। **भट्टके! चेडे ह्गे।** ‡

शकारः। **इदो भावे, इदो चेडे। भावे चेड़े, चेड़े भावे। तुम्हे दाव एअंते चिट्ठ।** [ पुनरन्विष्य रदनिकां केशेषु गृहीत्वा ] **भावे! भावे! शंपदं गहिदा वशंतशेणिआ।** §—

**अंधआले पलाअंती, मल्लगंधेण शूइदा।**
**केशविंदे पलामिट्ठा, चाणक्केणेव्व दोवदी** ¶ ॥ ३८ ॥

---

* भाव! भाव! गृहीता गृहीता।

† इतस्तावत् प्रच्छन्नो भूत्वा एकान्ते भावस्तिष्ठतु। भाव! भाव! गृहीता गृहीता।

‡ भट्टारक! चेटोऽहम्।

§ इतो भावः, इतश्चेटः। भावश्चेटः, चेटो भावः। युवां तावत् एकान्ते तिष्ठतम्। भाव! भाव! साम्प्रतं गृहीता वसन्तसेनिका।

¶ अन्धकारे पलायमाना, माल्यगन्धेन सूचिता।
केशवृन्दे परामृष्टा, चाणक्येनेव द्रौपदी॥

---

गाढान्धकारे काञ्चित् गृहीत्वा शकारः तदेव विटसकाशं ख्यापयति, अन्धकारे इति।—अन्धकारे—तिमिराच्छन्नप्रदेशे, पलायमाना—पलाय्य अपसरन्ती अपि, माल्यगन्धेन—स्वकण्ठपरिहितस्रजःसौरभेण, सूचिता—ज्ञापिता, इयं वसन्तसेनेति शेषः, चाणक्येन—स्वनामप्रसिद्धपण्डितेन, द्रौपदी—द्रुपदराजतनयेव, केशवृन्दे—केशकलापे, केशपाशावच्छेदेनेत्यर्थः, [ इह अवच्छेदे सप्तमी ] परामृष्टा—गृहीता इत्यर्थः। अत्र शकारवाक्ये उपमाद्यार्हतिः सोढव्या। [ "केशविंदे" इत्यत्र "केश-हत्थे" इति पाठे—"केशहस्ते" इति संस्कृतं, तत्र हस्तशब्दस्य केशशब्दोत्तरवर्त्तित्वात् कलापार्थकत्वं,—"पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरोक्तेः ]। अनुष्टुप् वृत्तम्॥ ३९॥

विटः । एषाऽसि वयसो दर्पात् कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥ ४० ॥

शकारः । एशाशि वाशू ! शिलशि गहीदा,
केशेशु, बालेशु, शिलोलुहेशु ।
अक्कोश विक्कोश. लबाहिचंडं.
शंभुं, शिवं, शंकलमीशलं वा * ॥ ४१ ॥

रद । [ सभयम् ] किं अज्जमिस्सेहिं ववसिदं ? † (न)

विटः । का.णे.लीमातः ! अन्य एवैष स्वरसंयोगः ।

शकारः । भावे ! भावे ! जधा दहिक्कशिपलिलुद्धाए मज्जालीआए शलपलिवत्ते (प) होदि. तधा दाशीए धीए शलपलिव.ने कडे । ‡

* एषाऽसि वासु ! शिरसि गृहीता, केशेषु, बालेषु, शिरोरुहेषु ।
आक्रोश, विक्रोश, लपाधिचण्डं, शम्भुं, शिवं, शङ्करमीश्वरं वा ॥

† किम् आर्यमिश्रैर्व्यवसितम् ?

‡ भाव ! भाव ! यथा दधिसरपरिलुब्धाया मार्जारिकायाः स्वरपरिवर्त्तः भवति, तथा दास्याः पुत्र्याः स्वरप.रिवर्त्तः कृतः ।

"केशेषु गृहीता वसन्तसेना" इति शकारवचनं समाकर्ण्यातिक्लिष्टो विटस्तामेवानुशोचन्नाह. एषेति ।—एषा—अन्धकारविलीनाऽपि शकारेण गृह्यमाणा वसन्तसेना, त्वमिति शेषः, वयसः,—यौवनस्य, दर्पात्—अहङ्कारात्, कुलपुत्रस्य—सत्कुलप्रसूतस्य चारुदत्तस्य.अनुसारिणी—अनुगामिनी सती, सेवितव्येषु—सेवायोग्येषु, न तु आकर्षणार्हेष्वित्यर्थः, कुसुमाढ्येषु—पुष्पसङ्क्रियासम्पन्नेषु, पुष्पभूषितेषु इति यावत्, केशेषु—कुन्तलेषु, केशावकर्षणेनेत्यर्थः, [अत्र अवच्छेदे सप्तमी] कर्षिता असि, शकारेणेति शेषः, यौवनदर्पेण यदि त्वमनानुरूप्य पुरुषविशेषं चारुदत्तमाश्रयितुमेवं नाकरिष्यः, तदा पथि शकारेण तवैवं दुर्दशा नाभविष्यदिति भावः । अनुष्टुप् वृत्तम् ॥ ४० ॥

एशाशीति ।—अधिचण्डम्—अतिप्रचण्डम्, अत्युच्चैरित्यर्थः, लप—शब्दायस्व इत्यर्थः । [अत्र शकारवाक्ये विस्मितार्थकत्वं दोषायेति बोध्यम् ] । इन्द्रवज्रा वृत्तम् ॥ ४१ ॥

( न ) आर्यमिश्रैः,—मान्यैः, व्यवसितम्—आरब्धम् ।

( प ) दधिसरपरिलुब्धायाः,—दध्नः सरे—उपरिस्थिते सारांशे, परिलुब्धायाः,—सञ्जातलालसायाः । स्वरपरिवर्त्तः,—भिन्नकण्ठध्वनिः, कण्ठध्वनेरन्यथाभाव इत्यर्थः ।

विट:। कथं, स्वरपरिवर्त्त: कृत: ? अहो ! चित्रम्। अथवा किमत्र चित्रम् ?—

इयं रङ्गप्रवेशेन, कलानां चोपशिक्षया।
वञ्चनापण्डितत्वेन, स्वरनैपुण्यमाश्रिता ॥ ४२ ॥

[ प्रविश्य विदूषक: ] ही ही भो: ! पदोसमंदमारुदेण पसुबंधोवणीदस्स विअ छागलस्स हिअअं फुरफुराअदि (फ) पदीवो। [ उपसृत्य रदनिकां दृष्ट्वा ] भो रदणिए ! *

शकार:। भावे ! भावे ! मणुश्शे मणुश्शे। †

विट्। जुत्तं णेदं, सरिसं णेदं, जं अज्जचारुदत्तस्स दलिद्ददाए संपदं परपुरिसा गेहं पविशंति। ‡

रद। अज्ज मित्तेअ ! पेक्ख मे परिहवं। §

विदू। किं तव परिहवो ? आदु अम्हाणं ? ¶

* आश्चर्यम् ! भो: ! प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयं फुरफुरायते प्रदीप:। भो रदनिके !

† भाव ! भाव ! मनुष्यो मनुष्य:।

‡ युक्तं नेदं, सदृशं नेदं, यत् आर्य्यचारुदत्तस्य दरिद्रतया साम्प्रतं परपुरुषा गेहं प्रविशन्ति।

§ आर्य्य मैत्रेय। प्रेक्षस्व मे परिभवम्।

¶ किं तव परिभव: ? अथवा अस्माकम् ?

प्रथमं वसन्तसेनाया: स्वरपरिवृत्तेरसम्भवत्वमाशङ्क्य पुनस्तदेव समर्थयमान आह, इयमिति।—इयं—वसन्तसेना, रङ्गप्रवेशेन—रङ्ग:,—नाट्यशाला, ( "रङ्ग: स्यान्नृत्ययुद्धवो:" इति हेमचन्द्र: ) तत्र प्रवेशेन—तदधिकारप्राप्त्येत्यर्थ:, कलानां—नृत्यगीतादिकानाम्, उपशिक्षया—अभ्यासेन, वञ्चनापण्डितत्वेन—प्रतारणाचातुर्य्येण च, स्वरनैपुण्यं—स्वरविकृतिकरणपाटवम्, आश्रिता—प्राप्ता, शिक्षितेत्यर्थ:। अनुष्टुप् वृत्तम् ॥ ४२ ॥

( फ ) पशुबन्धोपनीतस्य—पशुबन्ध:,—पशुबधस्थानं, पशुमारणसाधनकाष्ठविशेषो वा, तत्र उपनीत:,—बधार्थम् उपस्थापित: तस्य। फुरफुरायते—अत्यर्थं प्रकम्पते इत्यर्थ:

रद। णं तुम्हाणं ज्जेव्व। *

विदू। किं एसो बलक्कारो? †

रद। अध इं। ‡

विदू। सच्चं? §

रद। सच्चं। ¶

विदू। [सक्रोधं दण्डकाष्ठमुद्यम्य] मा दाव। भो! सके गेहे कुक्कुरोवि दाव चंडो भोदि, किं उण अहं बम्हणो। ता एदिणा अम्हारिसजणभाअधेअकुड़िलेण दंडकट्ठेण दुट्टस्स विअ सुक्खाणवेणुअस्स मत्थअं दे पहारेहिं कुट्टइस्सं। **(ब)

विटः। महाब्राह्मण! (भ) मर्षय मर्षय।

विदू। [विटं दृष्ट्वा] ण एत्थ एसो अवरज्झदि। [शकारं दृष्ट्वा] एसो क्खु एत्थ अवरज्झदि। अरे रे राअसालअ! संट्ठाणअ! (म) दुज्जण! दुम्मणुस्स! जुत्तं णेदं; जइ वि णाम तत्तभवं अज्जचालुदत्तो दलिद्दो संबुत्तो, ता किं तस्स गुणेहिं ण

* ननु! युष्माकमेव। † किमेष बलात्कारः?

‡ अथ किम्। § सत्यम्? ¶ सत्यम्।

** मा तावत्। भोः! स्वके गेहे कुक्कुरोऽपि तावत् चण्डो भवति, किं पुनरहं ब्राह्मणः। तत् एतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि।

†† नात्र एषोऽपराध्यति। एष खलु अत्र अपराध्यति। अरे रे राजश्यालक! संस्थानक! दुर्ज्जन! दुर्मनुष्य! युक्तं नेदम्; यद्यपि नाम तत्रभवान् आर्य्यचारुदत्तो

(ब) कुट्टयिष्यामि—चूर्णयिष्यामि। अत्र सम्फेटो नाम विमर्शसन्ध्यङ्गं—"सम्फेटो रोषभाषणम्" इति लक्षणात्।

(भ) महाब्राह्मण इति परिहासोक्तिः, अधमब्राह्मण इत्यर्थः, महच्छब्दस्य ब्राह्मणपूर्व्ववर्त्तित्वे निन्दावाद उक्तः; यथा,—"शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति प्रवचनात्।

(म) संस्थानक इति शकारस्य नाम।

अलंकिदा उज्जइणी? जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो (य) करीअदि। †—

मा दुग्गदोत्ति परिहवो णत्थि कअंतस्स दुग्गदो णाम।
चारित्तेण विहीणो अड्ढोवि अ दुग्गदो होइ *॥ ४३॥

विटः। [सवैलक्ष्यम्] महाब्राह्मण! मर्षय मर्षय। अन्यजन-शङ्कया खलु इदमनुष्ठितं, न दर्पात्। पश्य,—

सकामाऽन्विष्यतेऽस्माभिः—

विदू। किं इअं? †

विटः। शान्तं पापं—

दरिद्रः संवृत्तः, तत् किं तस्य गुणैर्नालङ्कृता उज्जयिनी? येन तस्य गृहं प्रविश्य परिजनस्य ईदृशः उपमर्दः क्रियते।—

* मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम।
चारित्र्येण विहीनः आढ्योऽपि च दुर्गतो भवति॥

† किमियम्?

(य) उपमर्दः,—परिभवः, अवमाननेति यावत्।

शकारकृतमत्याचारं चारुदत्तस्य दारिद्र्यनिबन्धनमिति मत्वा अतिदुःखितो विदूषकः सखेदमाह, मेति।—अत्र अयम् इति ऊहनीयम्; दुर्गतः,—दरिद्रः, इति—अस्मात् हेतोः, परिभवः,—पराभवः, तदीयपरिजनोपमर्द्दरूपावमाननमित्यर्थः, मा—न, कर्त्तव्य इति शेषः, यतः कृतान्तस्य—दैवस्य, यमस्य वा, ("कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु" इति मेदिनी) समीपे इति शेषः, दुर्गतः,—निर्द्धनः, नास्ति, नाम—सम्भावनायां, निर्द्धन इति कृत्वा दण्डविशेषसम्भावना नास्तीत्यर्थः, असौ दैवसमीपे न दुर्गतः पुण्यवत्त्वात् यमसन्निधाने धनि-निर्द्धनयोः तुल्यत्वादिति वाऽऽशयः; यस्तु चारित्र्येण—सद्वृत्तेन, विहीनः,—विरहितः, भवतीति शेषः, स आढ्योऽपि—धनवानपि, दुर्गतः,—अभावग्रस्त इत्यर्थः, भवति; दुश्चरित्रस्यैव दुर्गत-संज्ञा, न तु सच्चरित्रस्येति भावः। गाथाच्छन्दः। अत्र प्रथमपादस्य त्रयोदशमात्रा-त्मकत्वात् गणभङ्गाभाव गाथालक्षणप्रवेशः स्यात् इति "परिहवो" इत्यत्र "परिहू" इति पाठः, "परिभूः" इति सं; परिभूः,—परिभव इत्यर्थः, भावे क्विप्, एवं व्याख्याय दोषोद्धारं कुर्व्वन्त्येके इति ध्येयम्॥ ४३॥

विटः । काचित् स्वाधीनयौवना

सा नष्टा, शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ ४४ ॥

सर्वथा इदमनुनयसर्वस्वं गृह्यताम् । [ इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ] ।

विदू । सप्पुरिस ! उट्ठेहि उट्ठेहि । अआणंतेण मए तुमं उवालद्धे, संपदं उण जाणंतो अणुणेमि । * (र)

विटः । ननु ! भवानेव अत्र अनुनेयः । तदुत्तिष्ठामि समयतः । (ल)

विदू । भणादु भवं । †

विटः । यदि इमं वृत्तान्तम् आर्य्यचारुदत्तस्य नाख्यास्यसि ।

विदू । ण कधइस्सं । ‡

* सत्पुरुष ! उत्तिष्ठ, उत्तिष्ठ । अजानता मया त्वमुपालब्धः, साम्प्रतं पुनर्जानन् अनुनयामि ।

† भणतु भवान् । ‡ न कथयिष्यामि ।

वसन्तसेनाशङ्कया रदनिकाया अवमर्द्दात् विदूषकेण तिरस्कृतो विटः स्वदोषं भ्रान्तिमूलकत्वेन परिहरति, सकामेति ।—सकामा—कामव्यवसायिनीति यावत्, स्वाधीनयौवना—स्वेच्छासाश्रितस्वयौवनव्यवहारा, न तु भर्त्राद्यधीना इति यावत्, काचित्—रमणी, [ "सकामा" "स्वाधीनयौवना" इति पदद्वयेन सा वेश्येति निश्चीयते, अतस्तस्याः साधारणत्वात् धारणं न दोषावहमिति बोध्यम् ] अस्माभिः अन्विष्यते,—अनुसन्धीयते, सा—अस्माभिरन्विष्यमाणा रमणीत्यर्थः, नष्टा—अदर्शनं गता, पलायितेत्यर्थः, तस्याः शङ्कया—भ्रमेण इति यावत्, इयं—रदनिकोपमर्दनजनिता, शीलवञ्चना—शीलस्य—सदाचारस्य, वञ्चना—ध्वंसरूपा प्रतारणा, प्राप्ता, अस्माभिरिति शेषः । पथ्यावक्त्रं वृत्तम् ॥ ४४ ॥

(र) उपालब्धः,—तिरस्कृतः । अनुनयामि—आद्रिये ।

(ल) समयतः,—शपथतः, अङ्गीकारतः इति यावत्, यदि अङ्गीकरोषि तदा इत्यर्थः ; क्रियाबन्धादिति केचित् ।

विटः। एष ते प्रणयो विप्र! शिरसा धार्य्यते मया।
गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्जिताः॥ ४५॥

शकारः। [सासूयम्] किं णिमित्तं उण भावे! एदश्श दुट्टबडुअश्श विणअंजलिं कदुअ पाएशुं णिबड़िदे? *

विटः। भीतोऽस्मि।

शकारः। कश्श तुमं भीदे? †

विटः। तस्य चारुदत्तस्य गुणेभ्यः।

शकारः। के बिअ तश्श गुणाः? जश्श गेहं पविशिअ अशिदव्वं पि णत्थि। ‡

विटः। मा मैवं—
सोऽस्मद्विधानां प्रणयैः कृशीकृतो
न तेन कश्चित् विभवैर्विमानितः।

---

* किं निमित्तं पुनर्भाव! एतस्य दुष्टवटुकस्य विनयाञ्जलिं कृत्वा पादयोर्निपतितः?।

† कस्मात् त्वं भीतः?

‡ के इव तस्य गुणाः? यस्य गृहं प्रविश्य अशितव्यमपि नास्ति।

---

विटेनानुकूली विदूषकः तत्कृतमपराधं प्रभवे न कथयिष्यतीत्याकर्ण्य तद्गुणाकृष्टो विटः तमेवाभिनन्दयन्नाह, एष इति।—हे विप्र! मया ते—तव, एषः,—त्वया क्रियमाण इत्यर्थः, प्रणयः,—प्रीतिनिबन्धना उत्थानार्थानुमतिः, शिरसा—उत्तमाङ्गेनेत्यर्थः, धार्य्यते—गृह्यते, येन—हेतुना, शस्त्रवन्तः,—शस्त्रधारिणः, अपि वयं गुणशस्त्रैः,—औदार्य्यादिगुणरूपप्रशस्तविशिषैः, चारुदत्तस्येति शेषः, निर्जिताः,—पराभूताः। अत्र गुणशस्त्रैरिति रूपकमलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ४५॥

शकारमुखात् चारुदत्तस्य दारिद्र्यविषयकं सोपहासवचनमाकर्ण्यातिदुःखितः विटः तदीयदारिद्र्यस्यापि श्लाघनीयत्वमाह, स इति।—सः,—चारुदत्तः, अस्मद्विधानाम्—अस्मादृशानां, प्रणयैः,—पौनःपुनिकधनाद्यभिलषितप्रार्थनाभिः, कृशीकृतः,—निर्द्धनीकृतः, अस्मद्विधेभ्यः धनानि दत्त्वैव निर्द्धनो जात इत्यर्थः, तेन—चारुदत्तेन, कश्चित्—कोऽपि, याचको जन इति शेषः, [ "कृश"शब्दस्तु कृशधातोर्निष्ठान्तस्य

निदाघकालेष्विव सोदको ह्रदो

नृणां स तृष्णामपनीय शुष्कवान् ॥ ४६ ॥

शकारः । [ सामर्षम् ] के शे गब्भदाशीए पुत्ते ? * (व)

शूले विक्कते ? पंडवे शेदकेदू ?

पुत्ते लाधाए ? लावणे ? इंदपुत्ते ? ।

* कः स गर्भदास्याः पुत्रः ?

† शूरो विक्रान्तः ? पाण्डवः श्वेतकेतुः ?

पुत्रो राधायाः ? रावणः ? इन्द्रपुत्रः ? ।

"अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" ( ८।२।५५ पा० ) इति निपातनात् अकारः ] विभवैः,—सम्पद्भिः, न विमानितः,—न अवमतः, धनदानेन सर्वे एव याचकाः सन्तोषिता इत्यर्थः, सः,—चारुदत्तः, निदाघकालेषु—ग्रीष्मसमयेषु, ( प्रतिनिदाघम् इति बहुवचनार्थः ) सोदकः,—उदकपूर्णः, ह्रदः इव—अगाधजल-जलाशय इव, नृणां—धनलोलुपानां, पक्षे—पिपासूनां मानवानां, तृष्णां—धनाभिलाषं, पक्षे—उदन्याम्, अपनीय—दूरीकृत्य, शुष्कवान्—धनाभावरूपं, जलाभावरूपञ्च शोषं प्राप्तः । [ "शुष्कवान्" इति शुषधातोः निष्ठा-तस्य "शुषः कः" ( ८।२।५१ पा० ) इति कः ] । अत्र उपमाऽलङ्कारः । वंशस्थविलं वृत्तम् ॥ ४६ ॥

( व ) सामर्षं—सक्रोधम् । गर्भदास्याः,—चिरं वन्दीभूतायाः स्त्रियाः, पुत्रः । चारुदत्तं प्रति सावज्ञोक्तिरियम् ।

यद्गुणाकृष्टस्त्वमेवमवनतः, किमसौ वक्ष्यमाणवीराणामन्यतमः ? इत्याह, शूर इति ।—विक्रान्तः,—पराक्रमशाली, शूरः,—तन्नामा कश्चित् प्रबलप्रतापी नृपतिः, किम् ? इति शेषः, एवं सर्वत्र । श्वेतकेतुः,—शुक्लवर्णाश्वयुक्तः, [ श्वेतः,—शुक्लवर्णः, केतुः,—चिह्नं, वाहनरूपं यस्य स इति विग्रहः ] पाण्डवः,—अर्जुन ? इत्यर्थः, ( पाण्डवेषु अर्ज्जुनस्यैव धनुर्विद्याविशारदतया वीरत्वेन प्रसिद्धेः तन्नामकथनम् ) ; यद्वा,—श्वेतकेतुः,—औद्दालकिः, तन्नामा दुर्वाससो मातुलः ऋषिविशेषः ? इत्यर्थः, ( केचित्तु—औद्दालकेर्वीरत्वेन प्रसिद्धेः अभावात्, वीराणां नामकीर्त्तनस्यैव अत्र प्रस्तुतत्वाच्च व्याख्यानमेतत् नाद्रियन्ते, तन्न मनोरमम्, अस्य शकारवचनत्वेन औद्दालकेः वीरत्वेनाप्रसिद्धेः तथा पाण्डवत्वाभावस्य च सत्त्वेऽपि दोषत्वादूषकत्वात् इति बोध्यम् ) ; अथवा राधायाः पुत्रः,—राधासुतः कर्णः ? ( अनूढायां कुन्त्याम् सूर्य्याज्जातस्यापि

आहो कुंतीए तेण लामेण जादे ?

अश्शत्थामे ? धम्मपुत्ते ? जडाऊ ? † ॥ ४७ ॥

विटः । मूर्ख ! आर्य्यचारुदत्तः खलु असौ,—

दीनानां कल्पवृक्षः, स्वगुणफलनतः, सज्जनानां कुटुम्बी,

आदर्शः शिक्षितानां, सुचरितनिकषः, शीलवेलासमुद्रः ।

सत्कर्त्ता, नावमन्ता, पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो

ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया, चोच्छ्वसन्तीव चान्ये । ४८॥

तदितो गच्छामः ।

---

† आहो कुन्त्यां तेन रामेण जातः ?

अश्वत्थामा ? धर्मपुत्रः ? जटायुः ? ॥

---

कर्णस्य राधया प्रतिपालिततया तस्याः पुत्रत्वेन प्रसिद्धिरिति बोध्यम् ); रावणः,—लङ्काधिपतिर्वा ? इन्द्रपुत्रः,—जयन्तः, वालिनामकः वानरराजो वा ? [ "इंददत्ते" इति पाठान्तरे,—"इन्द्रदत्तः" इति सं ]; आहो—अथवा, तेन—प्रसिद्धेन, रामेण—दशरथात्मजेनेत्यर्थः, कुन्त्यां—पृथायां, जातः,—उत्पन्नो वा ? इत्यर्थः, ( रामेण जातः इति विरुद्धभाषित्वम् ); अश्वत्थामा—तन्नामकः प्रसिद्धवीरो वा ? धर्मपुत्रः,—युधिष्ठिरो वा ? जटायुः,—तन्नामा प्रबलपराक्रान्तः पक्षिविशेषो वा ? यद्ययमेतेषु कश्चित् स्यात्, तदा तवायं व्यवहारः शोभेतेति भावः । श्लोकोऽयं वैश्वदेव्या वृत्तेन सन्निबद्धः,—"बाणाश्वैश्छिन्ना वैश्वदेवी म-मौ यौ" इति लक्षणात् ॥ ४७ ॥

शकारकृतं सोपहासवचनमुपेक्ष्य साम्प्रतं चारुदत्तस्य प्रकृतपरिचयप्रदानार्थं तदीयगुणावलीमनुवर्णयन्नाह, दीनानामिति ।—दीनानां—दुर्गतानां जनानां, कल्पवृक्षः,—कल्पतरुः, स इव वाञ्छितफलप्रदः इत्यर्थः, स्वगुणानां—निजदयादाक्षिण्यादीनां, फलैः,—परिणामैः, नतः,—नम्रीभूतः, अतिविनयी जातः इत्यर्थः, सज्जनानां—साधूनां, कुटुम्बी—आत्मीयः, उपजीव्य इति यावत्, शिक्षितानां—विदुषाम्, आदर्शः,—निदर्शनभूत इत्यर्थः, सुचरितानां—सत्स्वभावानां, निकषः,—सुवर्णकषणोपलवत् परीक्षास्थानमित्यर्थः, [ निकष्यतेऽस्मिन्निति निकषः सुवर्णकषणोपलः ] शीलवेलासमुद्रः,—शीलमेव—सद्वृत्तमेव, वेला—तटभूमिः, तस्याः समुद्रः,—सागरः, समुद्रो वेलाभूमिमिव नायं कदाऽपि सद्वृत्तमतिक्रामतीत्यर्थः, सत्कर्त्ता—सत्कार्य्यकारकः, नावमन्ता—न कदापि अवमानकारी, पुरुषाणां—पुरुषपदवाच्याना॰

शकारः। अगेण्हिअ वशंतशेणिअं ? *

विटः। नष्टा (ग्र) वसन्तसेना।

शकारः। कधं विअ ? †

विटः। अन्धस्य दृष्टिरिव, पुष्टिरिवातुरस्य,
मूर्खस्य बुद्धिरिव, सिद्धिरिवालसस्य।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या,
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा॥ ४९॥

* अगृहीत्वा वसन्तसेनाम् ? † कथमिव ?

मित्यर्थः, ये गुणाः,—दयादाक्षिण्यादयः, तेषां निधिः,—आलयः, तथा दक्षिणं—सरलम्, उदारं—महत्, सत्त्वं—स्वभावः यस्य तादृशः, सारल्यौदार्य्यविमण्डित-प्रकृतिरिति यावत्, सः,—चारुदत्तः, एकः,—केवलः, हि—निश्चितम्, अधिक-गुणतया—सर्वातिशायिगुणशालित्वेनेत्यर्थः, श्लाघ्यः,—प्रशंसार्हः सन्, जीवति—जीवनप्रयोजनवान् भवति, अन्ये—अपरे, तद्भिन्ना इत्यर्थः, जनाः इति शेषः, उच्छ्वसन्तीव—जीवन्तीव, भस्त्रादिवत् श्वासप्रश्वासवन्तो वृथा जीवनं धारयन्तीत्यर्थः। [ अत्र महतश्चारुदत्तचरितस्य प्रस्तुताङ्गतया उदात्तालङ्कारः, स च रूपकेणानुप्राणितः ]। स्रग्धरा वृत्तम्॥ ४८॥

( ग्र ) नष्टा—अदर्शनं गता।

सहसा तस्या अदर्शनकारणं पृष्टो विटः शकारस्यानार्य्यव्यवहारमेव तत्कारणत्वे-नोपवर्णयन्नाह, अन्धस्येति।—सा—वसन्तसेना इत्यर्थः, अन्धस्य—दृष्टिशक्तिहीनस्य, दृष्टिः,—दर्शनशक्तिरिव, आतुरस्य—पीड़ितस्य, पुष्टिः,—शरीरसामर्थ्यमिव, मूर्खस्य—अविवेकिनः, बुद्धिः,—विवेकशक्तिरिव, अलसस्य—निश्चेष्टस्य, सिद्धिः,—कार्य्य-साफल्यमिव, स्वल्पा—क्षीणा, स्मृतिः,—स्मरणशक्तिः यस्य तस्य, दुर्मेधस इत्यर्थः, तथा व्यसनिनः,—"मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽऽट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" इत्यादिमनूक्तकाम-क्रोधादिजदोषासक्तस्य, विपन्नस्य वा, ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इति कोषः) परमा विद्या—परमार्थज्ञानमिव, तथा अरिजने—शत्रुजने, रतिः,—अनुराग इव, त्वाम्—अनार्य्य-मित्यर्थः, प्राप्य—लब्ध्वा, प्रनष्टा—त्वत्सकाशे अदर्शनं गतेत्यर्थः। अत्र एकस्या उप-

शकारः। अगेण्हिअ वशंतशेणिअं ण गमिश्शं। *

विटः। एतदपि न श्रुतं त्वया?—

आलाने गृह्यते हस्ती, वाजी वल्गासु गृह्यते।

हृदये गृह्यते नारी, यदिदं नास्ति गम्यताम्॥ ५०॥

शकारः। यदि गच्छशि, गच्छ तुमं; हगे ण गमिश्शं। †

विटः। एवं, गच्छामि। [इति निष्क्रान्तः]।

शकारः। गडे क्खु भावे अभावं। [विदूषकमुद्दिश्य] अले काकपदशीशमत्थका (ष) दुट्टवडुआ! उवविश, उवविश। ‡

---

* अगृहीत्वा वसन्तसेनां न गमिष्यामि।

† यदि गच्छसि, गच्छ त्वम्; अहं न गमिष्यामि।

‡ गतः खलु भावोऽभावम्। अरे काकपदशीर्षमस्तक दुष्टवटुक! उपविश, उपविश।

---

मेयभूताया वसन्तसेनाया अम्बष्टि-आतुरपुष्याद्यनेकोपमानदर्शनात् मालोपमाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ ४९॥

वसन्तसेनाया ग्रहणसाधनाभाववतः तव पुनस्तद्ग्रहणाभिलाषः विफल इत्याह, आलाने इति।—हस्ती—करी, आलाने—बन्धनस्तम्भे, गृह्यते—निरुध्यते, वाजी—अश्वः, वल्गासु—मुखरश्मिषु, गृह्यते, नारी—रमणी, हृदये—हृदि, गृह्यते, यत्—यदि, इदं—रमणीजनधारणोचितं हृदयमित्यर्थः, [यदिति यद्यर्थेऽव्ययम्; "यदीदम्" इति पाठे तु स्पष्ट एवार्थः] नास्ति—न विद्यते, तदा गम्यतां—चल्यतां, तद्ग्रहणाशाया निष्फलत्वात् इतः प्रस्थानमेव साम्प्रतमिति भावः। अत्र आलानादौ हस्त्यादिग्रहणमिव हृदये नारीग्रहणमिति बिम्बानुबिम्बबोधे पर्य्यवसानात् निदर्शनाऽलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ५०॥

(ष) अभावम्,—अदर्शनम्। काकपदशीर्षमस्तक!—काकपदवत् शीर्षं लक्षणया शीर्षस्था शिखा यत्र तादृशं, मस्तकं यस्य तत्सम्बोधने, कतिपयकेशयुक्तमस्तकमध्यभाग इत्यर्थः; केचित् तु—द्यूताद्यकार्य्यप्रवृत्तौ काकपदाङ्कितयो ये धूर्त्ताः तेषां शीर्षप्रायाः,—ग्रामण्यः अग्रगण्या इत्यर्थः, तेषामपि मस्तकभूत!—धूर्त्तचक्रवर्त्तिनामपि प्रधानभूत! इति कुलाचारयोराक्षेपः कृतः; अपरे तु—काकपदम्—अशुभसूचकं चिह्नं, तत् शीर्षे यस्य तादृशं, मस्तकं यस्येति व्याचक्षते। शीर्षमस्तकेति

विदू। उववेसिदा ज्जेव्व अम्हे। *

शकारः। केण ? †

विदू। कअंतेण। ‡ (स)

शकारः। उट्ठेहि उट्ठेहि। §

विदू। उट्ठिस्सामो। ¶

शकारः। कदा ? **

विदू। जदा पुणो वि देव्वं अणुऊलं भविस्सदि। ††

शकारः। अले ! लोद लोद। ‡‡

विदू। रोदाविदा ज्जेव्व अम्हे। §§

शकारः। केण ? ¶¶

विदू। दुग्गदीए। ***

शकारः। अले ! हश हश। †††

विदू। हशिस्सामो। ‡‡‡

शकारः। कदा ? §§§

विदू। पुणो वि रुद्धीए अज्जचारुदत्तस्स। ¶¶¶ (ह)

* उपवेशिता एव वयम्। † केन ? ‡ कृतान्तेन।
§ उत्तिष्ठ उत्तिष्ठ। ¶ उत्थास्यामः। ** कदा ?
†† यदा पुनरपि दैवमनुकूलं भविष्यति।
‡‡ अरे ! रुदिहि रुदिहि। §§ रोदिता एव वयम्।
¶¶ केन ? *** दुर्गत्या।
††† अरे ! हस हस। ‡‡‡ हसिष्यामः।
§§§ कदा ? ¶¶¶ पुनरपि ऋद्ध्या आर्य्यचारुदत्तस्य।

पौनरुक्त्यमपि शकारवचनत्वेन न दोषावहमिति व्याख्यामिमां समधिकश्रेयस्तया मन्यन्ते, वयन्त्वत्र उदासीना एव।

(स) कृतान्तेन—दैवेन इत्यर्थः।

(ह) एतेन प्रासङ्गिकचरितप्रकटनेन प्रकरी नाम कार्य्यावस्था दर्शिता,— "प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता" इति लक्षणात्।

शकारः। अले ले दुट्टवडुआ! भणेसि मम वअणेण तं दलिद्दचालुदत्तअं;—एषा शशुवस्था शहिलस्था णवणाड़अ-दंशणुट्ठिदा शुत्तधालिव्व, वशंतशेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता, अम्हेहिं वलक्काला-णुणीअमाणा तुह गेहं पविट्टा। ता जइ मम हत्थे शअं ज्जेव्व पट्ठाविअ एणं शमप्पेशि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह (क) तव मए अणुवद्धा पीदो हुविश्शदि; आदु अणिज्जादमाणाह आमलणंतिके वेले हुविश्शदि। अवि अ, पेक्ख पेक्ख;—*

कक्कालुका गोच्छड़लित्तवेंटा,
शाकं अ शुक्खे तलिदे हु मंशे।

---

* अरे रे दुष्टवटुक! भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्;—एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेना नाम गणिकादारिका कामदेवायतनोद्यानात् प्रभृति त्वामनुरक्ता, अस्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा। तत् यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्य्यातयमानस्य तव मयाऽनुबद्धा प्रीतिर्भविष्यति; अथवा अनिर्य्यातयमानस्य आमरणान्तकं [ "मलणांतिके" इति पाठान्तरे "मरणान्तिकम्" इति सं ] वैरं भविष्यति। अपि च, प्रेक्षस्व प्रेक्षस्व,—

† कर्कारुको गोमयलिप्तवृन्तः,
शाकञ्च शुष्कं, तलितं खलु मांसम्।

(क) अधिकरणे—धर्माधिकरणे, विचारगृहे इत्यर्थः, व्यवहारम्—अभियोगम्। [ "व्यवहारं विना" इत्यनेन वक्ष्यमाणव्यवहाराख्यस्य नवमाङ्कस्य सूचनं बोध्यम् ] लघु—शीघ्रं, निर्य्यातयमानस्य—अर्पयतः, वसन्तसेनामिति शेषः।

निर्विवादं वसन्तसेनाया अदाने करिष्यमाणं प्रतिकारमाह, कर्कारुक इति।—गोमयेन—गोपुरीषेण, लिप्तं—वेष्टितमित्यर्थः, वृन्तं—बन्धनं यस्य तादृशः, कर्कारुकः,—कर्कारुरेव इति कर्कारुकः, कुष्माण्ड इत्यर्थः, ( "कुष्माण्डकस्तु कर्कारुः" इत्यमरः ) शुष्कं—नीरसं, शाकं, तलितं—घृतादिसम्भृष्टं मांसं, तथा च,—"शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बुधैः॥" इति भाव-

भत्ते अ हेमंतिअलत्तिसिद्धे,

लीणे अ वेले ण हु होदि पूदी ॥ ५१ ॥

सोत्थिअं भणेसि, लहुअं भणेसि, तधा भणेसि, जधा इगे अत्तण केलिकाए पाशादबालग्गकवोदबालिआए उवविट्टे शुणामि; अस्सधा (ख) जदि ण भणेसि, ता कवाड़तलपविट्टं कवित्थगुड़िअं विअ मत्थअं दे मड़मड़ाइस्सं। *

---

भक्तञ्च हैमन्तिक-रात्रि-सिद्धं,

लीनायाञ्च वेलायां न खलु भवति पूति ॥

* स्वस्तिकं भणिष्यसि, लघुकं भणिष्यसि, तथा भणिष्यसि, यथाऽहमात्मीयायां क्रीड़ितायां प्रासादबालाग्र-कपोत-पालिकायामुपविष्टः शृणोमि; अन्यथा यदि न भणसि, तदा कपाटतलप्रविष्टं कपित्थगुलिकमिव मस्तकं ते मड़मड़ायिष्ये।

---

प्रकाश:; तथा हैमन्तिकायां—हेमन्तकालीनायां, रात्रौ—रजन्यां, सिद्धं—पचेलिममित्यर्थः, भक्तम्—अन्नञ्च, वेलायां—समये, लीनायाम्—अतीतायामपि, एतत् सर्वं, न खलु—नैव, पूति—दुर्गन्धं, भवति। "ककालुका" इत्यत्र स्त्रीलिङ्गत्वं "लीणे अ वेलि" इत्यत्र च पुंलिङ्गत्वं शकारवाक्यत्वात् न दुष्टम् "आगमलिङ्गविरुद्धम्" इत्यादि वचनात्। "लीणे अ वेलि" इति प्राकृतस्य संस्कृते "क्षणञ्च वैरम्" इत्यपि भवितुमर्हति। कर्कारुकादीनां गोमयलिप्तत्वादिना समयातिक्रमेऽपि पूतिगन्धित्वादिरूपदोषो न भवति, किन्तु वसन्तसेनाया मद्यमप्रदानेन समयातिक्रमे महान् शत्रुतारूपदोषो भवेदिति भावः। अत्र गोमयलिप्तकर्कारुकादीनां समयातिक्रमेऽपि पूतिगन्धित्वाभावरूपाप्रस्तुतेभ्यः वसन्तसेनायाः शीघ्राप्रदाने वैररूपदोषः प्रस्तुतः वैधर्म्येण प्रतीयते इत्यप्रस्तुतप्रशंसाऽलङ्कारः। इन्द्रवज्रा वृत्तम् ॥ ५१ ॥

(ख) स्वस्तिकमिति।—स्वस्तिकं—शुभं, ममानुकूलं यथा तथेत्यर्थः, भविष्यसि—वक्ष्यसि, लघुकं—शीघ्रम्। आत्मीयायां—स्वाधिकृतायां, क्रीड़ितायां—खेलनवत्यां, प्रासादस्य—राजभवनस्य, ("प्रासादो देव-भूभुजाम्" इत्यमरः) बालम्—अभिनवम्, अग्रं यस्याः तादृशी, नवनिर्म्मिताग्रभागा इत्यर्थः, या कपोतपालिका—कपोतानां पालिका—रक्षणभूमिः, विटङ्कमित्यर्थः, ("कपोतपालिकायान्तु विटङ्कं पुं-नपुंसकम्" इत्यमरः) तस्याम्, अत्र लक्षणया कपोतपालिकोपरिभागे इत्यर्थः। अन्यथा—अन्यस्मिन् प्रकारे सति, पक्षान्तरे इत्यर्थः।

विदू। भणिस्सं। *

शकारः। [ अपवार्य ] चेड़े ! गड़े शच्चकं ज्जेव्व भावे ? †

चेटः। अध इं। ‡

शकारः। ता शिग्घं अवक्कमम्ह। §

चेटः। ता गेण्हदु भट्टके असिं। ¶

शकारः। तव ज्जेव्व हत्थे चिट्ठदु। **

चेटः। एशे भट्टालक, गेण्हदु णं भट्टके असिं। †† (ग)

शकारः। [ विपरीतं गृहीत्वा ]—

णिव्वक्कलं मूलकपेशिवण्णं,

खंधेण घेत्तूण अ कोशशुत्तं।

कुक्केहि कुक्कीहि अ बुक्कअंते,

जधा।शआले शलणं पलामि ‡‡ ॥ ५२ ॥

[ परिक्रम्य निष्क्रान्तौ ]।

* भणिष्यामि। † चेट ! गतः सत्यमेव भावः ?

‡ अथ किम्। § तत् शीघ्रमपक्रमावः।

¶ तत् गृह्णातु भट्टारकोऽसिम्। ** तवैव हस्ते तिष्ठतु।

†† एष भट्टारकः, गृह्णात्वेनं भट्टारकोऽसिम्।

‡‡ निर्वल्कलं मूलकपेशिवर्णं स्कन्धेन धृत्वा च कोषसुप्तम्।

कुक्कुरैः कुक्कुरीभिश्च बुक्कायमानो यथा शृगालः शरणं प्रयामि॥

(ग) एषः—असिः, भट्टारकः,—भट्टारकस्य अयमिति [ भट्टारकशब्दादिदमर्थे षाप्रत्ययेन निष्पन्नः] भट्टारकेण ग्राह्य इति यावत्, भट्टारकसम्बन्धादयं लत्स्वामिक इत्यर्थः ; अतो भवतैवायं धार्य्यो ममास्य ग्रहणे नाधिकार इति भावः।

निर्वल्कलमिति।—वल्कलं—तरुत्वक्, लक्षणया तन्निर्म्मितः कोषः, तस्मात् निर्गतं—निष्कोषमित्यर्थः, मूलकस्य पेशः,—त्वचः, वर्णः इव वर्णः यस्य तं तादृशं, यद्वा,—मूलकस्य पेशिः,—कलिका, लक्षणया पुष्पमित्यर्थः, तत् सदृशवर्णं, शाण-संस्कृतत्वात् शुभ्रोज्ज्वलमित्यर्थः, असिमिति शेषः, कोषसुप्तं—कोषनिहितं, कृत्वा इति शेषः, यद्वा,—कोषसुप्तम् इति असिविशेषणं, तत्र निर्वल्कलं कोषसुप्तञ्च इति विरोधः शकारोक्तित्वात् न दोषावहः, स्कन्धेन—अंसदेशेन, धृत्वा—गृहीत्वा च, कुक्कुरैः,—

विदू। भोदि रदणिए! ण क्खु दे अअं अवमाणो तत्तभवदो चारुदत्तस्स णिवेदइदव्वो। दोग्गच्चपीड़िअस्स मण्णे दिउणदरा पीड़ा हुविस्सदि।*

रदनिका। अज्ज मित्तेअ! रदणिआ क्खु अहं संजद-मुही।† (घ)

विदू। एव्वं सेदं।‡

चारु। [वसन्तसेनामुद्दिश्य] रदनिके! मारुताभिलाषी प्रदोष-समयशीतार्त्तो रोहसेनः, ततः प्रवेश्यतामभ्यन्तरमयम्, अनेन प्रावा-रकेण (ङ) छादयैनम्। [इति प्रावारकं प्रयच्छति]।

* भो रदनिके! न खलु ते अयम् अपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः, दौर्गत्यपीड़ितस्य मन्ये द्विगुणतरा पीड़ा भविष्यति।

† आर्य्य मैत्रेय! रदनिका खल्वहं संयतमुखी।

‡ एवमिदम्।

श्वभिः, कुक्कुरीभिः,—शुनीभिश्च, बुक्कामानः,—अनुगम्यमानः, अनुशब्द्याय्यमानो वा, [बुक्कतेर्णिजन्तात् कर्म्मणि शानच्प्रत्ययः। "कुक्कुरैः कुक्कुरीभिः" इत्यनेन विदूषक-रदनिके आक्षिप्येते। "कुक्केहि कुक्कीहि" इत्यत्र छन्दोऽनुरोधात् अनुस्वाराभावः] शृगाली यथा—जम्बुक इव, शरणं—गृहं, ("शरणं गृहरक्षित्रोः" इत्यमरः) प्रयामि—गच्छामि। अत्र एकस्मिन्नेव वाक्ये उपमानभूतेन शृगालेन उपमेयभूतस्य शकारस्य अवैधर्म्यसादृश्यकथनात् उपमा नामालङ्कारः, सा च यथाशब्दोत्थापितेति श्रौती ज्ञेया। उपजातिः वृत्तम्॥ ५२॥

(घ) रदनिकेति।—संयतमुखी—अवाचाला, नाहं चारुदत्ताय किमपि निवेदयिष्यामीति भावः। रदनानि दशनानि सन्ति अस्या इति वाक्येन अस्त्यर्थे "अर्श आदिभ्योऽच्" (५।२।१२७ पा०) इति अच्प्रत्ययनिष्पन्नेन रदनाशब्देन प्रशस्तदन्तवती बोध्यते; ततश्च स्वार्थे कप्रत्ययान्तस्य स्त्रीलिङ्गे निष्पन्ना रदनिकेति मम नाम, तथा च निर्दशनानामिव वाचामसंयमो दृश्यते, अहन्तु दशनवतीति मयि कथमेवं वागसंयतिः सम्भाव्यते त्वयेति गूढ़ाभिप्रायः।

(ङ) मारुताभिलाषी—वायुसेवी, रोहसेनः,—तदाख्यश्चारुदत्तस्य पुत्रः। प्रावारकेण—उत्तरीयवसनेन।

वस। [स्वगतम्] कधं परिअणोत्ति मं अवगच्छदि !! [प्रावारकं गृहीत्वा समाघ्राय च स्वगतं सस्पृहम्] अम्हहे! जादीकुसुमबासिदो पावारओ, अणुदासीणं (च) से जोव्वणं पड़िभासेदि। *

[अपवारितकेन (छ) प्रावृणोति]।

चारु। ननु रदनिके! रोहसेनं गृहीत्वाऽभ्यन्तरं प्रविश।

वस। [स्वगतम्] मंदभाइणी क्खु अहं तुम्हे अब्भंतरस्स। † (ज)

चारु। ननु रदनिके! प्रतिवचनमपि नास्ति? कष्टम्!—

यदा तु भाग्यक्षयपीड़ितां दशां
नरः कृतान्तोपहितां प्रपद्यते।
तदाऽस्य मित्राण्यपि यान्त्यमित्रतां,
चिरानुरक्तोऽपि विरज्यते जनः॥ ५३॥

---

* कथं परिजन इति मामवगच्छति!! आश्चर्य्यम्! जातीकुसुमवासितः प्रावारकः, अनुदासीनम् अस्य यौवनं प्रतिभासते।

† मन्दभागिनी खलु अहं तवाभ्यन्तरस्य।

---

(च) अनुदासीनं—भोगतृष्णायामविमुखं, यौवनकालोपभोग्यविलाससामग्रीसेवनात् उपभोगे सतृष्णमित्यर्थः।

(छ) अपवारितकेन—अपवारिताख्यनाट्यविशेषेण;— "—तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाशते॥" इति लक्षणात्।

(ज) मन्दभागिनी—अभागिनी, अयोग्येति यावत्, वेश्यात्वात् इति भावः। अभ्यन्तरस्य—अभ्यन्तरगमनस्य इत्यर्थः।

स्वाधिकारस्थां रदनिकामनुज्ञाप्य किमप्युत्तरमलभमानश्चारुदत्तः स्वभाग्यविपर्य्ययस्यैव सर्व्वदुःखनिदानतामाह, यदेति।—नरः,—मानवः, यदा—यस्मिन् काले, कृतान्तेन—दैवेन, उपहिताम्—उपस्थापितां, ("कृतान्तोऽन्तेमकर्म्मणि। सिद्धान्तयमदैवेषु—" इति हेमचन्द्रः) भाग्यस्य—शुभादृष्टस्य, क्षयेण पीड़िता—व्यथितां, दशाम्—अवस्थां, प्रपद्यते—प्राप्नोति, तदा—तदानीम्, अस्य—दुर्भाग्ययुक्तस्य मानवस्य, मित्राणि—सुहृदः, अपि अमित्रतां—शत्रुतां, यान्ति—प्राप्नुवन्ति, शत्रुवदाचरन्तीत्यर्थः, तथा चिरानुरक्तोऽपि—चिरायातिप्रीतिसम्पन्नोऽपि, जनः,—पुरुषः,

विदू । [उपसृत्य रदनिकां निर्दिश्य] भो ! इअं सा रदणिआ । *

चारु । इयं सा रदनिका !! इयमपरा का ?—

अविज्ञातावसक्तेन दूषिता मम वाससा ।

वस । [स्वगतम्] णं भूसिदा । †

चारु । छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते ? ॥ ५४ ॥

अथवा, न युक्तं परकलत्रदर्शनम् ।

विदू । भो ! अलं परकलत्तदंसणसंकाए । एसा वसंत-सेणा कामदेवाअदणुज्जाणादो पहुदि भवंतमणुरत्ता । ‡

चारु । अये ! इयं वसन्तसेना !! [स्वगतम्]—

यया मे जनितः कामः क्षीणे विभवविस्तरे ।

क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥

* भोः ! इयं सा रदनिका । † ननु भूषिता ।

‡ भोः ! अलं परकलत्रदर्शनशङ्कया, एषा वसन्तसेना कामदेवायतनोद्यानात् प्रभृति त्वामनुरक्ता ।

विरज्यते—विरक्तो भवति । ["रन्ज रागे" इति दैवादिकस्य धातोर्लट्] । अत्र नष्टप्रभाद्दष्टस्य जनस्य मित्राण्यपि शत्रवो भवन्ति, अनुरक्तो जनोऽपि अबाध्यो भवति इत्यप्रस्तुतात् विषयात् चिरानुगता रदनिकाऽपि मयि विरक्ता इति प्रस्तुतार्थः प्रतीयते, इत्यप्रस्तुतप्रशंसाऽलङ्कारः । वंशस्थविलं वृत्तम् ॥५३॥

रदनिकाबुद्ध्या दत्तप्रावारकश्चारुदत्तः सम्प्रति स्वापराधं ख्यापयन्नाह, अवि-ज्ञातेति ।—अविज्ञातायाम्—अविदितायां, मयेति शेषः, अवसक्तेन—योजितेन, यद्वा,—अवसक्तम्—अवसञ्जनं, [भावे निष्ठा] संसर्ग इत्यर्थः, अविज्ञातम् अवसक्तं यस्य, अविज्ञातं यथा तथा अवसक्तमासक्तमिति वा, [तेन द्वितीयपक्षेऽपि भावे निष्ठा] मम वाससा—उत्तरीयवसनेन, दूषिता—अपवित्रीकृता, परपुरुषवस्त्र-संस्पर्शादिति भावः, "इयमपरा का ?" (इति गद्यस्थपदेन अन्वयः) येयं शरदभ्रेण —शारदीयमेघेन, छादिता—आवृता, चन्द्रलेखेव—शशिकलेव, दृश्यते ? उपमा-ऽलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ ५४ ॥

विदूषकादुपस्थितरमणी वसन्तसेनेति परिचयं प्राप्तश्चारुदत्तः खिद्यन्नाह, ययेति ।—विभवविस्तरे—प्रचुरसम्पदि, क्षीणे—विनष्टे सति, यया—वसन्तसेनया,

विदू। भो वअस्स ! एसो क्खु राअसालो भणादि। *

चारु। किम् ?

विदू। एसा ससुवण्णा, सहिलण्णा, णवणाडअदंसणुट्ठिदा सुत्त-धालिव्व वसंतसेणा णाम गणिआदालिआ कामदेवाअदणुज्जा-णादो पहुदि तुमं अणुलत्ता, अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा। †

वस। [स्वगतम्] बलक्कालाणुणीअमाणेत्ति जं सच्चं, अलंकि-दम्हि एदेहिं अक्खरेहिं। ‡ (झ)

विदू। ता जइ मम हत्थे सअं ज्जेव्व पट्ठाविअ एणं समप्पेसि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादअमाणाह तव मए अणुवद्धा पीदी हुविस्सदि। अण्णधा, आमलणंतिके वेले हुविस्सदि। §

चारु। [सावज्ञम्] अज्ञोऽसौ। [स्वगतम्] अये ! कथं देव-तोपस्थानयोग्या युवतिरियम्। तेन खलु तस्यां वेलायाम् (ञ)—

* भोः वयस्य ! एष खलु राजश्यालो भणति।

† एषा ससुवर्णेत्यादि। ५८ पृष्ठे शकारोक्तौ अनुवादादिकं द्रष्टव्यम्।

‡ बलात्कारानुनीयमाना इति यत् सत्यम्, अलङ्कृताऽस्मि एतैरक्षरैः।

§ तत् यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसीत्यादि ५८ पृष्ठस्थशकारोक्तेः अनुवादस्य शेषांशो द्रष्टव्यताम्।

जनितः,—उत्पादितः, मे—मम, कामः,—भोगाभिलाषः, भोग्याभावात् निष्फल इति भावः, कुपुरुषस्य—अधमस्य जनस्य, क्रोधः,—रोषः इव, स्वगात्रेषु—निज-शरीरेषु, एव सीदति—अवसादं गच्छति, कर्त्तव्यासामर्थ्यात् प्रव्यक्तो न भवति इति यावत्। अत्र उपमाऽलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ ५५ ॥

(झ) ममाप्यत्राभिलाषो नासीति प्रत्याय्यते।

(ञ) युवतिः,—तरुणी, इयं—वसन्तसेना, देवता इव उपस्थानयोग्या—उपास्या, अथवा,—देवताभिः,—देवैरपि, उपस्थानयोग्या—सेव्या, सच्चरित्र-सौन्दर्यादिमाहात्म्यादिति भावः। तस्यां वेलायां—शीतासंरोहसेनस्य गृहाभ्यन्तर-

प्रविश गृहमिति प्रतोद्यमाना
न चलति भाग्यकृतां दशामवेक्ष्य ।
पुरुषपरिचयेन च प्रगल्भं
न वदति यद्यपि भाषते बहूनि ॥ ५६ ॥

[प्रकाशम्] भवति वसन्तसेने ! अनेन अविज्ञानात् अपरिज्ञातपरिजनोपचारेण (ट) अपराद्धोऽस्मि । शिरसा भवतीमनुनयामि ।

वस। एदिणा अणुचिदभूमिआरोहणेण (ठ) अवरज्झा अज्जं सीसेण पणमिअ पसादेमि । *

* एतेनानुचितभूमिकारोहणेन अपराद्धा आर्यं शीर्षेण प्रणम्य प्रसादयामि ।

प्रवेशनाज्ञासमये इत्यर्थः । अत्र पदोच्चयो नाम नाट्यलक्षणं प्रदर्शितम् । "सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः" इति ।

रोहसेनस्य गृहप्रवेशानुज्ञाकाले सञ्जातामस्या दशामुपवर्णयन्नाह, प्रविशेति ।—गृहं—भवनं, प्रविश—आगच्छेत्यर्थः, रोहसेनं गृहीत्वेति शेषः, इति प्रतोद्यमाना—अनुरुध्यमाना, अपि भाग्यकृतां—दैववजनितां, दशां—मम दुरवस्थामित्यर्थः, अवेक्ष्य—दृष्ट्वा, न चलति—न अभ्यन्तरं गतवतीत्यर्थः, [अत्र वर्त्तमानसामीप्ये अतीते लट्] तथा यद्यपि—यदि च, बहूनि—अनल्पानि, भाषते—वक्ति, तथाऽपि पुरुषपरिचयेन—पुंसंसर्गेण, पुंसां समक्षमित्यर्थः, प्रगल्भं—धृष्टं यथा तथा, न वदति—न भाषते । पुष्पिताग्रा वृत्तम्,—"अयुजि न-युग-रेफतो यकारो युजि च न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ५६ ॥

(ट) अपरिज्ञातपरिजनोपचारेण—अपरिज्ञातेषु—अपरिचितेषु, जनेषु इति शेषः, यः परिजनोपचारः,—दासीबुद्ध्या वसन्तसेनागात्रे उत्तरीयवसनप्रक्षेपरूपः परिजनवद्व्यवहारः तेन । एतेन उपन्यासो नाम प्रतिमुखसन्धिभेदो दर्शितः, यथा—"उपन्यासः प्रसादनम्" इति लक्षणात् ।

(ठ) अनुचितभूमिकारोहणेन—अनुचितायां—मादृशजनप्रवेशायोग्यायां, भूमिकायां—भूमौ, भवद्गृहे इति यावत्, आरोहणेन—प्रवेशेन, अनुमतिमगृहीत्वा गृहान्तःप्रवेशेनेत्यर्थः, पक्षान्तरे वासप्रवेशादिना इति वा । अत्र अनुनयो नाम नाट्यलक्षणं प्रदर्शितम्; यथा—"वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्" इति ।

विदू। भो! दुवेवि तुम्हे सुहं पणमिअ कलमकेदारा अण्णोण्णं सीसेण सीसं समाअदा। अहं पि इमिणा करह-जाणुसरिसेण सीसेण दुवेवि तुम्हे पसादेमि। * (ड)
[इति उत्तिष्ठति]।

चारु। भवतु, तिष्ठतु प्रणयः। (ढ)

वस। [स्वगतम्] चदुरो महुरो अ अअं उवण्णासो। ण जुत्तं अज्ज ईदिसेण इध आअदाए मए पड़िवसिदुं। भोदु, एव्वं दाव भणिस्सं। [प्रकाशम्]। अज्ज! जइ एव्वं अहं अज्जस्स अणुग्गेज्झा, ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुं, अलंकारस्स णिमित्तं एदे पावा अणुसरंति। † (ण)

---

* भोः! द्वावपि युवां सुखं प्रणम्य कलमकेदारौ अन्योऽन्यं शीर्षेण शीर्षं समागतौ। अहमपि अमुना करभजानु-सदृशेन शीर्षेण द्वावपि युवां प्रसादयामि।

† चतुरो मधुरश्चायमुपन्यासः। न युक्तम् अद्य ईदृशेन इह आगतया मया प्रतिवस्तुम्। भवतु, एवं तावत् भणिष्यामि। आर्य्य! यद्येवमहमार्य्यस्य अनुग्राह्या, तदिच्छाम्यहम् इममलङ्कारम् आर्य्यस्य गृहे निचेप्तुम्, अलङ्कारस्य निमित्तम् एते पापा अनुसरन्ति।

---

(ड) कलमकेदारौ इत्यनन्तरम् इवेति पदमध्याहार्य्यं, कलमः,—व्रीहिविशेषः, शालिरिति यावत्, केदारः,—क्षेत्रं, ताविवेत्यर्थः, ("शालयः कलमाद्याश्च" इति "केदारः क्षेत्रमस्य तु" इति चामरः) पाकावस्थायामुभयोः शिरःसमागम इव इत्यर्थः। करभः,—करिशिशुः, उष्ट्रशिशुर्वा, तस्य जानु—ऊरुजङ्घयोः सन्धिभागः, तत्सदृशेन—तत्तुल्येन। ["पसादेमि" इत्यनन्तरम् "उट्ठेध त्ति" अधिकः पाठः पुस्तकान्तरे दृश्यते, तत्र "उत्तिष्ठतम् इति" इति सं। पाठोऽयं समीचीनतया प्रतिभाति]।

(ढ) प्रणयः,—परस्परानुनयरूपप्रार्थनम्। [प्रणय इत्यनेन सम्भोगप्रार्थना समाचिता]।

(ण) उपन्यासः,—आलापः। ईदृशेन—एवंरूपेण अगृहीतसम्भोगोप-करणादिना अभिसारीचित आदिव्यतिरेकेणेत्यर्थः। अनुग्राह्या—अनुग्रहभाजनी-करणीया इत्यर्थः। एते—शकारादयः, पापाः,—पापकारिणः।

चारु। अयोग्यमिदं न्यासस्य (त) गृहम्।

वस। अज्ज! अलीअं, (थ) पुरुसेसु णासा णिक्खिविअंति, ण उण गेहेसु।*

चारु। मैत्रेय! गृह्यतामयमलङ्कारः।

वस। अणुग्गहिदम्हि।† [इत्यलङ्कारमर्पयति]।

विदू। [गृहीत्वा] सोत्थि भोदिए।‡ (द)

चारु। धिङ्मूर्ख! न्यासः खलु अयम्।

विदू। [अपवार्य] जइ एव्वं, ता चोरेहिं अवहरीअदु।§ (ध)

चारु। अचिरेणैव कालेन—"।

विदू। एसो से अम्हाणं विस्सासो?¶ (न)

---

* आर्य्य! अलीकं, पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु।

† अनुगृहीताऽस्मि।　‡ स्वस्ति भवत्यै।

§ यद्येवं, तदा चौरैरपक्रियताम्।　¶ एषोऽस्या अस्माकं विन्यासः।

---

(त) प्राक् गृहस्वामिने दर्शयित्वा ततः तस्मै समर्पणीयम् इत्युक्त्वा तत्परिजन-हस्ते निक्षेपः न्यासः,—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् न्यस्तद्रव्य-मित्यर्थः, तस्य—निक्षेपस्य, अयोग्यं, दुरवस्थत्वेन भग्नत्वात्, रक्षकाभावाच्चेति भावः।

(थ) अलीकमिति।—आर्य्यगृहमयोग्यम् इति यत् भवता उक्तं, तत् अलीकं—मिथ्या, अयुक्तैव उक्तमित्यर्थः।

(द) स्वस्ति—मङ्गलम्, अस्त्विति शेषः, भवत्यै—तुभ्यम्, इति वसन्तसेनया न्यास-त्वेन दत्तस्य अस्य अलङ्कारस्य प्रतिग्रहस्वीकारसूचकस्वस्तिकथनेन ग्रहणात् परिहास एवार्थे ज्ञेयो विदूः।

(ध) यदि एवं—न्यासश्चेत्, न तु दानमिति भावः। "चौरैरपक्रियताम्" इत्यनेन सन्धिच्छेदाख्यस्य तृतीयाङ्कस्य आक्षेपो बोध्यः।

(न) अस्याः,—वसन्तसेनायाः, एषः विन्यासः, "अचिरेणैव कालेन निर्यातयिष्ये" इत्यभिप्रायेणोक्तम्; "अचिरेणैव कालेन" इति चारुदत्तवाक्यांशमाक्षिप्य अस्माकं भविष्यतीत्यभिप्रेत्य नर्मोक्तिरियमुक्ता।

चारु। "—निर्य्यातयिष्ये। (प)

वस। अज्ज! इच्छे अहं, इमिणा अज्जेण अणुगच्छिअंती स्सकं गेहं गंतुं। *

चारु। मैत्रेय! अनुगच्छ तत्रभवतीम्।

विदू। तुमं ज्जेव्व एदं कलहंसगामिणीं अणुगच्छंतो राअ-हंसो विअ सोहसि। अहं उण बम्हणो जहिं तहिं जणेहिं चउप्पहोवणीदो उवहारो कुक्कुरेहिं विअ खज्जमाणो (फ) विपज्जिस्सं। †

चारु। एवं भवतु, स्वयमेवानुगच्छामि तत्रभवतीम्। तद्राज-मार्गविश्वासयोग्याः (ब) प्रज्वाल्यन्तां प्रदीपिकाः।

विदू। वड्ढमाणअ! पज्जालेहि पदीविआओ। ‡

चेटः। [जनान्तिकम्] अले! तेल्लेण विणा पदिविआओ पज्जालीअंति!! §

* आर्य्ये! इच्छाम्यहम्, अनेनार्य्येण अनुगम्यमाना स्वकं गेहं गन्तुम्।

† त्वमेव एतां कलहंसगामिनीमनुगच्छन् राजहंस इव शोभसे, अहं पुनर्ब्राह्मणः यत्र तत्र जनैश्चतुष्पथोपनीत उपहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये।

‡ वर्द्धमानक! प्रज्वालय प्रदीपिकाः।

§ अरे! तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते!!

(प) निर्य्यातयिष्ये—प्रत्यर्पयिष्यामि, अचिरेणैव कालेन इति पूर्वोक्तेनान्वयः।

(फ) ["जहिं तहिं जणेहिं" इत्यत्र "तेहिं जणेहिं" इति पाठान्तरे,—"तैर्जनैः" इति सं। तैः,—शकारादिभिरित्यर्थः]। चतुष्पथोपनीतः,—चतुष्पथं "चौमाथा" इति ख्याते चतसृभ्यो दिग्भ्यः आगतानां पथां सङ्गमस्थले इत्यर्थः, ["ऋक्-पूरब्धूः—" (५।४।७४ पा०) इति अप्रत्ययोऽन्तावयवः, "पथः सङ्ख्याव्ययादेः" (वा०) इति नपुंसकत्वम्] उपनीतः,—उपस्थापितः, देवताभ्यः प्रदत्तः इत्यर्थः, उपहारः,—बलिः, पूजाद्रव्यमिति यावत्; जनैः खाद्यमानोऽहमित्यन्वयः।

(ब) राजमार्गविश्वासयोग्याः,—राजपथगमनयोग्याः।

विदू । [ जनान्तिकम् ] । भो ! ताओ क्खु अम्हाणं पदीविआओ, अवमाणिद-णिद्धण-कामुआ विअ गणिआ णिस्सिणेहाओ (भ) दाणिं संवुत्ता । *

चारु । मैत्रेय ! भवतु, कृतं प्रदीपिकाभिः । (म) पश्य,—

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
र्ग्रहगणपरिवारो राजमार्गप्रदीपः ।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्नुतजल इव पङ्के, क्षीरधाराः पतन्ति ॥ ५७ ॥

* भोः ! ताः खल्वस्माकं प्रदीपिकाः अवमानित-निर्द्धनकामुका इव गणिकाः निःस्नेहाः इदानीं संवृत्ताः ।

(भ) निःस्नेहाः,—अतैलाः, पक्षे—अननुरागिण्यः । ("स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे" इति मेदिनी ) ।

(म) भवतु इति उपसंहारोक्तिः ; प्रदीपिकाभिः,—प्रदीपैः, कृतं—पर्य्याप्तं, व्यर्थमिति यावत्, ( "युगपर्य्याप्तयोः कृतम्" इत्यमरः ) ।

दीपस्य स्नेहाभावकृतं प्रज्वालनायोग्यत्वं वसन्तसेनामवविज्ञापयिषुश्चारुदत्तः सम्प्रति प्राकृतिकसुधाकरकिरणैरेव तत्कार्य्यसम्पादनमाह, उदयतीति ।—कामिन्याः,—रमण्याः, गण्डः,—कपोलः, तद्वत् पाण्डुः,—गौरकान्तिः, समुज्ज्वल इत्यर्थः, ग्रह-गणपरिवारः,—ग्रहगणाः,—ग्रहसमूहाः, परिवाराः,—सहचारिण इत्यर्थः, यस्य सः, "राजानौ रविशीतगू" इत्युक्तेः तदधिपतित्वात् ग्रहाणां गणैः परिवृत इत्यर्थः, राज-मार्गस्य—साधारणपथस्य, प्रदीपः,—प्रदीपयति विकाशयतीति प्रदीपः,—प्रकाशकः, शशाङ्कः,—चन्द्रः, उदयति, यस्य गौराः,—श्वेताः, ( "गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्" इति मेदिनी ) रश्मयः,—किरणाः, स्नुतजले—स्नुतानि—अपगतानि, शुष्काणीत्यर्थः, जलानि यस्मात् तादृशे, जलशून्ये इत्यर्थः, प्रशिथिले इति यावत्, पङ्के—कर्दमे, [ "पङ्कोऽस्त्री शादकर्दमौ" इत्यमरः । जलयुक्ते पङ्के क्षीरधाराणां पाते तासां जलरूपेणैव पर्य्यवसानं भवतीति स्नुतजले इति विशेषणम् । पङ्कस्य तमोवत् नीलतया "स्नुतजले" इति विशेषणबलेन दुग्धधारासम्पातघातभिदुरत्वं झटिति प्रतीयते ] क्षीरधारा इव—दुग्धप्रवाहा इव, तिमिरनिकरमध्ये—समीरराशिमध्ये,

[ताभ्यामनुगम्यमानः कतिचित् पदानि गत्वा सानुरागम्] भवति वसन्तसेने! इदं भवत्या गृहं, प्रविशतु भवती।

वस। [सानुरागमवलोकयन्ती निष्क्रान्ता]।

चारु। वयस्य! गता वसन्तसेना। तदेहि, गेहमेव गच्छावः,—

राजमार्गो हि शून्योऽयं रक्षिणः सञ्चरन्ति च।
वञ्चना परिहर्त्तव्या बहुदोषा हि शर्व्वरी॥ ५८॥

[परिक्रम्य] इदञ्च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ, वर्द्धमानकेनापि दिवा।

पतन्ति—पतित्वा अन्धकारान् नाशयन्तीति यावत्; यथा क्षीरधाराप्रपतनेन आर्द्रस्य पङ्कस्य भिदुरत्वं, तथा चन्द्ररश्मिसम्बन्धेन तिमिरनिकरस्य विनश्वरत्वं प्रतीयते इति भावः; अथवा सुतानि—क्षरितानि, जलानि यस्मात् तादृशे, "कर्म्मणोऽकर्म्मिका क्रिया" इति वचनात् अकर्म्मकत्वं, वर्त्तमानकाले निष्ठाप्रत्ययात् भावनिष्पन्नसुतशब्दात् अर्श-आदित्वादचि वा जलस्राविणि, आर्द्रे पङ्के इत्यर्थः, तेन सजलपङ्कस्य कालिमाऽऽधिक्यं दुग्धसत्त्वञ्च सम्भाव्यते; अन्यथा शुष्कपङ्के कालिमाल्पतायाः दुग्धशोषणस्यापि सम्भवेन तिमिरमध्यपातिरश्मिसाम्यं सुष्ठु न स्यात्। एवं हि उपमेयभूततमसः शशाङ्ककिरणसम्पर्कमात्रेणैव विनश्यद्वस्थत्वमवगम्यते; तथा सति प्रदीपिकाज्वालनप्रयासोऽन्यथासिद्धः इति भावः। उपमाऽलङ्कारः। वृत्तमत्र मालिनी॥ ५७॥

वसन्तसेनायां गृहं प्रविष्टायां पुनरचिरेणैव गृहप्रस्थानौचित्यमाह, राजमार्ग इति।—अयं राजमार्गः,—साधारणः पन्थाः, शून्यः,—जनहीन इत्यर्थः, रात्र्याधिक्यवशेन पान्थजनगतागतिविरहादिति भावः, रक्षिणः,—प्रहरिणः, सञ्चरन्ति—इतस्ततः पर्य्यटन्ति; वञ्चना—प्रतारणा, परिहर्त्तव्या,—त्यक्तव्या, अस्मान् प्रतार्य्य यथा वसन्तसेनाया अलङ्काराश्चौरैर्न क्रियन्ते, तथा अवहितैः स्थातव्यमित्यर्थः; हि—यतः, शर्व्वरी—रात्रिः, बहुदोषा—बहवः दोषाः यस्यां सा; रात्रौ एव दुर्जनाः बहूनि गर्हितानि कार्य्याणि कुर्व्वन्तीति भावः। अत्र चतुर्थपादार्थेन तृतीयपादार्थस्य समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। पथ्यावक्त्रम्॥ ५८॥

विदू। जधा भवं आणवेदि। *

[इति निष्क्रान्तौ]।

इति मृच्छकटिके अलङ्कारन्यासो (य) नाम प्रथमोऽङ्कः॥ १ ॥

---

* यथा भवान् आज्ञापयति।

---

(य) अलङ्कारन्यासः,—अलङ्काराणां वसन्तसेनाया भूषणानां, न्यासः,—निक्षेपः भवति।

इत्यश्वघोषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां

पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां

प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां

प्रथमोऽङ्कः॥ १ ॥

# द्वितीयोऽङ्कः ।

चेटी। [प्रविश्य] अत्ताए अज्जआसआसं संदेसेण पेसिदम्हि। ता जाव पविसिअ अज्जआसआसं गच्छामि। [परिक्रम्यावलोक्य च] एसा अज्जआ हिअएण किंपि आलिहंती चिट्ठदि। ता जाव उपसप्पामि। *

[ततः प्रविशति आसनस्था सोत्कण्ठा (क) वसन्तसेना मदनिका च]।

वस। हञ्जे! तदो तदो? † (ख)

चेटी। अज्जए! ण किंपि मंतेसि, किं तदो तदो? ‡

वस। किं मए भणिदं? §

चेटी। तदो तदो त्ति। ¶

वस। [सभ्रूक्षेपम्] आं!! एव्वं। ** (ग)

---

* माता आर्य्यासकाशं सन्देशेन प्रेषिताऽस्मि। तत् यावत् प्रविश्य आर्य्यासकाशं गच्छामि। एषा आर्य्या हृदयेन किमप्यालिखन्ती तिष्ठति। तत् यावत् उपसर्पामि।

† चेटि! ततस्ततः?

‡ आर्य्ये! न किमपि मन्त्रयसि, किं ततस्ततः?

§ किं मया भणितम्?

¶ ततस्तत इति। ** आम्!! एवम्।

---

(क) उत्कण्ठा—विरहवेदना;—"रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इति लक्षणात्।

(ख) हञ्जे इति चेटीसम्बोधकं पदम्; (तथा च,—"हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः) एवमुत्तरत्रापि ज्ञेयम्। "तदो तदो" इति उन्मादस्य कामावस्थायाश्च सूचनम्।

(ग) "आं एव्वं" इत्यस्य "आ एवम्" इति संस्कृतं साधुतया गच्छते। आम् इति स्मरणार्थमव्ययं, मुग्धबोधे तथा दर्शनात्।

[ उपसृत्य प्रथमा चेटी ]। **अज्जए! अत्ता आदिसदि, ण्हादा भविअ (घ) देवदाणं पूअं णिव्वत्तेहि त्ति। ***

वस। **हञ्जे! विण्णवेहि अत्तं, अज्ज ण ण्हाइस्सं; ता बम्हणो ज्जेव्व पूअं णिव्वत्तेदु त्ति। †**

चेटी। **जं अज्जआ आणवेदि। ‡** [ इति निष्क्रान्ता ]।

मद। **अज्जए! सिणेहो पुच्छदि ण पुरोभाइदा, (ङ) ता किम्मेदं? §**

वस। **मदणिए! केरिसिं मं पेक्खसि? ¶**

मद। **अज्जआए सुण्णहिअअत्तणेण जाणामि; हिअअगदं कंपि अज्जआ अहिलसदि त्ति। ****

वस। **सुट्ठु तुए जाणिदं। परहिअअग्गहणपंडिआ मदणिआ क्खु तुमं। †† ( च )**

* आर्य्ये! माता आदिशति, स्नाता भूत्वा देवतानां पूजां निर्वर्त्तयेति।

† हञ्जे! विज्ञापय मातरम्, अद्य न स्नास्यामि, तत् ब्राह्मण एव पूजां निर्वर्त्तयत्विति।

‡ यत् आर्य्या आज्ञापयति।

§ आर्य्ये! स्नेहः पृच्छति, न पुरोभागिता, तत् किं न्विदम्?

¶ मदनिके! कीदृशीं मां प्रेक्षसे?

** आर्य्यायाः शून्यहृदयत्वेन जानामि; हृदयगतं कमपि आर्य्या अभिलषतीति।

†† सुष्ठु त्वया ज्ञातं, परहृदयग्रहणपण्डिता मदनिका खलु त्वम्।

( घ ) अत्र "स्नात्वा" अथवा "स्नानं कृत्वा" इति वक्तव्ये "स्नाता भूत्वा" इति कथनन्तु नीचपात्रप्रयुक्तत्वात् अदोषावहमिति विवेचनीयम्।

( ङ ) पुरोभागिता—दोषाभावेऽपि दोषमात्रदर्शित्वं, दोषानुसन्धानार्थमेव नेवं पृच्छामि इत्यर्थः। ( "दोषैकदृक् पुरोभागी" इत्यमरः )।

( च ) परहृदयेति।—परहृदयस्य—अन्यजनान्तःकरणस्य, ग्रहणे—अवस्थापरिज्ञाने इत्यर्थः, पण्डिता—निपुणेत्यर्थः, त्वं खलु—निश्चितमेव, मदनिका—मदनिकेति सार्थकनामवतीत्यर्थः; मदनो हि हृदये जायते, तिष्ठति च, तेन हृदयस्थ

मद। पिअं मे पिअं; को क्खु णाम अज्ज अत्तभोदीए अणुगहिदो महूसवे तरुणजणो ? (क) ता कधेदु अज्जआ, किं राआ, राअवल्लहो वा सेवीअदि ? *

वस। हञ्जे ! रमिदं इच्छामि, ण सेविदुं। † (ज)

मद। विज्जाविसेसालंकिदो किं कोवि बम्हणो जुआ कामीअदि ? ‡

---

* प्रियं मे प्रियं, कः खलु नाम अद्य अत्रभवत्या अनुगृहीतो महोत्सवे तरुणजनः ? तत् कथयतु आर्य्या, किं राजा, राजवल्लभो वा सेव्यते ?

† हञ्जे ! रमयितुमिच्छामि, न सेवितुम्।

‡ विद्याविशेषालङ्कृतः किं कोऽपि ब्राह्मणो युवा काम्यते ?

---

सर्व्वमेव तद्दर्शनपथम् आयाति, इति मत्वैव प्ररूढ़येत्यादि-मदनिकाविशेषणेन मदनिकेति नाम्नः सार्थकता, तथा स्त्रीलिङ्गेन स्त्रीजनहृदयभावज्ञानवत्ता च सूच्यते।

(क) अनुगृहीतः,—अनुग्रहं प्रापितः, [अत्र भाविनि भूतवदुपचारात् भाविन्यनुग्रहे अतीतवद्व्यवहारः]। अत्रभवत्या—मान्यया, आर्य्ययेति शेषः, महोत्सवः,—महान् उत्सवः,—आनन्दरूपः तस्मिन्, इति कर्म्मधारयः; अथवा महान् उत्सवो यस्मादिति बहुव्रीहिः, तस्मिन्नित्यर्थः। केचित् तु,—"महूसवे" इत्यस्य "मधूत्सवे" इति संस्कुर्वन्ति। तत्र वसन्तोत्सवे अथवा मनोरमोत्सवे, निधुवनविनोदे इत्यर्थः। ["पिअं मे पिअं, कामो क्खु णाम एसो भअवं, अणुगहिदो महूसवो तरुणजणस्स" इति पाठान्तरे,—"प्रियं मे प्रियं, कामः खलु नामैष भगवान्, अनुगृहीतो महोत्सवस्तरुणजनस्य" इति संस्कृतम्]।

(ज) कामोपभोगरसिकाऽस्मि, न धनार्थिनी इत्यर्थः। [इतः परं मदनिकायाः तृतीयोक्तिपर्य्यन्तं प्रक्षिप्तम् इति मन्यामहे। यतः "हञ्जे ! रमिदं इच्छामि" इत्येवं स्पष्टतः स्वाभिलाषव्यञ्जकं वाक्यं रमण्यः कदाऽपि न कथयन्ति, परं गणिकात्वात् यदि कथञ्चित् अप्रसङ्गः समर्थ्यते, ततः परं मदनिकाप्रश्नीकृत-ब्राह्मणादीनां तज्जातिजानां परिहारः न कथमपि सङ्गच्छते, चारुदत्तस्य वाणिज्यव्यवसायिब्राह्मणस्य वसन्तसेनायाः कामयमानत्वात्; चिन्त्यते च एतदंशपरित्यागेऽपि न काचिन्नाटकीयविरुद्धता भवतीति]।

वस। पूअणीओ मे बम्हणो जणो। * ( भ )

मद। किं अणेअणअराहिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि ? †

वस। हञ्जे! उवारूढ़सिणेहंपि (ञ) पणइजणं परिच्चइअ देसंतरगमणेण वाणिअजणो महंतं विओअजं दुक्खं उप्पादेदि। ‡

मद। अज्जए! ण राआ, ण राअवल्लहो, ण बम्हणो, ण वाणिअजणो, ता को दाणिं सो भट्टिदारिआए कामीअदि ? §

वस। हञ्जे! तुमं मए सह कामदेवाअदणुज्जाणं गदा आसि ? ¶

मद। अज्जए! गदम्हि। **

वस। तह वि मं उदासीणा विअ ( ट ) पुच्छसि ? ††

---

* पूजनीयो मे ब्राह्मणजनः।

† किम् अनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते ?

‡ हञ्जे! उपारूढस्नेहमपि प्रणयिजनं परित्यज्य देशान्तरगमनेन वाणिजजनो महत् वियोगजं दुःखमुत्पादयति।

§ आर्य्ये! न राजा, न राजवल्लभः, न ब्राह्मणः, न वाणिजजनः, तत् क इदानीं स भर्तृदारिकया काम्यते ?

¶ हञ्जे! त्वं मया सह कामदेवायतनोद्यानं गता आसीः ?

** आर्य्ये! गताऽस्मि।

†† तथाऽपि माम् उदासीनेव पृच्छसि ?

---

( भ ) पूजनीयो मे ब्राह्मणः जनः,—विद्याविशेषालङ्कृतो ब्राह्मणः, पूजनीयः,—सेव्यः, न स काम्यः, वेदाभ्यासजड़तया "समीहा रतिभोगार्था विलास इति कथ्यते" इति लक्षणोक्तविलासवैमुख्यात्, चारुदत्तस्तु ब्राह्मणोऽपि अनधीतविद्याविशेषत्वेन विलासी, अत एव काम्य इति भावः।

( ञ ) उपारूढ़स्नेहं—परिवर्द्धितानुरागमित्यर्थः।

( ट ) उदासीनेव—अजानतीव।

मद। जाणिदं ; किं सो ज्जेव्व ? जेण अज्जआ सरणाअदा अब्भुववण्णा ? * ( ठ )

वस। किंणामहेओ क्खु सो ? †

मद। सो क्खु सेट्ठिचत्तरे ( ड ) पड़िवसदि। ‡

वस। अइ ! णामं से पुच्छिदासि। §

मद। सो क्खु अज्जए ! सुगहीदणामहेओ ( ढ ) अज्जचारुदत्तो णाम। ¶

वस। [ सहर्षम् ] साहु मदणिए ! साहु, सुट्ठु तुए जाणिदं। **

मद। [ स्वगतम् ] एव्वं दाव। [ प्रकाशम् ] अज्जए दलिद्दो क्खु सो सुणीअदि। ††

वस। अदो ज्जेव्व कामीअदि, दलिद्दपुरिससंकंतमणा क्खु गणिआ लोए अवअणीआ ( ण ) भोदि। ‡‡

---

* ज्ञातम् ; किं स एव ? येनार्य्या शरणागता अभ्युपपन्ना ?

† किन्नामधेयः खलु सः ?　　　　‡ स खलु श्रेष्ठिचत्वरे प्रतिवसति।

§ अयि ! नामास्य पृष्टाऽसि।

¶ स खलु आर्य्ये ! सुगृहीतनामधेय आर्यचारुदत्तो नाम।

** साधु मदनिके ! साधु, सुष्ठु त्वया ज्ञातम्।

†† एवं तावत्। आर्य्ये ! दरिद्रः खलु स श्रूयते।

‡‡ अत एव काम्यते। दरिद्रपुरुषसङ्क्रान्तमनाः खलु गणिका लोके अवचनीया भवति।

( ठ ) अभ्युपपन्ना—अनुगृहीता।

( ड ) श्रेष्ठिचत्वरे—वणिग्वीथ्याम्।

( ढ ) सुगृहीतनामधेयः,—प्रातःस्मरणीयः, दातृत्वेनेति भावः, ( "स सुगृहीतनामा स्यात् यः प्रातरनुकीर्त्यते" इत्यमरः )।

( ण ) अवचनीया—अनिन्द्या, अर्थलोभिनीयं नानुरागिणीत्यपवादरहिता इत्यर्थः।

मद। अज्जए! किं हीणकुसुमं सहआरपादवं महुअरीओ उण सेवंति? * (त)

वस। अदो ज्जेव्व ताओ महुअरीओ वुच्चंति। † (थ)

मद। अज्जए! जइ सो मणीसिदो, ता कीस दाणिं सहसा ण अहिसारीअदि? ‡ (द)

वस। हञ्जे! सहसा अहिसारीअंतो पच्चुअआरदुब्बलदाए मा दाव जणो दुल्लहदंसणो पुणो हुविस्सदि। §

* आर्य्ये! किं हीनकुसुमं सहकारपादपं मधुकर्य्यः पुनः सेवन्ते?

† अत एव ता मधुकर्य्यः उच्यन्ते।

‡ आर्य्ये! यदि स मनीषितः, तत् कस्मात् इदानीं सहसा नाभिसार्य्यते?

§ हञ्जे! सहसा अभिसार्य्यमाणः प्रत्युपकारदुर्ब्बलतया मा तावत् जनो दुर्लभदर्शनः पुनर्भविष्यति।

(त) मधु—मकरन्दं, कुर्व्वन्ति—सर्व्वतः सञ्चित्य निष्पादयन्तीति मधुकर्य्यः,—भ्रमर्य्यः, हीनकुसुमं—व्यपगतपुष्पं, पुष्पहीनमित्यर्थः; सहकारपादपं—चूततरुं, सेवन्ते—आश्रयन्तीत्यर्थः, सञ्चितपुष्परसस्यैव मधुरूपेण परिणमनात्, पुष्पाभावे कथं तासां पुनः तादृशी प्रवृत्तिरिति भावः। यद्वा,—मधु कुर्व्वन्ति—सेवन्ते इति मधुकर्य्यः, सततमधुसेवनासक्ता इत्यर्थः, मत्ता हि कृतघ्नता गुणपरतन्त्रतादिकं न विचारयन्ति, अतः मधुकरीणामुन्मत्ततया कुसुमशून्यसहकारपादपपरित्यागे न काऽपि वचनीयतेत्यभिप्रायः। पुनः इति वाक्यालङ्कारे। प्रार्थितवस्तुसद्भावे हि तदन्तं लोकाः सेवन्ते इति सामान्ये प्रस्तुते पुष्पाभावे मधुकरीणां सहकारानाश्रयणरूपो विशेषोऽभिहित इति अप्रस्तुतप्रशंसाऽलङ्कारोऽत्र विभाव्यः।

(थ) अत एव तासां मधुमात्रलक्ष्यतया तत्साधनीभूतकुसुमाभावे तच्चूतासेवनादित्यर्थः। तासां सार्थकनामतया पुष्पाभावे मधुनोऽलाभात् तास्तु वृक्षान्तरं गच्छन्ति, अहन्तु न तथा स्वार्थमात्राभिसन्धिरिति भावः।

(द) सः,—चारुदत्तः, मनीषितः,—वाञ्छितः। अभिसार्य्यते—अभिसारः क्रियते? दरिद्रत्वात् धनादिना प्रलोभ्य असौ स्वगृहमानीयताम्, आत्मनायकत्वात् तत्सम्मानरचा चेदावश्यकी, तर्हि स्वयं वा गम्यताम् इति भावः; अभिसारिका-

मद। किं अदो ज्जेव्व सो अलंकारओ तस्स हत्थे णिक्खित्तो ? *

वस। हञ्जे ! सुट्ठु दे जाणिदं। †

[नेपथ्ये] अले भट्टा ! दशसुवस्सस्स लुद्ध जूदकरु पपलीणु पपलीणु, ता गेण्ह गेण्ह, चिट्ठ चिट्ठ, दूलात् पदिट्ठोसि। ‡ (ध)

[प्रविश्य अपटीक्षेपेण सम्भ्रान्तः संवाहकः]। (न) कट्टे एशे जूदअल-

* किम् अत एव सोऽलङ्कारस्तस्य हस्ते निक्षिप्तः ?

† हञ्जे ! सुष्ठु त्वया ज्ञातम्।

‡ अरे भट्टारक ! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः, तद् गृहाण गृहाण, तिष्ठ तिष्ठ, दूरात् प्रदृष्टोऽसि।

लक्षणं,—"अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाऽभिसरत्येषा धीरै-रुक्ताऽभिसारिका॥" इत्युक्तेः।

(ध) द्यूतक्रीड़ां वर्णयिष्यन्नाह, नेपथ्ये इति।—अत्र माथुरः सभिकः (द्यूत-सभाऽध्यक्षः) द्यूतकर-संवाहकनामानौ द्वौ द्यूतकरौ। तत्र पराजितं संवाहकं पण-मदत्त्वा पलायमानमवगम्य माथुरस्तमनुसन्धातुं द्यूतकरमामन्त्र्याह, अरे इति।—अरे, इति नीचसम्बोधने। भट्टारक इति द्यूतकरस्यामन्त्रणम्। दशसुवर्णस्य—दशानां सुवर्णानाम्—अशीतिरक्तिकापरिमितानां स्वर्णानां समाहारः दशसुवर्णं, तस्य, [सम्बन्धविवक्षया निमित्तार्थे षष्ठीति बोध्यं] दशसुवर्णस्य—पणीकृतसुवर्णदशकस्य, कृते इति शेषः। [अत्र "चिट्ठ चिट्ठ" इति पाठः प्रामादिकः। "पदिट्ठोसि" इत्यत्र "पदिश्शर्इ" इति पाठः सङ्गच्छते, "प्रदृश्यते" इति संस्कृतम्]।

(न) अपटीक्षेपेण—पट्याः,—जवनिकायाः, क्षेपः,—अपसारणमिति पटी-क्षेपः, स न भवतीति अपटीक्षेपः तेन, जवनिकाऽपसरणमन्तरेणैवेत्यर्थः, तस्य सम्भ्रान्तत्वात् पटक्षेपाभाव इति भावः,—"पटीक्षेपो न कर्त्तव्यः आर्त्त-राजप्रवेशने" इति भरतशासनात्। संवाहकः,—द्यूते पराजितः पलायमानः द्यूतकरयोरेक इत्यर्थः। संवाहकः मागधभाषापाठकः; सा च भाषा तालव्यशकारप्राया। माथुरद्यूतकारौ तु ढक्कभाषावादिनौ, सा तु वकारबहुला, संस्कृतभूयिष्ठत्वात् दन्त्यसकार-तालव्य-शकारद्वयवती च। अत्र च उकारान्तवर्णाः प्रायशः प्रथमान्ताः भवन्तीति बोद्धव्यम्।

भावे। हीमाणहे !! णवबंधणमुक्को विअ गद्दहो हा! ताड़िदोम्हि, अंगराअमुक्काए सत्तीए घडक्कओ विअ घादिदोम्हि। * (प)—

लेखअवावड़हिअअं सहिअं दट्टूण झत्ति पब्भट्टे।
एण्हिं मग्गणिवड़िदे, कं णु क्खु सलणं पपज्जे? † ॥ १ ॥

ता जाव एदे सहिअजूदिअला अण्णदो मं अण्णेसंति,

* कष्ट एष द्यूतकरभावः। आश्चर्य्यम्!! नवबन्धनमुक्त इव गर्दभो हा! ताड़ितोऽस्मि, अङ्गराजमुक्तया शक्त्या घटोत्कच इव घातितोऽस्मि।—

† लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः।
इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये?॥

(प) कष्टे एसे इत्यादि।—एषः,—अनुभूयमानः। द्यूतकरभावः,—द्यूतकरत्वम्। कष्टः,—क्लेशजनकः, नवबन्धनमुक्तः,—अचिरमेव बन्धनच्युतः। गर्दभ इव—रासभ इव। ताड़ितोऽस्मि—अनुधावितोऽस्मि, प्रहृतोऽस्मीति वा, पणीभूतदशसुवर्णशोधनार्थमिति भावः। अङ्गराजमुक्तया—अङ्गराजेन—कर्णेन, मुक्तया—निक्षिप्तया, शक्त्या—सूर्य्यदत्तेन एकघ्नीनामास्त्रविशेषेण; पक्षे—शक्त्या—शक्तिरूपेण दण्डेन इत्यर्थः। घटोत्कचः,—हिड़िम्बागर्भजभीमसेनसुतः इव। [इति उपमानाम अलङ्कारः] घातितोऽस्मि—मारितोऽस्मि। पुरा भारतयुद्धे हिड़िम्बागर्भजातभीमसेनतनयः घटोत्कचः यदा महामारं कृतवान्, तदा कर्णेन एकघ्नीनाम्ना अव्यर्थशक्त्या निपातितः इति भारतीया कथाऽत्रानुसन्धेया।

द्यूतसभाऽध्यक्षं सभिकं कार्य्यासक्तमनसमालोक्य द्यूते पराजितः संवाहकः पलायमानः कथमपि राजमार्गमापतितश्चिन्तयति, लेखअ इति।—लेख एव लेखकः [लेखशब्दात् स्वार्थे कः] लिखनमिति यावत्, तस्मिन् व्यापृतम्—आसक्तं, हृदयं—मनो यस्य तादृशं, कस्मिंश्चित् लेखनकर्म्मणि व्यासक्ततया अन्यासक्तमनस्कमित्यर्थः, सभिकं—द्यूताध्यक्षं, दृष्ट्वा—वीक्ष्य, झटिति—शीघ्रं, प्रभ्रष्टः,—पलायितः, अहमिति शेषः, इदानीं—सम्प्रति, मार्गनिपतितः,—पथि वर्त्तमानः, नु—भोः! कं—जनं, खलु—वाक्यालङ्कारे, शरणम्—आश्रयं, रक्षितारमिति यावत्, प्रपद्ये?—प्राप्नोमि? अत्र गाथाच्छन्दः॥ १॥

ताव इदो विप्पडीवेहिं पादेहिं एदं सुसदेउलं पविसिअ देवी-हुविस्सं। * (फ) [ बहुविधं नाट्यं कृत्वा तथा स्थितः ]।

[ ततः प्रविशति माथुरो द्यूतकरश्च ]। (ब)

माथु। अले भट्टा! दशसुवण्णस्स लुद्ध जूदकरु पपलीणु पपलीणु, गेह्ह गेह्ह, चिट्ठ चिट्ठ, दूलात् पदिट्ठोसि। †

द्यूत। जइ व्वजसि पादालं, इंदं शलणं च संपदं जासि।

सहिअं वज्जिअ एक्कं रुद्दो वि ण रक्खिदुं तरइ ‡॥२॥

---

* तत् यावत् एतौ सभिक-द्यूतकरौ अन्यतो मामन्विष्यतः, तावत् इतो विप्रती-पाभ्यां पादाभ्यामेतत् शून्यं देवकुलं प्रविश्य देवीभविष्यामि।

† अरे भट्टारक! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः, गृहाण गृहाण, तिष्ठ तिष्ठ, दूरात् प्रदृष्टोऽसि।

‡ यदि व्रजसि पातालम्, इन्द्रं शरणञ्च साम्प्रतं यासि।

सभिकं वर्ज्जयित्वा एकं रुद्रोऽपि न रक्षितुं तरति॥

---

(फ) विप्रतीपाभ्यां—विपरीताभ्याम्। ["विप्पडीवेहिं" इत्यत्र "विपडिदेहिं" इति पाठान्तरं,—"विपरीताभ्याम्" इति संस्कृतम्] पादाभ्यां—चरणाभ्याम्। देवकुलं—देवगृहं, देवालयमित्यर्थः, ["व्रजं स्यात् गोकुलं गोष्ठम्" इत्यादौ गोकुलमित्यत्र, महाभाष्ये च,—"यथा कुम्भकारकुलं गत्वा कश्चिदाह,—कुरु घटान्, जलमाहरिष्ये इति, तथा वैयाकरणकुलं गत्वा न कश्चिदाह,—कुरु शब्दान्, प्रयोक्ष्ये" इत्यादौ च कुलशब्दस्य गृहार्थत्वं दृष्टम्]। देवीभविष्यामि—अदेवो देवः,—प्रतिमारूपः सम्पद्यमानो भविष्यामि, देवप्रतिमारूपं धृत्वा स्थास्यामीत्यर्थः। [अदेवो देवो भविष्यामि इति देवीभविष्यामि इति च्विप्रत्ययान्तम्]।

(ब) माथुरः,—तन्नामा सभिकः, द्यूतसभाऽध्यक्ष इत्यर्थः। द्यूतकरः,—तन्नामकः संवाहकस्य विजेता अपरः द्यूतकारी।

पलायमानं संवाहकमलभमानः द्यूतकरः तमेव भीषयमाण आह, जइ व्वजसि इति।—("हे संवाहक! त्वम्" इत्यध्याहार्य्यम्) यदि—चेत्, पातालं—भुवोऽध-स्तलमित्यर्थः, व्रजसि—यासि, तथा साम्प्रतम्—इदानीम्, इन्द्रञ्च—सुरराजं वा, शरणं—रक्षयितारं, यासि—प्राप्नोषि, तथाऽपि, एकं—केवलं, सभिकं—द्यूतसभा-ऽध्यक्षं माथुरं, वर्ज्जयित्वा—विहाय, सर्व्वशक्तिमन्तं सभिकमन्तरेणेत्यर्थः, रुद्रोऽपि—महादेवोऽपि, का कथा इतरेषामिति भावः, रक्षितुं—मद्बलात् त्रातुं, त्वामिति शेषः,

माथु। कहिं कहि सुसहिअविप्पलंभआ!
पलासि? ले! भअपलिवेविदंगआ!।
पदे पदे समबिसमं खलंतआ
कुलं, जसं, अदिकसणं कलेंतआ *॥ ३॥

द्यूत। [पदं वीक्ष्य] एसो व्वजदि, इअं पणट्ठा पदवी। † (भ)

माथु। [आलोक्य सवितर्कम्] अले! विप्पदीवु पादु, पड़िमाशुसु देउलु। (म) [विचिन्त्य] धुत्तु जूदकरु विप्पदीवेहिं पादेहिं देउलं पविट्ठो। ‡

---

* कुत्र कुत्र सुसभिकविप्रलम्भक! पलायसे? रे! भयपरिवेपिताङ्गक!।
पदे पदे समविषमं स्खलन् कुलं यशः अतिकृष्णं कुर्व्वन्॥

† एष व्रजति, इयं प्रनष्टा पदवी।

‡ अरे! विप्रतीपौ पादौ, प्रतिमाशून्यं देवकुलं, धूर्त्तौ द्यूतकरौ विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः।

---

न तरति—न समर्थो भवतीत्यर्थः। धातूनामनेकार्थत्वात् तृधातुरत्र समर्थार्थको बोध्यः]। अत्र आर्य्या छन्दः॥ २॥

माथुरोऽपि व्यासक्तमनसमात्मानं प्रतार्य्य पलायमानं संवाहकं भीषयमाण आह, कहिं इति।—सुसभिकस्य—सरलव्यवहारिणः सभिकस्य ममेत्यर्थः, विप्रलम्भक!—प्रतारक! तथा भयपरिवेपिताङ्गक!—भीतिकम्पितशरीर! अस्मद्भयेनातिविह्वल इति यावत्, पदे पदे—प्रतिपादक्षेपमित्यर्थः, समविषमं—क्वचित् समानं क्वचित् असमञ्च, स्खलन्—पादस्खलनं प्राप्नुवन्नित्यर्थः, त्वमिति शेषः, कुलं—स्वीयं वंशं, यशः,—कीर्त्तिञ्च, अतिकृष्णम्—अतिमलिनं, कुर्व्वन्—विदधत्, पलायसे—पलाय्य गच्छसीत्यर्थः, अकार्य्यकरणे वंशमर्य्यादाहानेः अकीर्त्तेश्चावश्यम्भावादिति भावः। अत्र रुचिरा वृत्तं,—"ज-भौ स-जौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात्॥ ३॥

(भ) इयं प्रनष्टा पदवी - इयं पदवी—पादचिह्नं, प्रनष्टा—विपरीता इति भावः।

(म) विप्रतीपौ—विपरीतौ। देवकुलं—देवगृहम्। प्रतिमाशून्यं—देवमूर्त्तिविरहितमित्यर्थः; देवालयस्य प्रतिमाविहीनतया तत्र मानवसञ्चारसम्भावना इति भावः।

द्यूत। ता अणुसलेम्ह। *

माथु। एव्वं भोदु। †

[ उभौ देवकुलप्रवेशं निरूपयतः, दृष्ट्वा अन्योऽन्यं संज्ञाप्य (य) ]।

द्यूत। कधं कट्ठमयी पड़िमा ? ‡

माथु। अले ! ण हु ण हु, शैलपड़िमा। [ इति बहुविधं चालयतः संज्ञाप्य च ]। एव्वं भोदु, एहि, जूदं किलेम्ह। § [ बहुविधं द्यूतं क्रीडयतः ]।

संवा। [ द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा स्वगतम् ]। अले !—

कत्ताशद्दे णिण्णाणअश्श हलइ हडक्कं मणुश्शश्श।

ढक्काशद्दे व्व णलाधिवश्श पब्भट्ठलज्जश्श ¶ ॥ ४ ॥

---

* ततोऽनुसराव:। † एवं भवतु। ‡ कथं काष्ठमयी प्रतिमा ?

§ अरे ! न खलु न खलु, शैलप्रतिमा। एवं भवतु, एहि, द्यूतेन क्रीडाव:।

¶ अरे !—कत्ताशब्दो निर्नाणकस्य हरति हृदयं मनुष्यस्य।

ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य ॥

---

(य) संज्ञाप्य—सङ्केतेन बोधयित्वा, धूर्त्तसंवाहक एव प्रतिमारूपेण आत्मानं गोपयन् तिष्ठतीति सङ्केतं कृत्वा इत्यर्थः।

इदानीं द्यूतक्रीडां प्रस्तुवन् संवाहकः तामेव प्रशंसन्नाह, कत्तेति।—कत्ताशब्दः,—कत्ता—द्यूतक्रीडा, [ कुत्सार्थक-कदधातोः क्विप्प्रत्ययेन निष्पन्नात् कदितिशब्दात् भावे तप्रत्ययः, ततः स्त्रीत्वम् ] यद्वा,—यया द्यूतक्रीडा भवति, सा कत्ता, "कानु" इति भाषा; तस्याः शब्दः,—ध्वनिविशेषः, निर्नाणकस्य—नाणकरहितस्य, निर्धनस्येति यावत्, अणकः,—कुत्सितः, ("कुपूयकुत्सितावद्य-खेटगर्ह्याणकाः समाः" इत्यमरः) न अणकः,—नाणकं, शोभनं (नपुंसकत्वमभिधानात्) मुद्राचिह्नितः निष्कादिः इत्यर्थः। निः,—नास्ति नाणकः यस्य तस्य, मनुष्यस्य—जनस्य, प्रभ्रष्टराज्यस्य—राज्यच्युतस्य, नराधिपस्य—नरपतेः, ढक्काशब्दः,—वाद्यविशेषध्वनिः इव, हृदयं—चेतः, हरति—आक्षिपति। विजयमहोत्सवेषु विजयिनरेन्द्राणां ढक्कावाद्यं प्रवर्त्तते, विजितस्य तच्छब्दश्रवणमतीव क्लेशावहमिति भावः। अत्र उपमाऽलङ्कारः। विपुला वृत्तम्;—तल्लक्षणं यथा,—"संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः। यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥" इति ॥ ४ ॥

जाणामि ण कीलिश्शं शुमेलुशिहलपडणशण्णिहं जूदं।
तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि * ॥ ५ ॥

द्यूत। ममपाठे, मम पाठे। † ( र )

माथु। ण हु, मम पाठे, मम पाठे। ‡

संवा। [ अन्यतः सहसीपमृत्य ] णं मम पाठे। §

द्यूत। लद्धे गोहे। ¶ ( ल )

माथु। [ गृहीत्वा। ] अले लुत्तदंडा! ( व ) गहीदोसि, पअच्छ तं दससुवसं। **

जानामि न क्रीड़िष्यामि सुमेरुशिखरपतनसन्निभं द्यूतम्।
तथाऽपि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति॥

† मम पाठे, मम पाठे। ‡ न खलु, मम पाठे, मम पाठे।

§ ननु! मम पाठे। ¶ लब्धः पुरुषः।

** अरे लुप्तदण्डक! गृहीतोऽसि, प्रयच्छ तत् दशसुवर्णम्।

पुरतः द्यूतक्रीड़ामालोक्यातिप्रलुब्धः संवाहकः द्यूतक्रीड़ाया अहितकारित्वम् अथाकर्षकत्वञ्चाह, जाणामि इति।—सुमेरोः,—तदाख्यपर्व्वतस्य, शिखरात्—अत्युच्च-शृङ्गात्, पतनेन—पातेन, सन्निभं—सदृशं, तत्पतनवत् अतिभयङ्करमित्यर्थः, तथाऽपि द्यूतक्रीड़ाया अतिभयङ्करपरिणामत्वेऽपि, कोकिलमधुरः,—कोकिल इव—कोकिल-रव इवेत्यर्थः, मधुरः,—मनोहारी, [ अत्र कोकिलपदेन लक्षणया कोकिलरवो बोध्यते ] कत्ताशब्दः,—द्यूतक्रीड़ासाधनद्रव्यस्य ध्वनिः, खलु—निश्चितं, मनः,—चित्तं, हरति—आकर्षति, द्यूतक्रीड़ायाः शोचनीयपरिणाममनुचिन्तयन् मया यतः प्रतिज्ञातं, यत् पुनर्द्यूतं न क्रीड़िष्यामीति, तदपि श्रुतिसुखकरः पाशकादिरवः श्रवण-विवरमाविश्यैव बलात् तत्रैव प्रवर्त्तयतीत्यहो! अचिन्तनीयमाहात्म्यं द्यूतस्येति भावः। अत्रापि विपुला वृत्तम्॥ ५॥

( र ) "मम पाठे मम पाठे" इति द्यूतकराणामुक्तिविशेषः।

( ल ) "गोहे" इति पुरुषार्थे प्रयुज्यते।

( व ) लुप्तदण्डक!—लुप्तं—प्रतारितं, दण्डकं—पणीकृतं द्रव्यं येन, तत्-सम्बुद्धौ, पणचौर! इत्यर्थः। [ "लुत्तदंडा" इत्यत्र "प्रेदंडआ" इति पाठान्तरेऽपि,—"लुप्तदण्डक!" इति संस्कृतम् ]।

संवा। अज्ज दइश्शं। *

माथु। अहुणा पअच्छ। †

संवा। दइश्शं, पशादं कलेहि। ‡

माथु। अले! णं संपदं पअच्छ। §

संवा। शिलु पड़दि। ¶ (अ)

[ इति भूमौ पतति। उभौ बहुविधं ताड़यतः ]।

माथु। एसु तुमं हु जूदअरमंडलीए बद्धोसि। **

संवा। [ उत्थाय सविषादम् ] कधं जूदअलमंडलीए बद्धोम्हि!! ही! एशे अम्हाणं जूदअलाणं अलंघणीअशमए, (ब) ता कुदो दइश्शं? ††

माथु। अले! गंयु (स) कुलु कुलु। ‡‡

संवा। एव्वं कलेमि। [ द्यूतकरमुपसृत्य ] अद्धं ते देमि, अद्धं मे मुंचदु। §§

द्यूत। एव्वं भोदु। ¶¶

---

* अद्य दास्यामि। † अधुना प्रयच्छ।

‡ दास्यामि, प्रसादं कुरु। § अरे! ननु साम्प्रतं प्रयच्छ।

¶ शिरः पतति।

** एष त्वं खलु द्यूतकरमण्डल्या बद्धोऽसि।

†† कथं द्यूतकरमण्डल्या बद्धोऽस्मि!! कष्टम्! एषोऽस्माकं द्यूतकराणाम् अलङ्घनीयः समयः, तस्मात् कुतो दास्यामि?

‡‡ अरे!! गण्डः क्रियतां क्रियताम्।

§§ एवं करोमि। अर्द्धं तुभ्यं ददामि, अर्द्धं मे मुञ्चतु।

¶¶ एवं भवतु।

---

(अ) पतति—भ्रमतीत्यर्थः।

(ब) समयः,—नियमः, आचार इत्यर्थः, ("समयाः शपथाचारकालसिद्धान्त-संविदः" इत्यमरः)।

(स) गण्डः,—समयः, "बन्दोबस्त" इति हिन्दी भाषा।

संवा। [ सभिकमुपगम्य ] अद्धस्स गंधु कलेमि, अद्धं पि मे अज्जो मुंचदु। *

माथु। को दोसु, एव्वं भोदु। †

संवा। [ प्रकाशम् ] अज्ज ! अद्धे तुए मुक्के ? ‡

माथु। मुक्के। §

संवा। [ द्यूतकरं प्रति ] अद्धे तुए वि मुक्के ? ¶

द्यूत। मुक्के। **

संवा। संपदं गमिस्सं। †† ( ह )

माथु। पअच्छ तं दससुवस्सं ; कहिं गच्छसि ? ‡‡

संवा। पेक्खध पेक्खध भट्टालआ ! हा ! संपदं ज्जेव एक्कस्स अद्धे गंधु कड़े, अवलस्स अद्धे मुक्के, तहवि मं अवलं (क) संपदं ज्जेव मग्गदि !! §§

माथु। [ गृहीत्वा ] धुत्त ! माथुल अहं णिउण, एत्थ ण अहं धुत्तिज्जामि, ता पअच्छ तं लुमदंडआ ! सव्वं सुवस्सं संपदं। ¶¶

संवा। कुदो दइस्सं ? ***

---

* अर्द्धस्य गण्डं करोमि, अर्द्धमपि मे आर्य्यो मुञ्चतु। † को दोषः, एवं भवतु।

‡ आर्य्य ! अर्द्धं त्वया मुक्तम् ? § मुक्तम्। ¶ अर्द्धं त्वयाऽपि मुक्तम् ?

** मुक्तम्। †† साम्प्रतं गमिष्यामि। ‡‡ प्रयच्छ तत् दशसुवर्णम् ; कुत्र गच्छसि ?

§§ प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः ! हा ! साम्प्रतमेव एकस्य अर्द्धे गण्डः कृतः, अपरस्य अर्द्धं मुक्तं, तथाऽपि मामबलं साम्प्रतमेव याचते !!

¶¶ धूर्त्त ! माथुरोऽहं निपुणः, अत्र नाहं धूर्त्तयामि, तत प्रयच्छ तं लुप्तदण्डक ! सर्वं सुवर्णं साम्प्रतम्।

*** कुतो दास्यामि ?

( ह ) मया प्रार्थितेन भवता पणस्यार्द्धं परित्यक्तं, तथा पुनः प्रार्थितेन द्यूतकरेण च अपरमर्द्धं मुक्तमिति समुदायेन विमुक्तोऽहमिदानीं निर्भयः स्थानान्तरं यास्यामि, अर्द्धक्रमेण युवाभ्यां सम्पूर्णं विमुक्तत्वादिति भावः।

( क ) अबलम्—असक्तम्, अधममिति यावत्।

माथु। पिदरं विक्किणिअ पअच्छ। *

संवा। कुदो मे पिदा? †

माथु। मादरं विक्किणिअ पअच्छ। ‡

संवा। कुदो मे मादा? §

माथु। अप्पाणं विक्किणिअ पअच्छ। ¶

संवा। कलेध पशादं, णेध मं लाजमग्गं। **

माथु। पसल। †† (ख)

संवा। एव्वं भोदु। [परिक्रामति] अज्जा! किणिधं मं इमश्श शहिअश्श हत्थादो दशहिं शुवण्णकेहिं? [दृष्टा आकाशे] (ग) किं भणाध? किं कलइश्शशि त्ति? गेहे दे कम्मकले हुविश्शं। कधं! अदइअ पडिवअणं गदे! भोदु एव्वं, इमं अण्णं भणइस्सं। [पुनस्तदेव पठति] कधं! एशे वि मं अवधीलिअ गदे!! आ:! अज्जचालुदत्तश्श विहवे विहडिदे एशे अहं वट्टामि मंदभाए। ‡‡ (घ)

* पितरं विक्रीय प्रयच्छ। † कुतो मे पिता?

‡ मातरं विक्रीय प्रयच्छ। § कुतो मे माता? ¶ आत्मानं विक्रीय प्रयच्छ।

** कुरुत प्रसादं, नयत मां राजमार्गम्। †† प्रसर।

‡‡ एवं भवतु। आर्य्याः! क्रीणीध्वं माम् अस्य सभिकस्य हस्तात् दशभिः सुवर्णकैः? किं भणथ? किं करिष्यसीति? गेहे ते कर्म्मकरो भविष्यामि। कथम्! अदत्वा प्रतिवचनं गतः! भवत्वेवम्, इमम् अन्यं भणिष्यामि। कथम्! एषोऽपि मामवधीरयित्वा गतः!! आः! आर्य्यचारुदत्तस्य विभवे विघटिते एषोऽहं वर्त्ते मन्दभाग्यः।

(ख) प्रसर—चल।

(ग) आकाशे इति—नाटकीयपात्रं विना शून्यं प्रति दृष्टिं निक्षिप्य या उक्तिः, तदाकाशभाषितम्; तदुक्तं दर्पणकृता,—"किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्॥" इति।

(घ) अवधीरयित्वा—अवज्ञाय। विघटिते—नष्टे सति। एषः,—ईदृगवस्था-

माथु । णं देहि । *

संवा । कुदो दइस्सं ? † [ इति पतति । माथुरः कर्षति ] ।

संवा । अज्जा ! पलित्ताअध, पलित्ताअध । ‡

[ ततः प्रविशति दर्दुरकः ] ।

दर्दु । भोः ! द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्,—

न गणयति पराभवं कुतश्चित्
हरति ददाति च नित्यमर्थजातम् ।
नृपतिरिव निकाममायदर्शी
विभववता समुपास्यते जनेन ॥ ६ ॥

अपिच,—

द्रव्यं लब्धं द्यूतेनैव, दारा मित्रं द्यूतेनैव ।
दत्तं भुक्तं द्यूतेनैव, सर्वं नष्टं द्यूतेनैव ॥ ७ ॥

* ननु देहि । † कुतो दास्यामि ?

‡ आर्याः ! परित्रायध्वं, परित्रायध्वम् ।

ऽऽपन्नः, मन्दभाग्यः,—भाग्यहीनः सन्नित्यर्थः । वर्त्ते—जीवामि । [ "वट्टामि" इत्यत्र "वड्डामि" इति पाठान्तरे,—"वर्द्धे" इति संस्कृतम् ; वृद्धिं प्राप्नोमीत्यर्थः ] ।

द्यूतस्याचिन्तनीयमाहात्म्यमुपवर्णयन् स्वीयां राज्यतुल्यत्वमेव उभयसाधारणधर्म-प्रदर्शनेन समर्थयमान आह, नेति ।—कुतश्चित्—कस्मादपि, पराभवं—पराजयं, न गणयति—न तर्कयति, नित्यं—सततम्, अर्थजातम्—अर्थसमूहं, हरति—अर्ज्जयति, ददाति—यच्छति च, निकामं—सम्यक्, अयत्नमित्यर्थः, यथा तथा, आयदर्शी—लाभवान्, धनसम्पन्न इत्यर्थः, नृपतिरिव—राजेव, विभववता—सम्पत्तिशालिना जनेन, समुपास्यते—सेव्यते, द्यूतमिति शेषः, एवं सर्व्वत्र । अत्र धनसम्पन्ननृपतिना द्यूतस्य विभववत्पुरुषोपास्यत्वसाम्यादुपमा नामालङ्कारः, सा च इवशब्दोत्यापितेति श्रौती ज्ञेया । पुष्पिताग्रा वृत्तम्,—"अयुजि नयुगरेफतो यकारो युजि च न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ६ ॥

पुनर्द्यूतस्याचिन्तनीयप्रभावमुपवर्णयन्नाह, द्रव्यमिति ।—द्यूतेन—द्यूतक्रीडया एव, द्रव्यं—धनं, लब्धं—प्राप्तं, दाराः,—भार्य्या, द्यूतेनैव लब्धा इति विभक्तिविपरि-

अपिच,—

त्रेताहृतसर्वस्वः, पावरपतनाच्च शोषितशरीरः।
नर्दित-दर्शितमार्गः, कटेन विनिपातितो यामि॥ ८॥

[ अग्रतोऽवलोक्य ] अयमस्माकं पूर्वसभिको माथुर इत एवाभिवर्त्तते। भवतु, अपक्रमितुं न शक्यते, तदवगुण्ठयामि आत्मानम्। (ङ) [ बहुविधं नाट्यं कृत्वा स्थितः। उत्तरीयं निरीक्ष्य ]—

यामेनान्वयः, [ दारशब्दस्य नित्यबहुवचनत्वमेव, "आपो दारा वर्षाः सिकताः" इत्याद्युक्तेः ] मित्रञ्च—बन्धुश्च, लब्धं, द्यूतेन एव, सर्वं—सकलं धनादिकमित्यर्थः, दत्तं—वितरितं, भुक्तम्—उपभुक्तं, तथा द्यूतेनैव सर्व्वं नष्टञ्च—हारितञ्च। अत्र विद्युन्माला वृत्तं—"मो मो गो गो विद्युन्माला" इति लक्षणात्॥ ७॥

द्यूतनिर्ज्जितो दर्दुरकः स्वामवस्थां वर्णयति, त्रेतेति।—अत्रत्याः त्रेता-पावर-नर्द्दित-कटशब्दा द्यूतक्रीड़ाऽन्तर्गतसाङ्केतिकशब्दविशेषा बोद्धव्याः; तथा च, त्रेता—"तीया" इति ख्यातः, पावरः,—"दूया" इति विश्रुतः, यद्वा,—पावरशब्देन द्यूतक्रीड़ार्थगुटिका उच्यते। नर्द्दितः,—नान्दी, "नक्क" इति प्रथितः, कटः,—"पूरा" इति प्रसिद्धः; (पावरः पूरा, कटो दूया इति केचित्) तत्र तीया—त्रीणि सप्त एकादशादयः; दूया—द्वे षट् दशप्रभृतयः, नान्दी—एक पञ्च नव इत्यादयः, पूरा च—चत्वारि अष्टौ द्वादशादयः ज्ञातव्याः। तथा हि, त्रेतया—त्रेतापातेन, हृतं—नष्टं, सर्व्वस्वं—सर्व्वं धनं यस्य तादृशः, पावरस्य—दूयानामकस्येत्यर्थः, पतनात्—पातात्, शोषितं—भूयःपराभवशङ्कया शुष्कं, मलिनमित्यर्थः, शरीरं यस्य सः, नर्द्दितेन—नर्द्दितपातेन, दर्शितः,—विज्ञापितः, मार्गः,—गृहाय निष्क्रमणपथो यस्य तथाभूतः, नर्द्दितपतनादेव निःसंशयं पराभूतः इत्यर्थः, तथा कटेन—पूरेति प्रसिद्धकटपतनेन, विनिपातितः,—निःशेषेण विध्वंसितः, सर्व्वधनविनाशात् पणप्रदाने असामर्थ्यात् विशेषेण ताड़ितः इति यावत्, तादृशः सन्, यामि—पलाये इत्यर्थः। अत्र आर्य्याच्छन्दः॥ ८॥

(ङ) पूर्व्वसभिकः,—प्राक्तनद्यूतसभाध्यक्षः। "पूर्व्वसभिकः" इत्यनेन दर्दुरकस्यापि माथुरसकाशे पणजितत्वेन किञ्चिद्देयमस्तीत्यवगम्यते। अपक्रमितुम्—इतः पलायितुम्। अवगुण्ठयामि—उत्तरीयेण आपादमस्तकमाच्छादयामीत्यर्थः। आत्मानं—स्वं, स्वशरीरमिति यावत्।

अयं पटः सूत्रदरिद्रतां गतो
ह्ययं पटश्छिद्रशतैरलङ्कृतः।
अयं पटः प्रावरितुं न शक्यते
ह्ययं पटः संवृत एव शोभते ॥ ९ ॥

अथवा किमयं तपस्वी करिष्यति? (च)

पूर्व्वसभिकान्माथुराद्भीतः उत्तरीयेणात्मानमाच्छादयितुकामः तदतीव जीर्णमालोक्य आह, अयमिति।—अयं—परिदृश्यमान इत्यर्थः, पटः,—उत्तरीयं, सूत्रदरिद्रतां—प्रायेण सूत्रहीनतामित्यर्थः, [दरिद्रशब्दस्य धनहीने शक्तत्वेऽपि लक्षणयाऽत्र अभाववन्मात्रबोधकत्वेन सूत्राभाववत्ताबोधः इति बोध्यम्] गतः,—प्राप्तः, जालवत् अल्पतन्तुनिर्म्मितत्वादिति भावः; अयं पटः, छिद्रशतैः,—बहुभिश्छिद्रैः, [शतादिशब्दानामेकवचनान्तत्वनियमसत्त्वेऽपि शतादीनामनेकत्वस्य विवक्षितत्वे बहुवचनस्यापि अनुशिष्टत्वादत्र छिद्रे बहुशतत्वस्य विवक्षितत्वात् बहुत्वं बोध्यम्; यद्वा शतशब्दोऽत्र एकशेषीकृतः] अलङ्कृतः,—शोभितः, युक्त इति यावत्, अतीव जीर्णत्वादिति भावः; सुतराम् अयं पटः, प्रावरितुम—आच्छादयितुं, न शक्यते—न समर्थ्यते, [अत्र आच्छादनक्रियाऽपेक्षया पटस्य करणत्वेऽपि शक्तिक्रियाऽपेक्षया कर्म्मत्वादेकत्र उभयप्राप्तौ "अपादानसम्प्रदान—" इत्याद्यनुशासनबलेन करणबाधेन कर्म्मण एव प्रसक्तिरिति बोध्यम्] अयं पटः, हि—निश्चितं, संवृतः,—पिण्डीकृतः, एव शोभते—राजते, जालवदत्यल्पतन्तुविशिष्टस्य शतच्छिद्रालङ्कृतस्य अस्य गात्राच्छादनार्थं विस्तारः निरर्थक इति विस्तारमपेक्ष्य पिण्डीभाव एवास्य श्रेयानिति निष्कृष्टार्थः। अत्र "अयं पटः" इत्यंशस्य पादचतुष्टय एव पाठात् "सदा चरति खे भानुः सदा वहति मारुतः" इत्यादि दर्पणकृदुदाहरणवत् अनवीकृतत्वदोषः स्पष्ट एवाभाति, स च अस्य "अयं पटः सूत्रदरिद्रतां गतः समन्वितश्छिद्रशतैश्च सर्व्वतः। न वा तथा प्रावरितुञ्च शक्यते ततस्त्वयं संवृत एव शोभते॥" इत्येवं परिवृत्त्या अभिप्रेतवचनत्वेन वा समाधातुं शक्यते इति सुधीभिर्विभाव्यम्। वंशस्थविलं वृत्तं,—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति लक्षणात् ॥९॥

(च) तपस्वी—वराकः, निर्दोषः अधमः इति वाऽर्थः, अयमिति आत्मनिर्देशः, दर्दुरकः इति यावत्, किं करिष्यति?—विधास्यति? इत्यर्थः, यद्वा,—अयमिति पुरोवर्त्तिनो माथुरस्य निर्देशः, तथा च, अयं—पुरोवर्त्ती, तपस्वी—दुर्बलः इत्यर्थः, मत्पराक्रमसन्निधौ तृणोपम इति यावत्, माथुर इति शेषः, किं करिष्यति? मर्म्मेति भावः, मम स्वल्पमप्यपकर्त्तुं नासौ शक्ष्यति इति भावः।

यो हि,—

पादेनैकेन गगने द्वितीयेन च भूतले ।
तिष्ठाम्युल्लम्बितस्तावत् यावत् तिष्ठति भास्करः ॥१०॥

माथु। दापय दापय।

संवा। कुदो दइस्सं ? * [ माथुरः कर्षति ]।

दर्दु। अये! किमेतदग्रतः ? [ आकाशे ] किं भवानाह ? अयं द्यूतकरः सभिकेन खलीक्रियते, ( छ ) न कश्चिन्मोचयति ? ननु अयं दर्दुरो मोचयति। [ उपसृत्य ] अन्तरमन्तरम्। ( ज ) दृष्ट्वा ] अये ! कथं माथुरो धूर्त्तः !! अयमपि तपस्वी संवाहकः,—

य: स्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितः
यस्योद्घर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः।

---

* कुतो दास्यामि ?

दर्दुरस्तावत् माथुरस्य अपकाराक्षमत्वमेव प्रदर्शयितुं स्वसामर्थ्यं वर्णयति, पादेनेति।—यो हि इति गद्यस्थेनान्वयः, अहमित्यर्थः, यावत् भास्करः,—सूर्य्यः, तिष्ठति, यावत् सूर्य्यास्तगमनं न भवति इत्यर्थः, तावत्—तत्कालपर्य्यन्तं, सूर्य्यस्य उदयमारभ्य अस्तगमनकालपर्य्यन्तमित्यर्थः, एकेन पादेन—चरणेन, गगने—आकाशे, द्वितीयेन—अपरेण, पादेनेति शेषः, भूतले—पृथिव्याम्, उल्लम्बितः,—उत्—ऊर्द्ध, लम्बितः,—लम्बमानः सन्नित्यर्थः, तिष्ठामि—स्थातुं शक्नोमीत्यर्थः ; अयञ्चेत् मां ग्रहीष्यति, तदा मत्सकाशात् पणीभूतमर्थमप्राप्नुवन् कायक्लेशमेव दास्यति, किन्तु ईदृशक्लेशसहिष्णोर्मे तस्मात् दुर्बलसभिकात् नास्ति तदपि भयमिति ; यद्वा,—आत्मगोपनेनालम्, ईदृशव्यायामकुशलिनो बलवतो मे दुर्बलोऽयं सभिकः किं करिष्यति ? यदि मामाक्राम्येत् तदा अमुमेव प्रहृत्य पलायिष्ये इति भावः। पथ्यावक्त्रं वृत्तम् ॥१०॥

( छ ) खलीक्रियते—क्लिश्यते, ताड़नादिना अपमीयते इति यावत्।

( ज ) "अन्तरम्, अन्तरम्" इति अपसरत, अपसरत इत्यादिवत् बहुजनसङ्घर्षे प्रवेशार्थमवकाशयाचनसूचकम्, अवकाशः दीयतामिति तदर्थः।

द्यूतक्रीड़कस्य निर्य्यातनातिशय्यवर्णनमुखेन तदसहिष्णोः संवाहकस्य द्यूतक्रीड़ाकरणायोग्यतां प्रतिपादयति, य इति।—यः,—संवाहकः, समुल्लम्बितः,—वृक्षादौ ऊर्द्ध्वात् लम्बितः, सुतराम् आनतशिराः,—अधोलम्बितमस्तकः सन्, [ "आनतशिराः"

यस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम्? ॥ ११ ॥

इत्यत्र "आनतशिरः" इति पाठे क्रियाविशेषणमेतत्] दिवसान्तं—दिवाऽवसानपर्य्यन्तं, लम्बं—निश्चलं यथा तथा, न आस्ते—न तिष्ठति, अहमिवेति वक्तव्यम्; तथा यस्य—संवाहकस्य, ममेवेति वक्तव्यं, पृष्ठे—पृष्ठदेशे, उद्घर्षणलोष्टकैः,—उद्घर्षणस्य—प्रहारविशेषस्य, लोष्टकैः,—तत्साधनीभूतमृत्खण्डैः, उद्घर्षणजन्यलोष्टोपमशुष्कव्रणरूपचिह्नैरित्यर्थः, अपि सदा—सततं, किणः,—शुष्कव्रणजन्यमालिन्यचिह्नं, न जातः,—न समुत्पन्नः, द्यूते पणीकृतादाने तथा क्रियते इति बोध्यम्; यस्य च—संवाहकस्य, ममेवेति अत्रापि योज्यम्; एतत् जङ्घान्तरं—जङ्घयोर्मध्यं, कुक्कुरैः,—श्वभिः, कुक्कुरसदृशैः अपरैः द्यूतकरैरित्यर्थः, अहरहः,—प्रतिदिनं, न चर्व्यते—सर्वाङ्गं क्षतविक्षतं न क्रियते इत्यर्थः; अत्यायतकोमलस्य—अतिशयमृदोः, यद्वा—अत्यायतः,—अतिविस्तृतः, विपुलशरीरः इत्यर्थः, स चासौ कोमलः,—कोमलाङ्गश्च, इति [कर्म्मधारयः] तादृशस्य, एतादृशदुःसहक्लेशासहिष्णोरिति भावः, तस्य—क्लेशासहिष्णुत्वेन प्रसिद्धस्य संवाहकस्य, सततं—निरन्तरं, द्यूतप्रसङ्गेन—द्यूतपरिशीलनेन, किम्?—न किमपि फलम् इत्यर्थः; द्यूतकरेण सता येन एतादृशदुःखसहिष्णुना न भूयते, तस्य ईदृशक्लेशबहुलद्यूतमार्गासक्तिरनुचितैव इति भावः। द्यूतप्रसक्तौ नितरां दुराचारेणैव भवितव्यम् इति सन्दर्भार्थः। केचित्तु श्लोकमिमं काकूक्तिपरं मन्यमानाः वैपरीत्येनैवास्य तात्पर्य्यं व्याचक्षते। तथाहि,—यः समुल्लम्बितः अत एव आनतशिराः सन् दिवसान्तं लम्बं यथा तथा न आस्ते?—न तिष्ठति किम्? अपि तु आस्ते एवेति भावः; अहमिवेति वक्तव्यं, तथा यस्य, ममेवेति वक्तव्यं, पृष्ठे उद्घर्षणलोष्टकैः, अपि—किं, सदा किणः न जातः?—अपि तु जात एवेत्यर्थः; यस्य च, ममेवेति अत्रापि योज्यम्, एतत् जङ्घान्तरं कुक्कुरैः अहरहः न चर्व्यते किम्?—अपि तु चर्व्यते एवेति भावः; अत्यायतस्य—अतिदीर्घाकारस्य, तथा कोमलस्य—विपरीतलक्षणया सुकठिनदेहस्य, तस्य—एतादृशक्लेशसहिष्णुत्वेन अतिप्रसिद्धस्य संवाहकस्य, सततं द्यूतप्रसङ्गेन किम्?—निरन्तरद्यूतपरिशीलनेनापि न किमपि दुःखमित्यर्थः, एतादृशक्लेशसहिष्णोरस्य निरन्तरद्यूतप्रसङ्गेन हृतसर्व्वस्वतया पणीकृतधनदाने असामर्थ्यात् ईदृशदुःखातिशयः न मनागपि पीडाकर इति भावः। यद्वा,—किम्?—किं फलं लब्धम्? न किमपीत्यर्थः, एतावत्कालं द्यूतेन क्रीडित्वाऽपि केवलं दुःखातिशय एव प्राप्तः, नान्यत् धनादिकं किमपीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

भवतु, माथुरं तावत् सान्त्वयामि। [उपगम्य] माथुर! अभिवादये।

माथु। पच्चभिवादेम्हि। *

दर्दु। किमेतत्?

माथु। अअं दशसुवस्सं धालेदि। †

दर्दु। ननु! कल्यवर्त्तमेतत्। (भ)

माथु। [दर्दुरस्य कक्षतललुण्ठीकृतं पटमाकृष्य] भट्टा! पश्शत पश्शत, जज्जरपड़प्पावुदो अअं पुलिसो दशसुवस्सं कल्लवत्तं भणादि! ‡

दर्दु। अरे मूर्ख! नन्वहं दश सुवर्णान् कटकरणेन (ञ) प्रयच्छामि। तत् किं यस्यास्ति धनं, स किं क्रोड़े कृत्वा दर्शयति? अरे!—

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात्।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया!! ॥ १२ ॥

---

* प्रत्यभिवादये। † अयं दशसुवर्णकं धारयति।

‡ भट्टारकाः! पश्यत पश्यत, जर्ज्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्त्तं भवति!

---

(भ) कल्यवर्त्त,—प्रातर्भोजनं, तत्साधनमेतद्धनम् अत्यल्पमित्यर्थः।

(ञ) सुवर्णान्—स्वर्णनिर्म्मितकर्षकान्, ("सुवर्णो ना स्वर्णकर्षे" इति मेदिनी।) दशसङ्ख्यकान् स्वर्णकर्षान् इत्यर्थः। कटकरणेन—कटस्य—द्यूतविशेषस्य, करणेन—अनुष्ठानेन, पूरापातनेनेत्यर्थः।

सामान्यस्य कृते एवं पीड़यन्तं माथुरं भर्त्सयन्नाह, दुर्वर्ण इति।—दशस्वर्णस्य—दशानां सुवर्णानां समाहारः दशसुवर्णं तस्य, [एवं यत्र यत्र "दशसुवर्णम्" इति पदमस्ति, तत्र तत्रैव नपुंसकता ज्ञेया। अन्यथा पुंस्त्वमेव इति प्रदर्शितं प्राक्] कारणात्—हेतोः, अत्यन्तसामान्यधनस्य कारणादिति यावत्, त्वया पञ्चेन्द्रियसमायुक्तः,—पञ्चभिः इन्द्रियैः,—चक्षुरादिभिः, समायुक्तः, [यद्यपि "मनःषष्ठानीन्द्रियाणि" इति गीतादिवचनात् इन्द्रियाणां षट्त्वमेव, तथाऽपि अत्र बहिरिन्द्रियाणां

माथु। भट्टा! तुए दशसुवस्सु कल्लवत्तु, मए एस्सु विहवु। *

दर्दु। यद्येवं, श्रूयतां तर्हि, अन्यान् तावत् दश सुवर्णान् अस्यैव प्रयच्छ, अयमपि द्यूतं शीलयतु।

माथु। तत् किं भोदु? †

दर्दु। यदि जेष्यति, तदा दास्यति।

माथु! अह ण जिणादि? ‡

दर्दु। तदा न दास्यति।

माथु। अह ण जुत्तं जप्पिदुं। एव्वं अक्खंतो तुमं पअच्छ। धुत्तआ! अहं वि णाम माथुरु धुत्तु, जूदं मित्या आदंसआमि. अस्सस्स वि अहं ण विभेमि। धुत्ता! खंडिअवुत्तो (ट) सि तुमं। §

---

* भट्टारक! तव दशसुवर्णः कल्यवर्त्तः, मम एष विभवः।

† तत् किं भवतु? ‡ अथ न जयति?

§ अथ न युक्तं जल्पितुम्। एवमाचक्षाणस्त्वं प्रयच्छ; धूर्त्तक! अहमपि नाम माथुरो धूर्त्तः, द्यूतं मिथ्या आदर्शयामि, अन्यस्मादपि अहं न बिभेमि। धूर्त्त! खण्डितवृत्तोऽसि त्वम्।

प्रस्तावात् पञ्चसङ्ख्याकत्वमुक्तमिति ध्येयम्] नरः,—मानवः, व्यापाद्यते—हन्यते, अतस्त्वं दुर्वर्णः—अतिहीनजातिः, असि—भवसि, ["दुर्वर्णोऽसि" इत्यत्र "उच्छिन्नोऽसि" इति पाठान्तरम्] तथा विनष्टः,—स्वकर्म्मणैव हतः, असि—भवसि। [अत्र "निर्वेदः" नाम सञ्चारिभावः इति केचित्]। पथ्यावक्त्रं वृत्तम्॥ १२॥

(ट) जल्पितं—वक्तुं, त्वयेति शेषः, एवं—पूर्वोक्तां दशसुवर्णस्य कल्यवर्त्तताम् अन्यदशसुवर्णदानं यदि जेष्यतीत्यादिकञ्च इत्यर्थः, आचक्षाणः,—कथयन्, ["अक्खंतो" इत्यस्य "अक्षमः" इति संस्कृतं साधुतया सङ्गच्छते, अक्षमः,—असहन इत्यर्थः] आदर्शयामि—आ—सम्यक् दर्शयितुं शक्नोमीत्यर्थः, अन्यस्मै इति शेषः; न बिभेमि—द्यूतक्रीड़ायामहमेवापरं निःशङ्कं वञ्चयामि, मान्तु न कश्चिदिति भावः। खण्डितवृत्तः,—दुःशील इत्यर्थः।

दर्द। अरे ! कः खण्डितवृत्तः ?

माथु। तुमं क्खु खंडिअवुत्तो। *

दर्द। पिता ते खण्डितवृत्तः। [ संवाहकस्यापक्रमितुं संज्ञां ददाति ]।

माथु। गोमाविआपुत्ता ! णं एव्वं ज्जेव्व जूदं तुए सेविदं ? †

दर्द। मया एवं द्यूतमासेवितम्।

माथु। अले संवाहआ ! पअच्छ तं दशसुवर्ण्णं। ‡

संवा। अज्ज ! दइश्शं दाव दइश्शं § [ माथुरः कर्षति ]।

दर्द। मूर्ख ! परोक्षे खलीकर्त्तुं ( ठ ) शक्यते, न ममाग्रतः खलीकर्त्तुम्।

[ माथुरः संवाहकमाक्रम्य घोणायां मुष्टिप्रहारं ददाति। संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति। दर्दुरक उपसृत्य अन्तरयति। माथुरो दर्दुरं ताड़यति। दर्दुरो विप्रतीपं ताड़यति ]। (ड)

माथु। अले अले दुट्ट छिणालिआपुत्तअ ! फलंपि पाविहसि। ¶

दर्द। अरे मूर्ख ! अहं त्वया मार्गगत एव ताड़ितः, श्वो यदि राजकुले ताडयिष्यसि, तदा द्रक्ष्यसि।

माथु। एसु पेक्खिस्सं। **

---

* त्वं खलु खण्डितवृत्तः।

† वेश्यापुत्र ! ननु एवमेव द्यूतं त्वया सेवितम् ?

‡ अरे संवाहक ! प्रयच्छ तत् दशसुवर्णम्।

§ आर्य्य ! दास्यामि, तावत् दास्यामि।

¶ अरे अरे दुष्ट पुंश्चलीपुत्रक ! फलमपि प्राप्स्यसि। ** एष प्रेक्षिष्ये।

( ठ ) परोक्षे—असमक्षमित्यर्थः। खलीकर्त्तुं—क्लेशयितुम्, अपमानं कर्त्तुमित्यर्थः। मयि अत्र विद्यमाने एव यदि त्वमस्य गात्रं स्पृशसि, तदाऽहमेव तत्प्रतीकाराय युक्तियुक्तं विदधामि इति भावः।

( ड ) घोणायां—नासिकायाम्। ("घोणा नासा च नासिका" इत्यमरः)। सशोणितं—सरक्तं, रक्ताक्तकलेवरमित्यर्थः, [ वक्ष्यमाणायाः पततिक्रियाया विशेषण-

दर्दु। कथं द्रक्ष्यसि ?

मा०। [प्रसार्य्य चक्षुषी] एव्वं पेक्खिस्सं। *

[दर्दुरो माथुरस्य चक्षुषी पांशुना पूरयित्वा संवाहकस्य अपक्रमितुं संज्ञां ददाति। माथुरोऽक्षिणी निगृह्य भूमौ पतति। संवाहकोऽपक्रामति]

दर्दु। [स्वगतम्] प्रधानसभिको माथुरो मया विरोधितः, तस्मान्न युज्यते स्थातुम्। कथितश्च मम प्रियवयस्येन शर्व्विलकेन, यथा किल आर्य्यकनामा गोपालदारकः (ढ) सिद्धादेशेन समादिष्टो राजा भविष्यतीति, सर्व्वश्च अस्मद्विधो जनः तमनुसरति तदहमपि तत्समीपमेव गच्छामि। [इति निष्क्रान्तः]।

संवा। [सत्रासं परिक्रम्य दृष्ट्वा] एशे कश्शवि अणपावुदपक्खदुआलके (ण) गुहे. ता एत्थ पविशिश्शं। [प्रवेशं रूपयित्वा वसन्तसेनामालोक्य] अय्ये ! शलणागदेम्हि। †

वस। अभअं शलणागदस्स। हञ्जे ! ढक्केहि (त) पक्खदुआरअं। ‡

---

* एवं प्रेक्षिष्ये।

† एतत् कस्यापि अनपावृतपक्षद्वारकं गेहं, तदत्र प्रविशामि। आर्य्ये ! शरणागतोऽस्मि।

‡ अभयं शरणागतस्य। हञ्जे ! पिधेहि पक्षद्वारकम्।

---

मेतत्] अन्तरयति—मध्ये स्थित्वा प्राप्नोति इत्यर्थः। विप्रतीपं—विपरीतम् [इति क्रियाविशेषणम्] ताड़यति, माथुरमिति शेषः।

(ढ) प्रधानसभिकः,—द्यूतसभाऽध्यक्षेष्वपि श्रेष्ठः, विरोधितः,—कलहेन कोपितः इत्यर्थः। शर्व्विलकेन—तन्नाम्ना ब्राह्मणजातीयेन केनचित् तस्करेणेत्यर्थः; अयमेव चारुदत्तालये सन्धिच्छेदं करिष्यति इति तृतीयाङ्के वर्णयिष्यते। गोपालदारकः—गोपतनयः।

(ण) अनपावृतम्—अपिहितं, पक्षद्वारं—पार्श्वस्थान्तःप्रवेशमार्गः यस्य तत्, तत. तदेवेति स्वार्थे क्षुद्रार्थे वा कप्रत्ययः, समुद्घाटितान्तःप्रवेशपथमिति यावत्, ("पक्षद्वारन्तु पक्षकः" इत्यमरः) "खिड़्कीद्वार" इति वङ्गभाषा।

(त) पिधेहि—आवृणु।

चेटी। [तथा कृत्वा परिक्रम्य च] अज्जे! किदं। *

वस। किं? †

चेटी। जं तुए कधिदं। ‡

वस। कुदो दे भअं? §

संवा। अज्जे! धणिकादो। ¶

वस। हञ्जे! संपदं अवावणु (थ) पक्खदुआरअं। **

संवा। [आत्मगतम्] कधं! धणिकादो तुलिदं (द) से भअ-कालणं!! शुट्ठु क्खु एव्वं वुच्चदि, ††—

जे अत्तवलं जाणिअ भालं तुलिदं वहेइ माणुश्शे।
ताह खलणं ण जाअदि, ण अ कंतालगदो विवज्जदि ‡‡ ॥१२॥

---

* आर्य्ये! कृतम्। † किम्? ‡ यत् त्वया कथितम्।

§ कुतस्ते भयम्? ¶ आर्य्ये! धनिकात्।

** हञ्जे! साम्प्रतम् अपावृणु पक्षद्वारकम्।

†† कथं! धनिकात् तुलितम् अस्याः भयकारणम्!! सुष्ठु खलु एवमुच्यते;—

‡‡ य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः।
तस्य स्खलनं न जायते, न च कान्तारगतो विपद्यते॥

(थ) अपावृणु,—अर्गलादिना दृढतरं रुन्धि इत्यर्थः; यद्वा,—निरावरणं कुरु, उद्घाटय इत्यर्थः।

(द) धनिकात्—धनवत्पुरुषात्, उत्तमर्णाद्वा। अस्याः,—रमण्याः वसन्तसेनायाः इत्यर्थः। भयकारणं—भीतिहेतुः। तुलितं—तुल्यं, ममेति शेषः; धनिकः यथा मे भयहेतुः, तथा अस्या अपीत्यर्थः।

जे इति।—यः मनुष्यः,—पुरुषः, आत्मबलं—निजयोग्यतां, ज्ञात्वा—विविच्य, निजसामर्थ्यानुसारेणेति यावत्, तुलितं—सदृशं, सामर्थ्यानुरूपमित्यर्थः, उत्तोलनयोग्यं वा, भारं—गुरुत्ववद्द्रव्यं, वहति—धारयति, तस्य—जनस्य, स्खलनं—पतनं, नाशो वा, न जायते—न भवति, च—तथा, सः कान्तारगतोऽपि—कान्तारः,—दुर्गमं वर्त्म, महाऽरण्यं वा, ("कान्तारोऽस्त्री महाऽरण्ये विले दुर्गमवर्त्मनि" इति मेदिनी) तं गतः,—प्राप्तोऽपि ["कंतालगदो" इत्यत्र "कंतालगड़" इति पाठान्तरं, तत्र "कंतालगड़े" इत्येकारान्तं पठित्वा "गड़े" इत्येकारो लघुः पठनीयः, छन्दोऽनुरोधात्। इति

एत्थ लक्खिदम्हि। * (ध)

माथु। [ अन्विष्य प्रमृज्य द्यूतकरं प्रति ] **अले! देहि देहि।** †

द्यूत। **भट्टा! जावदेव अम्हे दद्दुरेण कलहाइदा, (न) तावदेव सो गोह्रो अवक्कंतो।** ‡

माथु। **तस्स जूदकलस्स मुट्ठिप्पहालेण णाशिका भग्गा आसि; ता एहि, रुहिरपहं अणुसरेम्ह।** § (प) [ अनुसरतः ]।

* अत्र लक्षितोऽस्मि। † अरे! देहि देहि।

‡ भर्त्तः! यावदेव वयं दर्दुरेण कलहायिताः, तावदेव स पुरुषोऽपक्रान्तः।

§ तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्ना आसीत्; तत् एहि, रुधिरपथमनुसराव:।

---

लक्षाटीचितस्य व्याख्या न साध्वी, "अत इदेतौ लुक् च" इति सूत्रेण सौ परे अकारान्तादुत्तरं विहितयोः इकारैकारयोः पक्षे लोपविधानेन गडशब्दस्य अकारान्तस्यैव सिद्धत्वात् ] न विपद्यते—न विपदमाप्नोति च। अत्र "य आत्मबलम्" इति महाजनवाक्यं "अहं लक्षितः" इति वक्ष्यमाणेनान्वेति, अपरैर्निदर्शनतयेति शेषः। स्वशक्तिमनुसृत्य द्यूतक्रीडायां मम प्रवृत्तिरुचिता, परम् अविमृष्यकारितयैव ममैतादृशी लाञ्छनेति भावः। अत्र आत्मबलं ज्ञात्वा उपयुक्तं भारं वहतो मनुष्यस्य विपत्प्राप्त्याद्यभावरूपादप्रस्तुतात् आत्मबलमज्ञात्वा द्यूतं क्रीडतः संवाहकस्य तादृशनिग्रहाद्यात्मकविपत्प्राप्तिरूपः प्रस्तुतः पदार्थो वैधर्म्येण प्रतीयते, इत्यप्रस्तुतप्रशंसाऽलङ्कारः। आर्य्या वृत्तम्॥ १२॥

(ध) अत्रेति।—अस्मिन् श्लोकविषये इत्यर्थः, लक्षितोऽस्मि—लक्ष्यस्थलं भवामि, अहमेव दृष्टान्ततया इति शेषः। द्यूतक्रीड़ायां पणीकृतधनदाने स्वस्य सामर्थ्यं वर्त्तते न वेत्यविविच्यैव प्रवृत्तः सन् अहमेवास्मिन् श्लोकविषये दृष्टान्तीभूतोऽस्मीति भावः; यद्वा,—अत्र—देयमपरिशोध्य पलायने, लक्षितः,—विषयीकृतः, वसन्तसेनयेति भावः।

(न) कलहायिताः,—कृतकलहाः। [ "शब्दवैरकलहाभ—" (३।१।१७ पा०) इति कलहशब्दात् करणार्थे क्यङ्, ततः निष्ठा। "कलहाइदा" इत्यस्य "कलहायमानाः" इति संस्कृतं समीचीनम् ]।

(प) अत्र द्यूतकरस्य नासिका मम मुष्टिप्रहारेण भग्ना आसीदित्यन्वयः। तस्य —द्यूतपराजितस्य, द्यूतकरस्य—द्यूतक्रीड़कस्य संवाहकस्येत्यर्थः, मुष्टिप्रहारेण—

द्यूत। भट्टा! बसंतसेणागेहं पविट्ठे सो। *

माथु। भूदाइं सुवस्लाइं। † (फ)

द्यूत। लाअउलं गदुअ णिवेदेम्ह। ‡

माथु। एस धूत्तो इदो णिक्कमिअ अस्सत्त गमिस्सदि, ता उअरोधेण-ज्जेव्व (ब) गेण्हेम्ह। § [इत्येकान्ते स्थितौ]।

वस। [मदनिकायाः संज्ञां ददाति]। (भ)

मद। कुदो अज्जो? को वा अज्जो? कस्स वा अज्जो? किं वा वित्तिं अज्जो उवजीअदि? कुदो वा भअं? ¶

संवा। सुणादु अज्जआ,—अज्जए! पाड़लिउत्ते मे जम्मभूमी, गहवइदालके हगे संवाहअस्स वित्तिं उवजीआमि। ** (म)

---

* भर्त्तः! वसन्तसेनागृहं प्रविष्टः सः। † भूतानि सुवर्णानि।

‡ राजकुलं गत्वा निवेदयावः।

§ एष धूर्त्त इतो निष्क्रम्य अन्यत्र गमिष्यति, तस्मादुपरोधेनैव गृह्णीवः।

¶ कुत आर्यः? को वा आर्यः? कस्य वा आर्यः? कां वा वृत्तिम् आर्यः उपजीवति? कुतो वा भयम्?

** शृणोतु आर्य्या,—आर्य्ये! पाटलिपुत्रं मे जन्मभूमिः, गृहपतिदारकोऽहं संवाहकस्य वृत्तिम् उपजीवामि।

---

मुख्याधानेन, ममेति शेषः। अत्र एतेन परिसर्पो नाम प्रतिमुखसन्धेरङ्गं प्रदर्शितम्; यथा,—"दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते" इति दर्पणकृल्लक्षणात्।

(फ) भूतानि—अतीतकालिकानीव गतानि, एतस्य, अपरस्य गृहे प्रविष्टत्वात् इदानीं मम सुवर्णप्राप्त्याशा विफलैव इति भावः। केचित्तु,—भूतानि—सञ्जातानि, प्राप्तानीत्यर्थः; वसन्तसेनायाः शरणागतवत्सलत्वात् शरणागतदेयधनं तयैव अवश्यं परिशोध्यमिति भावः, इत्येवं व्याचक्षते।

(ब) उपरोधेन—निरोधेन, बलात् पन्थानमवरुध्य इत्यर्थः।

(भ) वसन्तसेना संज्ञां ददाति—अस्य नामादिकं सर्वं पृच्छ, इति मदनिकां कटाक्षसङ्केतेन ज्ञापयति इत्यर्थः।

(म) पाटलिपुत्रं—"पाट्ना" इति नामधेयं नगरम्। गृहपतिदारकः,—गृहस्थपुत्रः, मन्त्रिपुत्रो वा, ("भवेत् गृहपतिः पुंसि गृहस्थेऽपि च मन्त्रिणि" इति,

वस। सुउमारा क्खु कला शिक्खिदा अज्जेण ! * (य)

संवा। अज्जए ! कलेत्ति शिक्खिदा, आजोविश्रा दाणिं शंवुत्ता। † (र)

चेटी। अदिणिव्विसं अज्जेण पड़िवअणं दिसं, तदो तदो ? ‡ (ल)

संवा। तदो अज्जए ! एशे णिजगेहे आहिंडकाण मुहादो शुणिअ अपुव्वदेशदंशणकुदूहलेण इह आगदे। इह वि मए पविशिअ उज्जइणिं एक्के अज्जे शुश्शूशिदे, जे तालिशे पिअदंशणे, पिअवादो, दइअ ण कित्तेदि, अवकिदं विशुमलेदि. किं बहुणा उत्तेण, दक्खिणदाए पलकेलअं विअ अत्ताणअं अवगच्छदि, (व) शलणागदवच्छले अ। §

---

* सुकुमारा खलु कला शिक्षिता आर्य्येण !!

† आर्य्ये ! कलेति शिक्षिता, आजीविका इदानीं संवृत्ता।

‡ अतिनिर्विसमार्य्येण प्रतिवचनं दत्तं, ततस्ततः ?

§ तत आर्य्ये ! एष निजगृहे आहिण्डकानां मुखात् श्रुत्वा अपूर्वदेशदर्शन-कुतूहलेन इहागतः। इहापि मया प्रविश्य उज्जयिनीम् एक आर्य्यः शुश्रूषितः, यस्तादृशः प्रियदर्शनः, प्रियवादी, दत्त्वा न कीर्त्तयति, अपकृतं विस्मरति, किं बहुनोक्तेन, दक्षिणतया परकीयमिव आत्मानमवगच्छति, शरणागतवत्सलश्च।

"दारको बालकेऽपि स्यात्" इति च मेदिनी ) ग्रामाध्यक्षपुत्रः इति कश्चित्। संवाहकस्य —संवाहयति—गात्रं सम्मर्दयतीति संवाहकः तस्य, गात्रमर्द्दकस्येत्यर्थः। वृत्तिं—जीविकां, शरीरमर्द्दनरूपामित्यर्थः। एतत्कर्मकरणाच्च अस्य संवाहक इति नाम्ना प्रसिद्धिरित्यवगन्तव्यम्।

(य) कला—विद्याविशेषः। अनेन नर्म्माख्यं प्रतिमुखसन्धेरङ्गं प्रदर्शितम्; "परिहासवचो नर्म्म" इति दर्पणवचनात्।

(र) कलेति—विद्याविशेष इति बुद्ध्यात्यर्थः। आजीविका—जीवनोपायः। अनेन मार्गो नाम गर्भाङ्गं प्रकटितम्;—"तत्त्वार्थकथनं मार्गः" इति लक्षणात्।

(ल) अतिनिर्विसं—सातिशयनिर्वेदयुक्तम्, अतिखेदकरमित्यर्थः।

(व) आहिण्डकानाम्—इतस्ततः पर्य्यटनशीलानां परिव्राजकानां, भिक्षुका-

चेटी। को दाणिं अज्जआए मणोरहंतरस्स (श) गुणाइं चोरिअ उज्जइणिं अलंकरेदि? *

वस। साहु हञ्जे! साहु, मए वि एव्वं ज्जेव्व हिअएण मंतिदं। †

चेटी। अज्ज! तदो तदो? ‡

संवा। अज्जए! शे दाणिं अणुक्कोशकिदेहिं पदाणेहिं—"§(ष)

वस। किं उवरदविहवो संवुत्तो? ¶ (स)

संवा। अणाचक्खिदे ज्जेव्व कधं अज्जआए विणादं? **

वस। किं एत्थ जाणीअदि? दुल्लहा गुणा विहवा अ; अपेएसु तडाएसु बहुदरं उदअं भोदि। †† (ह)

* क इदानीम् आर्य्याया: मनोरथान्तरस्य गुणान् चोरयित्वा उज्जयिनीमलङ्करोति?

† साधु, हञ्जे! साधु, मयाऽपि एवमेव हृदयेन मन्त्रितम्। ‡ आर्य्ये! ततस्तत:?

§ आर्य्ये! स इदानीम् अनुक्रोशकृतै: प्रदानै:—" ¶ किम् उपरतविभव: संवृत्त:?

** अनाख्यातमेव कथमार्य्यया विज्ञातम्?

†† किमत्र ज्ञातव्यम्? दुर्लभा गुणा विभवाश्च; अपेयेषु तडागेषु बहुतरमुदकं भवति।

दीनां वेत्यर्थ:। दत्त्वा न कीर्त्तयति—अर्थिभ्य: प्रार्थितादप्यधिकं धनं दत्त्वाऽपि स्वकीयदानशौण्डतां न ख्यापयति। ["दइअं" इत्यत्र "दइअं" इति पाठान्तरे,— "दयितम्" इति संस्कृतम्। तत्र दयितं—प्रियम्, आत्मगौरवरूपमिति भाव:; एतेन चारुदत्तस्य महानुभवत्वं प्रकटितम्; महात्मानो हि अनुष्ठितेऽपि गौरवजनके भूतहितैषिणि कार्य्ये विकत्थनमात्महननतुल्यं मन्यमाना इतरजनवत् न तत् स्वयं प्रकाशयितुमिच्छन्ति] दक्षिणतया—स्वभावसुलभदाक्षिण्येन। परकीयमिव—परप्रयोजनसाधनैकोद्देश्यकमिव इत्यर्थ:। [केचित्तु,—"फलकिलअं" इत्यत्र "फलकिलअं" इति पाठान्तरं परिकल्प्य "दक्खिणदाए" इति च षष्ठ्यन्तं पठित्वा "दक्षिणताया: फलकृते—फलाय इत्यर्थ:, इव आत्मानमवगच्छति, महाशयसामर्थ्यफलीभूतमेवात्मानं सफलं जानातीत्यर्थ:" इति व्याचक्षते]।

(श) मनोरथान्तरस्य—अभिलाषविशेषस्य, अभीष्टचारुदत्तस्येत्यर्थ:।

(ष) अनुक्रोशकृतै:,—अनुक्रोश:,—दया, ("कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि" इत्यमर:) तेन कृतानि तै:, प्रदानै:,—दीनेभ्यो धनवितरणै:।

(स) उपरतविभव:,—नष्टधन:, संवृत्त:,—जात:, स इत्यादि पूर्व्ववाक्येनान्वय:।

(ह) दुर्लभा:,—दुष्प्राप्या:, गुणा:,—दयादाक्षिण्यादय:, विभवा:,—धनादय,

चेटी। अज्ज! किंणामधेओ क्खु सो? *

संवा। अज्जे! के दाणिं तश्श (क) भूदलमिअंकश्श णामं ण जाणादि? शो क्खु शेट्ठिचत्तले पड़िवशदि, शलाहणिज्ज-णामधेए अज्जचालुदत्ते णाम। †

वस। [सहर्षमासनादवतीर्य] अज्जस्स अत्तणकेरकं एदं गेहं। हञ्जे! देहि से आसणं. तालवेंटअं गेण्ह, परिस्समो अज्जस्स (ख) बाधेदि। ‡

चेटी। [तथा करोति]।

संवा। [स्वगतम्] कधं! अज्जचालुदत्तस्स णामक्कीत्तणेण ईदिशे मे आदले!! [प्रकाशम्] शाहु, अज्जचालुदत्ता! शाहु, पुह-वीए तुमं एक्के जीवशि, शेशे उण जणे शशदि। (ग) [इति पादयो-र्निपत्य] भोदु अज्जए! भोदु, आशणे णिशीददु अज्जआ। §

---

* आर्य्ये! किंनामधेयः खलु सः?

† आर्य्ये! क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति? सः खलु श्रेष्ठि-चत्वरे प्रतिवसति, श्लाघनीयनामधेयः आर्य्यचारुदत्तो नाम।

‡ आर्य्यस्य आत्मीयम् एतद्गेहम्। हञ्जे! देहि अस्य आसनं, तालवृन्तकं गृहाण, परिश्रम आर्य्यस्य बाधते।

§ कथम्! आर्य्यचारुदत्तस्य नामसङ्कीर्त्तनेन ईदृशो मे आदरः!! साधु, आर्य्य चारुदत्त! साधु, पृथिव्यां त्वमेको जीवसि, शेषः पुनर्जनः श्वसिति। भवतु आर्य्ये। भवतु, आसने निषीदतु आर्य्या।

---

एकवेति शेषः, गुणवती निर्द्धनत्वं, धनिनश्च निर्गुणत्वमेव लोके प्रायशो दृश्यते इति एकाधारे तदुभयसद्भावस्तु नितान्तं विरल इति आशयः। तड़ागेषु—जलाशयेषु। अत्र पानायोग्यतड़ागे बहुतरजलसत्तारूपाप्रस्तुतात् निर्गुणपुरुषे बहुविभवसत्तारूपः प्रस्तुतः प्रतीयते, इत्यप्रस्तुतप्रशंसाऽलङ्कारः।

(क) "ङसो स्सो वा दीर्घत्वञ्च" इति सूत्रेण ङसस्थाने हकारादेशस्य वैकल्पिकतया पक्षे "तश्श" इति निष्पन्नम्।

(ख) "आर्य्यस्य" इत्यत्र "भजे शम्भोः चरणयोः" इतिवत् कर्म्मणि षष्ठी।

(ग) जीवसि—जीवितकार्य्यं करोषि। श्वसिति—वृथा प्राणितीति भावः।

वस। [ आसने समुपविश्य ] अज्ज ! कुदो सो धणिओ ? * (घ)

संवा। अक्कालधणे क्खु अज्जणे, काह ण होइ चलाचले धणे ?।
जे पूइदुंपि जाणादि, शे पूआविशेशंपि जाणादि †॥१४॥

* आर्य्य ! कुतः स धनिकः ?

† सत्कारधनः खलु सज्जनः, कस्य न भवति चलाचलं धनम् ?।
यः पूजयितुमपि जानाति, स पूजाविशेषमपि जानाति ॥

(घ) स धनिकः,—त्वं यस्य समीपे दशसुवर्णं धारयसि, स तव उत्तमर्णः, कुतः,—कुत्र ? अधुना वर्त्तते इति शेषः।

सर्वथा अपरिचितमात्मानं प्रति वसन्तसेनाकृतसमादरेण विस्मितः संवाहकः, तत्प्रश्नं प्रति मनोयोगमदत्त्वा तत्कृतसमादरस्य कारणं विवृणोति, अक्कालेति।—सत्कारः,—उच्चनीचनिर्विशेषेण लोकानामर्चना एव, धनं—वित्तं, धनवत् स्पृहणीयः यस्य स तादृशः, जन इति शेषः, सज्जनः,—सत्पुरुषः, भवतीति शेषः, न केवलं धनवान् इति भावः।. चलाचलं—सर्वथा चञ्चलं, नश्वरमिति यावत्, धनं, कस्य जनस्य न भवति ? अपि तु सर्वस्यैव भवितुमर्हतीत्यर्थः, अत एव केवलं धनवानेव न सज्जन इति भावः। यः,—यो जनः, पूजयितुमपि—परान् समादर्त्तुमपि, जानाति—अवगच्छति, स जनः, पूजाविशेषं—समादरस्य प्रकारभेदमपि, जानाति, तथा च एषा वसन्तसेना निजस्वाभाविक-सज्जनतयैव सर्वथा अपरिचितं दरिद्रमपि माम् आसनादवतरण-आर्य्यसम्बोधन-आसन-प्रदान-व्यजनकरणादिना सम्मानयति, अत एव अतीवप्रशंसनीयेयमिति भावः। यद्वा,—वसन्तसेनोक्तोत्तरदानार्थमादौ चारुदत्तस्य प्रकृतोपयोगिगुणान् वर्णयति, अक्कालधणे इति।—सज्जनः सत्कारधनः,—सत्काराय— अन्येषां पूजायै, परोपकाराय इत्यर्थः, धनं यस्य सः, भवतीति शेषः, कस्य—जनस्य, धनं—वित्तं, चलाचलं—चञ्चलं, [ चलधातोः "नन्दिग्रहि—" (३।१।३४ पा०) इत्यचि "चरि-चलि-पति—" इति वार्त्तिकात् द्वित्वम्, अभ्यासस्य आगागमश्च ] न भवति ? अपि तु सर्व्वस्यैव इत्यर्थः; अतः चारुदत्तस्य वित्ते सज्जनोपकाराय नष्टेऽपि न शोच्योऽसौ इति भावः। अन्यत् समानम्। [ "जे पूइदुं पि ण जाणादि" इति पाठान्तरं, "यः पूजयितुमपि न जानाति" इति संस्कृतम्। तत पूजाविशेषमपि जानातीति काकुः, अपि तु न

वस। तदो तदो ? *

संवा। तदो तेण अज्जेण ग्रवित्तो पलिचालके किदोम्हि ; चालित्तावशेशे अ तश्शिं जूदोवजीविम्हि शंवुत्ते। तदो भाअ-धेअविशमदाए (ङ) दशशुवसअं जूदे हालिदं। †

माथु। उच्छादिदोम्हि, मुसिदोम्हि। ‡ (च)

संवा। एदे दे शहिअ-जूदिअला मं अणुशंधअंति। शंपदं शुणिअ अज्जआ पमाणं। §

वस। मदणिए! वामपादवविसंठुलदाए पक्खिणो इदो तदो वि आहिंडंति। हञ्जे! ता गच्छ एदाणं सहिअ-जूदि-अराणं. "अअं अज्जो ज्जेव्व पडिवादेदि" त्ति (छ) इमं हत्थाभरणं तुमं देहि। ¶ [इति हस्तात् कटकमाकृष्य चेट्याः प्रयच्छति]।

* ततस्ततः ?

† ततस्तेन आर्य्येण सवृत्तिः परिचारकः कृतोऽस्मि ; चारित्रावशेषे च तस्मिन् द्यूतोपजीव्यस्मि संवृत्तः। ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम्।

‡ उत्सादितोऽस्मि, मुषितोऽस्मि।

§ एतौ तौ सभिक-द्यूतकरौ मामनुसन्धत्तः, साम्प्रतं श्रुत्वा आर्य्या प्रमाणम्।

¶ मदनिके! वासपादप-विसंष्ठुलतया पक्षिण इतस्ततोऽपि आहिण्डन्ते। हञ्जे! तद्गच्छ एतयोः सभिक-द्यूतकरयोः, "अयमार्य्य एव प्रतिपादयति" इति इदं हस्ताभरणं त्वं देहि।

ज्ञानात्येवेत्यर्थः ]। अत्र वसन्तसेना चारुदत्तो वा सज्जनः दीनदयालुतया मम सत्कारं कृतवानिति प्रस्तुते तादृशं सामान्यमभिहितमित्यप्रस्तुतप्रशंसाऽलङ्कारः। वैतालीयच्छन्दसा निबद्धोऽयं श्लोकः॥ १४ ॥

(ङ) सवृत्तिः,—वृत्तिः,—वेतनं, जीविका वा तत्सहितः। चारित्रावशेषे—सच्चरित्रतामात्रशेषे, निर्द्धने इति यावत्। भागधेयविषमतया—भाग्यवैपरीत्येन, दुरदृष्टतयेत्यर्थः।

(च) उत्सादितः,—सर्व्वनाशं गमित इति यावत्। मुषितः,—चौरितः, प्रतारित इत्यर्थः, संवाहकात् प्राप्तव्यधनप्राप्तौ नैराश्यादिति भावः।

(छ) वासपादपे—आवासवृक्षे, विसंष्ठुलतया—अस्थिरत्वेन वस्तुमशक्यतया,

चेटी। [गृहीत्वा] जं अज्जआ आणवेदि। * [इति निष्क्रान्ता]।

माथु। उच्छादिदोम्हि, मुसिदोम्हि। †

चेटी। [प्रविश्य वीक्ष्य च] जधा एदे उड्ढं पेक्खंति, दीहं णीससंति, विसूरअंति अ, अहिलवंति (ज) अ दुआर-णिहिद-लोअणा, तधा तक्केमि, एदे दे सहिअ-जूदिअरा हुवि-स्संति। [उपगम्य] अज्ज! वंदामि। ‡

माथु। सुहं तुए होदु। §

चेटी। अज्ज! कदरो तुम्हाणं सहिओ? ¶

माथु। कस्स तुमं तणुमज्झे! अहरेण रद-दट्ट-दुव्विणीदेण।
जप्पसि मम्मणवअणं, आलोअंती कडक्खेण? **॥ ५॥

* यत् आर्य्या आज्ञापयति। † उत्सादितोऽस्मि, मुषितोऽस्मि।

‡ यथा एतौ ऊर्द्धं प्रेक्षेते, दीर्घं निश्वसितः, खिद्येते च, अभिलपतश्च द्वारनिहित-लोचनौ, तथा तर्कयामि, एतौ तौ सभिक-द्यूतकरौ भविष्यतः। आर्य्य! वन्दे।

§ सुखं तव भवतु। ¶ आर्य्य! कतरो युवयोः सभिकः?

** कस्य त्वं तनुमध्ये! अधरेण रतदष्टदुर्विनीतेन।
जल्पसि मनोहरवचनम्, आलोकयन्ती कटाक्षेण?॥

पश्चात् प्रकटीकृतेन सभिक-माथुरयोः आगतयोरूर्द्धनिरीक्षणेन पक्षिणां भयसञ्चारादिति भावः; यद्वा,—वासपादपस्य—आवासवृक्षस्य, विसंष्ठुलतया—विशृङ्खलतया, अन्यैरधिकृते सति स्वकीयकुलायादिभ्रंशतया इत्यर्थः, तमिस्रादिना अदर्शनं गततया वा, पक्षिणो.पि—तिर्य्यग्योनयोऽपीति भावः, इतस्ततः,—चतुर्दिक्षु, आहिण्डन्ते—विचरन्ति, ("हिडि गतौ" इति धात्वर्थानुसारात्) भ्रमन्तीत्यर्थः, वासपादपान्वेषणार्थमिति भावः; यदा तिर्य्यञ्चः पक्षिणोऽपि स्वाश्रयस्य नाशे अदर्शने वा तदन्वेष्टुं यतन्ते, तदा मानवयोरनयोः स्वजीविका-श्रयीभूतस्य एतस्य नष्टस्य अधमर्णस्य अन्वेषणं युक्तमेव इति भावः। प्रतिपादयति—ददाति इत्यर्थः, ("विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरः)।

(ज) ["विसूरअंति" इति "खिदेर्विसूर" इति सूत्रेण खिदधातोः स्थाने विसूरादेशः]। अभिलपतः,—परस्परमालपतः इत्यर्थः।

नयनरमणीयाकृतिं स्वत एव मधुरमालपन्तीं मदनिकामालोक्य माथुरः सानुराग-

णत्थि मम विहवो, अण्णत्त व्वज। *

चेटी। जइ ईदिसाइं णं मंतेसि, ता ण होसि जूदिअरो। अत्थि कोवि तुम्हाणं धारओ? † (झ)

माथु। अत्थि, दशसुवण्णं धारेदि, किं तस्स? ‡

चेटी। तस्स कारणादो अज्जआ इमं हत्थाभरणं पडिवादेदि. ण हि ण हि, सो ज्जेव्व पडिवादेदि। § (ञ)

* नास्ति मम विभवः, अन्यत्र व्रज।

† यदि ईदृशानि ननु मन्त्रयसि, तदा न भवसि द्यूतकरः। अस्ति कोऽपि युष्माकं धारकः?

‡ अस्ति, दशसुवर्णं धारयति, किं तस्य?

§ तस्य कारणात् आर्या इदं हस्ताभरणं प्रतिपादयति, न हि न हि, स एव प्रतिपादयति।

---

माह, कस्य इति।—अयि तनुमध्ये!—कृशोदरि! रते—सुरते, दष्टः,—खण्डितः, अत एव दुर्विनीतः,—दुर्दर्शनः तेन, अधरेण—निम्नौष्ठेन, उपलक्षिता, कटाक्षेण—वक्रदर्शनेन, आलोकयन्ती—पश्यन्ती सती, मनोहरवचनं—मिष्टवाक्यं, जल्पसि—कथयसि, त्वं—भवती, [ "तुमं" इत्यत्र "तइ" इति पाठो न सम्यक्, "तं चामि" इति सूत्रेण अमि परतो युष्मदः स्थाने तं, चकारात् तुमं च इत्येव विधानात् ] कस्य—जनस्य, प्रिया? इति शेषः। अत्र दोषसम्पर्केण गुणस्यापि दोषायिततया वाङ्निष्पत्ती अधरसम्पर्कावश्यकत्वेन दुर्विनीताधरविशिष्टाया मधुरभाषणं विरुद्धमिति विरोधालङ्कारः। वृत्तमत्र आर्या नाम॥ १५॥

(झ) मन्त्रयसि—कथयसि। द्यूतकरः,—द्यूतक्रीडाकारी, द्यूतकरो हि आत्मनः निर्धनत्वं कदाचिदपि न प्रकाशयति, एवं हि सुखप्राप्तधनत्वेन वेश्यानां नियतलाभकत्वा-दिति भावः। धारकः,—धारी, ऋणी इति यावत्।

(ञ) भूषणदानकाले "इदं संवाहकेनैव दत्तमिति वक्तव्यम्" इति वसन्त-सेनाया आदेशः, भ्रमानुसारेण तदादेशमुल्लङ्घ्य "संवाहकार्थं वसन्तसेनया प्रदत्तम्" इति प्रकाशयन्ती मदनिका पुनर्गोपयति, न हि न हीति। स एव—भवतां धारकः संवाहक एव। प्रतिपादयति—दापयति, मदनिकायाः प्रयोज्यकर्तृत्वविवक्षया तु ददातीत्येवार्थः।

माथु। [सहर्षं गृहीत्वा] अले ! भणेशि तं कुलपुत्तं, भूदो सो तुए गंधु। (ट) आअच्छ, पुणो जूदं रमम्ह। *

[इति निष्क्रान्तौ]।

चेटी। [वसन्तसेनामुपसृत्य] अज्जए! पड़ितुट्ठा गदा सहिअ-जूदिअरा। †

वस। ता गच्छदु अज्ज! बंधुअणं समास्सासिदुं। ‡

संवा। अज्जए! जइ एव्वं, ता इअं कला पलिअणहत्थगदा कलीअदु। § (ठ)

वस। अज्ज! जस्स कालादो इअं कला सिक्खीअदि, सो ज्जेव्व अज्जेण सुस्सूसिदपुरुव्वो (ड) सुस्सूसिदव्वो। ¶

संवा। [स्वगतम्] अज्जआए णिउणं पच्चादिट्ठोम्हि। (ढ)

---

* अरे! भणसि तं कुलपुत्रं, भूतः सः तव गण्डः। आगच्छ, पुनर्द्यूतं रमस्व।

† आर्य्ये! परितुष्टौ गतौ सभिक-द्यूतकरौ।

‡ तद्गच्छतु आर्य्य! बन्धुजनं समाश्वासयितुम्।

§ आर्य्ये! यद्येवं, तदियं कला परिजनहस्तगता क्रियताम्।

¶ आर्य्य! यस्य कारणात् इयं कला शिक्ष्यते, स एव आर्य्येण शुश्रूषितपूर्वः शुश्रूषितव्यः।

---

(ट) कुलपुत्रं—कुलीनं, सत्कुलोत्पन्नमित्यर्थः, (संवाहक-स्तुत्यर्थमिदम्) गण्डः,—पणीकृतनियमः, भूतः,—निष्पन्नः।

(ठ) एवं—मां बन्धुजनं समाश्वासयितुमनुमन्यसे इत्यर्थः। तत्—तदा, इयं कला—अङ्गमर्दनरूपा, परिजनहस्तगता—परिजनस्य—पोष्यजनस्य, भवत्परिचारिकाया इति यावत्, हस्तगता—आयत्तीभूता, शिक्षिता इति यावत्, क्रियताम्—विधीयताम्; त्वया अनुमन्यते चेत्, अहं भवद्गृहे कियत्कालं स्थित्वा भवत्याः सेविकाजनान् एतामङ्ग-मर्द्दनविद्यां शिक्षयित्वा स्वस्थानं गमिष्यामि इति भावः।

(ड) यस्य—चारुदत्तस्य, कारणात्—हेतोः, यं चारुदत्तं सेवितुमित्यर्थः। शुश्रूषित-पूर्वः,—पूर्वं शुश्रूषितः।

(ढ) निपुणं—चातुर्य्येण सहितं यथा तथा, प्रत्यादिष्टः,—निराकृतः।

कधं पच्चुवकलिश्शं ? [ प्रकाशम् ] अज्जए ! अहं एदिणा जूदिअलावमाणेण शक्कशमणके (ण) हुविश्शं। ता शंवाहके जूदिअले शक्कशमणके शंवुत्तेत्ति शुमलिदव्वाइं अज्जआए एदाइं अक्खलाइं । *

वस । अज्ज ! अलं साहसेण । †

संवा । अज्जए ! कले णिच्चए । ‡ [ इति परिक्रम्य ]—

जूदेण तं कदं मे, जं वीहत्थं जणश्श शव्वश्श ।
एण्हिं पाअडशीशे णलिंदमग्गेण विहलिश्शं § ॥ १६ ॥

[ नेपथ्ये कलकलः ] ।

संवा । [ आकर्ण्य ] अले किं खेदं ? [ आकाशे ] किं भणाध ?

---

* आर्य्यया निपुणं प्रत्यादिष्टोऽस्मि । कथं प्रत्युपकरिष्ये ? आर्य्ये ! अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि ; तत् संवाहको द्यूतकरः शाक्यश्रमणकः संवृत्त इति स्मर्त्तव्यानि आर्य्यया एतानि अक्षराणि ।

† आर्य्य ! अलं साहसेन ।

‡ आर्य्ये ! कृतो निश्चयः ।—

§ द्यूतेन तत् कृतं मम यत् विहस्तं जनस्य सर्वस्य ।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥

---

( ण ) शाक्यश्रमणकः,—बौद्धपरिव्राजकः ।

स्वस्य निर्वेदकारणं प्रकटयति, द्यूतेनेति ।—सर्व्वस्य—सकलस्य, जनस्य—लोकस्य, समक्षमिति शेषः, यत् विहस्तं—व्याकुलं, व्याकुलीकरणमित्यर्थः, अवमाननमिति यावत्, ( "विहस्त-व्याकुलौ समौ" इत्यमरः ) तत्—अवमाननम् इत्यर्थः, मम—सम्बन्धे, द्यूतेन—द्यूतक्रीड़या, कृतम्—अनुष्ठितम्, अतः इति अध्याहार्य्यम्, इदानीम्—अधुना, प्रकटशीर्षः,—मुण्डितशिराः सन् इत्यर्थः, बौद्धश्रमणको भूत्वा इति यावत्, नरेन्द्रमार्गेण—राजपथेन, विहरिष्यामि—पर्य्यटिष्यामि । [ अत्र "नरेन्द्रमार्गे न" इति पदच्छेदेन पाठकल्पने परार्द्धस्यायमर्थः,—इदानीं प्रकटशीर्षः,—अनावृतमस्तकः सन्नित्यर्थः, नरेन्द्रमार्गे—राजवर्त्मनि, सर्व्वसमक्षमिति यावत्, न विहरिष्यामि ; द्यूतकरकृतापमानेन ममैतावान् निर्वेदः समजनि, यत् लोकसमक्षं ममेदं दग्धमुखं कथमपि दर्शयितुं नेच्छामीति भावः । आर्य्या वृत्तमवेति बोद्धव्यम् ॥ १६ ॥

श्रये क्खु वश्रंतश्रेणाए खुंटमोड़के णाम दुट्ठहत्थी बिहलेदि त्ति ? श्रहो ! श्रज्जश्राए गंधगश्रं (त) पेक्खिश्रं गदुश्र। श्रहवा किं मम एदिणा ? जधा-ववशिदं श्रणुचिट्ठिश्शं। *

[ इति निष्क्रान्तः ]।

[ ततः प्रविशति अपटीक्षेपेण प्रहृष्टो विकटोज्ज्वलवेशः कर्णपूरकः ]।

कर्ण। कहिं कहिं श्रज्जश्रा ? †

चेटी। दुम्मणुस्स ! किं ते उब्बेश्र-कारणं ? जं श्रग्गदो वट्टिदं श्रज्जश्रां न पेक्खसि ? ‡

कर्ण। [ दृष्ट्वा ] श्रज्जए ! वंदामि। §

वस। कस्सऊरश्र ! परितुट्ठमुहो लक्खोश्रसि, ता किं स्देदं ? ¶

कर्ण। [ सविस्मयम् ] श्रज्जए ! वंचिदासि, जाए श्रज्ज कस्सऊरश्रस्स परक्कमो ण दिट्ठो। **

वस। कस्सऊरश्र ! किं ? किं ? ††

कर्ण। सुणादु श्रज्जश्रा, जो सो श्रज्जश्राए खुंटमोड़श्रो णाम दुट्ठहत्थी, सो आलाणत्थंभं भंजिश्र, महामत्तं वावा-

* श्ररे ! किं न्विदम् ? किं भणत ? एष खलु वसन्तसेनायाः खुण्टमोड़को नाम दुष्टहस्ती विहरतीति ? अहो ! आर्य्यायाः गन्धगजं प्रेक्षिष्ये गत्वा। अथवा किं मम एतेन ? यथाव्यवसितम् अनुष्ठास्यामि।

† कुत्र कुत्र आर्य्या ?

‡ दुर्मनुष्य ! किं ते उद्वेगकारणम् ? यत् अग्रतोऽवस्थिताम् आर्य्यां न प्रेक्षसे ?

§ आर्य्ये ! वन्दे।

¶ कर्णपूरक ! परितुष्टमुखो लक्ष्यसे, तत् किं न्विदम् ?

** आर्य्ये ! वञ्चितासि, यया अद्य कर्णपूरकस्य पराक्रमो न दृष्टः।

†† कर्णपूरक ! किम् ? किम् ?

‡‡ शृणोतु आर्य्या, यः सः आर्य्यायाः खुण्टमोड़को नाम दुष्टहस्ती, सः

(त) खुण्टमोड़कः,—तन्नामा इत्यर्थः, स्तम्भभञ्जक इत्यर्थो वा। गन्धगजं-गन्धप्रधानो गजः गन्धगजस्तं, मत्तहस्तिनमित्यर्थः।

दिश, म ॱतं संक्खोहं करंतो राअमग्गं ओदिण्णो। तदो एत्थं-तरे उग्घुट्टं (थ) जणेण ; *†—

अवणेध वालअजणं, तुरिदं आरुहध वुक्खपासादं ।

किं ण हु पेक्खध पुरदो दुट्ठो हत्थी इदो एदि ? * ॥१७॥

अवि अ,—

विचलइ णेउरजुअलं, छिज्जंति अ मेहला मणिखइआ ।

वलआ अ सुंदरदरा, रअणंकुरजालपडिवद्धा † ॥ १८ ॥

आलानस्तम्भं भङ्क्त्वा, महामात्रं व्यापाद्य, महान्तं सङ्क्षोभं कुर्वन् राजमार्गमवतीर्णः। ततः अत्रान्तरे उद्घुष्टं जनेन,—

* अपनयत बालकजनं, त्वरितमारोहत वृक्षप्रासादम् ।
किं न खलु प्रेक्षध्वं पुरतो दुष्टो हस्ती इत एति ? ॥

† अपि च,—
विचलति नूपुरयुगलं, छिद्यन्ते च मेखला मणिखचिताः ।
वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥

(थ) आलानस्तम्भ—गजानां बन्धनार्थं स्तम्भविशेषम्, ("आलानं बन्धस्तम्भे" इत्यमरः)। महामात्रं—हस्तिपकाधिपं ("महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे" इति मेदिनी) उद्घुष्टम्—उच्चैः कथितम् ।

जनेनोद्घुष्टमित्युक्तं, तत् किमुद्घुष्टमित्याह, अवणेधेति ।—बालकजनं—शिशुजनम्, अपनयत—अपसारयत, राजमार्गादिति शेषः, त्वरितं—शीघ्रं, वृक्षप्रासादं—वृक्षाग्रं, अट्टालोपरिभागञ्च ; [ वृक्षस्य प्रासादस्य इति "जातिरप्राणिनाम्" (२।४।६ पा०) अप्राणिजातिवाचकत्वात् समाहारत्वेनैकवचनम् ; "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति मनुवचनेन वृक्षाणां प्राणित्वेऽपि प्राणिशब्दस्य बहिःसंज्ञिष्वेव व्यवहारात् अत्राप्राणित्वमेव वृक्षपदस्य इति सिद्धं समाहारत्वादेकवचनम् ; यद्वा,—वृक्षेण सहितः प्रासादः इति समासः ] यद्वा,—प्रासादपदेन सादृश्यमूलकलक्षणया अग्रभागो लक्ष्यते, तेन वृक्षाग्रभागमित्यर्थः, आरोहत—उत्तिष्ठत, कुत एवमित्याह, किमिति ।—दुष्टः,—मदमत्तः, हस्ती—करी, इतः,—अस्यां दिशि, एति—आगच्छति, इति पुरतः,—अग्रतः, किं न खलु प्रेक्षध्वम् ?—पश्यत ? अचिरमेवं न करिष्यथ चेत् तर्हि अयं गजः महदनिष्टं साधयिष्यतीति भावः । आर्य्या वृत्तमिदम् ॥ १७ ॥

विचलइ इति ।—नूपुरयुगलं—पादकटकयुग्मं, विचलति—झन्झनायते, हस्ति-

तदो तेण दुट्टहत्थिणा कलचलणरदणेहिं फुल्लणलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण समासादिदो परिव्वाजओ, तं च परिब्भट्टदंडकुंडिआभाअणं सीअरेहिं (ट) सिंचिअ, दंतंतरे क्खित्तं पेक्खिअ पुणोवि उग्घुट्टं जणेण,—हा! परिव्वाजओ वावादीअदि त्ति। *

वस। [ससम्भ्रमम्] अहो पमादो! अहो पमादो! †

कर्ण। अलं संभमेण, सुणादु दाव अज्जआ। तदो विच्छिखदिसंठुलसिंखलाकलावअं दंतंतरपरिग्गहिदं परिव्वाजअं उव्वहंतं तं पेक्खिअ, कण्णऊरएण मए, ण हि ण हि, अज्जआए अण्णपिंडोवपुट्टेण दासेण—वामचलणेण जुदखेलअं

* ततस्तेन दुष्टहस्तिना करचरणरदनैः फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन समासादितः परिव्राजकः, तच्च परिभ्रष्टदण्डकुण्डिकाभाजनं शीकरैः सिक्त्वा, दन्तान्तरे क्षिप्तं प्रेक्ष्य पुनरप्युद्घुष्टं जनेन,—हा! परिव्राजको व्यापाद्यत इति।

† अहो प्रमादः! अहो प्रमादः!।

‡ अलं सम्भ्रमेण, शृणोतु तावदार्या। ततो विच्छिन्न-विसंष्ठुलशृङ्खलाकलापकं दन्तान्तरपरिगृहीतं परिव्राजकम् उद्वहन्तं तं प्रेक्ष्य, कर्णपूरकेण मया, न हि न हि

भयात् पलायमानानां रथ्यासञ्चारिणीनां नारीणामिति शेषः; मणिखचिताः,—रत्ननिबद्धाः, मेखलाः,—रसनाश्च, छिद्यन्ते—छिन्नानि भवन्ति, रत्नाङ्कुरजालप्रतिबद्धाः,—क्षुद्रमणिसमूहविभूषिता इत्यर्थः, सुन्दरतराः,—अतिरमणीयाः, वलयाः,—कराभरणविशेषाश्च, छिद्यन्ते—भज्यन्तीत्यर्थः; यद्वा,—मत्ततावशात् द्रुततरं गमनशीलस्य हस्तिनो वर्णनमिदम्। तत्रापि धनिगृहे करिणामपि तादृगलङ्कारादिधारणप्रसिद्धेरुक्तरूप एव अर्थो बोध्यः। अत्रापि आर्या वृत्तम्। परमत्र प्रथमार्द्धगतोपान्त्यवर्णस्य इकारस्य छन्दोऽनुरोधात् दीर्घत्वं दीर्घान्तमणीशब्देन वा समाधानं बोद्धव्यम्॥ १८॥

(ट) परिव्राजकः,—बौद्धश्रमणकवेशी पर्य्यटकः, संवाहक इत्याशयः; परिभ्रष्टदण्डकुण्डिकाभाजनः—भ्रंदन हस्तात् प्रच्युतदण्डकमण्डलुं, ("कुण्डी कमण्डलौ कुण्डः" इति हेमचन्द्रः)। शीकरैः,—हस्तिकरनिक्षिप्तजलकणैः।

उग्घुसिअ उग्घुसिअ. तुरिदं आवणादो लोहदंडं गेण्हिअ आआरिदो (ध) सो दुट्ठहत्थी। ःऽ

वस। तदो तदो ? *

कर्ण।-

आहणिऊण सरोसं तं हत्थिं विंझसेलसिहराभं।

मोआविओ मए सो दंतंतरसंठिओ परिव्वाजओ † ॥ १८ ॥

आर्य्याया अन्नपिण्डोपपुष्टेन दासेन—वामचलनेन द्यूतखेलकम् उद्घुष्य उद्घुष्य, त्वरित-मापणात् लोहदण्डं गृहीत्वा आकारितः स दुष्टहस्ती।

* ततस्ततः ?

† आहत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम्।

मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः॥

(ध) तत इति।—विच्छिन्ना—विशेषेण छिन्ना, अत एव विसंष्ठुला—इतस्ततः स्खलिता, शृङ्खला एव कलापकः,—भूषणं यस्य तादृशं, [“कलापी भूषणे बर्हे” इत्यमरः। ततः स्वार्थे कः]। न हीति।—अत कर्णपूरकेण मया इति स्वनाम्नः स्वयं निर्देशेन गर्वं प्रकटय्य स्वामिन्याः पुरः विनयप्रकटनार्थमेव “न हि न हि” इत्युक्तम्। अन्नपिण्डोपपुष्टेन—अन्नराशिपालितेन, वामचलनेन—वक्रगत्या, [“वामचलणेण” इत्यस्य “वामचरणेन” इति संस्कृतं केचित् पठन्ति] द्यूतखेलकं—संवाहकम्। उद्घुष्य उद्घुष्य—असकृत् द्यूतखेलकोऽयं संवाहकः परिव्राजकोऽभूत्, सोऽयमिदानीं मत्तगजेन व्यापाद्यते इति कथयित्वा इत्यर्थः, [केषाञ्चिन्मते “उग्घुसिअ उग्घुसिअ” इति प्राकृतस्य “उद्धृत्य उद्धृत्य” इति संस्कृतम्] आपणात्—क्रयविक्रयस्थानात्। आकारितः,—स्पर्द्धया आहूतः, (“हूतिराकारणाऽऽह्वानम्” इत्यमरः)।

आहणिऊण इति।—मया—कर्णपूरकेण, विन्ध्यशैलशिखराभं—विन्ध्याचल-शृङ्गतुल्यम्, [एतेन अत्युच्चता सूच्यते] तं—पूर्वोक्तं मदमत्तं, हस्तिनं—करिणं, सरोषं—सक्रोधं यथा तथा, आहत्य—प्रहृत्य, दन्तान्तरसंस्थितः,—दशनद्वयमध्यवर्त्ती, सः,—श्रमणकवेशी, परिव्राजकः,—पर्य्यटकः, संवाहकः इत्याशयः, मोचितः,—मुक्तिं प्रापितः, [“यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्” इत्यादिवचनेन “परिव्वाजओ” इत्यत्र तीव्रप्रयत्नोच्चारणात् “व्वाजओ” शब्दे परेऽपि परिरिकारस्य ह्रस्वत्वं बोध्यम्]। आर्य्यावृत्तान्तर्गतं गीतिवृत्तमिदम्;—“आर्य्या-प्रथमार्द्धसमं यस्याः परार्द्धमीरितं गीतिः” इति लक्षणात्॥ १८॥

वस। सुट्ठु दे किदं, तदो तदो ? *

कर्ण। तदो अज्जए! साहु रे कस्सऊरअ! साहु त्ति, एत्तिअमेत्तं भणंतो, विसमभरक्कंता विअ णावा, एक्कदो पल्हत्था सअला उज्जइणी आसि। तदो अज्जए! एक्केण सुण्णाइं आहरणट्ठाणाइं परामसिअ उड्ढं पेक्खिअ दीहं णीससिअ (न) अअं पावारओ मम उवरि क्खित्तो। †

वस। कस्सऊरअ! जाणीहि दाव किं एसो जादीकुसुमवासिदो पावारओ ण वेत्ति ? ‡

कर्ण। अज्जए! मदगंधेण सुट्ठु तं गंधं ण जाणामि। §

वस। णामं पि दाव पेक्ख। ¶

कर्ण। इमं णामं अज्जआ ज्जेव्व वाएदु। ** [इति प्रावारकमुपनयति]।

वस। अज्जचारुदत्तस्स। †† [इति वाचयित्वा सस्पृहं गृहीत्वा प्रावृणोति]। (प)

* सुष्ठु त्वया कृतं, ततस्ततः ?

† तत आर्य्ये! साधु रे कर्णपूरक! साधु, इत्येतावन्मात्रं भणन्ती विषमभराक्रान्ता इव नौः एकतः पर्य्यस्ता सकला उज्जयिनी आसीत्। तत आर्य्ये! एकेन शून्यानि आभरणस्थानानि परामृश्य ऊर्द्धं प्रेक्ष्य दीर्घं निश्वस्य अयं प्रावारको ममोपरि क्षिप्तः।

‡ कर्णपूरक! जानीहि तावत् किम् एष जातीकुसुमवासितः प्रावारको न वा ? इति।

§ आर्य्ये! मदगन्धेन सुष्ठु तं गन्धं न जानामि। ¶ नामापि तावत् प्रेक्षस्व।

** इदं नाम आर्य्या एव वाचयतु। †† आर्य्य-चारुदत्तस्य।

(न) एकेन—केनचित्, चारुदत्तेनेति भावः, ऊर्द्धं प्रेक्ष्य दीर्घं निश्वस्य च, दारिद्र्येण अनुरूपपारितोषिकदाने अक्षमत्वादिति भावः।

(प) "दत्तं किमपि कान्तेन धृत्वाऽङ्के मुहुरीक्षते" इत्यादिवचनात् अत्र कान्तवस्त्रग्रहणम् अनुरक्ताया अनुरागप्रकटनार्थम्।

चेटी। कस्णऊरअ! सोहइ अज्जआए पावारओ। *

कर्ण। आं. सोहइ अज्जआए पावारओ !! †

वस। कस्णऊरअ! इदं दे पारितोसिअं। ‡ [इति आभरणं प्रयच्छति]। (फ)

कर्ण। [शिरसा गृहीत्वा प्रणम्य च]। संपदं सुट्ठु सोहइ अज्जआए पावारओ। § (ब)

वस। कस्णऊरअ! एदाए वेलाए कहिं अज्जचारुदत्तो ? ¶

कर्ण। एदेण ज्जेव्व मग्गेण पवुत्तो (भ) गंतुं गेहं। **

वस। हञ्जे! उवरिदणं अलिंदअं (म) आरुहिअ अज्जचारुदत्तं पेक्खेम्ह। ††

[इति निष्क्रान्ताः सर्वे]।

इति मृच्छकटिके द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः।

* कर्णपूरक! शोभते आर्य्यायाः प्रावारकः।

† आं, शोभते आर्य्यायाः प्रावारकः !!

‡ कर्णपूरक! इदं ते पारितोषिकम्।

§ साम्प्रतं सुष्ठु शोभते आर्य्यायाः प्रावारकः।

¶ कर्णपूरक! एतस्यां वेलायां कुत्र आर्य्यचारुदत्तः?

** एतेनैव मार्गेण प्रवृत्तो गन्तुं गेहम्।

†† हञ्जे! उपरितनम् अलिन्दकमारुह्य आर्य्यचारुदत्तं प्रेक्षामहे।

(फ) अत्र सङ्ग्रहो नाम गर्भाङ्गं प्रदर्शितम्; तल्लक्षणं यथा,—"सङ्ग्रहः पुनः। सामदानार्थसम्पन्नः—" इति।

(ब) अत्र पुष्पं नाम प्रतिमुखसन्ध्यङ्गं प्रदर्शितम्;—"पुष्पं विशेषवचनं मतम्" इति लक्षणात्।

(भ) प्रवृत्तः,—आरब्धवान् [अकर्म्मकत्वात् कर्त्तरि आरम्भे च निष्ठा]।

(म) हञ्जे—चेटीसम्बोधनार्थमव्ययम्; ("हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः)। अलिन्दकम्—"आलिसा" इति "वारान्दा" इति वा ख्यातं स्थानम्। ["प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके" इत्यमरोक्तः। अलिन्दशब्दो यद्यपि

बहिर्द्वारपार्श्वस्थं प्रकोष्ठं बोधयति, तथाऽपि तथाविधार्थकस्यालिन्दस्य आरोहणानर्हत्वात्, उपरितन इति विशेषणसामर्थ्याच्च उपरिगृहद्वारसम्मुखस्थितस्थानविशेषः "आलिशा, बारान्दा" वा इत्यर्थः सङ्गतः ]। "स्थिता दृष्टिपथे भवत् प्रियं पश्यति दूरतः" इति अनुरक्तानायिकालक्षणमत्र समर्थितम् ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां

पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां

प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां

द्वितीयोऽङ्कः ॥ २ ॥



# तृतीयोऽङ्कः ।

[ ततः प्रविशति चेटः ] ।

चेटः ।—

सुजणे क्खु भिच्चाणुकंपके शामिए णिद्धणके वि शोहदे ।
पिशुणे उण दव्वगव्विदे दुक्करे क्खु पलिणामदालुणे * ॥ १ ॥

सुजनः खलु भृत्यानुकम्पकः स्वामी निर्द्धनकोऽपि शोभते ।
पिशुनः पुनर्द्रव्यगर्व्वितो दुष्करः खलु परिणामदारुणः ॥

स्वामिसद्व्यवहारपरितुष्टश्चेटः अधनस्यापि तस्य गुणमनुकीर्त्तयन्नाह, सुजणे इति ।—यः स्वामी—प्रभुः, सुजनः,—सन्मनुष्यः, तथा भृत्यानुकम्पकः,—स्वनियोगाक्षमेष्वपि भृत्येषु दयावान्, सः यदि निर्द्धनकः,—दरिद्रः, भवेत्, तदाऽपि, खलु—निश्चितं, शोभते—राजते, भृत्यानामिति शेषः । पुनः,—किन्तु, द्रव्यगर्व्वितः,—धनगर्व्वितः, पिशुनः,—खलः, दुर्जन इत्यर्थः, ("पिशुनौ खलसूचकौ" इत्यमरः) खलु—यतः, परिणामदारुणः,—परिणामे—यत्नतः सेवनेऽपि शेषे, दारुणः,—भयङ्करः, अतः दुष्करः,—दुःसाध्यः, दुःसेव्य इत्यर्थः । अत्रापरार्द्धे चेटेन शकारं प्रति कटाक्षः कृत इति ध्येयम् । ["भृत्यानुकम्पकः" इत्यत्र "कुभृत्यपालकः" इति पाठान्तरे,—कुभृत्यानाम्—अधमभृत्यानामपि, पालकः इत्यर्थः ] ; मादृशेष्वपि भृत्येष्वनुकम्पावान् मत्प्रभुरार्य्यचारुदत्तो निर्द्धनोऽपि सुजन एव इति भावः । ["शामिए" इत्यत्र "शमिए" इति पाठो युज्यते वैतालीयवृत्तानुरोधात् ; तल्लक्षणं यथा,—"षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते र-लौ गुरुः ॥" इति लक्षणात् । अत्र मत्प्रभुः भृत्यानुकम्पकः आर्य्यचारुदत्तः निर्द्धनोऽपि शोभते इति विशेषे प्रस्तुते तादृशसामान्यमप्रस्तुतमभिहितमित्यप्रस्तुतप्रशंसाऽलङ्कारः । अयमेव श्लोकः पुस्तकान्तरे रूपान्तरेण दृश्यते, यथा,—"शुअणे हु कुभिच्चपालए धणहीणे अपहू वि शोहदि । पिशुणे उण दव्वगव्विदे ण अ लच्छीविहवाअलंबिते ॥" "सुजनः खलु कुभृत्यपालकः धनहीनोऽप्रभुरपि शोभते । पिशुनः पुनर्द्रव्यगर्व्वितो न च लक्ष्मीविभवावलम्बितः ॥" इति संस्कृतम् ] ॥ १ ॥

अवि अ,—शस्सलम्पड-बलद्दे ण सक्कि वालिदुं
अस्स-कलत्त-पसत्ते ण सक्कि वालिदुं ।
जूद-पसत्त-मणुस्से ण सक्कि वालिदुं
जे वि सहाविअदोसे ण सक्कि वालिदुं * ॥ २ ॥

का वि वेला अज्जचारुदत्तस्स गंधव्वं सुणिदुं गदस्स, अदिक्कमदि अद्धलअणी, अज्जवि ण आअच्छदि। ता जाव बाहिल-दुआल-सालाए गदुअ सुविस्सं। † (क) इति तथा करोति ]

---

* अपि च,—शस्य-लम्पट-बलीवर्द्दो न शक्यो वारयितुम्
अन्य-कलत्रप्रसक्तो न शक्यो वारयितुम् ।
द्यूतप्रसक्तो मनुष्यो न शक्यो वारयितुं
योऽपि स्वाभाविकदोषो न शक्यो वारयितुम् ॥

‡ काऽपि वेला आर्य्य-चारुदत्तस्य गान्धर्व्वं श्रोतुं गतस्य, अतिक्रामति अर्द्धरजनी, अद्यापि नागच्छति । तत् यावत् वहिर्द्वारशालायां गत्वा स्वप्स्यामि ।

ईदृग्दुरवस्थस्यापि चारुदत्तस्य कलाऽनुशीलनदानशौण्डादावत्यासक्तिर्दोषावहेत्याह, शस्सेति ।—शस्यलम्पटः,—शस्यभोजनलोलुपः, [ लम्पटशब्दस्य परस्त्रीलोलुपार्थशक्तत्वेपि अत्र सामान्यतः लोलुपमात्रार्थो लक्षणया बोध्यः ] बलीवर्द्दः,—अनड्वानित्यर्थः, अन्य-कलत्रप्रसक्तः,—परस्त्रीलम्पटः, [ "अस्सपसत्तकलत्ते" इति पाठान्तरे "अन्यप्रसक्त-कलत्रम्" इति संस्कृतम् । तत्र शक्किशब्दस्य क्लीवलिङ्गत्वं, तथा परपुरुषासक्तरमणी-त्यर्थश्च बोध्यः ] तथा द्यूतप्रसक्तः,—द्यूतक्रीडोन्मत्तः, मनुष्यः,—जनः, एते यथा वारयितुं —तेभ्यो दोषेभ्यः प्रत्यावर्त्तयितुमित्यर्थः, न शक्याः, तथा योऽपि स्वाभाविकः,—प्रकृति-सिद्धः, दोषः,—दूषणं, [ दातृत्वादेर्गुणस्यापि "सर्व्वमत्यन्तगर्हितम्" इति न्यायबलाद्दोषत्वं बोध्यम् ] सोऽपि वारयितुं न शक्यः । अत्र स्वाभाविकः,—स्वभावसिद्धः, दोषो यस्य स तथाभूतो जनः, वारयितुं न शक्यः इति कथनेन दारिद्र्यात् ईदृश्यां शोचनीयदशायां दातृत्वादिकं दोषः, तच्च मे प्रभुर्न त्यजति इति चात्र व्यज्यते । इह शस्यलम्पटबलो-वर्द्दादिर्वारणाशक्यत्वदृष्टान्तेन स्वाभाविकदोषस्य वारणाशक्यत्वरूपादप्रस्तुतात् सामान्यात् चारुदत्तस्यातिरिक्तदातृत्वादिरूपस्वाभाविकदोषः वारणाशक्यः इति प्रस्तुतः विशेषः प्रतीयते, इत्यप्रस्तुतप्रशंसादृष्टान्तयोः संसृष्टिः ॥ २ ॥

(क) काऽपि—निर्द्देष्टुमशक्या, अधिकेत्यर्थः, वेला—समयः, अतीता इति

[ ततः प्रविशति चारुदत्तो विदूषकश्च ]।

चारु। अहो! अहो!! साधु रेभिलेन गीतम्। वीणा हि नाम असमुद्रोत्थितं रत्नम्। (ख) कुतः.—

उत्कण्ठितस्य हृदयानुगुणा वयस्या,
सङ्केतके चिरयति प्रवरा विनोदः।
संस्थापना प्रियतमा विरहातुराणां,
रक्तस्य रागपरिवृद्धिकरः प्रमोदः॥ ३॥

शेषः, गान्धर्वं—गन्धर्व्वदेवताकं, गीतादिकमित्यर्थः। किमधिकेन, अर्द्धरजनी—अर्द्धपरिमिता रात्रिः। अतिक्रामति,—अतिगच्छति। स्वप्स्यामि—शयिष्ये इत्यर्थः।

(ख) असमुद्रोत्थितं—सागरादनुत्पन्नम्। अत्र निरपह्नवे विषये वीणायां रत्नत्वस्य तादात्म्येनारोपात् रूपकमलङ्कारः; तत्र असमुद्रोत्थितमिति विशेषणेन अधिकवैशिष्ट्यमारोहतीति अधिकारूढवैशिष्ट्यरूपमिति ध्येयम्।

अगणितगुणवत्तया कथितं वीणाया रत्नत्वमेव समर्थयमान आह, उत्कण्ठितस्येति।—उत्कण्ठा—प्रबलविरहवेदना,—"रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इत्युक्तलक्षणेति यावत्, सञ्जाता अस्य, [ तारकादित्वात् इतच् ] तथाभूतस्य उत्कण्ठितस्य—प्राप्तप्रबलविरहवेदनस्य जनस्य, हृदयानुगुणा—मनःसान्त्वनकरी, वयस्या—सखीस्वरूपा, ("आलिः सखी वयस्या च" इत्यमरः); सङ्केतयति यः स सङ्केतकः, तस्मिन् सङ्केतके—कृतसङ्केते, निर्जने विहारार्थं दत्तेङ्गिते इति यावत्, प्रणयिनि जने इति शेषः, चिरयति—विलम्बमाने सति, प्रवरः,—महान्, विनोदः,—चित्तभ्रान्तिप्रशमनोपायः, (एतदुपलक्षणं, नायिकायामपि कृतसङ्केतायां विलम्बमानायां नायकस्यापि इयमेव वीणा विनोदनोपाय इति बोध्यम्) विरहातुराणां—प्रियविच्छेदव्याकुलानां जनानां, प्रियतमा—मनोऽनुकूला, संस्थापना—सान्त्वनोपायः, यद्वा,—"प्रियतमाविरहातुराणाम्" इति एकपदं, प्रियावियोगार्त्तानामित्यर्थः, संस्थापना—स्थैर्य्यविधायिनीत्यर्थः; विरहिणो हि आलेख्यदर्शन-वीणावादनादिभिः चित्तं विनोदयन्तीति प्रसिद्धिः, तथा च,—"सादृश्यप्रतिकृतिदर्शनैः प्रियायाः" इत्यादि "उत्सङ्गे वा मलिनवसने सौम्य! निक्षिप्य वीणाम्" इत्यादि च; तथा रक्तस्य—अनुरागिणः, प्रियतमाऽऽसक्तस्येत्यर्थः, रागवृद्धिकरः,—अनुरागवर्द्धनः, प्रमोदः,—उत्सवः, आनन्ददायिनीत्यर्थः; सर्व्वत्र वीणेति योज्यम्। अत्र निरपह्नुतविषये एकस्यामेव वीणाया

विदू। भोः! एहि, गेहं गच्छेम्ह। *

चारु। अहो! सुष्ठु भावरेभिलेन (ग) गीतम्।

विदू। मम दाव दुवेहिं ज्जेव्व हस्सं जाअदि, इत्थिआए सक्कदं पठंतीए, मणुस्सेण अ काअलीं गाअंतेण। इत्थिआ दाव सक्कदं पठंती, दिण्णणवणस्सा विअ गिट्टी अहिअं सुसुआअदि, मणुस्सोवि काअलीं गाअंतो, सुक्खसुमणोदामवेट्टिदो (घ) बुड्ढपुरोहिदो विअ मंतं जवंतो दिढं मे ण रोअदि। †

* भोः! एहि, गृहं गच्छावः।

† मम तावत् द्वाभ्यामेव हास्यं जायते, स्त्रिया संस्कृतं पठन्त्या, मनुष्येण च काकलीं गायता। स्त्री तावत् संस्कृतं पठन्ती दत्तनवनास्या इव गृष्टिः अधिकं सुसूयते, मनुष्योऽपि काकलीं गायन् शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन् दृढं मे न रोचते।

वयस्यादीनामनेकेषाम् उपमानानामभेदेनारोपात् मालारूपं निरङ्गं रूपकमलङ्कारः। न च एकस्या एव वीणाया वयस्यादिरूपेण अनेकधा उल्लेखात् विषयभेदभिन्नोऽयमुल्लेख एवास्तु इति वाच्यम्; तत्र "प्रिय इति गोपवधूभिः" इत्यादौ एकस्मिन्नेव भगवति आरोप्याणां प्रियत्वादीनां वास्तवतया उल्लेखालङ्कारसङ्गतिः, इह तु वीणायामारोपितानां वयस्यादीनामवास्तवत्वात् नोल्लेखप्रसक्तिः, अपि तु मालारूपरूपकस्यैव उल्लेखरूपकयोः आरोप्यमाणवस्तुवास्तवत्वावास्तवत्वभेदभिन्नत्वस्यैव आलङ्कारिकसम्मतत्वादिति सुधिया स्वधिया विचार्य्यम्। अत्र वसन्ततिलकं वृत्तम्,— "ज्ञेयं वसन्ततिलकं त-भ-जा ज-गौ गः" इति लक्षणात्॥ ३॥

(ग) भावरेभिलेन—भावः,—विद्वान्, सङ्गीतविद्याविशारद इत्यर्थः, स चासौ रेभिलश्चेति भावरेभिलः तेन, ("भावो विद्वान्" इत्यमरः) भाव! इति विदूषकस्य आमन्त्रणपदमिति केचित्।

(घ) काकलीम्—अस्फुटमधुरध्वनिं, ("काकली तु कले सूक्ष्मे ध्वनौ" इत्यमरः)। दत्ता—अर्पिता, नवा—प्रत्यग्रा, नास्या—नस इयं नास्या, नासिकारज्जुरित्यर्थः, यस्याः तादृशी, गृष्टिः,—सकृत्प्रसूता गौः, "गृष्टिरेकप्रसूता गौः" इत्यमरः) सुसूयते—सू-सू-शब्दं करोति, शुष्काणां—मधु-गन्ध-कान्तिहीनानामित्यर्थः, सुमनसां—पुष्पाणां, दाम्ना—स्रजा, वेष्टितः,—भूषितः। (एतेन जपस्य दीर्घकालव्यापिता उक्ता)।

चारु। वयस्य! सुष्ठु खलु अद्य गीतं भावरेभिलेन। न च भवान् परितुष्टः?—

रक्तञ्च नाम मधुरञ्च समं स्फुटञ्च
भावान्वितञ्च ललितञ्च मनोहरञ्च।
किंवा प्रशस्तवचनैर्बहुभिर्मदुक्तैः
अन्तर्हिता यदि भवेत् वनितेति मन्ये॥ ४॥

अपि च,—

तं तस्य स्वरसङ्क्रमं मृदुगिरः श्लिष्टञ्च तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।

---

मधुरगीतमाधुरीविमोहितश्चारुदत्तः तत्र स्वीयमभिमतमभिव्यनक्ति, रक्तमिति। —नाम—सम्भावनायां, रक्तं—रागवर्द्धनं, तत्तद्रागसमन्वितमिति वार्थः, मधुरं—मनोरमं, माधुर्य्यगुणभूयिष्ठमित्यर्थः, समं—पौर्व्वापर्य्यवैपरीत्यरहितं, स्फुटं—सुव्यक्तं, भावान्वितं—सदभिप्रायं, रत्यादिभावविशिष्टं वा, ललितं—सुन्दरं, ("ललितं त्रिषु सुन्दरम्" इत्यमरः) लालित्याख्यगुणसमन्वितमिति यावत्, तथा मनोहरं—मनोरमञ्च, [सर्वेषामेव विशेषणानां प्राधान्यद्योतनार्थं सर्वेषामेवान्ते चकारः प्रयुक्तः] गीतमिति गद्यस्थपदं सर्व्वत्र योज्यम्; मदुक्तैः,—मया कथितैः, बहुभिः,—अनेकैः, प्रशस्तवचनैः,—"रक्तञ्च नाम मधुरञ्च" इत्यादिप्रशंसावादैः, किं वा?—न किमपि प्रयोजनमित्यर्थः; वनिता—रमणी, यदि—सम्भावनायाम्, अन्तर्हिता—रेभिलवेशेनाच्छन्ना, भवेत् इति मन्ये—सम्भावयामीत्यर्थः। व्यक्तिविशेषणत्वेन अन्तर्हितेति क्लीवम्; रेभिलव्यक्तिर्यदि अन्तर्हिता—प्रच्छन्ना, भवेत्—प्रच्छन्ना सती यदि गायेदिति यावत्, तदा वनितेति मन्ये—योषिदेव गायति इति सम्भावयामि इति वा अन्वयः। सङ्गीतस्य रक्तत्वादिगुणवत्त्वेन काचित् योषा एव प्रच्छन्ना सती गायति, न पुमान् इत्यहं तर्कयामीत्यर्थः। अत्र प्रकृते रेभिले वनितासदृशसुकण्ठत्वादिगुणवत्त्वात् वनितात्वसम्भावनात् उत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ ४॥

सङ्गीतहृतमानसः गायकगुणमनुकीर्त्तयन्नपि अपरितृप्तः पुनः तदेव वर्णयन्नाह, तमिति।—गीतसमये—सङ्गीतसमाकाले, विरतेऽपि—अवसितेऽपि, तस्य—रेभिलस्य, तं—श्रुतपूर्व्वमित्यर्थः, स्वरसङ्क्रम—स्वराणां—निषादादीनां, सं—सम्यक्, क्रमः,—आरोहावरोहरूपः तं, मृदुगिरः,—कोमलवचनानि, यद्वा,—"मृदुगिरः"

हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥ ५ ॥

विदू। भो वअस्स ! आवणंतर-रच्छा-विभाएसु सुहं कुक्कुरा वि सुत्ता, ता गेहं गच्छेम्ह। [अग्रतोऽवलोक्य] वअस्स ! पेक्ख पेक्ख, (ङ) एसो वि अंधआरस्स विअ अवआसं देंतो अंतरिक्ख-पासादादो ओदरदि भअवं चंदो। *

चारु। सम्यगाह भवान्,—

असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः।
जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ ६ ॥

---

* भोः वयस्य ! आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः, तत् गृहं गच्छावः। वयस्य ! पश्य पश्य, एषोऽपि अन्धकारस्येव अवकाशं ददन् अन्तरीक्ष-प्रासादात् अवतरति भगवान् चन्द्रः।

"तस्य" इत्यस्य विशेषणं, कोमलमधुरकण्ठस्वरस्य रेभिलस्येत्यर्थः, श्लिष्टं—गीताक्षर-सम्मिलितम्, एकत्वेनाकर्ण्यमानमित्यर्थः, वर्णानां—गीताक्षराणां, मूर्च्छनान्तरगतं—मूर्च्छना—स्वरारोहावरोहक्रमभेदः,—"क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च॥" इति "स्वरः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवाम् ॥" इति चोक्तेः; तदन्तर-गतं—तन्मध्यस्थितमित्यर्थः, तारम्—उच्चैः, तथा विरामे—समापने, अवसाने इत्यर्थः, मन्द्रं—कोमलं, सूक्ष्ममित्यर्थः, हेलया—अवलीलया, संयमितं—नियमितम्, आरोहावरोहादौ नियमेन संस्थापितमित्यर्थः, पुनश्च—पुनरपि, ललितं—सुन्दरं, लालित्यगुणविशिष्टमिति यावत्, तन्त्रीस्वनं—वीणाध्वनिं, तथा रागद्विरुच्चारितं—रागेषु—वराड़ीप्रभृतिषु, द्विरुच्चारितं—द्विरुक्तं, गीतमिति शेषः, शृण्वन्निव—आकर्ण-यन्निव, गच्छामि—यामीति यत् तत् सत्यमित्यन्वयः। तदानीं पूर्व्वश्रुतवीणाध्वने-रसत्त्वे पि श्रुतिगोचरत्वसम्भावनात् उत्प्रेक्षाऽलङ्कारः। शार्दूलविक्रीड़ितं वृत्तं, तल्लक्षणं यथा,—"सूर्य्याश्वैर्यदि मः-स-जौ स-त-त-गाः शार्दूलविक्रीड़ितम्" इति ॥ ५ ॥

(ङ) "दृशेः पेक्खः" इति सूत्रेण पश्यतेः पेक्खादेशः।

विदूषककथित चन्द्रास्तगमनमेव वर्णयन्नाह, असाविति।—असौ—पुरतः परि-दृश्यमानः, उन्नतकोटिः,—उन्नता कोटिः,—अग्रभागः यस्य सः, इन्दुः,—चन्द्रः,

विदू। भो! एदं अम्हाणं गेहं, वड्ढमाणअ! वड्ढमाणअ! उग्घाटेहि दुआरअं। *

चेटः। अज्जमित्तेआह शलशंजोए (च) शुणीअदि, आगदे अज्जचालुदत्ते; ता जाव दुआलअं शे उग्घाटेमि। [तथा कृत्वा] अज्ज! वंदामि, मित्तेअ! तुमं पि वंदामि। एत्थ बित्थिण्णे आशणे णिशीदंतु अज्जा। † [उभौ नाट्येन प्रविश्य उपविशतः]।

विदू। वड्ढमाणअ! रअणिअं सद्दावेहि पादाइं धोइदुं। ‡

चारु। [सानुकम्पम्] अलं सुप्तजनं प्रबोधयितुम्!! (छ)

चेटः। अज्ज मित्तेअ! अहं पाणिअं गेण्हे, तुमं पादाइं धोवेहि। § (ज)

---

* भोः! इदम् अस्माकं गेहम्। वर्द्धमानक! वर्द्धमानक! उद्घाटय द्वारम्।

† आर्यमैत्रेयस्य स्वरसंयोगः श्रूयते, आगत आर्यचारुदत्तः; तत् यावत् द्वारकस्य उद्घाटयामि। आर्य! वन्दे, मैत्रेय! त्वामपि वन्दे। अत्र विस्तीर्णे आसने निषीदतम् आर्यौ।

‡ वर्द्धमानक! रदनिकामाकारय पादौ धावयितुम्।

§ आर्यमैत्रेय! अहं पानीयं गृह्णामि, त्वं पादौ धावय।

---

जलावगाढस्य—जलमग्नस्य, वनद्विपस्य—वन्यहस्तिनः, [ "वनद्विपस्य" इत्यनेन विषाणस्य मागत्वं सूचितम् ] अवशिष्टम्—अवशेषीभूतं, जलानभ्यन्तरगतमित्यर्थः, तीक्ष्णं—सूक्ष्ममित्यर्थः, विषाणाग्रं—दन्ताग्रमिव, ( "विषाणः स्यात् पशुशृङ्गेभदन्तयोः" इत्यमरः ) तिमिरावकाशं—तिमिरेभ्यः,—अन्धकारेभ्यः, अवकाशम्—अन्तरम्, आगमनावसरमिति यावत्, दत्त्वा—वितीर्य, अस्तम्—अदर्शनम्, अस्ताचलमित्यर्थः, व्रजति—गच्छति। अत्र ऊर्द्ध्वोन्नतविषाणजलमग्नवनगजेन अर्द्धास्तमितनिशाकरस्य अवैधर्म्यसाम्यकथनादुपमाऽलङ्कारः ॥ ६ ॥

(च) स्वरसंयोगः,—कण्ठरवसमभिव्यक्तिः।

(छ) सुप्तजनो न प्रबोधनीय इत्यर्थः, [प्रबोधयितुमित्यत्र "प्रबोध्य" इति साधु, "अलं-खल्वोः—" (३।४।१८ पा०) इति क्त्वा-विधानेन निषेधार्थकालंशब्दयोगे तुमुन्-प्रत्ययस्य अनुशासनाभावात्]।

(ज) धावय—प्रक्षालय। [कम्पनार्थकस्य चुरादिगणीयस्य धू-धातोः,

विदू। [सक्रोधम्] भो वअस्स! एसो दाणिं दासीए पुत्तो भविअ पाणिअं गेण्हेदि, मं उण बम्हणं पादाइं धोवावेदि! *(भ)

चारु। वयस्य मैत्रेय! त्वमुदकं गृहाण, वर्द्धमानकः पादौ प्रक्षालयतु।

चेटः। अज्ज मित्तेअ! देहि उदअं। † [विदूषकस्तथा करोति। चेटश्चारुदत्तस्य पादौ प्रक्षाल्य अपसरति (ञ)]।

चारु। दीयतां ब्राह्मणस्य पादोदकम्।

विदू। किं मम पादोदएहिं. भूमीए ज्जेव्व मए ताड़िद-गद्दहेण विअ पुणोवि लोठिदव्वं। ‡ (ट)

चेटः। अज्ज मित्तेअ! बम्हणो क्खु तुमं। §

विदू। जधा सव्वणागाणं मज्झे डुंडुहो, तधा सव्वबम्हणाणं मज्झे अहं बम्हणो। ¶

* भो वयस्य! एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति, मां पुनर्ब्राह्मणं पादौ धावयति!

† आर्य्यमैत्रेय! देहि उदकम्।

‡ किं मम पादोदकैः? भूम्यामेव मया ताड़ित-गर्दभेनेव पुनरपि लोठितव्यम्।

§ आर्य्यमैत्रेय! ब्राह्मणः खलु त्वम्।

¶ यथा सर्व्वनागानां मध्ये डुण्डुभः, तथा सर्व्वब्राह्मणानां मध्ये अहं ब्राह्मणः।

स्वार्थणिजन्तस्य वा शोधनार्थधावधातोः रूपमिदं, धातूनामनेकार्थत्वादर्थसाधुत्वञ्च बोध्यम्]।

(भ) धावयति—पादप्रक्षालनं कारयति, [अत्र हेतुमति णिचि प्रयोजितस्य धावधातोः रूपं कल्पयित्वा प्रयोजितं वाक्यमिदम्; एवञ्च "माम्" इति प्रयोज्यकर्त्तुः कर्म्मता तु धावधातोः शोधनपूर्व्विकायां गतौ वर्त्तमानत्वं प्रकल्प्य कथञ्चित् समाधेया इति दिक्]।

(ञ) अपसरति—किञ्चित् दूरं तिष्ठतीत्यर्थः।

(ट) पादोदकैः,—पादप्रक्षालनार्थान्युदकानि इति पादोदकानि तैः, (बहुवचनम् अविवक्षितम्)। लोठितव्यं—लोठनं कर्त्तव्यं, भूमौ शयितव्यमित्यर्थः।

चेटः। अज्ज मित्तेअ! तधा वि धोइस्सं। [तथा कृत्वा] अज्ज मित्तेअ! एदं तं सुवस्सभंडअं, मम दिवा, तुह लत्तिं अ, ता गेह्ण। * [इति दत्त्वा निष्क्रान्तः]।

विदू। [गृहीत्वा] अज्ज वि एदं चिट्ठदि!! किं एत्थ उज्जइ-णीए चोरोवि णत्थि, जो एदं दासीए पुत्तं (ठ) णिद्दाचोरं ण अवहरदि? भो वअस्स! अब्भंतरचतुस्सालअं पवेसआमि णं। †

चारु। अलं चतुःशालमिमं प्रवेश्य,
प्रकाशनारीधृत एष यस्मात्।
तस्मात् स्वयं धारय विप्र! तावत्
यावन्न तस्याः खलु भोः! समर्प्यते॥ ७॥

[निद्रां नाटयन् "तं तस्य स्वरसङ्क्रमम्" इति पुनः पठति]।

* आर्य्य मैत्रेय! तथाऽपि धाविष्यामि। आर्य्य मैत्रेय! एतत् तत् सुवर्णभाण्डं, मम दिवा, तव रात्रौ च, तत् गृहाण।

† अद्यापि एतत् तिष्ठति? किमत्र उज्जयिन्यां चौरोऽपि नास्ति? य एतद्दास्याः पुत्रं निद्राचौरं नापहरति? भो वयस्य! अभ्यन्तरचतुःशालकं प्रवेशयामि एतत्।

(ठ) दास्याः पुत्रम् इति अत्यन्तहेयत्वख्यापनार्थमिदं विशेषणम्।

विदूषककृतं चतुःशालप्रवेशनप्रस्तावं प्रतिरुन्धन्नाह, अलमिति।—इमम्—अल-ङ्कारसमूहमित्यर्थः, चतुःशालं—चतस्रः शालाः,—गृहाणि यत्र तम्, अथवा चतसृषु दिक्षु शाला यस्य तं, बहुगृहपूर्णं भवनमित्यर्थः, प्रवेश्य—प्रापय्य, अलं—गृहाभ्यन्तरे न प्रवेशयितव्यमित्यर्थः, ["अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" (३।४।१८ पा०) इति अलंशब्दयोगे क्त्वाप्रत्ययः, ततो ल्यप्] यस्मात्—यतः, एषः,—अलङ्कारसमूहः, प्रकाश-नारीधृतः,—प्रकाशनार्य्या—वेश्यया, वसन्तसेनयेति यावत्, धृतः,—अङ्गेषु निधा-पितः, भोः विप्र! तस्मात्—ततः कारणात्, तावत्—तत्कालपर्य्यन्तं, स्वयं धारय—स्वसकाशे स्थापय, त्वमेतमिति शेषः, यावत्—यत्कालपर्य्यन्तं, तस्याः,—वेश्यायाः, वसन्तसेनायाः हस्ते इत्याशयः, न खलु समर्प्यते—दीयते। ["यावत्पुरानिपातयो-र्लट्" (३।३।४ पा०) इति भविष्यदर्थे लट्]। उपेन्द्रवज्रेन्द्रवज्रयोः इन्द्रवंशायाश्च सम्मेलनात् केषाञ्चिन्मतेन उपजातिरिदं, ते हि—"अनन्तरोदीरितलक्ष्मभाजौ पादौ

विदू। अवि णिद्दाअदि भवं ? *

चारु। अथ किम्।—

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम्।
अदृश्यरूपा चपला जरेव या मनुष्यसत्त्वं परिभूय वर्द्धते ॥ ८ ॥

विदू। ता सुवेम्ह। † [ नाट्येन स्वपितः ]।

[ ततः प्रविशति शर्विलकः ]।

शर्विलकः। कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च, बलेन च, कर्म्ममार्गम्।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ९ ॥

* अपि निद्राति भवान् ? † तत् स्वपिवः।

यदीयावुपजातयस्ताः" इति लक्षणे—"अनन्तरोदीरित" पदव्याख्याने इन्द्रवज्रोपेन्द्र-वज्रयोः परं त्रिष्टुब्जगत्यतिजगतीप्रभृतीनि यावन्ति सूत्राणि उक्तानि तावन्त्येव ग्राह्याणि इति कथयन्ति; तदेतत् सुविवेचितमस्माभिः अस्मत्कृतायां पिङ्गलसूत्र-व्याख्यायाम् ॥ ७ ॥

अचिन्त्यसमागमया निद्रया समभिभूतश्चारुदत्तः तन्माहात्म्यं वर्णयन्नाह, इय-मिति।—इयम्—अनुभूयमाना, निद्रा—स्वप्नः, ललाटदेशात्—भालस्थलात्, नय-नावलम्बिनी—नेत्राश्रिता सती, माम् उपसर्पतीव—भजते इव इत्यर्थः, चपला—अचिरस्थायिनी, अदृश्यरूपा—अन्तर्हितस्वरूपा, या—निद्रा, जरा—वार्द्धकमिव, मनुष्यसत्त्वं—मानवबलं, परिभूय—तिरस्कृत्य, वर्द्धते। अत्र तादृशविशेषणविशिष्ट-जरायाः निद्रया अर्वधर्म्मसाम्यकथनादुपमाऽलङ्कारः, तथा ललाटदेशादुपसर्पणकर्त्तृभूताया अपि निद्राया उपसर्पणकर्त्तृत्वेन उत्प्रेक्षितत्वात् पूर्व्वार्द्धे उत्प्रेक्षा। वंशस्थविलं वृत्तं,—"वदन्ति वंशस्थविलं ज-तौ ज-रौ" इति लक्षणात् ॥ ८ ॥

चौर्य्यकर्म्मनिपुणः शर्विलकः सम्प्रति स्वकीयं कर्त्तव्यं वर्णयन्नाह, कृत्वेति।—शिक्षाबलेन—ज्ञानसामर्थ्येन, अनुशीलनशक्त्येत्यर्थः, बलेन—शारीरशक्त्या च, शरीर-परिणाहस्य—विशालवपुषः, [ "परिणाहो विशालता" इत्यमरः। "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् अत्र परिणाहशब्दः तद्विशिष्टवाचकः ] सुखेन—अनायासेन, प्रवेशः—अन्तर्गमनं यत्र त तथाविधं, कर्म्मणः,—चौर्य्यकार्य्यस्य

[ नभोऽवलोक्य सहर्षम् ] अयि ! कथमस्तमुपगच्छति स भगवान् मृगाङ्कः !! तथाहि,—

नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरम् ।
घनतिमिरनिरुद्धसर्वभावा रजनिरियं जननीव संवृणोति ॥ १० ॥

वृक्षवाटिकापरिसरे सन्धिं कृत्वा प्रविष्टोऽस्मि मध्यमकं, तत् यावत् इदानीं चतुःशालकमपि दूषयामि । ( ङ ) भोः !—

मार्गं—पन्थानं, सन्धिमित्यर्थः, कृत्वा—विधाय, भूमिपरिसर्पणघृष्टपार्श्वः,—भूमेः,—पृथिवीतलात्, भूमौ—पृथिव्यां वा, यत् परिसर्पणं—सध्यभ्यन्तरेण गृहमध्यप्रवेशः, तेन घृष्टौ—प्राप्तघर्षणौ, पार्श्वौ—कक्षाधोभागौ यस्य तथाभूतः सन्, अत एव निर्मुच्यमानः,—कञ्चुकात् हीयमानः, स्वयमेव परित्यक्तनिर्मोक इत्यर्थः, [ कर्म्मकर्त्तरि शानच् ] जीर्णा—जर्ज्जरीभूता, तनुः,—शरीरं यस्य तादृशः, भुजङ्गः—सर्प इव, गच्छामि—विचरामि । अत्र घृष्टपार्श्वशर्व्विलकस्य त्यक्तनिर्मोकभुजङ्गेन अवैधर्म्यसाम्यकथनादुपमाऽलङ्कारः । वसन्ततिलकं छन्दः ॥ ९ ॥

अस्तमुपयान्तं शशलाञ्छनमालोक्य परितुष्टमानसः शर्व्विलकः तदानीन्तनीं रजनीवृत्तिं वर्णयन्नाह, नृपतीति ।—घनतिमिरेण—गाढान्धकारेण, निरुद्धाः,—आच्छन्नाः, सर्वे—सकलाः, भावाः,—पदार्थाः यस्यां सा, इयं—वर्त्तमाना, रजनिः,—रात्रिः, जननीव—मातेव, नृपतिपुरुषैः,—राजपुरुषैः, नगररक्षिभिरित्यर्थः, शङ्कितः,—तर्कितः, प्रचारः,—गमनं यस्य तं, तथा परगृहेषु—अन्यभवनेषु, यत् दूषणं—सर्व्वस्वहरणादिरूपः सन्धिच्छेदनरूपो वा दोषः, तत्र निश्चितः,—विधात्रा निर्णीतः, एकः,—प्रधानः, प्रसिद्धः इत्यर्थः, वीरः,—शूरः तं, मामिति शेषः, संवृणोति—गोपायति । यथा जननी नीतिशून्यम् अतिदुर्वृत्तमपि सुतं यत्नात् वस्त्रादिना संवृणोति, तथा तमिस्राऽपि तमसाऽन्धं चौरतनयं संवृणोति इति विशदोऽर्थः । अत्र सादृश्यविशेषणविशिष्टरजन्याः जननीसाधर्म्यकथनादुपमाऽलङ्कारः । पुष्पिताग्रा वृत्तं, तल्लक्षणं यथा,—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति ॥ १० ॥

(ङ) वृक्षवाटिकापरिसरे—गृहसमीपस्थोपवनप्राचीरसन्धौ इत्यर्थः । मध्यमकं—प्रकोष्ठान्तराभ्यन्तरमित्यर्थः, ( "मङ्गल्" इति भाषा ) । दूषयामि—सन्धिना भिनद्मीत्यर्थः ।

कामं नीचमिदं वदन्तु पुरुषाः, स्वप्ने च यद्वर्द्धते,
विश्वस्तेषु च वञ्चनापरिभवश्चौर्य्यं न शौर्य्यं हि तत्।
स्वाधीना वचनीयताऽपि हि वरं, बद्धो न सेवाञ्जलिः,
मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्व्वं कृतो द्रौणिना ॥ ११ ॥

चौर्य्यस्य दुष्टत्वे सर्वेषामेकमत्येऽपि आत्मनस्तदाचरणे युक्तिमुद्भावयन्नाह, काममिति।—स्वप्ने—निद्राऽवस्थायां, न तु जागरणावस्थायामिति भावः, विश्वस्तेषु—विश्रब्धेषु च, वञ्चनापरिभवः,—वञ्चनया—प्रतारणाद्वारा, परिभवः,—अवमानना, चौर्य्यञ्च—चौरकर्म्म च, यद्वर्द्धते—प्रसरति इत्यर्थः, इदं—वञ्चनं चौर्य्यञ्च, पुरुषाः,—साधवो जनाः इत्यर्थः, नीचं—घृणितं कर्म्म, इति कामं—सम्यक्, वदन्तु—कथयन्तु, तत्र मे नास्ति काऽपि विप्रतिपत्तिरिति भावः ; हि—यतः, तत्—वञ्चनं चौर्य्यञ्च, शौर्य्यं—शूरकार्य्यं, शूरभावो वा, न, भवतीति शेषः ; शूरा हि साक्षात् बलेन परस्वं गृह्णन्ति, इदन्तु न तथेति भावः। तथाऽपि, मम तु न तथा मतमित्याह, स्वाधीनेति।—स्वाधीना—स्ववशा, वचनीयता—चौर्य्यादिपरीवादोऽपि, [ अपि समुच्चये ] हि—निश्चितं, वरं—मनाक्प्रियेत्यर्थः, ("देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिये" इत्यमरः) बद्धः,—रचितः, सेवाञ्जलिः,—धनिजनसेवार्थं करपुटयोजनं, कृताञ्जलिना धनिजनसेवनमित्यर्थः, न, वरमिति शेषः। पुरावृत्तोद्घाटनेनैतन्मतं द्रढयति, मार्ग इति।—हि—तमेवार्थमवगच्छेत्यर्थः, एषः,—मयाऽनुसृतः, मार्गः,—पन्थाः, चौर्य्यरूप इति यावत्, पूर्वं—पुरा, प्रथमं वा, द्रौणिना—अश्वत्थाम्ना, नरेन्द्रसौप्तिकवधे—नरेन्द्रस्य—धर्म्मराजस्य युधिष्ठिरस्य इति यावत्, सौप्तिकानां—निद्रितसैन्यानां, वधे—वधार्थं, [ इयं निमित्तसप्तमी ] कृतः,—अवलम्बितः ; अतो ब्राह्मणो भूत्वा न अहमेव प्रथमं कृतवानिति भावः। यद्यपि लोकः कृतविश्वासेषु जनेष्वेव वञ्चनायाम् अनायासेन सफलकामो जायते, न त्वकृतविश्वासेषु सावधानेषु, तथा चौरोऽपि निद्रितेष्वेव जनेषु चौर्य्यमाचरन् निर्बाधं कृतकार्य्यो भवति, न तु जागरूकेष्विति नैतत् द्वयमपि नीतिविद्भिः शौर्य्यमध्ये परिगण्यते, तथाऽपि साधुवृत्त्या वृथा धनिकपदलेहनापेक्षया सदोषामपीमां स्वाधीनां चौर्य्यवृत्तिं श्रेयस्त्वेन मन्यामहे इति इमामेव आश्रयामीति भावः। पुरा किल द्रौणिः पितृवधामर्षोद्दीपितः कुरुक्षेत्रसङ्ग्रामावसानरजन्यां पाण्डवशिबिरे त्रिपुरारिं रक्षितं विधाय सुखसुप्तान् हतावशिष्टान् पाण्डवयोधान् कौशलेन शूलिनं परितोष्य तदनुमतिमनुप्राप्य प्रविश्य च शिबिरं निजघानेति भारतीयसौप्तिकपर्व्वकथाऽत्रानुसन्धेया। अत्र चौर्य्ये प्रस्तुते अप्रस्तुतस्य

तत् कस्मिन् उद्देशे (ढ) सन्धिमुत्पादयामि ?—

देशः को नु जलावसेकशिथिलो यस्मिन् न शब्दो भवेत् ?
भित्तीनाञ्च न दर्शनान्तरगतः सन्धिः करालो भवेत् ?।
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवेत् ?
कस्मिन् स्त्रीजनदर्शनञ्च न भवेत् स्यादर्थसिद्धिश्च मे ? ॥१२॥

[भित्तिं परामृश्य (ण)] नित्यादित्यदर्शनोदकसेचनेन दूषितेयं भूमिः क्षारक्षीणा, मूषिकोत्करश्चेह; हन्त! सिद्धोऽयमर्थः !! प्रथममेतत् स्कन्दपुत्राणां सिद्धिलक्षणम्। अत्र कर्मप्रारम्भे कीदृशमिदानीं सन्धिमुत्पादयामि ? इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः; तद्यथा,—पक्वेष्टकानाम्

---

वचनापरिभवस्यापि एकवाक्यान्तर्गततया समावेशात् दीपको नाम अलङ्कारः, तथा तृतीयपादार्थस्य मनाक्प्रियत्वस्य समर्थनं चतुर्थपादार्थेन द्रौणिरूपपुरुषधौरेयानुष्ठितत्वन समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोः परस्परनिरपेक्षा संसृष्टिः। शार्दूलविक्रीडितं छन्दः॥ ११॥

(ढ) उद्देशे—स्थाने इत्यर्थः।

सन्धिकर्त्तनस्थाननिरूपणं कुत्र सङ्गतम् ? इति विचारयन्नाह, देश इति।—को देशः,—किं स्थानं, जलावसेकशिथिलः,—जलानां—सलिलानाम्, अवसेकेन—चिरसेचनेन, शिथिलः,—आर्द्रप्रायः, अकठिनः इत्यर्थः, यस्मिन्—यत्र स्थाने, सन्धिकर्त्तने कृते इति शेषः, शब्दः,—गृहस्थप्रबोधको ध्वनिः इत्यर्थः, न भवेत्—न स्यात्, यस्मिंश्च भित्तीनां—कुड्यानां, करालः,—प्रशस्तः, सन्धिः,—सुरङ्गा, दर्शनान्तरगतः,—दृष्टिगोचरः, रक्षिणामिति शेषः, न भवेत्, क्व च—कुत्र प्रदेशे च, हर्म्यम्—अट्टालिका, इष्टकगृहमित्यर्थः, क्षारक्षीणतया—उषत्वात् क्षयप्राप्ततया, जीर्णं—जराग्रस्तं, तथा लोष्टकैः,—इष्टकादिखण्डैः, कृशं—क्षीणम्, अल्पेष्टकाचितमित्यर्थः, भवेत्, तथा कस्मिन्—कुत्र प्रदेशे, स्त्रीजनदर्शनं—रमणीजनसाक्षात्कारः, न भवेत्; प्रथमं स्त्रीजनसाक्षात्कारो हि तस्कराणां स्वकार्य्यसिद्धेरन्तरायतया चौरशास्त्रनिषिद्धत्वेन तद्दर्शनं स्वकार्य्यध्वंसकरमिति भावः, मे—मम, अर्थसिद्धिश्च—कार्य्यसाफल्यञ्च, अर्थप्राप्तिरूपेति यावत्, स्यात्—भवेत्। शार्दूलविक्रीडितं वृत्तम्॥ १२॥

(ण) परामृश्य—हस्तेन स्पृष्ट्वेत्यर्थः।

आकर्षणम्, आमेष्टकानां छेदनं, पिण्डमयानां सेचनं, काष्ठमयानां पाटनमिति। (त) तदत्र पक्वेष्टके इष्टकाकर्षणम्;

तत्र,—पद्मव्याकोशं भास्करं, बालचन्द्रं,
वापी, विस्तीर्णं, स्वस्तिकं, पूर्णकुम्भम्।
तत् कस्मिन् देशे दर्शयाम्यात्मशिल्पम्?
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः॥ १३॥

तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते। तमुत्पादयामि,—

---

(त) नित्यादित्यदर्शनोदकसेचनेन—सततातपजलसम्पर्केण, (नित्यं सूर्य्यकिरण-सलिलसम्बन्धेन हि इष्टकाकाष्ठादिकं सारहीनं जायते) दूषिता—असारीकृता, शिथिलीभूता इत्यर्थः। मूषिकैः,—उन्दुरैः, उत्कीर्य्यते—खन्यते, इति मूषिकोत्करः,—मूषिकोद्धृतमृत्तिकाराशिः इत्यर्थः। हन्त इति हर्षद्योतकमव्ययम्। एतत्—पूर्वोक्तं, प्रथमं—प्रधानं, सिद्धिलक्षणं—कार्य्यसिद्धिसूचकचिह्नमित्यर्थः। स्कन्दपुत्राणां—कार्त्तिकेयसुतानां, चौराणामिति यावत्, चौरा हि कार्त्तिकेयसुताः, तत्प्रणीतचौर्य्यशास्त्रोपजीविनश्च भवन्तीति प्रसिद्धिः; कनकशक्तिना—देवव्रताख्येन केनचित् चौरगुरुणा इत्यर्थः। आमेष्टकानाम्—आमानाम्—अपक्वानाम्, इष्टकानां—मृत्खण्डविशेषाणाम्। पाटनं—छेदनमित्यर्थः।

चौरदर्शनप्रोक्तसप्तविधसन्धीनामन्यतमं विधातुं तेषां स्वरूपं दर्शयन्नाह, पद्मव्याकोशमिति।—तत्—तस्मात्, कस्मिन् देशे—कुत्र स्थले, आत्मशिल्पं—निजकौशलं, सप्तविधान्यतमकौशलमित्यर्थः, दर्शयामि?—प्रकाशयामि? यत्—यस्मात्, पौराः,—पुरवासिनः, यं—शिल्पं, दृष्ट्वा—अवलोक्य, श्वः,—परदिने, विस्मयम्—आश्चर्य्यं, यान्ति—प्राप्नुवन्ति। सप्तविधमाह, पद्मेति।—पद्मव्याकोशं—पद्मवत् व्याकोशं—प्रफुल्लं, प्रस्फुटितकमलसदृशमित्यर्थः, ("प्रफुल्लोत्फुल्लसम्फुल्ल-व्याकोशविकचस्फुटाः" इत्यमरः) भास्करं—सूर्य्यमण्डलाकृतिं, बालचन्द्रं—नवोदितचन्द्राकारं, वापी—दीर्घिकातुल्यं, विस्तीर्णं—प्रशस्तं, स्वस्तिकं—पिष्टतण्डुलनिर्म्मितत्रिकोणाकृतिमाङ्गलिकद्रव्यभेदः तत्स्वरूपं, ("स्वस्तिकं मङ्गलद्रव्ये चतुष्कगृहभेदयोः" इति मेदिनी) पूर्णकुम्भं—पूर्णकुम्भाकारम्। "इष्टकाभित्तौ संस्कारवशेन पद्मव्याकोशादिसंज्ञा सप्त सन्धयः" इति चौर-दर्शनस्य प्रमाणेन सन्धेः सप्तसङ्ख्याकत्वपूरणाय "वापी विस्तीर्णम्" इति पृथक् पृथक् नामद्वयाङ्गीकारः कृतः, नो चेत् सप्तविधत्वव्याहतिप्रसङ्गः। अत्र वैश्वदेवी वृत्तं—"बाणाश्वैश्छिन्ना वैश्वदेवी म-मौ यौ" इति लक्षणम्॥ १३॥

अन्यासु भित्तिषु मया निशि पाटितासु
चारुचतासु विषमासु च कल्पनासु।
दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्म्मणि कौशलञ्च॥ १४॥

नमो वरदाय कुमारकार्त्तिकेयाय, नमः कनकशक्तये ब्रह्मण्याय देवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्य्याय, यस्याहं प्रथमः शिष्यः। तेन च परितुष्टेन योगरचना (घ) मे दत्ता,—

सन्धिनिर्म्माणे स्वनैपुण्यप्रख्यापनमुखेन भाविलोकालोचमाह, अन्यास्विति।—निशि—रात्रौ, अन्यासु—अपरासु, चारुचतासु—उत्कृष्टितासु, भित्तिषु—कुड्येषु, तथा विषमासु—दारुणासु, कल्पनासु—चौरधारणाकौशलेषु, मया पाटितासु—ध्वंसितासु सतीषु, प्रभातसमये—प्रातःकाले, प्रतिवेशिवर्गः,—तत्पल्लीस्थो जनसमूहः, दृष्ट्वा—आलोक्य, तत् पाटनकर्म्म, सन्धिं वा इति शेषः, मे—मम, दोषान्—दूषणानि, चौर्य्यकृतापराधानिति यावत्, तथा कर्म्मणि—सन्धिनिर्म्माणकार्य्ये, कौशलं—नैपुण्यञ्च, वदति—कथयिष्यति इत्यर्थः। [अत्र "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा०) इति भविष्यत्सामीप्ये लट्]। अत्र प्रस्तुतयोः दोष-कौशलयोः कथनक्रियायाम् एकधर्म्माभिसम्बन्धकथनात् तुल्ययोगिता नाम अलङ्कारः। वसन्ततिलकं छन्दः, तल्लक्षणादिकन्तु उक्तं प्राक्॥ १४॥

(घ) गुरुपरम्परां स्तौति, वरदायेति।—वरदाय—अभीष्टप्रदाय। कुमारकार्त्तिकेयाय—परमेष्ठिगुरवे इत्यर्थः। देवव्रताय—तदाख्याय परापरगुरवे; भास्करनन्दिने—भास्करस्य—सूर्य्यस्य, आनन्दवर्द्धनाय, तन्नाम्ने परमगुरवे इत्यर्थः। योगाचार्य्याय—कार्त्तिकेयशास्त्रस्य प्रधानशिष्याय, साक्षात् गुरवे इत्यर्थः। योगरचना—योगानाम्—उपायानां, रचना—सम्भारः, ("योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः); यद्वा,—योगेन—युक्त्या, रचना—रचितद्रव्यविशेषः; अथवा,—योगस्य—औषधस्य, रचना—कल्पना, कल्पितौषधमित्यर्थः वा, ["योगोऽपूर्व्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुःस्थैर्य्ये प्रयोगे च विष्कम्भादिषु भेषजे॥" इति मेदिन्युक्तेः। "योगरोचना" इति पाठे—योगेन—मन्त्रयोगेण, रोचना—तिलकद्रव्यविशेषः इत्यर्थः]।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः ।
शस्त्रञ्च पतितं गात्रे रुजं नोत्पादयिष्यति ॥ १५ ॥

[ तथा करोति ] । धिक् कष्टम् !! प्रमाणसूत्रं (द) मे विस्मृतम् !! [ विचिन्त्य ] आं, इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति !! यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यं, विशेषतोऽस्मद्विधस्य । ( ध ) कुतः,—

एतेन मापयति भित्तिषु कर्म्ममार्गम्
एतेन मोचयति भूषणसम्प्रयोगान् ।
उद्घाटनं भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनञ्च ॥ १६ ॥

---

गुरुसकाशात् प्राप्ताया योगरचनायाः प्रभावं वर्णयन्नाह, अनयेति ।—अनया—योगाचार्य्यप्रदत्तया योगरचनया, समालब्धं—युक्तम्, आलिप्तमित्यर्थः, मां रक्षिणः—रक्षका राजपुरुषाः, हि—निश्चितं, न द्रक्ष्यन्ति—प्रेक्षिष्यन्ते, तथा गात्रे—देहे, ममेति शेषः, पतितं—क्षिप्तं, शस्त्रञ्च—आयुधञ्च, रुजं—पीडां, न उत्पादयिष्यति—जनयिष्यति । पथ्यावक्त्रं वृत्तम् ॥ १५ ॥

( द ) प्रमाणसूत्रं—सन्धिस्थानप्रमापणरज्जुः ।

( ध ) महत्—प्रधानभूतम् । उपकरणद्रव्यं—जीविकासाधनीभूतः पदार्थः, ब्राह्मणास्तावदनेनैव साधनेन सर्व्ववर्णेषु प्राधान्यं लभन्ते, किमधिकेन, स्वजीविकामप्यनेनैवोपार्ज्जयन्तीति सर्व्वसाधनेषु अस्यैव श्रेष्ठत्वमित्याशयः । विशेषतः,—प्रधानरूपेणेत्यर्थः । अस्मद्विधस्य—अस्मत्सदृशस्य चौर्य्यादिदुर्नीतिसक्तस्य जनस्येत्यर्थः, न केवलं वयं साधारणब्राह्मणवत् यज्ञोपवीतादुपकारं लभामहे, अपि तु वक्ष्यमाणकर्म्ममार्गमापनादिरूपं तथा चौर्य्यादिकाले गृहस्वामिभिर्धृताश्चेत् अनेनैव ब्राह्मण्यख्यापनादात्मरक्षारूपञ्चेति भावः ।

उक्तमेव चौरब्राह्मणस्य यज्ञोपवीतादुपकारि वैशिष्ट्यं दर्शयति, एतेनेति ।—एतेन—यज्ञसूत्रेण इत्यर्थः, भित्तिषु—कुड्येषु, कर्म्ममार्गं—कार्य्यपथं, सन्धिस्थानमिति यावत्, मापयति—दैर्घ्यविस्तारयोः परिमितिं करोति, तथा एतेनैव भूषणसम्प्रयोगान्—परिहितालङ्कारान्, मोचयति—यथास्थानात् निष्क्रामयति, कपाटे—द्वारावरके काष्ठखण्डे, यन्त्रदृढे—यन्त्रेण—अर्गलेन, दृढे—अङ्गुलिप्रवेशायोग्ये इत्यर्थः, उद्घाटनम्

मापयित्वा कर्म्म समारभे। [ तथा कृत्वाऽवलोक्य च ] एष लोष्टावशेषोऽयं सन्धिः। धिक् कष्टम्!! अहिना दष्टोऽस्मि!! [ यज्ञोपवीतेनाङ्गुलीं बद्धा विषवेगं नाटयति। ततः चिकित्सां कृत्वा ] स्वस्थोऽस्मि। [ पुनः कर्म्म कृत्वा दृष्ट्वा च ] अये! ज्वलति प्रदीपः! तथाहि,—

शिखा प्रदीपस्य सुवर्णपिञ्जरा
महीतले सन्धिमुखेन निर्गता।
विभाति पर्य्यन्ततमःसमावृता
सुवर्णरेखेव कषे निवेशिता॥ १७॥

[ पुनः कर्म्म कृत्वा ]। समाप्तोऽयं सन्धिः। भवतु प्रविशामि,—अथवा न तावत् प्रविशामि, प्रतिपुरुषं निवेशयामि। (न) [ तथा कृत्वा ] अये! न कश्चित्, नमः कार्त्तिकेयाय। [ प्रविश्य

—उन्मोचनं, भवति, [ "उद्घाटकः" इत्यपपाठः, विशेषणपदस्य करणकारकेण अन्वयाभावात् क्रमभङ्गदोषाच्च ] तथा कीटैः,—क्षुद्रजीवविशेषैः, भुजगैः,—विषधरैश्च, दष्टस्य,—प्राप्तदंशनस्य सतः, परिवेष्टनं—परितः बन्धनसाधनञ्च, भवति इति शेषः। वसन्ततिलकं वृत्तम्॥ १६॥

सन्धिपथनिर्गतं प्रदीपालोकं वर्णयन्नाह, शिखेति।—पर्य्यन्ततमःसमावृता—पर्य्यन्तेषु—प्रान्तप्रदेशेषु, दीपशिखोद्भासितभूमेः चतुष्पार्श्वेषु इत्यर्थः, सन्ति यत् तमः,—तिमिरपटलं, तेन समावृता—परिवेष्टिता, सुवर्णवत् पिञ्जरा—पिङ्गलवर्णा, प्रदीपस्य शिखा—अर्चिः, सन्धिमुखेन—सन्धिविवरेणेत्यर्थः, महीतले—क्षितितले, निर्गता—निष्क्रान्ता सतीत्यर्थः, कषे—सुवर्णपरीक्षाप्रस्तरे, निकषपाषाणे इति यावत्, ( कषप्रस्तरस्य कृष्णवर्णत्वेन तमःसाम्यं बोध्यम्; "शाणस्तु निकषः कषः" इत्यमरः ) निवेशिता—अर्पिता, सुवर्णस्य—कनकस्य, रेखेव—लेखेव, विभाति—शोभते। अत्र तिमिरोपगूढभूतलपतितालोकरेखायाः निकषपाषाणगतकनकरेखया अर्थधर्म्मसाम्यकथनादुपमाऽलङ्कारः। वंशस्थविलं वृत्तम्॥ १७॥

(न) प्रतिपुरुषं—तृणादिनिर्म्मितां पुरुषप्रतिकृतिं, ( गृहस्थानां निद्राजागरणाद्यवस्थाज्ञानाय चौरैस्तथा क्रियते इति प्रसिद्धिः ) निवेशयामि—प्रेरयामि, प्रवेशयामीत्यर्थः; यद्वा,—प्रतिपुरुषं—पुरुषं पुरुषं प्रतीत्यर्थः, निवेशयामि—मनः सन्दधामि, अस्ति कश्चित् पुरुषो न वेति चिन्तयामीत्यर्थः।

इतस्ततो दृष्ट्वा च] अये ! पुरुषद्वयं सुप्तम् !! भवतु आत्मरक्षार्थं द्वारम् उद्घाटयामि। कथं जीर्णत्वात् गृहस्य विरौति (प) कपाटं. तत् तावत् सलिलमन्वेषयामि। क्व नु खलु सलिलं भविष्यति ? [इतस्ततो दृष्ट्वा सलिलं गृहीत्वा सन्धिस्थलेषु क्षिपन् सशङ्कम्] मा तावत्, भूमौ पतत् शब्दमुत्पादयेत्। भवतु एवं (फ) तावत्। [पृष्ठेन प्रतीक्ष्य (ब) कपाटमुद्घाट्य] भवतु एवं तावत्, इदानीं परीक्षे,—किं लक्ष्यसुप्तम्, उत परमार्थसुप्तमिदं द्वयम् ? (भ) [त्रासयित्वा (म) परीक्ष्य च] अये ! परमार्थसुप्तेनानेन (य) भवितव्यम्। तथाहि,—

निश्वासोऽस्य न शङ्कितः सुविशदः स्वप्रान्तरं वर्त्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला।
गात्रं स्रस्तशरीरसन्धिशिथिलं शय्याप्रमाणाधिकं
दीपश्चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि ॥ १८ ॥

---

(प) कथं—सम्भावनायाम्। विरौति—शब्दायते।

(फ) एवं—यथा भूमौ पतत् शब्दं न कुर्य्यात् तथेत्यर्थः।

(ब) पृष्ठेन—पश्चाद्भागेन। प्रतीक्ष्य—प्रत्यावृत्य, पृष्ठतः लोकसमागमम् अपेक्ष्य इत्यर्थः।

(भ) लक्ष्यसुप्तं—व्याजसुप्तम्। परमार्थसुप्तं—यथार्थनिद्रितम्।

(म) त्रासयित्वा—विकृताकारप्रदर्शनेन भीषयित्वा।

(य) अनेन—मत्परीक्षाविषयेण पुरुषद्वयेनेत्यर्थः।

पुरुषद्वयस्य परमार्थसुप्ततामेव युक्त्या समर्थयितुं परमार्थसुप्तिलक्षणानि दर्शयन्नाह, निश्वास इति।—अस्य सुप्तपुरुषद्वयस्य निश्वासः,—नासारन्ध्रविनिःसृतः प्राणवायुः, न शङ्कितः—न शङ्कास्थानं, जागरितत्वेनेति भावः, यतः सुविशदः,—सुनिर्म्मलः, सरलः सन् इत्यर्थः. स्वप्रान्तरं—निद्राऽवकाशं व्याप्य, वर्त्तते. ["स्वप्रान्तरम्" इत्यत्र "तुल्यान्तरम्" इति पाठान्तरे—तुल्यं—समानम्, अविषममित्यर्थः. अन्तरम्—अन्तरालं, व्यवधानमिति यावत् यत्र तद्यथा स्यात्तथा इत्यर्थः कपटनिद्रायां श्वासप्रश्वासयोरन्तर्वर्त्तिसमयस्य न्यूनाधिकता प्रसिद्धेति तदभावात् नेयं कपटनिद्रेति भावः] गाढनिमीलिता—सुदृढरूपेण मुद्रिता, दृष्टिः,—चक्षुः विकला न—कृत्रिमनिमीलिता न, यतः अभ्यन्तरे—नेत्रान्तः ["नाभ्यन्तरे" इत्यत्र "नाभ्यन्तरम्" इति पाठे

[समन्तादवलोक्य] अये! कथं मृदङ्गः? अयं दर्दुरः, अयं पणवः, इयमपि वीणा, एते वंशाः, अमी पुस्तकाः, कथं नाट्याचार्य्यस्य गृहमिदम्? अथवा, भवनप्रत्ययात् प्रविष्टोऽस्मि, तत् किं परमार्थदरिद्रोऽयम्? उत राजभयाच्चौरभयात् वा भूमिष्ठं द्रव्यं धारयति? तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम्!! (र) भवतु, बीजं प्रक्षिपामि। [तथा कृत्वा] निक्षिप्तं बीजं न क्वचित् स्फारीभवति। अये! (ल) परमार्थदरिद्रोऽयम्। भवतु, गच्छामि।

ऽप्ययमेवार्थः] न चञ्चला—न स्फुरिता, कृत्रिमनिद्रायामभ्यन्तरे तारकास्फुरणात्, इह च तदभावात् नेयं कपटनिद्रेति भावः, गात्रं—शरीरं, स्रस्तशरीरसन्धिशिथिलं—शिथिलावयवसन्धितया पतितं, तथा शय्याप्रमाणाधिकं—शय्याया यत् प्रमाणं—परिमाणं, तस्मात् अधिकम्—अतिरिक्तञ्च; कृत्रिमनिद्रायां शरीरस्य शय्याविच्युतेरसम्भवादिह च तत्सत्त्वात् नेयं कपटनिद्रेति भावः; किञ्चेति चार्थः, यदि—चेत्, लक्ष्यसुप्तं—कपटनिद्रितं, स्यात्—भवेत्, एतत् पुरुषद्वयमिति शेषः, तदा अभिमुखं—सम्मुखवर्त्तिनं, दीपम्—आलोकमित्यर्थः, न मर्षयेत्—न सहेत। अत्र प्रसुप्तपुरुषद्वयस्य अकृत्रिमक्रियारूपायाः निद्रायाः यथावद्दर्शनप्रसङ्गात् स्वभावोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ १८॥

(र) अये इति विस्मये विषादे वा। मृदङ्गः,—वाद्ययन्त्रविशेषः। तल्लक्षणं यथा,—"चर्म्मणा नद्धवदनौ मध्ये चैव पृथुर्भवेत्। मृत्तिकानिर्म्मितश्चैव मृदङ्गः परिकीर्त्तितः॥" इति। दर्दुरः,—वाद्ययन्त्रभेदः। पणवः,—पटहभेदो वाद्ययन्त्रविशेषः। कथमिति जिज्ञासायाम्। नाट्याचार्य्यः,—नाट्यस्य—लक्षणया तौर्य्यत्रिकस्येत्यर्थः, आचार्य्यः—शिक्षागुरुः तस्य। भवनप्रत्ययात्—गृहोचितविभूतिविश्वासात्; गृहस्यास्य बहिराडम्बरमालोक्य मयैतद्विश्वस्तं, यदेतत् धनिगृहमिति, तथा च मदिष्टसम्भावनाऽस्तीति भावः। भूमिष्ठं—भूमितलनिखातम्। धारयति—स्वामित्वेनाधिकरोति। ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यं—भूमिगर्भस्थस्यापि हरणं मम असाध्यं नेति भावः।

(ल) बीजं—भूतलनिहितधनस्य सदसत्ताज्ञापकमित्यर्थः। स्फारीभवति—विस्तारमापद्यते; निखातधने सति भूतले समन्त्रबीजे निक्षिप्ते तस्य बहुलीभावः

विदू। [उत्स्वप्रायते] भो वअस्स! संधी विअ दिस्सदि, चोरं विअ पेक्खामि, (व) ता गेण्हदु भवं एदं सुवण्णभंडअं। *

शर्वि। किं नु खलु अयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीति उपहसति? (श) तत् किं व्यापादयामि? उत लघुत्वात् उत्स्वप्रायते? [दृष्ट्वा] अये! जर्ज्जरस्नानशाटीनिबद्धं दीपप्रभया उद्दीपितं सत्यमेवैतदलङ्करणभाण्डम्। भवतु, गृह्णामि। अथवा, न युक्तं तुल्यावस्थं कुलपुत्रजनं (ष) पीडयितुम्; तद्गच्छामि।

विदू। भो वअस्स! साविदो सि गोब्रह्मणकामाए, जइ एदं सुवण्णभंडअं ण गेण्हसि। † (स)

शर्वि। अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च; तत् गृह्णामि। अथवा, ज्वलति प्रदीपः; अस्ति च, मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्य्यते, तं तावत्

* भो वयस्य! सन्धिरिव दृश्यते, चौरमिव पश्यामि. तत् गृह्णातु भवान् इदं सुवर्णभाण्डम्।

† भो वयस्य! शापितोऽसि गोब्राह्मणकाम्यया, यदि एतत् सुवर्णभाण्डं न गृह्णासि।

स्यादिति चौरशास्त्रप्रसिद्धिः। अत्र तदभावदर्शनात् तत्त्वतोऽस्यार्थशून्यत्वं निश्चित्याह, अये इति। —अये अत्र विषादद्योतकमव्ययम्।

(व) अत्र "दृश्यते" इति कर्म्मवाच्योपक्रमे "पश्यामि" इति कर्त्तृवाच्यप्रयोगात् भग्नप्रक्रमतादोषोऽवधेयः।

(श) उपहसति—उपहासं करोति, मिथ्यासुवर्णभाण्डकथाकथनेनेति शेषः।

(ष) जर्ज्जरस्नानशाटीनिबद्धं—जीर्णस्नानीयवस्त्रावृतम्। उद्दीपितम्—उद्भासितम्। तुल्यावस्थं—समानदशापन्नम्, आत्मन इति शेषः, दरिद्रमित्यर्थः। कुलपुत्रजनं—सत्कुलोत्पन्नपुरुषम्।

(स) शापित,—शपथं कारितः, मयेति शेषः। गोब्राह्मणकाम्यया—गवां ब्राह्मणानाञ्च काम्यया—अभिलाषेण; अयं भावः,—गोब्राह्मणानाम् अभिलाषापूरणे यत् पातकं स्यात्, इदानीं मम दत्तात् सुवर्णभाण्डाग्रहणे तव तादृशं पातकं भवितेति।

प्रवेशयामि, तस्यायं देशकालः। एष मुक्तो मया कीटो यात्वा एत्र अस्य दीपस्य उपरि मण्डलैर्विचित्रैर्विचरति, एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन। धिक्!! कृतमन्धकारम्!! अथवा, मयाऽपि अस्मद्ब्राह्मणकुले धिक्कृतमन्धकारम्। अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्य्यमनुतिष्ठामि। इदानीं करोमि ब्राह्मणस्य प्रणयम्। (ह) [इति जिहृक्षति]।

विदू। भो वअस्स! सीदलो दे अग्गहत्थो। *

शर्वि। धिक् प्रमादः! सलिलसम्पर्कात् शीतलो मेऽग्रहस्तः। भवतु, कक्षयोर्हस्तौ प्रक्षिपामि। [मान्द्येन सव्यहस्तमुष्णीकृत्य गृह्णाति]।

विदू। गहिदं? †

शर्वि। अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः, तत् गृहीतम्।

विदू। दाणीं विक्किणिदपण्णो विअ वाणिओ अहं सुहं सुविस्सं। ‡

शर्वि। महाब्राह्मण! स्वपिहि वर्षशतम्। कष्टम्! एवं मद-

---

* भो वयस्य! शीतलस्ते अग्रहस्तः। † गृहीतम्?

‡ इदानीं विक्रीतपण्य इव वणिक् अहं सुखं स्वप्स्यामि।

(ह) भगवती—प्रभूतशक्तिसम्पन्ना। गोकाम्या—गवामभिलाषः। ब्राह्मणकाम्या—ब्राह्मणानां कामना च। अनतिक्रमणीया—अतिक्रमितुमशक्या, पापभियेति भावः। अथवा—पक्षान्तरे, नायं ग्रहणयोग्यः काल इत्यर्थः। कुतः? इत्याह, ज्वलतीति।—प्रज्वलितो वर्त्तते इत्यर्थः, तथा च दीपालोके अन्यस्य दर्शनसम्भवः इति भावः। आग्नेयः—अग्निषु परीक्षितः अग्निसंयोगेऽप्यविनाशीत्यर्थः। देशकालः - उन्मोचनोचितस्थानं समयश्च। मण्डलैः—मण्डलाकारगतिविशेषैरित्यर्थः। ["मण्डलैः" इत्यत्र "मण्डलम्" इति पाठान्तरम्]। भद्रपीठेन—तदाख्येन कीटेन इत्यर्थः। अप्रतिग्राहकस्य—कुत्रापि प्रतिग्रहमकृतवतः। ब्राह्मणस्य—अलङ्कारभाण्डं दातुमिच्छतो द्विजस्य विदूषकस्येत्यर्थः। प्रणयम्—अभ्यर्थनाम्। करोमि—सम्पादयामि।

निका गणिकार्थे ब्राह्मणकुलं तमसि पातितम्, अथवा, आत्मा पातितः,—

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम्।
यदेतद्गर्हितं कर्म्म निन्दामि च करोमि च॥ १९॥

तत्तावत् मदनिकाया निष्क्रयणार्थं (क) वसन्तसेनागृहं गच्छामि। [परिक्रम्यावलोक्य च] अये! पदशब्द इव! मा नाम रक्षिणः!! भवतु, स्तम्भो भूत्वा तिष्ठामि। अथवा— ममापि नाम शर्विलकस्य रक्षिणः!! योऽहम्,—

मार्जारः क्रमणे, मृगः प्रसरणे, श्येनो ग्रहालुञ्चने,
सुप्तासुप्तमनुष्यवीर्य्यतुलने श्वा, सर्पणे पन्नगः।

एतादृशदुष्कृतिनिदानतया दारिद्र्यमेव निन्दन्नाह, धिगिति।—अनिर्वेदितम्—अकथितम्, अगणितमित्यर्थः, पौरुषं—पुरुषकारः यत्र तादृशं [ "अनिर्वेदितपौरुषम्" इत्यत्र "अनिर्वेदितपौरुषम्" इति पाठे—निर्वेदः,—प्रकरणनिश्चयः, तदभावः अनिर्वेदः अनिर्वेदितम्,—अनिश्चितम् अगणितमित्यर्थः ] दारिद्र्यं—निर्धनतां, धिक्! अस्तु—वर्त्ततां, खलु—निश्चये; यत्—यस्मात् अहं दरिद्र इति शेषः, एतत्—क्रियमाणं परस्वापहरणरूपमित्यर्थः, गर्हितं—निन्दितं, पापजनकमित्यर्थः, कर्म्म—चौर्य्यं, निन्दामि च—अपवदामि च, करोमि च—सम्पादयामि च। पथ्यावक्त्रं वृत्तम्॥ १९॥

(क) निष्क्रयणार्थे—दास्यात् मोचनार्थमित्यर्थः।

सर्व्वास्ववस्थासु सर्व्वत्र असीमप्रभावशालित्वमुपपादयितुं स्वशक्तिं वर्णयन्नाह, मार्ज्जार इति।—सर्व्वत्र गद्यस्थेन "योऽहम्" इत्यनेनान्वयः। क्रमणे—निःशब्दपदसञ्चारे लक्ष्यधारणार्थम् आक्रमणे वा, मार्ज्जारः,—विड़ालः; विड़ालः इव निःशब्दपदविक्षेपेण गत्वा लक्ष्यीकृतं धर्त्तुमर्हामि इत्यर्थः; प्रसरणे—उत्प्लुत्य गमने मृगः,—हरिणः, हरिणसदृश इत्यर्थः; ग्रहालुञ्चने—ग्रहे—ग्रहणे, दूरात् झटिति समागत्य लक्ष्यधारणे इत्यर्थः, आलुञ्चने—आच्छिद्य हरणे ("छों-मारा" इति वङ्गभाषा) च, [ग्रहश्च आलुञ्चनञ्च तत् ग्रहालुञ्चनमिति समाहारः] तस्मिन्; श्येनः—दूरात् क्षिप्रम् आगत्य लक्ष्यग्राही तदाख्यपक्षिविशेषः, तद्वदित्यर्थः; [अत्र "गृहालुञ्चने" इति पाठस्तु न समीचीनः, श्येनस्य गृहालुञ्चने प्रसिद्ध्यभावात्] सुप्तस्य—निद्रितस्य,

माया रूपशरीरवेशरचने, वाक् देशभाषान्तरे,
दीपो रात्रिषु, सङ्कटेषु डुडुभो, वाजी स्थले, नौर्जले ॥२०॥

अपि च,—

भुजग इव गतौ, गिरिः स्थिरत्वे, पतगपतेः परिसर्पणे च तुल्यः।
शश इव भुवनावलोकनेऽहं, वृक इव च ग्रहणे, बले च सिंहः॥२१॥

असुप्तस्य—जागरितस्य च मनुष्यस्य—मानवस्य यत् वीर्य्यं—पराक्रमः, तस्य तुलने—इयत्ताऽवधारणे, श्वा—कुक्कुरः; कुक्कुर इव सुप्तस्यासुप्तस्य वा जनस्य क्षमतां निश्चेतुमर्हामीति भावः; सर्पणे—द्रुतवक्रगमने, पन्नगः—सर्पः; पन्नगवत् द्रुतं वक्रञ्च गन्तुं समर्थः इति भावः; रूपस्य—सितकृष्णादिवर्णस्य, शरीरस्य—आकृतेः, वेशस्य—परिच्छदस्य च, रचने—सम्पादने, माया—चातुर्य्यमयी विद्या; ऐन्द्रजालिकवत् अशेषविधं रूपादिकं कर्त्तुं शक्नोमीत्यर्थः; देशभाषान्तरे—देशभाषाविशेषे, नानादेशीयभाषाकथने इत्यर्थः, वाक्—सरस्वती; सर्व्वा एव भाषा विजानामीति भावः; रात्रिषु—रजनीषु, दीपः,—आलोक इत्यर्थः; दीपो यथा सर्व्वतः अन्धकारे सर्व्वं पश्यति, अहमपि तथा इति भावः; सङ्कटेषु—दुर्गमेषु स्थलेषु, डुडुभः—तदाख्यप्राणिविशेषः, (अश्वतर इति केचित्, वृक इत्यपरे); स्थले—भूमौ, स्थलसञ्चारे इत्यर्थः, वाजी—अश्वः; अश्ववत् द्रुतगमने दूरागमने वा अनवसन्नः इति भावः; तथा जले—सजलप्रदेशे, नौः,—तरणी; तरणी यथा निरन्तरं जले उत्प्लवते अहमपि तथा प्लोतुं समर्थः इति भावः। अत्र एकस्मिन् शर्व्विलके तादात्म्येन मार्ज्जाराद्यारोपात् मालारूपकम्। न चात्र उल्लेख एवास्तु, एकस्य शर्व्विलकस्य मार्ज्जाराद्यनेकविधत्वेनोल्लेखनादिति वाच्यम्, उल्लेखे "प्रिय इति गोपवधूभिः" इत्यादौ भगवति प्रियत्वादेर्वास्तवत्वात्, इह तु शर्व्विलके मार्ज्जारत्वादेरवास्तवत्वादित्यालङ्कारिकपरिशीलितः पन्थाः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

पुनस्तदेव व्यञ्जयितुमाह, भुजग इति।—अहं गतौ—गतिविशेषे, भुजगः—सर्प इव; स्थिरत्वे—स्थैर्य्ये, अवैमुख्ये इति यावत्, गिरिः—पर्व्वत इव; परिसर्पणे—शीघ्रगमने, सहसा लक्ष्यमुद्दिश्य गमने इति यावत्, पतगपतेः—गरुड़स्य, तुल्यः,—सदृशः; भुवनावलोकने—भुवनस्य—जगतः, अवलोकने—दर्शने चतुर्दिग्दर्शने इति यावत्, शशः,—मृगविशेष इव; ग्रहणे—हठात् आक्रमणे, वृकः—ईहामृगः, कुक्कुराकृतिव्याघ्रभेद इति यावत्, इव, ("घोघ" इति वङ्गभाषा. "कोकस्त्वीहामृगो वृकः" इत्यमरः) तथा; बले—शक्तौ, सिंहः,—मृगेन्द्र इव। अत्र एकस्य उपमेयीभूतस्य

रद। [प्रविश्य] हद्धी! हद्धी! बाहिरदुआर-सालाए पसुत्तो वड्ढमाणओ, सोवि एत्थ ण दीसइ। भोदु, अज्ज-मित्तेअं सद्दावेमि। * [इति परिक्रामति]।

शर्वि। [रदनिकां हन्तुमिच्छति; निरूप्य च पश्चात्] कथं स्त्री!! भवतु, गच्छामि। [इति निष्क्रान्तः]।

रद। [गत्वा सत्रासम्] हद्धी! हद्धी! अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कमति!! (ख) भोदु, मित्तेअं गदुअ पवोधेमि। [विदूषकमुपगम्य] अज्ज मित्तेअ! उट्ठेहि, उट्ठेहि, अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कंतो। †

विदू। [उत्थाय] आः दासीए धीए! किं भणासि? चोरं कप्पिअ संधी णिक्कंतो? ‡ (ग)

रद। हदास! अलं परिहासेण, किं ण पेक्खसि एदं? §

विदू। आः!! दासीए धीए! किं भणासि? दुदिअं विअ

* हा धिक्! हा धिक्! वहिर्द्वारशालायां प्रसुप्तो वर्द्धमानकः, सोऽप्यत्र न दृश्यते! भवतु, आर्य्यमैत्रेयम् आह्वयामि।

† हा धिक्! हा धिक्! अस्माकं गृहे सन्धिं कल्पित्वा चौरो निष्क्रामति!! भवतु, मैत्रेयं गत्वा प्रबोधयामि। आर्य्य मैत्रेय! उत्तिष्ठ उत्तिष्ठ, अस्माकं गेहे सन्धिं कल्पित्वा चौरो निष्क्रान्तः।

‡ आः दास्याः पुत्रिके! किं भणसि? चौरं कल्पित्वा सन्धिर्निष्क्रान्तः?

§ हताश! अलं परिहासेन, किं न प्रेक्षसे एतत्?

शर्विलकस्य विषयविशेषेण भुजग-गिरि-पतगपत्यादिभिः बहुभिरुपमानैः साम्यकथनात् मालोपमाऽलङ्कारः। पुष्पिताग्रा वृत्तम्॥ २१॥

(ख) निष्क्रामति—पलायते।

(ग) हठात् सुप्तोत्थितस्य भयविह्वलस्य विदूषकस्य ससम्भ्रमोक्तिरियमिति पद-विपर्य्ययः बोध्यः॥ ["चोरं कप्पिअ" इत्यादौ "चोरो कप्पिदो, संधी णिक्कंतो" इति पाठान्तरम्; "चौरः कल्पितः, सन्धिर्निष्क्रान्तः" इति संस्कृतम्]॥

दुआरअं उग्घाड़िदंत्ति। भो वअस्स चारुदत्त! उट्ठेहि, उट्ठेहि, अम्हाणं गेहे संधिं दइअ चोरो णिक्कंतो। *

चारु। भवतु, भोः! अलं परिहासेन।

विदू। भो! ण परिहासो, पेक्खदु भवं। †

चारु। कस्मिन् उद्देशे?

विदू। भो! एसो। ‡

चारु। [विलोक्य] अहो! दर्शनीयोऽयं सन्धिः,—

उपरितलनिपातितेष्टकोऽयं,
शिरसि तनुर्विपुलश्च मध्यदेशे।
असदृशजनसम्प्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य॥ २२॥

कथमस्मिन्नपि कर्मणि कुशलता?

* आः, दास्याः पुत्रिके! किं भणसि? द्वितीयमिव द्वारम् उद्घाटितमिति। भो वयस्य चारुदत्त! उत्तिष्ठ उत्तिष्ठ, अस्माकं गेहे सन्धिं दत्त्वा चौरो निष्क्रान्तः।

† भोः! न परिहासः, प्रेक्षतां भवान्।

‡ भोः! एषः।

---

सन्धेर्दर्शनीयत्वमेव वर्णयन्नाह, उपरितलेति।—अयं—दृश्यमानः, सन्धिरिति शेषः, उपरितलात्—ऊर्द्धात्, निपातिता—आक्षिप्य अपसारिता, [उपरि—ऊर्द्ध-भागात्, तलात्—अधोभागाच्च इति केचित्। ["उपरितल" इत्यत्र—"उपरितन" इति अपपाठः, पाणिन्यादिषु "सायं चिरम्—" (४।३।२३ पा०) इत्याद्यनुशासनेन कालवाचकाव्ययेभ्य एव ट्युलप्रत्ययविधानात्, अकालवाचिनः उपरिशब्दात् ट्युल्-प्रत्ययस्य असाधुत्वात्; तत्र उपरितनात्—उपरिभवात् प्रदेशादित्यर्थः] इष्टका यस्य तादृशः, शिरसि—उपरिभागे, तनुः—अल्पपरिसरः, मध्यदेशे—मध्यस्थले, विपुलः,—विशालश्च, अत एव असदृशजनसम्प्रयोगभीरोः,—अयोग्यजनप्रवेशशङ्कितस्य, महागृहस्य—महतः हर्म्यस्य, स्फुटितं—विदीर्णं, हृदयमिव—वक्षःस्थलमिव, दृश्यते इति शेषः। अत्र प्रकृते अचेतने हर्म्ये कृतस्य सन्धेः विदीर्णवक्षःस्थलसम्भावनात् उत्प्रेक्षाऽलङ्कारः। पुष्पिताग्रा वृत्तम्॥ २२॥

विदू। भो वअस्स ! अअं संधी दुवेहिं ज्जेव्व दिस्सो भवे, आगंतुएण, सिक्खिदुकामेण (घ) वा ; अण्णधा इध उज्जइणीए को अम्हाणं घरविहवं ण जाणादि ? *

चारु। वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान् धनैर्विरहितं विश्रब्धसुप्तं जनम् ।
दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः
सन्धिच्छेदनखिन्न एव सुचिरं, पश्चान्निराशो गतः ॥२३॥

* भो वयस्य ! एष सन्धिर्द्वाभ्यामेव दत्तो भवेत्, आगन्तुकेन शिक्षितुकामेन वा ; अन्यथा अत्रोज्जयिन्यां कोऽस्माकं गृहविभवं न जानाति ?

(घ) द्वाभ्यामेव कृतमित्युक्तं, कौ तौ द्वौ ? इत्याह, आगंतुएण इति।—आगन्तुकेन—नवागतेनेत्यर्थः, शिक्षितुकामेन—शिक्षार्थिना, अव्युत्पन्नेनेति यावत् ; [ शिक्षितं कामो यस्य इति विग्रहे स्थिते "लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि" इति वचनात् कामशब्दे परे तुम्प्रत्ययस्य मकारलोपः ]। अत्र निर्धनगृहकृतसन्धित्वहेतुना सन्धेरागन्तुकशिक्षितकामान्यतरकृतत्वानुमानात् अनुमानालङ्कारः,—"अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्" इति लक्षणात् ।

विदूषकोक्तिमेव समर्थयमान आह, वैदेश्येनेति।—वैदेश्येन—वैदेशिकतया गृहस्य विभवहीनताम् अजानता इति यावत्, देशान्तरवासशीलेन वा ; अथवा इत्यध्याहार्य्यं, व्यापारं—सन्धिच्छेदरूपां चौर्य्यवृत्तिम्, अभ्यस्यता—शिक्षमाणेन, अनेन इति शेषः, मम गृहे—मद्भवने, कृतः,—निर्म्मितः, भवेत्, सन्धिरिति शेषः । तत्र हेतुमाह,—असौ—तस्करः, धनैः,—विभवैः, विरहितं—विहीनं, निर्धनमिति यावत्, अत एव विश्रब्धसुप्तं—निःशङ्कनिद्रितं, जनं—पुरुषं, मामिति यावत्, न वेदितवान्—ज्ञातवान्, [ अत्र स्वार्थे णिच् ]। तत्रापि हेतुमाह,—अस्माकं महतीं—विपुलां, प्रशस्तोन्नतामित्यर्थः, अभ्रभेदिनीमिति यावत्, निवासरचनाम्—आवासगृहं, दृष्ट्वा—अवलोक्य, प्राक्—गृहप्रवेशात् पूर्व्वम्, आशान्वितः—आशायुक्तः, यस्य च एतादृक् महाहर्म्यं तस्य अतुलमेव ऐश्वर्य्यम् इति मत्वा लुब्धः अभवदिति भावः, अत एव सुचिरं—दीर्घकालं व्याप्य, सन्धिच्छेदनेन—सन्धिकर्त्तनेन, खिन्नः,—श्रान्तः, पश्चात्—गृहाभ्यन्तःप्रवेशानन्तरं, निराशः,—निष्फलप्रयासः सन् एव, गतः,—प्रस्थितः। अत्र प्रथमपादं प्रति द्वितीयपादस्य हेतुतया निर्द्देशात् काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

ततः सुहृद्भूः किमसौ कथयिष्यति तपस्वी,—सार्थवाह-सुतस्य गृहं प्रविश्य न किञ्चिन्मया समासादितमिति ?

विदू। भो ! कधं तं ज्जेव्व चोरहदअं अणुसोचसि ? तेण चिंतिदं महंतं एदं गेहं, इदो रअणभंडअं सुवस्सभंडअं वा णिक्कामइस्सामि। [स्मृत्वा सविषादमात्मगतम्] कहिं तं सुवस्स-भंडअं ? [पुनरनुस्मृत्य प्रकाशम्] भो वअस्स ! तुमं सव्वकालं भणासि, मुक्खो मित्तेअओ, अपंडिदो मित्तेअओ त्ति; सुट्ठु मए किदं तं सुवस्सभंडअं भवदो हत्थे समप्पअंतेण, अस्सधा दासीए पुत्तेण अवहिदं भवे। *

चारु। अलं परिहासेन।

विदू। भो ! जइ णाम अहं मुक्खो, ता किं परिहासस्स वि देसआलं ण जाणामि ? †

चारु। कस्यां वेलायाम् ?

विदू। भो ! जदा तुमं मए भणिदोसि, सीदलो दे अग्ग-हत्थो। ‡

चारु। कदाचिदेवमपि स्यात्। [सर्व्वतो निरूप्य सहर्षम्] वयस्य ! दिष्ट्या ते प्रियं निवेदयामि।

विदू। किं ण अवहिदं ? §

चारु। हृतम्।

* भोः ! कथं तमेव चौरहतकमनुशोचसि ? तेन चिन्तितं महदेतत् गृहम्, इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि। कुत्र तत् सुवर्णभाण्डम् ? भो वयस्य ! त्वं सर्व्वकालं भणसि मूर्खो मैत्रेयः अपण्डितो मैत्रेय इति; सुष्ठु मया कृतं तत् सुवर्णभाण्डं भवतो हस्ते समर्पयता ; अन्यथा दास्याः पुत्रेणापहृतं भवेत्।

† भोः ! यदि नाम अहं मूर्खः, तत् किं परिहासस्यापि देशकालं न जानामि ?

‡ भोः ! यदा त्वं मया भणितोऽसि, शीतलस्ते अग्रहस्तः।

§ किं नापहृतम् ?

विदू। तधा वि किं पिग्रं ? *

चारु। यदसौ कृतार्थो गतः।

विदू। णासो क्खु सो। †

चारु। कथं न्यासः !! [मोहमुपगतः]।

विदू। समस्ससदु भवं। जइ णासो चोरेण अवहिदो, तुमं किं मोहं उवगदो ? ‡

चारु। [समाश्वस्य] वयस्य !—

क: श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति।
शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता ॥ २४ ॥

भोः ! कष्टम्,—

यदि तावत् कृतान्तेन प्रणयोऽर्थेषु मे कृतः।
किमिदानीं नृशंसेन चारित्रमपि दूषितम् !! ॥ २५ ॥

---

* तथाऽपि किं प्रियम् ? † न्यासः खलु सः।

‡ समाश्वसितु भवान्। यदि न्यासश्चौरेणापहृतः, त्वं किं मोहमुपगतः ?

न्यासापहारेऽपि कथं मोह इति विदूषकोक्तिमुत्तरयति, क इति।—कः,—जनः, भूतार्थं—यथार्थं, तस्करेणैव हृतं स्वर्णभाण्डं, नास्य वञ्चनेत्येवंरूपकिति भावः, श्रद्धास्यति—प्रत्येष्यति ? सर्व्वः,—जनः, मां, दरिद्रमिति शेषः, तूलयिष्यति—तूलमिव लघुं करिष्यति न्यासहरणापवादादिति भावः, [ "तुलयिष्यति" इति पाठे — तुलयिष्यति—संशयव्युदासार्थं तुलायां संस्थाप्य परीक्षिष्यते, तदुक्तं याज्ञवल्क्येन यथा,—"तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये" इति ; यद्वा,—तुलयिष्यति—तस्करादिभिः हीनजनैः सदृशीकरिष्यति, अवज्ञास्यतीत्यर्थः ] हि—तथाहि, अस्मिन् लोके—संसारे, दरिद्रता—निर्द्धनत्वं निष्प्रतापा—प्रतापरहिता, प्रतापाभावात् सर्व्वसहनार्हा इति भावः, अत एव शङ्कनीया—शङ्कास्थानम्। अत सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ २४ ॥

अहो ! धनहानिर्मे से तादृक् दुःखमुत्पादयति, यथा लोकैः सम्भाव्यमानः मम चरित्रे दोषः, इत्याह, यदीति।—कृतान्तेन—दैवेन ( "कृतान्तौ यमदैवयोः" इति कोषः ) यदि तावत् मे—मम, अर्थेषु—धनेषु, प्रणयः —प्रीतिः, ग्रहणार्थं लोभ इत्यर्थः, कृतः, —सम्पादितः, तदा नृशंसेन—क्रूरेण, निष्ठुरेण इत्यर्थः, ( "नृशंसो घातुकः क्रूरः"

विदू। अहं क्खु अवलविस्सं,—केण दिसं? केण गहिदं? को वा सक्खि? त्ति। *

चारु। अहमिदानीमनृतमभिधास्ये?—

भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियाम्।

अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम्॥ २६॥

रद। ता जाव अज्जा-धूदाए (ङ) गदुअ णिवेदेमि। †

[इति निष्क्रान्ता]।

[प्रविशति चेट्या सह चारुदत्तवधूः]।

वधूः। [ससम्भ्रमम्] अइ! सच्चं, अवरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह? ‡

चेटी। भट्टिणि! सच्चं, किंतु जो सो वेस्साजणकेरको अलंकारओ, सो अवहिदो। §

वधूः। [मोहं नाटयति]।

चेटी। समस्ससदु अज्जा धूदा। ¶

---

* अहं खलु अपलपिष्यामि,—केन दत्तम्? केन गृहीतम्? को वा साक्षी? इति।

† तत् यावत् आर्य्याधूतायै गत्वा निवेदयामि।

‡ अयि! सत्यम्, अपरिक्षतशरीर आर्य्यपुत्रः आर्य्यमैत्रेयेण सह?

§ भट्टिनि! (स्वामिनि!) सत्यं, किन्तु यः स वेश्याजनस्यालङ्कारः सोऽपहृतः।

¶ समाश्वसितु आर्य्या धूता।

---

इत्यमरः) तेनेति शेषः, इदानीं—सम्प्रति, मम चारित्रं—सच्चरित्रताम्, अपि किं—कथं, दूषितम्?—दोषमापादितम्? निन्दनीयं कृतम्? इत्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २५॥

मम सम्बन्धे अनृताभिधानमसम्भवमित्याह, भैक्ष्येणेति।—भैक्ष्येण—भिक्षया अपि, का कथा अन्यापायस्येति भावः, न्यासस्य—मत्सविधे रक्षितधनस्य, प्रतिक्रियां—परिशोधं, तदुचितधनमिति यावत्, अर्जयिष्यामि—आहरिष्यामि, परन्तु चारित्रभ्रंश-कारणं—सद्वृत्तच्युतिहेतु, अनृतम्—असत्य, न अभिधास्यामि—वक्ष्यामि। पथ्यावक्त्रं वृत्तम्॥ २६॥

(ङ) धूतेति चारुदत्तस्य पत्न्या नाम।

वधूः। [समाश्वस्य] हञ्जे! किं भणासि? अवरिक्खदसरीरो अज्जउत्तो त्ति। वरं दाणिं सो सरीरेण परिक्खदो, ण उण चारित्तेण। संपदं उज्जइणीए जणो एव्वं मंतइस्सदि, दलिद्ददाए अज्जउत्तेण ज्जेव्व ईदिसं अकज्जं अणुचिट्ठिदंत्ति। [ऊर्द्ध्वमवलोक्य निश्वस्य च] भअवं कअंत! पोक्खरवत्तपड़िद-जलबिंदुचंचलेहिं कीलसि दलिद्दपुरिसभाअधेएहिं!! इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि, एदं पि अदिसोंडीरदाए (च) अज्जउत्तो ण गेण्हिस्सदि। हञ्जे! अज्जमित्तेअं दाव सद्दावेहि। *

चेटी। जं अज्जा धूदा आणवेदि। [विदूषकमुपगम्य] अज्जमित्तेअ! धूदा दे सद्दावेदि। †

विदू। कहिं सा? ‡

चेटी। एसा चिट्ठदि, उवसप्प। §

विदू। [उपसृत्य] सोत्थि भोदीए। ¶

वधूः। अज्ज! वंदामि। अज्ज! पुरत्थिआमुहो (छ) होहि। **

---

* हञ्जे! किं भणसि? अपरिक्षतशरीर आर्य्यपुत्र इति। वरम् इदानीं स शरीरेण परिक्षतः, न पुनश्चारित्रेण। साम्प्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति, दरिद्रतया आर्य्यपुत्रेणैव ईदृशमकार्य्यम् अनुष्ठितमिति। भगवन् कृतान्त! पुष्करपत्रपतितजलविन्दुचञ्चलैः क्रीड़सि दरिद्रपुरुषभागधेयैः!! इयञ्च मे एका मातृगृहलब्धा रत्नावली तिष्ठति, एतामपि अतिशौण्डीरतया आर्य्यपुत्रो न ग्रहीष्यति। हञ्जे! आर्य्यमैत्रेयं तावत् शब्दायस्व (आह्वय)।

† यत् आर्य्या धूता आज्ञापयति। आर्य्य मैत्रेय! धूता त्वां शब्दायते (आह्वयति)।

‡ कुत्र सा? § एषा तिष्ठति, उपसर्प। ¶ स्वस्ति भवत्यै।

** आर्य्य! वन्दे। आर्य्य! पुरस्तान्मुखो भव।

(च) अतिशौण्डीरतया—अत्युदारतया।

(छ) पुरस्तान्मुखः—पुरस्तात्—अग्रे, सम्मुखे इत्यर्थः, मुखं यस्य सः, सम्मुखवर्त्तीत्यर्थः। ["पुरत्थिआमुहो" इत्यत्र "पौरत्थआहिमुहो" इति पाठान्तरे "पौरस्त्याभिमुखः" इति संस्कृतं, पूर्वदिगवलम्बितास्य इत्यर्थश्च, पूर्वास्येनैव दानग्रहणस्य शास्त्रविहितत्वादिति]।

विदू। एसो भोदि ! पुरत्थिआमुहो संवुत्तोम्हि। *

वधूः। अज्ज ! पड़िच्छ (ज) इमं। †

विदू। किं-ण्णेदं। ‡

वधूः। अहं क्खु रअणसट्ठिं उववसिदा आसं; तहिं जधाविहवाणुसारेण बम्हणो पड़िग्गाहिदव्वो, सो अ ण पड़िग्गाहिदो, ता तस्स किदे पड़िच्छ इमं रअणमालिअं। § (झ)

विदू। [गृहीत्वा] सोत्थि; गमिस्सं, पिअवअस्सस्स णिवेदेमि। ¶

वधूः। अज्ज मित्तेअ ! मा क्खु मं लज्जावेहि। ** (ञ)

[इति निष्क्रान्ता]।

विदू। [सविस्मयम्] अहो ! से महाणुभावदा !! ††

---

* एष भवति ! पुरस्तान्मुखः संवृत्तोऽस्मि।

† आर्य्य ! प्रतीच्छ इमाम्। ‡ किं न्विदम् ?

§ अहं खलु रत्नषष्ठीमुपोषिता आसम्; तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहयितव्यः, स च न प्रतिग्राहितः, तत् तस्य कृते प्रतीच्छ इमां रत्नमालिकाम्।

¶ स्वस्ति; गच्छामि, प्रियवयस्यस्य निवेदयामि।

** आर्य्य मैत्रेय ! मा खलु मां लज्जापय।

†† अहो ! अस्या महानुभावता !!

---

(ज) प्रतीच्छ—गृहाण इत्यर्थः।

(झ) रत्नषष्ठीं—षष्ठीविशेषं, रत्नषष्ठिकाभिधं व्रतमित्यर्थः, यत्र रत्नदानं विहितमिति यावत्, [षष्ठीमिति अत्यन्तसंयोगे द्वितीया] उपोषिता—कृतोपवासा, [उपवसतेः क्तः, कित्वात् सम्प्रसारणम्]। तत्र—रत्नषष्ठीव्रते इत्यर्थः। प्रतिग्राहयितव्यः,—दानग्रहणं कारयितव्य इत्यर्थः। सः,—ब्राह्मणः। तस्य—ब्राह्मणस्य। कृते—निमित्तम्। प्रतीच्छ—गृहाण; त्वं गृहीत्वा अपरस्मै विप्राय देहीति भावः। ["सो अ ण पड़िग्गाहिदो" इत्यत्र "सो अप्पड़िग्गाहिदो" इति पाठान्तरम्]।

(ञ) "मं लज्जावेहि" इत्यत्र "तं लज्जावेहि" इति पाठान्तरे—तं—चारुदत्तं, मद्भर्त्तारमिति यावत्।

चारु। अये ! चिरयति मैत्रेयः !! मा नाम वैक्लव्यादकार्य्यं(ट) कुर्य्यात् ? मैत्रेय ! मैत्रेय !

विदू। [उपसृत्य] एसोम्हि, गेह्ण एदं। * [रत्नावलीं दर्शयति]।

चारु। किमेतत् ?

विदू। भो ! जं दे सरिसदारसंगहस्स फलं। †

चारु। कथम् ! ब्राह्मणी मामनुकम्पते !! कष्टम् ! इदानी-मस्मि दरिद्रः,—

आत्मभाग्य-क्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः।
अर्थतः पुरुषो नारी, या नारी साऽर्थतः पुमान्॥ २७॥

अथवा,—नाहं दरिद्रः। यस्य मम,—

विभवानुगता भार्य्या, सुखदुःखसुहृद् भवान्।
सत्यञ्च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम्॥ २८॥

---

* एषोऽस्मि, गृहाण एताम्।

† भोः ! यत्ते सदृशदारसङ्ग्रहस्य फलम्।

---

(ट) वैक्लव्यात्—व्यामरक्षणे अनवस्थितस्वरूपानुचितकार्य्यकरणजनितव्रीडावशा-दित्यर्थः, अकार्य्यम्—अन्याय्यकर्म्म, अविधिना आत्मघातादिरूपमिति यावत्।

विदूषकहस्ते धूतया दत्तमलङ्कारमालोक्य आत्मनि कृतावज्ञः सनिर्वेदमाह, आत्मेति।—आत्मनः भाग्येन—दुर्दैवेन, [भाग्यशब्दस्य सौभाग्यदुर्भाग्योभयसाधारण-त्वेन यत्र तेन शुभफलं दृश्यते तत्र भाग्यपदेन सौभाग्यमेव बोध्यते, यत्राशुभं फलं लक्ष्यते, तत्र दुर्भाग्यमेवेति बोध्यम्] क्षतं—विनष्टं, द्रव्यं—धनादिरूपमित्यर्थः यस्य सः, स्त्रीद्रव्येण—स्त्रीधनेन, अनुकम्पितः,—अनुगृहीतः, पुरुषः,—जनः, अर्थतः,—धनेन, कार्य्येण वा, नारी—रमणी, रक्षितत्वसाधर्म्यादिति भावः, या नारी—रमणी, साऽपि अर्थतः,—धनेन, कार्य्येण वा, पुमान्—पुरुषपदवाच्यः, रक्षकत्वसाधर्म्यादिति भावः, भवतीति शेषः। अत्र पुरुषस्य अर्थतो नारीत्वे पूर्व्वार्द्धगतपदद्वयस्य हेतुत्वेन काव्यलिङ्गमलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २७॥

पक्षान्तरे आत्मनः अदारिद्र्यमेव समर्थयमान आह, विभवेति।—भार्य्या—स्त्री, (अस्त्येव यस्य ममेति शेषस्येनान्वयः) विभवानुगता सम्पदनुसारिणी, यदा यादृशी

मैत्रेय! गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशं, वक्तव्या च सा मद्वचनात्, "यत् खलु अस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विश्रम्भात् द्यूते हारितं, तस्य कृते गृह्यतामियं रत्नावली" इति।

विदू। मा दाव अक्खाइदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहिं अवहिदस्स कारणादो चदुस्समुद्दसारभूदा रअणावली दीअदि।*

चारु। वयस्य! मा मैवम्,—

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते॥ २९॥

* मा तावत् अखादितस्य अभुक्तस्य अल्पमूल्यस्य चौरैरपहृतस्य कारणात् चतुःसमुद्रसारभूता रत्नावली दीयते।

विभवः, सदा तदनुगामिनीति यावत्, न कदाऽपि केनापि विमनायते इति भावः; भवान्—त्वं, सुखे—सम्पदीत्यर्थः, दुःखे—विपदि च, सुहृद्—अनुमतः सखा, त्वं यादृक् अवस्थाऽनुगुणः, मम पत्नी अपि तादृशीति मदीयावस्थाऽनुरूपयोरनयोः उभयोः योगसौष्ठवं मम सौभाग्यादेव सम्पन्नमिति नैतन्मे दैन्यलक्षणमिति भावः। तत्र हेतुमाह, सत्यमिति।—यत् सत्यम्—ऋतं वचनं व्यवहारो वा, दरिद्रेषु—दुर्गतेषु, दुर्लभं—दुष्प्रापं, दरिद्रः सत्यवादी भवितुं नार्हतीति भावः, तत् च, न परिभ्रष्टं—न स्खलितमित्यर्थः। पथ्यावक्त्रं वृत्तम्॥ २८॥

क्षुद्रालङ्कारक्षतिपूरकतया महामूल्यरत्नावलीदानमनुचितमिति विदूषकवचनं खण्डयन्नाह, यमिति।—यं विश्वासं—प्रत्ययं, समालम्ब्य—आश्रित्य, तया—वसन्तसेनया, अस्मासु—मादृशदरिद्रे इत्यर्थः, न्यासः,—अलङ्कारस्थापनमित्यर्थः, कृतः,—विहितः, एतत्—इदं रत्नावलीरूपं वस्तु, तस्य—तादृशस्य, महतः,—उदारस्य, प्रत्ययस्यैव—विश्वासस्यैव, [अन्ययोगव्यवच्छेदकोऽयम् एवकारः, तेन "प्रत्ययस्यैव न तु न्यासीभूतालङ्काररूपवस्तुनः" इत्यर्थलाभः; अतश्च "एवे चानियोगे" इति (वा०) वृद्धेर्न पररूपैकादेशः, किन्तु नियोगार्थत्वाद्वृद्धिरेव] मूल्यं—मूल्यस्वरूपं, दीयते—प्रत्यर्प्यते; न्यासस्याल्पमूल्यत्वेऽपि विश्वासस्य अमूल्यत्वेन तदर्थमेतदर्पणमिति भावः। पथ्यावक्त्रं वृत्तम्॥ २९॥

तत् वयस्य ! अस्मच्छरीरस्पृष्टिकया शापितोऽसि, (ठ) नैनामनाहयित्वा अत्रागन्तव्यम्। वर्द्धमानक !—

एताभिरिष्टिकाभिः सन्धिः क्रियतां सुसंहतः शीघ्रम्।
परिवादबहुलदोषान्न यस्य रक्षां परिहरामि ॥ ३० ॥

वयस्य मैत्रेय ! भवताऽप्यकृपणशौण्डीर्य्यमभिधातव्यम्। (ड)

विदू। भो ! दलिद्दो किं अकिविणं मंतेदि ? *

चारु। अदरिद्रोऽस्मि सखे ! यस्य मम—[ "विभवानुगता भार्य्या" इत्यादि पुनः पठति ] तत् गच्छतु भवान्, अहमपि कृतशौचः सन्ध्यामुपासे। [ इति निष्क्रान्ताः सर्वे ]।

इति सन्धिच्छेदो नाम तृतीयोऽङ्कः समाप्तः।

* भोः ! दरिद्रः किम् अकृपणं मन्त्रयति ?

( ठ ) अस्मच्छरीरस्पृष्टिकया—मदीयशरीरस्पर्शेन, शापितः,—शपथं कारितः, सत्यचुतिनिरासाय गात्रसंस्पर्शेन शपथकरणं लोकप्रसिद्धमेव।

सन्धिपूरणाय वर्द्धमानकमादिशति, एताभिरिति।—एताभिः,—सन्धिस्थानादाकृष्टाभिः, इष्टिकाभिः,—पक्वमृत्खण्डैः, शीघ्रं—सत्वरं, सन्धिः,—सुरङ्गा, सुसंहतः,—बद्धः, क्रियतां—विधीयतां, परिवादबहुलदोषात्—परिवादे—लोकनिन्दायाम्, अस्य गृहे चौरः प्रविष्टः इत्येवरूपायां, यः बहुलः,—महान्, दोषः,—दूषणं तस्मात्, यस्य—सन्धेः, रक्षां—रक्षणं, स्वरूपेणावस्थापनमिति यावत्, न परिहरामि—नोपेक्षे, सन्धिम् अपूरितां रक्षितुं न शक्नोमीत्यर्थः। [ "न यस्य" इत्यत्र "नृपस्य" इति पुस्तकान्तरधृतपाठः ]। आर्य्या वृत्तम् ॥ ३० ॥

( ड ) अकृपणशौण्डीर्य्यं—कृपणं—कार्पण्यं, दीनता वा, तद्रहितं शौण्डीर्य्यम्—औदार्य्यं यस्मिन् तत् यथा तथेति क्रियाविशेषणम्।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां

तृतीयोऽङ्कः ॥ ३ ॥

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति चेटी ] ।

चेटी । आणत्तम्हि अत्ताए अज्जआए सआसं गंतु । एसा अज्जआ चित्तफलअ-णिसस्स-दिट्ठी ( क ) मदणिआए सह किंपि मंतअंती चिट्ठदि ; ता जाव उवसप्पामि । * [ इति परिक्रामति ] ।

[ ततः प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च ] ।

वस । हञ्जे मदणिए ! अवि सुसदिसो इअं चित्ताकिदी अज्जचारुदत्तस्स ? †

मद । सुसदिसो । ‡

वस । कधं तुमं जाणासि ? §

मद । जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा । ¶

वस । हञ्जे ! किं वेसवासदाक्खिस्सेण ( ख ) मदणिए ! एव्वं भणासि ? **

---

* आज्ञप्ताऽस्मि मात्रा आर्य्यायाः सकाशं गन्तुम् । एषा आर्य्या चित्रफलक-निषसदृष्टिर्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति, तत् यावत् उपसर्पामि ।

† हञ्जे मदनिके ! अपि सुसदृशी इयं चित्राकृतिः आर्य्यचारुदत्तस्य ?

‡ सुसदृशी । § कथं त्वं जानासि ?

¶ येन आर्य्यायाः सुस्निग्धा दृष्टिरनुलग्ना ।

** हञ्जे ! किं वेशवासदाक्षिण्येन मदनिके ! एवं भणसि ?

---

(क) चित्रफलकनिषसदृष्टिः,—चित्रफलके—चित्रपटे, आलेख्य इत्यर्थः, निषसा—संसक्ता, सस्पृहमर्पितेति यावत्, दृष्टिः,—चक्षुः यया यस्या वा सा तथोक्ता ।

( ख ) वेशवासदाक्षिण्येन,—वेशे—वेश्याजननिलये, ( "वेशो वेश्याजनाश्रयः" इत्यमरः ) वासः,—वसतिः, तेन यत् दाक्षिण्यं—कौशल्यं, चातुर्य्यमिति यावत्, पर-च्छन्दानुवर्त्तिता वा ( "दक्षिणस्तु परच्छन्दानुवर्त्तिनि । दक्षेऽपसव्ये सरले" इति हेमचन्द्रः ) तेन ।

मद। अज्जए! किं जो ज्जेव्व जणो वेसे पड़िवसदि, सो ज्जेव्व अलीअदक्खिणो (ग) भोदि? *

वस। हञ्जे! णाणापुरिससंगेण वेस्साजणो अलीअदक्खिणो भोदि। †

मद। जदो दाव अज्जआए दिट्ठी इध अभिरमदि, हिअअं च, तस्स कारणं किं पुच्छीअदि? ‡ (घ)

वस। हञ्जे! सहीअणादो उवहसणीअदां रक्खामि। § (ङ)

मद। अज्जए! एव्वं णेदं, सहीअणचित्ताणुवत्ती अवलाअणो भोदि। ¶

चेटी। [उपसृत्य] अज्जए! अत्ता आणवेदि, गहिदावगुंठणं पक्खदुआरए सज्जं पवहणं; (च) ता गच्छेत्ति। **

* आर्य्ये! किं य एव जनो वेशे प्रतिवसति, स एव अलीकदक्षिणो भवति?

† हञ्जे! नानापुरुषसङ्गेन वेश्याजनोऽलीकदक्षिणो भवति।

‡ यतस्तावत् आर्य्यायाः दृष्टिरिह अभिरमते, हृदयञ्च, तस्य कारणं किं पृच्छ्यते?

§ हञ्जे! सखीजनादुपहसनीयतां रक्षामि।

¶ आर्य्ये! एवं नेदं, सखीजनचित्तानुवर्त्ती अबलाजनो भवति।

** आर्य्ये! माता आज्ञापयति, गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणं, तद्गच्छेति।

(ग) अलीकं—मिथ्या, दक्षिणः—चातुरीपरः।

(घ) "हञ्जे! णाणापुरिससंगेण" इति वसन्तसेनावाक्यस्योत्तरदानेऽक्षमा मदनिका प्रक्रान्तप्रश्नस्य "कथं तुमं जाणासि?" इत्यस्योत्तरमाह, जदो दाव इति।—इह—अस्मिन् चित्रफलके, आलिखितपुरुषे वा, यदि इयमाकृतिः सुसदृशी एव न भवेत्, तदा अत्र भवत्याः चित्तनेत्रयोः एतादृगाकर्षणस्य किं कारणम्? इति भावः। यतः त्वमेतादृशसुपुरुषानुरागिणी, अतस्तदभिसारं न समयातिवाहः विधेय इति मदनिकाऽभिप्रायः।

(ङ) रक्षामि—निवर्त्तये, अयोग्यानुरागात् उपहास्या भवामि न वेति पृच्छामीति भावः। ["रक्खामि" इत्यत्र "देक्खामि" इति पाठान्तरे,—"द्रक्ष्यामि" इति संस्कृतम्]।

(च) गृहीतावगुण्ठनं—समन्तात् आच्छादनयुक्तमित्यर्थः। प्रवहणं—स्त्रीगम-

वस। हञ्जे ! किं अज्जचारुदत्तो मं णइस्सदि ? *

चेटी। अज्जए ! जेण पवहणेण सह सुवण्णदससाहस्सिओ (छ) अलंकारओ अणुप्पेसिदो। †

वस। को उण सो ? ‡

चेटी। एसो ज्जेव्व राअस्सालो संठाणओ। §

वस। [सक्रोधम्] अवेहि, मा पुणो एव्वं भणिस्ससि। ¶

चेटी। पसीददु पसीददु अज्जआ, संदेसेण (ज) म्हि पेसिदा। **

वस। अहं संदेसस्स (झ) ज्जेव्व कुप्पामि। ††

चेटी। ता किंत्ति अत्तां विस्सविस्सं ? ‡‡

* हञ्जे ! किम् आर्य्य-चारुदत्तो मां नेष्यति ?

† आर्य्ये ! येन प्रवहणेन सह सुवर्णदशसाहस्रिकोऽलङ्कारः अनुप्रेषितः।

‡ कः पुनः सः ? § एष एव राजश्यालः संस्थानकः।

¶ अपेहि, मा पुनरेवं भणिष्यसि।

** प्रसीदतु प्रसीदतु आर्य्या, सन्देशेनास्मि प्रेषिता।

†† अहं सन्देशस्यैव कुप्यामि।

‡‡ तत् किमिति मातरं विज्ञापयिष्यामि ?

वहनयोग्यरथविशेषः, शिविकादिर्वा ; स एव कर्णीरथ इति नाम्ना प्रसिद्धः, ("कर्णीरथः प्रवहणं डयनञ्च समं त्रयम्" इत्यमरः)।

(छ) येन—जनेन इत्यर्थः, [येनेति कर्त्तरि तृतीया]। सुवर्णदशसाहस्रिकः,—अशीतिरक्तिकामित स्वर्णं सुवर्णं, "मोहर" इति भाषा, तस्य दशसहस्रं सुवर्णदशसहस्रं, तेन लभ्यः सुवर्णदशसाहस्रिकः, दशसहस्रसुवर्णरूपमूल्यलभ्य इत्यर्थः, ["सुवण्णसदसाहस्सिओ" इति पाठ.—"सुवर्णशतसाहस्रिकः" इति संस्कृतम्]।

(ज) सन्देशेन—लेख्यं विना वाचिकादेशेनेत्यर्थः ("सन्देशवाक् वाचिकं स्यात्" इत्यमरः)।

(झ) सन्देशस्य—वाचिकादेशस्य, [सन्देशस्य इति सम्बन्धविवक्षया चतुर्थ्यां प्राप्तायां षष्ठी बोध्या, सन्देशाय इत्यर्थः]।

वस। एव्वं विस्सविदव्वा, जइ मं जीअंतीं इच्छसि, ता एव्वं ण पुणो अहं अत्ताए आणविदव्वा। *

चेटी। जधा दे रोअदि। † [इति निष्क्रान्ता]।

शर्विलकः। [प्रविश्य]।—

दत्त्वा निशाया वचनीयदोषं निद्रां च जित्वा नृपतेश्च रक्ष्यान्।
स एष सूर्य्योदयमन्दरश्मिः क्षपाक्षयाच्चन्द्र इवास्मि जातः॥ १॥

अपि च,—यः कश्चित् त्वरितगतिर्निरीक्षते मां
सम्भ्रान्तं द्रुतमुपसर्पति स्थितं वा।

* एवं विश्वासयितव्या, यदि मां जीवन्तीमिच्छसि, तत् एवं न पुनरहं माता आज्ञापयितव्या।

† यथा ते रोचते।

चारुदत्तगृहे चौर्य्यं कृत्वा निशाऽवसाने सशङ्कमानसः शर्विलकः स्वदौर्बल्यमाह, दत्त्वेति।—निशायाः,—रजन्याः, [सम्बन्धविवक्षया षष्ठी] वचनीयदोषं—निशा अनर्थकरीति अपवादरूपं दूषणं, ["वचनीयः" इति भावे अनीयर्] दत्त्वा—चौर्य्येण निशां दूषयित्वेत्यर्थः, ["निशाया" इत्यत्र "निशायाम्" इति पाठान्तरम्] निद्रां च—स्वापञ्च, तथा नृपतेः,—राज्ञः, रक्ष्यांश्च—रक्षकपुरुषांश्च, [रक्ष्यानित्यत्र रक्षतेः कर्त्तरि यत्प्रत्ययस्य अननुशिष्टतया कर्म्मण्येव यत्प्रत्ययः, तेन राजरक्षणीयपुरुषबोधात् तात्पर्य्यतः नगररक्षिणः पुरुषा एव बोध्यन्ते, तेषामेव नृपतिभिः नगररक्षार्थमवश्यं रक्षणीयत्वादिति कथमपि प्रयोगस्यास्य साधुत्वं सम्पादनीयम्] (अत्र चकारद्वयं प्रत्येकप्राधान्यद्योतकं) जित्वा—अभिभूय, तयोः अवशीभूतो भूत्वा इत्यर्थः, स एषः, अहमिति शेषः, क्षपाक्षयात्—रात्र्यवसानात्, सूर्य्योदयेन—दिनकरप्रकाशेन, मन्दाः,—प्रभारहिताः, रश्मयः—किरणाः यस्य तादृशः, चन्द्रः —निशाकर इव, जातः —संवृत्तः, अस्मि— भवामि। चौराणां रात्रावेव प्रभावः, दिवसे तु भयमिति भावः। अत्र दिवा प्रभावशून्य-शर्विलकस्य दिवाकरकरनिष्प्रभनिशाकरेण सादृश्यकथनादुपमाऽलङ्कारः। इन्द्रवज्रो-पेन्द्रवज्रयोरुपजातिः वृत्तम्॥ १॥

स्वस्य चौर्य्यदोषदुष्टतया दिवाभीतः स्वकीयामवस्थां प्रकटयन्नाह य इति।—यः कश्चित्—यः कोऽपि, मानव इति शेषः, त्वरितगतिः—शीघ्रगमनः सन्, सम्भ्रान्तम् —अकार्य्यकरणात् भयचकितं, मां—शर्विलकं, निरीक्षते—अवलोकयति, वा—

तं सर्व्वं तुलयति दूषितोऽन्तरात्मा
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥

मया खलु मदनिकायाः कृते साहसमनुष्ठितम् ( ञ ),—

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम्।
नरपतिबले पार्श्वायाते स्थितं गृहदारुवत्,
व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता ॥ ३ ॥

[ इति परिक्रामति ]।

अथवा, स्थितं—क्वचिदवस्थितं, मां द्रुतं—शीघ्रम्, उपसर्पति—मत्सन्निधिमागच्छतीत्यर्थः ; दूषितः,—सापराधः, चौर्य्यादिदुष्कार्य्यकरणात् शङ्कित इति यावत्, अन्तरात्मा—अन्तःकरणं, ममेति शेषः, तं—मन्निरीक्षकादिरूपं, सर्वं—सकलं जनं, तुलयति—परीक्षते ; तस्करोऽहम् इति किमयं ज्ञातवानिति सन्दिग्ध इति यावत्, हि—तथा हि, मनुष्यः,—जनः, स्वैः,—निजैः, दोषैः—अपराधैः, शङ्कितः,—शङ्कास्थानमित्यर्थः, अन्यस्येति शेषः, भवति। अत्र समीपागतपुरुषादिसन्दर्शनेन सञ्जातायाः शर्व्विलकशङ्कायाः चतुर्थपादार्थेन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासोऽलङ्कारः। प्रहर्षिणी वृत्तम्,—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ २ ॥

( ञ ) कृते—निमित्तं, मदनिकालाभार्थमिति यावत्। साहसं—हठकारित्वं, [ सहसा कृतमिति व्युत्पत्त्या अविवेकिकार्य्यत्वेन चौर्य्यस्य साहसपदेन लाभः ]।

साहसमनुष्ठितमित्युक्तं, तच्च कीदृशमिति विवृण्वन्नाह, परिजनेति।—क्वचिदपि—कुत्रचित् प्रदेशे, परिजनेन—परिवारेण, सह कथा—आलापः, तत्र आसक्तः,—निविष्टः, कश्चित्—कोऽपि, नरः,—पुरुषः समुपेक्षितः,—परित्यक्तः, तादृशं नरं तृणाय मन्यमानेन स्वकार्य्यमनुष्ठितमिति यावत्, क्वचिच्च गृहं—भवनं, नारीनाथं—स्त्रीमात्रसहायं, निरीक्ष्य—दृष्ट्वा, विवर्जितं—परित्यक्तं, तद्भवनस्य अबलाजनरक्षितत्वेन तत्र प्रवेशस्य चौरशास्त्रनिषिद्धत्वादिति भावः, [ "विवर्जितम्" इत्यत्र "विवर्त्तितम्" इति पाठान्तरम् ; तत्र,—विवर्त्तितं—प्रत्यावृत्तमित्यर्थः ] तथा क्वचिच्च नरपतिबलं—रक्षिसैन्ये, राजपुरुषे इत्यर्थः, पार्श्वायाते—समीपवर्त्तिनि सति, गृहदारुवत्—गृहधारककाष्ठमयस्तम्भेन तुल्यं यथा स्यात् तथेत्यर्थः, स्थितम्—अवस्थितम् ;

वस। हञ्जे! इमं दाव चित्तफलअं मम सअणीए ठाविअ तालवेंटअं गेण्हिअ लहु (ट) आअच्छ। *

मद। जं अज्जआ आणवेदि। † [इति फलकं गृहीत्वा निष्क्रान्ता]।

शर्वि। इदं वसन्तसेनाया गृहं, तत् यावत् प्रविशामि। [प्रविश्य] क्व नु मया मदनिका द्रष्टव्या ?

[ततः प्रविशति तालवृन्तहस्ता मदनिका]।

शर्वि। [दृष्ट्वा] अये! इयं मदनिका,—

मदनमपि गुणैर्विशेषयन्ती
रतिरिव मूर्त्तिमती विभाति येयम्।

* हञ्जे! इमं तावत् चित्रफलकं मम शयनीये स्थापयित्वा तालवृन्तं गृहीत्वा लघु आगच्छ।

† यदार्य्या आज्ञापयति।

सम्भो हि यथा एकस्मिन्नेव स्थाने निश्चलस्तिष्ठति, अहमपि तथैव तिष्ठामीति भावः; एवंप्रायैः,—ईदृक्प्रकारैः, व्यवसितशतैः,—बहुशतव्यापारैः, [व्यवसितानां शतानि व्यवसितशतानि तैः; शतादिशब्देन यत्र एकशतादिसङ्ख्यामात्रबोधः, तत्रैव एकवचनान्तत्वनियमादत्र च बहुशतसङ्ख्याया विवक्षितत्वेन शतशब्दस्यापि बहुवचनान्तत्वमिति बोध्यम्] निशा—रात्रिः, दिवसीकृता—अदिवसः दिवसः कृता; तमःसमाच्छन्नायां निशायामपि दिवसवत् निःशङ्कभावेन व्यवहृतमिति भावः; [इह दिवसशब्दात् अभूततद्भावे च्विप्रत्ययः] मयेति शेषः सर्वत्र। हरिणी वृत्तं—"न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्॥ ३॥

(ट) चित्रफलकम्—आलेख्यं, चित्रपटमिति यावत्। लघु—सत्वरं यथा स्यात् तथेत्यर्थः [आगच्छेति क्रियाया विशेषणमिदम्]।

स्वाभिलषितां मदनिकां पुरतोऽवलोक्य विमुग्धहृदयः शर्व्विलकः तद्रूपवर्णनपुरःसरं स्वहृदयभावं व्यनक्ति. मदनमिति।—गुणैः—चित्तोन्मादनादिभिः अनन्यसाधारणगुणविशेषैः, मदनमपि—कन्दर्पमपि, का कथा अन्येषामित्यपिशब्दार्थः, विशेषयन्ती —जयन्ती, मूर्त्तिमती—देहधारिणी, रतिः,—कामवधूरिव, विभाति—विशेषेण

मम हृदयमनङ्गवह्नितप्तं
भृशमिव चन्दनशीतलं करोति ॥ ४ ॥

मदनिके !

मद। [ दृष्ट्वा ] अम्मो ! कधं सव्विलओ !! सव्विलअ ! साअदं दे ? कहिं तुमं ? *

शर्वि। कथयिष्यामि। [ इति सानुरागमन्योऽन्यं पश्यतः।

वस। चिरअदि मदणिआ, ता कहिं णु क्खु सा ? [ गवाक्षकेन दृष्ट्वा ] कधं ! एसा केणावि पुरिसकेण सह मंतअंती चिट्ठदि !! जधा अदिसिणिद्धाए णिच्चलदिट्ठीए आपिबंती विअ एदं णिज्झाअदि, तधा तक्केमि, एसो सो जणो एदं इच्छदि अभुजिस्सं ( ठ ) कादुं ; ता रमदु रमदु, मा कस्सावि पीदिच्छेदो भोदु. ण क्खु सद्दाविस्सं। †

---

* अहो ! कथं शर्व्विलकः !! शर्व्विलक ! स्वागतं ते ? कुत्र त्वम् ?

† चिरयति मदनिका, तत् कुत्र नु खलु सा ? कथम् ! एषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति !! यथा अतिस्निग्धया निश्चलदृष्ट्या आपिबन्तीव एतं निध्यायति, तथा तर्कयामि. एष स जन एनामिच्छति अभुजिष्यां कर्त्तुम् ; तत् रमतां रमतां, मा कस्यापि प्रीतिच्छेदो भवतु. न खलु शब्दायिष्ये ( आकारयिष्यामि )।

---

शोभते "इयं मदनिका" इति गद्यस्थवाक्येन कर्त्तृपदेन अन्वयो बोध्यः ; या इयम्— एषा मदनिकेत्यर्थः, अनङ्गवह्नितप्तं—नित्यं कामानलसन्तप्तं, मम—शर्व्विलकस्य, हृदयम्—अन्तःस्थलं, भृशम्—अत्यर्थं चन्दनेन—मलयजानुलेपनेनेत्यर्थः, यथा शीतलं —शीतस्पर्शं, सुस्निग्धमिति यावत्, भवति, तथा इव करोति—विधत्ते। अत्र पूर्व्वार्द्धे मदनिकायाः मूर्त्तिमद्रतित्वासम्भवेऽपि तत्सम्भावनात्, तथा परार्द्धे अचन्दनशीतलेऽपि हृदये तत्सम्भावनादुत्प्रेक्षाद्वयम्। पुष्पिताग्रा वृत्तम् ॥ ४ ॥

( ठ ) एषा—मदनिका। केनापि - ममापरिचितेन केनचिदित्यर्थः। मन्त्रयन्ती निभृतमालपन्ती। यथा—यस्मात्। आपिबन्ती - चक्षुषा पानं कुर्व्वती, सस्पृहमालोकयन्तीति यावत्, [ अत्र इवशब्दः उत्प्रेक्षायाम् ] निध्यायति—ऐकाग्र्येण निरीक्षते, ( "निर्व्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः )। अभुजिष्याम्—

मद। सव्विलत्र ! कधेहि। *

शर्वि। [ साशङ्कं दिशोऽवलोकयति ]।

मद। सव्विलत्र ! किं-ण्णेदं ? ससंको विश्र लक्खोत्रसि ? †

शर्वि। वक्ष्ये त्वां किञ्चिद्रहस्यं, तत् विविक्तमिदम् ?

मद। अधइं। ‡

वस। कधं परमरहस्सं ! ता ण सुणिस्सं। §

शर्वि। मदनिके ! किं वसन्तसेना मोच्यति त्वां निष्क्रयेण ?

वस। कधं, मम संबंधिणी कधा !! ता सुणिस्सं इमिणा गवक्खेण ओवारिदसरीरा। ¶

मद। सव्विलत्र ! भणिदा मए अज्जत्रा, तदो भणादि, जइ मम सच्छंदो, तदा विणा अत्थं सव्वं परिजणं अभुजिस्सं करइस्सं। अध सव्विलत्र ! कुदो दे एत्तिओ विहवो—जेण मं अज्जआसआसादो मोआइस्ससि ? **

शर्वि। दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च।
अद्य रात्रौ मया भीरु ! त्वदर्थे साहसं कृतम् ॥ ५ ॥

---

* शर्विलक ! कथय। † शर्विलक ! किं न्विदं ? सशङ्क इव लक्ष्यसे ?

‡ अथ किम्। § कथं परमरहस्यम् ! तत् न श्रोष्यामि।

¶ कथं ! मम सम्बन्धिनी कथा !! तत् श्रोष्यामि अनेन गवाक्षेण अपवारित-शरीरा।

** शर्विलक ! भणिता मया आर्य्या, तदा भणति, यदि मम स्वच्छन्दः, तदा विना अर्थं सर्वं परिजनम् अभुजिष्यं करिष्यामि। अथ शर्विलक ! कुतस्ते एतावान् विभवः, येन मामार्य्यासकाशात् मोचयिष्यसि ?

---

अकिङ्करीं, स्वाधीनामित्यर्थः, ( "भुजिष्या किङ्करी मता" इति कोषः ), यद्वा,—स्वेतरेण केनापि अनुपभोग्यां, आत्मकलत्रवत् स्वाधीनामित्यर्थः।

निर्धनस्य ते सहसा कस्मात् मन्निष्क्रयोपयोग्यर्थागमः संवृत्त इति पृष्टः सहसा धनागमकारणं निर्दिशन्नाह, दारिद्र्येणेति।—भीरु !—हे भयशीले अबले ! ( भय-शीलताया रमणीजनस्वभावत्वेन शर्विलककृतसाहसश्रवणे भयावश्यम्भावादेवमाम-

वस। पसस्सा से आकिदी, साहसकम्मदाए उण उव्वेअ-णीआ। *

मद। सव्विलअ। इत्थीआकल्लवत्तस्स (ड) कारणेण उहअं पि संसए विणिक्खित्तं। †

शर्वि। किम्? किम्?

मद। सरीरं, चारित्तं अ। ‡

शर्वि। अपण्डिते! साहसे (ढ) श्रीः प्रतिवसति।

मद। सव्विलअ! अखंडिदचारित्तो सि, ता ण हु दे मम कारणादो साहसं करंतेण अच्चंतविरुद्धं आचरिदं? § (ण)

शर्वि।—नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां,
विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम्।

* प्रसन्नाऽस्याकृतिः, साहसकर्मतया पुनरुद्वेजनीया।

† शर्विलक! स्त्रीकल्यवर्त्तस्य कारणेन उभयमपि संशये विनिक्षिप्तम्।

‡ शरीरं, चारित्रञ्च।

§ शर्विलक! अखण्डितचारित्रोऽसि, तत् न खलु त्वया मम कारणात् साहसं कुर्वता अत्यन्तविरुद्धमाचरितम्?

त्नणम्)। मया दारिद्र्येण—प्रबलदैन्येन, [अभिभूतेनेत्यस्य कर्त्तृपदम्] अभिभूतेन—निर्ज्जितेन, च—तथा, त्वत्स्नेहानुगतेन—त्वदीयप्रणयसमासक्तेन सता इत्यर्थः, अद्य रात्रौ—रजन्यां, त्वदर्थे—तव निमित्तं, त्वामधिकर्त्तुमिति यावत्, [अर्थशब्दस्य असत्त्वनामत्वात् सप्तमी] साहसं—सहसा—बलेन कृतं साहसम्, अथवा,—सहसा—अविविच्य इत्यर्थः, कृतं साहसं चौर्य्यरूपमिति यावत्, "सहसा क्रियते यत्तु तत् साहसमिहोच्यते" इति वचनात्; कृतम्—अनुष्ठितम्। ["अद्य" इत्यत्र "अथ" इति पाठान्तरम्]। पथ्यावक्त्रं वृत्तम्॥ ५॥

(ड) स्त्रीकल्यवर्त्तस्य—रमणीरूपप्रातर्भोज्यस्य, अतितुच्छस्य इति भावः।

(ढ) अपण्डिते!—मुग्धे! साहसे—जीवितानपेक्षणीयव्यापारे इत्यर्थः।

(ण) "अखंडिदचारित्तो सि" इत्यादि वाक्यस्य विपरीतलक्षणया अत्यन्तविरुद्धमेव त्वया आचरितमिति पर्य्यवसितोऽर्थः। काकौ नञि च स एवार्थः।

मदनिकया अकार्य्यकारित्वेनाधिक्षिप्तः विवेकानुगताचरणैरात्मानं निर्दोषं प्रमा-

धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचित्,
कार्य्याकार्य्यविचारिणी मम मतिश्चौर्य्येऽपि नित्यं स्थिता ॥ ६ ॥

तत् विज्ञाप्यतां वसन्तसेना,—

"अयं तव शरीरस्य प्रमाणादिव निर्म्मितः ।
अप्रकाशो ह्यलङ्कारो मत्स्नेहाद्धार्य्यतामिति" ॥ ७ ॥

पयत्नाह, नो इति।—अहं फुल्लां—विकसितपुष्पां, लतां—वल्लीमिव, विभूषणवतीं—परिहितालङ्काराम्, अबलां—नारीं, नो मुष्णामि—चोरयामि, तद्भावात् भूषणानि न हरामीत्यर्थः, [नो इति निषेधार्थकमोकारान्तमव्ययपदम्; "अभावे नह्य नो नापि" इत्यमरः] विप्रस्वं—ब्राह्मणधनं, काञ्चनं—स्वर्णम्, अथो—तथा, यज्ञार्थं—यज्ञनिमित्तम्, अभ्युद्धृतम्—आहृतं, वस्तु इति शेषः. विप्रस्वमिति यज्ञार्थमभ्युद्धृतमिति च काञ्चनविशेषणं वा; तत्र विप्रस्वं विप्रस्वामिकमित्यर्थः, विप्रस्वामिककाञ्चनापहरणे महापातकश्रुतेः, तथा च विष्णुः,—"ब्रह्महत्या, सुरापानं, ब्राह्मणसुवर्णहरणं, गुरुदाराभिगमनं, संसर्गश्च तैः सह इति महापातकानि" इति। न हरामि—न चोरयामि; तथा धनार्थी—अर्थलिप्सुः सन्, क्वचित्—कदाऽपि, धात्र्याः,—उपमातुः, उत्सङ्गगतं—क्रोडस्थं, बालं—शिशुं, न हरामि—तद्भावात् अलङ्कारजातम् अपहर्तुमिति भावः; तथा हि,—मम मतिः,—बुद्धिः. चौर्य्येऽपि—चौरकर्म्मण्यपि, कार्य्याकार्य्यविचारिणी—कर्त्तव्याकर्त्तव्यविचारवती सती, नित्यं—सततं, स्थिता अस्त्यतोऽस्मभि चौर्य्यं मया पात्रमपात्रं, स्थानमस्थानं, योग्यमयोग्यं वेति अविविच्य न कदाचित् कृतमिति भावः। अत्र अन्तिमपादार्थस्य पूर्व्वपादत्रयवाक्यार्थान् प्रति हेतुतया निर्द्देशात् काव्यलिङ्गमलङ्कारः, तदुक्तं दर्पणे,—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

किं विज्ञापनीयमित्याह, अयमिति।—तव—वसन्तसेनायाः इत्याशयः, शरीरस्य—देहस्य, प्रमाणादिव—परिमाणादिव, परिमाणं गृहीत्वेवेति यावत्. [ल्यब्लोपे पञ्चमी] यथा शिथिलः कष्टसाध्यपरिधानो वा न भवेत्, तथैव इति तात्पर्य्यं निर्म्मितः,—घटितः, अयं—परिदृश्यमानः, अप्रकाशः,—अनुचितः प्रकाशो यस्य स तथोक्तः, अप्रकाशनीय इत्यर्थः, ["अप्रकाशः" इत्यत्र "अप्रकाश्यम्" इति भासकविकृतचारुदत्ताख्यग्रन्थस्थपाठान्तरे,—"धार्य्यताम्" इति क्रियाया विशेषणं बोध्यम्; इममङ्गे धृत्वा लोकसमाजे न गन्तव्यम् इत्यर्थः] अलङ्कारः,—भूषणं, मत्स्नेहात्—मयि—मदनिकायामित्यर्थः, स्नेहात्—अनुरागात्, धार्य्यतां—गृह्यताम्; परन्तु शर्व्विलकेन मम (मदनिकायाः)

मद। सव्विलअ! अप्पकासो अलंकारओ, अअं अ जणो त्ति दुवेवि ण जुज्जदि, ता उवणेहि दाव, पेक्खामि एदं अलंकारअं। * (त)

शर्वि। इदमलङ्करणम्। [इति साशङ्कं समर्पयति]।

मद। [निरूप्य]। दिट्टपुव्वो विअ अअं अलंकारओ!! ता भणेहि, कुदो दे एसो? †

शर्वि। मदनिके! किं तव अनेन? गृह्यताम्।

मद। [सरोषम्] जइ मे पच्चअं ण गच्छसि, ता किंणिमित्तं मं णिक्किणसि? ‡ (थ)

शर्वि। अयि! प्रभाते मया श्रुतं श्रेष्ठिचत्वरे, यथा—सार्थवाहस्य चारुदत्तस्य इति। [वसन्तसेना मदनिका च मूर्च्छां नाटयतः]।

शर्वि। मदनिके! समाश्वसिहि; किमिदानीं त्वम्,—

---

* शर्विलक! अप्रकाशोऽलङ्कारः, अयञ्च जनः इति द्वयमपि न युज्यते, तत् उपनय तावत्, पश्यामि एतम् अलङ्कारम्।

† दृष्टपूर्व इवायमलङ्कारः!! तत् भण, कुतस्ते एषः?

‡ यदि मे प्रत्ययं न गच्छसि, तत् किंनिमित्तं मां निष्क्रीणासि?

निष्क्रयरूपेण अर्पमर्पितः इति न प्रकाश्यतां, तथात्वे वयं राज्ञा दण्डनीया भविष्यामः इति शर्विलकाशयः। अत्र शरीरप्रमाणानिर्मितेऽपि तत्त्वसम्भावनात् उत्प्रेक्षाऽलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ७॥

(त) अयञ्च जनः,—वसन्तसेनास्वरूपः, अतिचतुरा रूपाजीवा इत्यर्थः; तादृशोऽयं जनः क? चौर्येण सङ्गृहीतोऽयमलङ्कारश्च क? इति द्वयमपि न युज्यते इत्यर्थः, एतस्या वेश्यात्वेन तद्भूतालङ्कारस्य अप्रकाश्यत्वसम्भावनाविरहादिति भावः; अथवा,—वसन्तसेना चौरितद्रव्यं कथमपि न गृह्णीयादिति भावः; शर्विलकेन चौरयित्वा मदनिकानिष्क्रयार्थं मह्यं प्रदत्तः अयम् अलङ्कारः इति वसन्तसेनया कदाऽपि न वाच्यम् इति सम्भावयितुमपि न शक्यते इति हृदयम्।

(थ) निष्क्रीणासि—मूल्येन क्रीणासि, निष्क्रयं दत्त्वा मामङ्गीकरोषीति यावत्।

विषादस्रस्तसर्वाङ्गी सम्भ्रमभ्रान्तलोचना ।
नीयमानाऽभुजिष्यात्वं कम्पसे, नानुकम्पसे ? ॥ ८ ॥

मद । [समाश्वस्य] साहसिअ ! ण क्खु तुए मम कारणादो इमं अकज्जं करंतेण तस्सिं गेहे कोवि वावादिदो परिक्खदो वा ? *

शर्वि । मदनिके ! भीते सुप्ते न शर्व्विलकः प्रहरति, तस्मात् न कश्चित् व्यापादितो नापि परिक्षतः ।

मद । सच्चं ? †

शर्वि । सत्यम् ।

वस । [संज्ञां लब्ध्वा] अम्महे ! पच्चुज्जीविदम्हि । ‡

मद । पिअं । §

---

* साहसिक ! न खलु त्वया मम कारणादिदम् अकार्य्यं कुर्वता तस्मिन् गेहे कोऽपि व्यापादितः परिक्षतो वा ?

† सत्यम् ?

‡ अहो ! प्रत्युपजीविताऽस्मि ।

§ प्रियम् ।

चारुदत्तेतिनामश्रवणविमोहितां मदनिकां सन्त्रासविकम्पितामवलोक्य तां प्रतिबोधयन्नाह, विषादेति ।—अभुजिष्यात्वम्—अकिङ्करीत्वं, स्वाधीनतामिति यावत्, नीयमाना—चौर्य्येणापि धनमाहृत्य प्राप्यमाणा, मयेति शेषः त्वं विषादेन—दुःखातिशयेन, स्रस्तं—पतितं, सर्वं—सकलम्, अङ्गं—शरीरावयवः यस्याः तादृशी, [अत्र अङ्गशब्दात् "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति वार्त्तिकेन पक्षे ङीष्] तथा सम्भ्रमेण—भयेन, भ्रान्ते—घूर्णिते, लोचने—नयने यस्याः तथाभूता च सती, कम्पसे—वेपसे, न अनुकम्पसे ?—दयसे ? मामिति शेषः; त्वदर्थमेवमकार्य्यशतमनुतिष्ठतो मे तवानुकम्पैव स्वाभाविकी, त्वन्तु एवमतिदारुणा यत् ईदृशमपि मामुपेक्ष्य पुरुषान्तरनामश्रवणतोऽपि मोहमुपगतेति महदाश्चर्य्यमिति भावः । अत्र अभुजिष्यात्वप्रापणरूपानुकम्पाहेतुसत्त्वेऽपि तदनुत्पत्तेर्विशेषोक्तिरलङ्कारः,—"सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा" इति लक्षणात् । पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

शर्वि । [ सेर्ष्यम् ] (द) मदनिके ! किं नाम प्रियमिति ?—

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्य्यं
सद्वृत्तपूर्व्वपुरुषेऽपि कुले प्रसूतः ।
रक्षामि मन्मथविपन्नगुणोऽपि मानं
मित्रञ्च मां व्यपदिशस्यपरञ्च यासि ? ॥ ८ ॥

[ साकूतम् ] ( ध ),—

---

( द ) सेर्ष्यं—परोत्कर्षासहिष्णुतासहितं यथा स्यात् तथा, आहेति शेषः ; यद्गृहे सन्धिं कृत्वा मया अलङ्कारभाण्डमपहृतं, सोऽस्याः प्रियः इति शर्व्विलकस्य मदनिकां प्रति ईर्ष्याकारणम् ।

मदनिकार्थमेवमकार्य्यशतम् अनुतिष्ठन्तमपि शर्व्विलकमुपेक्ष्य अन्यपुरुषस्य प्रियत्वाख्यानादतिनिर्व्विण्ण आह, त्वत्स्नेहेति ।—अहं सद्वृत्ताः,—सदाचाररताः, पूर्व्वपुरुषाः,—पितृपितामहादयः यस्मिन् तथोक्ते, कुले—वंशे, प्रसूतोऽपि—जातोऽपि, त्वत्स्नेहेन—तव प्रेम्णा, बद्धहृदयः,—आकृष्टचेताः सन्, हि—निश्चितं, नात्र कश्चित् संशयः करणीय इति भावः, अकार्य्यं—गर्हितकार्य्यम्, अपहरणरूपमित्यर्थः, करोमि—अनुतिष्ठामि ; मन्मथेन—कामेन, विपन्नाः,—विपर्य्यस्ताः, अन्यथाभावं प्राप्ता इति यावत्, गुणाः,—सदाचारज्ञानविवेकादयः यस्य तादृशः सन्नपि, कामहतः सन्नपि इत्यर्थः, ( मदनिकार्थमेव चौर्य्यादिरूपाकार्य्यानुष्ठानादेव अस्य गुणविपर्य्यासः सुव्यक्तः ) [ "मन्मथविपन्नगुणोऽपि" इत्यत्र "मन्मथविपन्नगुणोऽद्य" इति पाठान्तरे—"अपि" कारः ऊहनीयः ; अद्य मन्मथविपन्नगुणोऽपीति योजनीयः ] मानं—सम्मानं, रक्षामि—न कस्यापि मर्य्यादां लङ्घयामीत्यर्थः, [ "मानम्" इत्यत्र "देहम्" इति पाठे,—देहं—परकीयशरीरमपीत्यर्थः, रक्षामि —न प्रहरामि इति भावः ] मां मित्रं—प्रणयिनं, व्यपदिशसि—वदसि ; यद्वा—मित्रं —प्रणयिनं, मां व्यपदिशसि—प्रतारयसि, बहिरनुरागप्रकाशेन मां सन्तोष्य अपरं प्रति आन्तरप्रीतिप्रकाशनादिति भावः ; अपरञ्च—मदन्यञ्च पुरुषं, चारुदत्तमित्याशयः, यासि— गच्छसि, रन्तुमभिसरसीति यावत् । यदि चारुदत्ते नानुरागिणी त्वं, तदा तद्गृहस्थानाम् आघाताशङ्कया कथमीदृशी व्याकुला जाता ? कथं वा तेषां निरापद्वार्त्ताश्रवणं प्रियमित्युक्तम् ? इति शर्व्विलकस्याशयः । वसन्ततिलकं वृत्तं,—"ज्ञेयं वसन्ततिलकं त-भ-जाः ज-गौ गः" इति लक्षणात् ॥ ८ ॥

( ध ) साकूतं—साभिप्रायम् ॥

इह सर्व्वस्वफलिनः कुलपुत्रमहाद्रुमाः ।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ १० ॥
अयञ्च सुरतज्वालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ ११ ॥

वस। [ सस्मितम् ] अहो ! से अत्थाणे आवेओ । * (न)

---

* अहो ! अस्य अस्थाने आवेगः ।

मदनिकाव्यवहारं स्वानुकूलं विविच्य अस्याः वेश्यात्वमेव एवं नीचव्यवहारहेतुरिति निर्व्विषः शर्व्विलकः इत आरभ्य कतिपयैः श्लोकैः वेश्याजनदोषानाह, इहेति ।—इह—संसारे, सर्वं—सकलं, स्वं—धनमेव, फलं—प्रसवः इति सर्वस्वफलं, तदस्ति एषामिति सर्व्वस्वफलिनः,—प्रचुरधनरूपफलवन्तः, [ अत्र बहुव्रीहिणा अर्थसङ्गतावपि "न कर्म्म-धारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इति न्यायेन कर्म्मधारयात् मत्वर्थीयेन्-प्रत्ययस्य असाधुत्वेऽपि "कृष्णसर्पवान् वल्मीकः" इत्यादिवत् एतद्वचनस्य प्रायिकत्वेन साधु-त्वमवगन्तव्यम् ; केचित् तु "सर्व्वधनी" इत्यादिवत् इन्नन्तं बहुव्रीहिं वदन्ति इति सुधीभि-र्विभाव्यम् ] कुलपुत्राः,—कुलीनाः; एव महान्तः,—श्रेष्ठाः, द्रुमाः,—वृक्षाः, वेश्याः,—गणिकाः एव, विहगाः,—पक्षिणः, तैः भक्षिताः,—खादिताः सन्तः, अलम्—अत्यर्थं, निष्फलत्वं—फलहीनत्वं वृथात्वञ्च, यान्ति—प्राप्नुवन्ति, हृतसर्व्वस्वा भवन्तीति यावत् । अत्र धन-कुलपुत्रादिरूपे निरपह्नुतविषये रूपितानां फल-द्रुमादीनामभेदेनारोपात् रूपक-मलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ १० ॥

अयमिति ।—किञ्चेति चार्थः, अयम्—अनुभूयमानः, सुरतमेव ज्वाला—शिखा यस्य सः, तथा प्रणयः,—अनुरागः एव, इन्धनं—काष्ठं यस्य तादृशः, ( "काष्ठं दार्व्विन्धनम्" इत्यमरः ) कामाग्निः,—कामः,—सुरताभिलाषः एव, अग्निः,—वह्निः, [ "कामोऽग्निः" इति पाठान्तरन्तु न हृद्यं, "रावणावग्रहक्लान्तम्" इत्यत्र "कृष्णमेघः" इतिवत् समस्तपाठस्यैव औचित्यात् ] ज्वलति वेश्याजनशरीरे इति पदद्वयमध्याहार्य्यम् ; यत्र—कामाग्नौ इत्यर्थः, नराणां—मानवानां, कामातुराणामिति यावत्, यौवनानि—तारुण्यानि, धनानि—विभवाश्च, हूयन्ते—आहुतय इव प्रक्षिप्यन्ते इत्यर्थः । अत्र यौवन-धनानामाहुत्यसम्भवात् हूयन्ते इव इत्युत्प्रेक्षयैव वाक्यविश्रान्तेः उत्प्रेक्षाऽलङ्कारः, पूर्व्वार्द्धे तु निरपह्नवविषये सुरतादौ ज्वालात्वादाभेदेनान्वयात् रूपकम् इत्यनयोः परस्पर-निरपेक्षा संसृष्टिः । पथ्यावक्त्रं वृत्तम् ॥ ११ ॥

(न) अस्य—शर्व्विलकस्य, अस्थाने—अयोग्ये स्थाने, आवेगः,—चित्तोद्वेगः,

शर्वि। सर्व्वथा,—

अपण्डितास्ते पुरुषा मता मे,
ये स्त्रीषु च श्रीषु च विश्वसन्ति।
श्रियो हि कुर्व्वन्ति तथैव नार्य्यो
भुजङ्गकन्यापरिसर्पणानि॥ १२॥

स्त्रीषु न रागः कार्य्यो रक्तं पुरुषं स्त्रियः परिभवन्ति।
रक्तैव हि रन्तव्या, विरक्तभावा तु हातव्या॥ १३॥

चारुदत्तनामश्रवणमात्रेण मदनिकायाः आवेगसम्मोहादिदर्शनात् मामुपेत्य तवेयम् अनुरक्तेति विश्वासादस्यायं चित्तोद्वेगः भ्रममूल एवेति भावः; यद्वा—स्थाने इति योग्यार्थकमव्ययं, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) तथा च—आवेगः—चित्त-सम्भ्रमः अस्थाने—अयोग्यः, अनुचित इत्यर्थः। [ "आवेओ" इति प्राकृतस्य "आवेशः" इति संस्कृतकल्पने आवेशः,—गर्व्वः, क्रोधो वाऽर्थः ]।

कस्याश्चित् कामिन्यां रिरंसोः नायकस्य अपरेण कामघाते शक्तस्य कोपः, असमर्थस्य तु विषादः इति दर्शनात् क्रुद्धः शर्विलकः वेश्यामात्रं विनिन्द्य इदानीं स्त्रीमात्रं निन्दति, अपण्डिता इति।—ये पुरुषाः,—जनाः, स्त्रीषु च—नारीषु च, अनर्थकरीष्विति भावः, च—तथा, श्रीषु—लक्ष्मीषु, चञ्चलास्विति भावः, [ चकार-द्वयं प्रत्येकप्राधान्यद्योतनार्थम् ] विश्वसन्ति—प्रत्ययं यान्ति, ते—तादृशाः पुरुषाः, अपण्डिताः,—अनभिज्ञाः, मूर्खा इति यावत्, इति मे—मम, [ कर्त्तरि षष्ठी ] मताः,—स्वीकृताः, सम्मता इत्यर्थः, तान् अनभिज्ञान् मन्ये इति यावत्; हि—यतः, श्रियः,—सम्पदः, तथैव—तद्वदेव, नार्य्यः,—रमण्यः, भुजङ्गकन्यानां—भुजङ्गीनाम् इव इत्यर्थः, परिसर्पणानि—परितः वक्रगमनानि, द्रुतगमनानि वा, यद्वा,—परिसर्पणानि—आक्रमणानि, ता हि दृष्ट्वा प्रीतिपरमपि निघ्नन्ति इति भावः; कुर्वन्ति—विदधति, द्वे एव ते अतिवक्रे चपलस्वभावे चेति भावः। अत्र पूर्वार्द्धगत-वाक्यार्थं प्रति पराद्धगतवाक्यार्थस्य हेतुतया कारणेन कार्य्यसमर्थनरूपोऽर्थान्तर-न्यासः; एवम् अप्रस्तुतानां श्रीणां प्रस्तुतानां नारीणाञ्च भुजङ्गकन्यासदृशपरिसर्पण-कारित्वरूपैकधर्म्मसम्बन्धाद्दीपकालङ्कारः; तथा भुजङ्गकन्यापरिसर्पणानीत्यत्र उपमा चेति एतेषां परस्परमङ्गाङ्गिभावेन सङ्करः। उपेन्द्रवज्रेन्द्रवज्रयोः सम्मीलनादुपजाति-वृत्तमिदम्॥ १२॥

प्रकारान्तरेण पुनः स्त्रीमात्रस्य निन्दां कुर्व्वन्नाह, स्त्रीष्विति।—स्त्रीषु—नारीषु,

सुष्ठु खलु इदमुच्यते,—

एता हसन्ति च रुदन्ति च वित्तहेतोः
विश्वासयन्ति पुरुषं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन,
वेश्याः श्मशानसुमना इव वर्ज्जनीयाः ॥ १४ ॥

रागः,—प्रणयः, न कार्य्यः,—न विधेयः, (यतः) स्त्रियः,—रमण्यः, रक्तम्—अनुरागिणं, पुरुषं—जनं, परिभवन्ति—अवजानन्ति, हि—तथा हि, रक्ता—अनुरागिणी, एव रन्तव्या—रमणार्हा, विरक्तभावा—अननुरागिणी तु, हातव्या—त्यक्तव्या। अत्र रक्तैव इत्यत्र अन्ययोगव्यवच्छेदार्थकेन एवकारेणैव अननुरक्ताव्यवच्छेदसम्भवे पुनः "विरक्तभावा तु हातव्या" इति कथनात् पुनरुक्तत्वदोषः, स च "सुरक्ता हि रन्तव्या" इति पाठपरिवर्त्तनेन समाधेयः। इह प्रथमपादार्थहेतोर्द्वितीयपादगतवाक्यार्थतया काव्यलिङ्गमलङ्कारः। आर्य्या वृत्तम् ॥ १३ ॥

स्त्रीमात्रं विनिन्द्य पुनः स्त्रीविशेषां वेश्यां निन्दति, एता इति।—एताः,—वारनार्य्यः, वित्तहेतोः,—वित्तस्य हेतोः,—धनकारणात्, ["षष्ठी हेतुप्रयोगे" (२।३।२६ पा०) इति षष्ठी] पुरुषम्—अनुरागिणं जनमित्यर्थः, प्रतीति शेषः, हसन्ति, रुदन्ति—क्रन्दन्ति, विश्वासयन्ति च—प्रत्याययन्ति च, तु—किन्तु, न विश्वसन्ति—प्रतियन्ति, स्वयमिति भावः, तस्मात्—ततः कारणात्, कुलशीलसमन्वितेन—सद्वंश-सत्स्वभावविशिष्टेन, कुलीनेन सुशीलेन च इत्यर्थः, नरेण—जनेन, वेश्याः,—वारवनिताः, श्मशानसुमनाः,—श्मशाने—शवदाहस्थले उत्पन्ना याः, सुमनाः,—कुसुमं ("स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम्" इत्यमरः) सा इव, [सुमनःशब्दस्य "अप्सरःसुमनोवल्वजादेर्वा" इत्यनुशासनेन "आपः सुमनसो वर्षा अप्सरः सिकताः समाः। एताः स्त्रियां बहुत्वे स्युरेकत्वेऽपि मताः क्वचित् ॥" इति कारिकया च बहुत्वस्य वैकल्पिकत्वात् च्युतसंस्कृतिदोषाभावेऽपि "ज्योत्स्ना इव सिता कीर्त्तिः" इत्यादिवत् उपमानोपमेययोर्वचनभेदात् भग्नप्रक्रमतादोषः दुष्परिहार्य्य एवेति बोध्यम्] यद्वा—सुमनाः,—मालतीपुष्पाणि, (सुमना मालती जातिः" इत्यमरः) ता इव (अस्मिन् पक्षे आदन्तमालतीपुष्पवाचकबहुवचनान्तसुमनाशब्दप्रयोगात् नोक्तरूपभग्नप्रक्रमतादोषसम्भावनाऽपीति सर्वमवदातम्) वर्जनीयाः,—हातव्या इत्यर्थः; यथा देवार्चनायामप्रयोज्यतया श्मशानस्थकुसुमानि सर्वैः परिह्रीयन्ते, तथा सर्व्वानर्थनिदानतया नयनमनोहरा अपि वारवनिता यत्नेन परिहरणीया इति

अपि च,—

समुद्रवीचीव चलस्वभावाः सन्ध्याऽभ्रलेखेव मुहूर्त्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीड़ितालक्तकवत् त्यजन्ति ॥१५॥

स्त्रियो नाम चपलाः,—

अन्यं मनुष्यं हृदयेन कृत्वा, अन्यं ततो दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥ १६ ॥

भावः । अत्र वेश्यारूपस्य एकस्य कर्त्तुः हासरोदनाद्यनेकक्रियासम्बन्धात् दीपकाऽलङ्कारः ; शेषार्द्धे च वेश्यानां श्मशानकुसुमैः सह वर्ज्जनीयत्वेन अवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः इत्यनयोः संसृष्टिः । वसन्ततिलकं वृत्तम् ॥ १४ ॥

पुनरपि तासां दुर्व्यवहारं वर्णयति, समुद्रेति ।—समुद्रवीचीव—सागरतरङ्ग इव, चलस्वभावाः,—चञ्चलप्रकृतयः, अतिचपला इत्यर्थः, तथा सन्ध्याऽभ्रलेखेव—सन्ध्यायां—सायंकाले, यदभ्रम्—अस्तगमनोन्मुखसूर्यकिरणरञ्जितो मेघ इति यावत्, तस्य लेखेव—रेखेव, मुहूर्त्तम्—अत्यल्पकालं, रागः,—अनुरागः, पक्षे—रक्तिमा यासां ताः, स्त्रियः,—रमण्यः, वेश्या इत्यर्थः, हृतः,—आहृतः, पुरुषात् गृहीत इति यावत्, अर्थः,—धनं याभिः तथाभूताः सत्यः, निरर्थं—निर्द्धनं, पुरुषं—जनं, निष्पीड़ितं—निष्ठूरतरामं, यदलक्तकं—लाक्षापत्रं, तद्वत् त्यजन्ति—विसृजन्ति । अत्र स्त्रीणां चञ्चलस्वभावत्वे समुद्रवीच्या, मुहूर्त्तरागत्वे च सान्ध्यमेघलेखया अवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः, स च रागशब्दस्य श्लिष्टतया श्लेषानुप्राणितः । प्रथमार्द्धे उपमानोपमेययोः भिन्नवचनतया भग्नप्रक्रमताख्यदोषः । इन्द्रवज्रोपेन्द्रवज्रयोः उपजातिः वृत्तम् ॥१५॥

पुनः तमेवार्थमन्यथा विवृणोति, अन्यमिति ।—सर्वत्र गद्यस्थेन "स्त्रियः" इति कर्त्तृपदेनान्वयः । हृदयेन—मनसा, अन्यम्—एकं, मनुष्यं—जनं, कृत्वा—निश्चित्य इत्यर्थः, एकस्मिन् मनुष्ये मन आधाय इति यावत्, ततः अन्यं—तद्भिन्नमपरं जनं, [ अत्र अन्यशब्देन विहितपञ्चम्याः तसिल्विधानम् "अपादाने चाहीयरुहोः" ( ५।४।४५ पा० ) इति सूत्रेण अनपादानपञ्चम्याः तसिलनिषेधात् प्रामादिकम् ] दृष्टिभिः,—अपाङ्गदर्शनैरित्यर्थः, आह्वयन्ति—सङ्केतयन्ति, [ अत्र स्पर्द्धाऽर्थाभावात् "स्पर्द्धायामाङः" ( १।३।३१ पा० ) इति न तङ् ] अन्यत्र—अपरस्मिन्, तत इति पूर्वेणान्वयः, तद्भिन्ने पुरुषे इति यावत्, मदप्रसेकं—मदस्य—गर्वस्य, प्रसेकः,—प्रयोगः तं, साहङ्कारव्यवहारमित्यर्थः ; अथवा,—मदस्य—मदिरायाः, [illegible]

सूक्तं (प) खलु कस्यापि,—

न पर्व्वताग्रे नलिनी प्ररोहति,
न गर्द्दभा वाजिधुरं वहन्ति।
यवाः प्रकीर्णा न भवन्ति शालयः,
न वेशजाताः शुचयस्तथाऽङ्गनाः॥ १७॥

आः! दुरात्मन् चारुदत्तहतक! अयं न भवसि। [इति कतिचित् पदानि गच्छति]।

इत्यर्थः, प्रतिकं—मुखात् प्रक्षेपं, मुञ्चन्ति—कुर्वन्तीत्यर्थः, तथा अन्यञ्च—अपरञ्च, तत इति पूर्वेणान्वयः, तद्भिन्नं पुरुषं, शरीरेण—देहेन, कामयन्ते—वाञ्छन्ति, सर्व्वाङ्गेनालिङ्गन्ति इत्यर्थः; अत्र पादचतुष्टयेऽपि एकस्यैव अन्यशब्दस्य प्रयोगात् अनवीकृतत्वदोषः। एवमेकस्यैव स्त्रीरूपकर्त्तृपदस्य आह्वान-मोचन-कामनारूपक्रियाभिरन्वयात् दीपकमलङ्कारः। इन्द्रवज्रा वृत्तम्॥ १६॥

(प) सूक्तं—शोभनं कथितम्।

वाराङ्गनानां निरतिशयनीचतां प्रकटयितुं शिष्टोक्तिमुदाहरति, नेति।—नलिनी—पद्मिनी, पर्वताग्रे—गिरिशिखरे, न प्ररोहति—न जायते, गर्दभाः,—रासभाः, वाजिधुरम्—अश्ववाह्यं भारं [समासविधेरनित्यत्वात् "ऋक्पूरब्धूः—" (५।४।७४ पा०) इति सूत्रेण अप्रत्ययाभावः] न वहन्ति—पृष्ठे न गृह्णन्तीत्यर्थः प्रकीर्णाः,—प्रक्षिप्ताः, उप्ता इत्यर्थः. यवाः,—स्वनामख्याताः शूकधान्यभेदाः. शालयः,—तन्नामप्रसिद्धानि धान्यानीत्यर्थः न भवन्ति—न जायन्ते तथा वेशजाताः,—वेश्याजनाश्रये उत्पन्ना इत्यर्थः, अङ्गनाः—रमण्यः, वेश्या इत्यर्थः, न शुचयः—न पवित्राः, भवन्तीति शेषः; पर्वतोच्चशिखरे कमलोत्पत्तिवत्, रासभस्य अश्ववाह्यवहनवत् भूमावुप्तानां यवानां शालित्वप्राप्तिवत् वाराङ्गनानां साधुत्वमत्यन्तमसम्भवीति भावः। अत्र द्वितीयादिपादत्रयगतकर्त्तृपदानां बहुवचनप्रक्रमे प्रथमपादे नलिनीति-एकवचनान्तकर्त्तृपदनिर्द्देशात् भग्नप्रक्रमता, तथा वंशस्थविलस्ते द्वितीयपादे न्यूनाक्षरत्वेन हतवृत्तता. तथा वाजिधुरमित्यत्र समासान्तप्रत्ययस्यानुशिष्टत्वेऽपि तदभावात् च्युतसंस्कारता दोषः, समासान्तविधेरनित्यत्वेन तृतीयस्तु कथमपि समाधातुं शक्यते; एवं वेशाङ्गनाशुचित्वाभावसमानधर्म्माणां पर्व्वताग्रे नलिनीप्ररोहाभावादिपदार्थानां साम्यस्य प्रणिधानगम्यत्वेन दृष्टान्तालङ्कारः। वंशस्थविलं वृत्तम्॥ १७॥

मद। [ग्रञ्चले गृहीत्वा] अइ असंबद्धभासअ! असंभावणीए (फ) कुप्पसि ? *

शर्वि। कथमसम्भावनीयं नाम ?

मद। एसो क्खु अलंकारओ अज्जआकेरओ। †

शर्वि। ततः किम् ?

मद। स च तस्स अज्जस्स हत्थे विणिक्खित्तो। ‡

शर्वि। किमर्थम् ?

मद। [कर्णे] एव्वं विअ। § (ब)

शर्वि। [सवैलक्ष्यम्] (भ) भोः! कष्टम्,—

छायार्थं ग्रीष्मसन्तप्तो यामेवाहं समाश्रितः।
अजानता मया सैव पत्रैः शाखा वियोजिता॥ १८॥

* अयि असम्बद्धभाषक! असम्भावनीये कुप्यसि ?

† एष खलु अलङ्कारः आर्य्यासम्बन्धी।

‡ स च तस्य आर्य्यस्य हस्ते विनिक्षिप्तः। § एवमिव।

(फ). असम्बद्धभाषक! - असङ्गतप्रलापिन्! असम्भावनीये - सम्भावनाया अयोग्ये, [अत्र कुपधातोः प्रयोगे चतुर्थीप्राप्तौ विवक्षिता सप्तमी]।

(ब) एवमिवेति।—वसन्तसेना चारुदत्ते बद्धानुरागा स च निर्द्धनः, अतः निर्द्धनचारुदत्तः वसन्तसेनानुरागं विदित्वाऽपि स्वयं तत्समीपे नागन्तुं प्रभवति, वसन्तसेना च तद्दर्शनाभिलाषिणी, एतत्प्रसङ्गेन उभयोः असकृत् साक्षात्कारः सम्भवेदिति मनसिकृत्य अलङ्कारोऽयं वसन्तसेनया तत्समीपे न्यासव्याजेन रक्षित इति रहस्यार्थः।

(भ) सवैलक्ष्यं—सलज्जम्. एवं निर्द्धनस्य गृहे मया चौरितमिति लज्जाहेतुः।

मदनिकार्थमेवमकार्य्यमनुतिष्ठन् शर्व्विलकः अजानन् वसन्तसेनाया एव अनभिलषितमाचरन् अनुतपति. छायार्थमिति।— अहं—शर्विलकः, ग्रीष्मसन्तप्तः,—निदाघपीड़ितः सन्, छायार्थम्—अनातपलाभार्थं, यामेव—शाखामित्यर्थः, समाश्रितः,—अवलम्बितवान्, मया अजानता—अनभिज्ञेन सता. सा एव—आश्रयीभूतेत्यर्थः, शाखा पत्रैः,—पल्लवैः. वियोजिता—वियुक्तीकृता, पत्रशून्या कृतेत्यर्थः। अत्र ग्रीष्मसन्तप्तेन छायार्थमाश्रितशाखायाः स्वयं पत्रशातनरूपादप्रस्तुतात् मदनानलसन्तप्तस्य शर्विलकस्य

वस। कधं! एसोवि संतप्पदि ज्जेव्व!! ता अजाणंतेण एदिणा एव्वं अणुचिट्ठिदं। *

शर्वि। मदनिके! किमिदानीं युक्तम्?

मद। एत्थ तुमं ज्जेव्व पंडिश्रो। †

शर्वि। नैवम्। पश्य,—

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः।
पुरुषाणान्तु पाण्डित्यं शास्त्रैरेवोपदिश्यते॥ १८॥

मद। सव्विलश्र! जइ मम वश्रणं सुणीश्रदि, ता तस्स ज्जेव्व महाणुभावस्स पड़िणिज्जादेहि। ‡ (म)

* कथम्! एषोऽपि सन्तप्यते एव!! तत् अजानता एतेन एवमनुष्ठितम्।

† अत्र त्वमेव पण्डितः।

‡ शर्विलक! यदि मम वचनं श्रूयते, तदा तस्यैव महाऽनुभावस्य प्रतिनिर्य्यातय।

मदनिकालाभार्थमाश्रिताया वसन्तसेनाया न्यासीभूतालङ्कारापहरणरूपप्रस्तुतावगतेरप्रस्तुत-प्रशंसा नामालङ्कारः। पथ्यावक्त्रं वृत्तम्॥ १८॥

उपस्थितसमस्यायां मदनिकाया एव उपायनिर्द्धारकत्वं व्यवस्थापयितुं स्त्रीबुद्धे-र्निसर्गत्वमतमाह, स्त्रिय इति।—एताः स्त्रियः,—रमण्यः, निसर्गात्—स्वभावात्, एव पण्डिताः,—विदुष्यः, निपुणा इत्यर्थः, नाम - सम्भावनायां, पण्डिता इति सम्भा-वयामीत्यर्थः; पुरुषाणान्तु,—पुंसान्तु, पाण्डित्यं—नैपुण्यं शास्त्रैः—शास्त्रदर्शनैरेव, न तु स्वत इत्यर्थः, इति उपदिश्यते—कथ्यते विद्वद्भिरिति शेषः; शास्त्रज्ञानेनैव पुरुषेषु आहार्य्यं पाण्डित्यं जायते, रमणीषु तु तन्निसर्गादेव सम्पद्यते इति अतः प्रतिभाशालिनी त्वमेव अत्र उपायनिर्द्धारयित्रीति भावः। पथ्यावक्त्रं वृत्तम्॥ १९॥

(म) मम वचनं श्रूयते—मम वाक्यं प्रमाणत्वेन गण्यते इत्यर्थः। महानुभावस्य —[अनुगतो भावः इति अनुभावः, न त्वनुपूर्व्वाद्भवतेः घञ्, "श्रिणीभुवोऽनुपसर्गे" (३।३।२४ पा०) इति तन्निषेधात्] महान् अनुभावः प्रभावः यस्य तस्य, महाशयस्य वा, चारुदत्तस्येति आशयः, अत्र सम्प्रदाने चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठी, महानुभावायेत्यर्थः। प्रतिनिर्य्यातय—प्रत्यर्पय, इतः प्रत्याहृत्य तत्समीपं गत्वा तस्मै देहि इत्यर्थः। "मम वचनं श्रूयते" इत्यनेन स्वोक्तेः यौक्तिकत्वं व्यज्यते। "त्वामस्मि

शर्वि। मदनिके! यदि असौ राजकुले मां कथयति?

मद। ण चंदादो आदवो होदि। * (य)

वस। साहु, मदणिए! साहु। †

शर्वि। मदनिके!—

न खलु मम विषादः साहसेऽस्मिन् भयं वा,
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम्?।
जनयति मम खेदं कुत्सितं कर्म्म लज्जां,
नृपतिरिह शठानां मादृशां किं नु कुर्य्यात्? ॥ २१ ॥

तथाऽपि नीतिविरुद्धमेतत्, अन्य (र) उपायश्चिन्त्यताम्।

* न चन्द्रादातपो भवति। † साधु मदनिके! साधु।

वर्त्मनि विदुषाम्" इतिवत् मदुक्तं तत्रातीव श्रेयोजनकम्, अतः त्वया ममोपदेशानुरूपम् अवश्यमेव करणीयम् इति मदनिकायाः अभिप्रायः।

(य) चन्द्रात् यथा आतपस्यासम्भवः, तथा चारुदत्तात् राजकुले अभियोग-सम्भावनायाः असम्भवः, इति चन्द्रादातपासम्भवरूपादप्रस्तुतात् चारुदत्तस्य राजकुले अभियोगाभावरूपप्रस्तुतार्थावगतेरप्रस्तुतप्रशंसाऽलङ्कारः।

राजभयात् न तवायमुपदेशः ममारुचिकरः, अपि तु नीतिविगर्हितत्वादेवेत्याह, नेति।—अस्मिन्—उपस्थिते, साहसे - बलकृतकार्य्ये, चौर्य्यरूपे इति यावत्, [ सहसा बलेन कृतमिति साहसं,—"सहसा क्रियते यत्तु तत् साहसमिहोच्यते। अप्रकाशं प्रकाशं वा सही बलमिहोच्यते॥" इति वचनात् ] मम विषादः,—खेदः, कथमिदमकार्य्यं कृतमित्यनुताप इत्यर्थः, वा—अथवा, भयं—भीतिः, राजदण्डादिति शेषः, न खलु —नैव, अस्तीति शेषः त्वं साधोः,—सत्स्वभावस्य, तस्य—चारुदत्तस्य, गुणान्—दयादाक्षिण्यादीन् इत्यर्थः, किमर्थं—किंनिमित्तं, कथयसि?—वर्णयसि? हि—अवधारणे, इदं—मया आचरितं, कुत्सितं—निन्दितं, कर्म्म वा—कार्य्यमेव, चौर्य्यव्यापार एवेति यावत्, "वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः; मम लज्जां—ह्रियं, जनयति—विधत्ते, नु—भोः! इह—अस्मिन् व्यापारे, नृपतिः,—राजा, शठानां—धूर्त्तानां, मादृशां—मत्सदृशजनानां, किं कर्त्तुं शक्नुयात्? न किमपीत्यर्थः। मालिनी वृत्तं,—"न-न-म-य-ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ २०॥

(र) तथाऽपि—मम भयविषादाद्यसत्त्वेऽपि इत्यर्थः। एतत्—स्वयं गत्वा चारु-

मद। सो अअं अवरो उवाओ। *

वस। को क्खु अवरो उवाओ हुविस्सदि? †

मद। तस्स ज्जेव्व अज्जस्स केरओ भविअ एदं अलंकारअं अज्जआए उवणेहि। ‡

शर्वि। एवं कृते किं भवति?

मद। तुमं दाव अचोरो, सो वि अज्जो अरिणो, अज्जआए सकं अलंकारअं उवगदं (ल) भोदि। §

शर्वि। ननु अतिसाहसमेतत्।

मद। अइ! उवणेहि, अण्णधा अदिसाहसं। ¶

वस। साहु मदणिए! साहु, अभुजिस्सए विअ मंतिदं। **

शर्वि। मयाऽऽप्ता महती बुद्धिर्भवतीमनुगच्छता।

निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥२१॥

---

* सोऽयमपर उपायः। † कः खलु अपर उपायो भविष्यति?

‡ तस्यैव आर्य्यस्य सम्बन्धी भूत्वा इममलङ्कारमार्य्यायै उपनय।

§ त्वं तावदचौरः, सोऽपि आर्य्योऽनृणः, आर्य्यया च स्वकः अलङ्कारः उपगतो भवति।

¶ अयि! उपनय, अन्यथा अतिसाहसम्।

** साधु मदनिके! साधु, अभुजिष्ययेव मन्त्रितम्।

---

दत्ताय अस्य अलङ्कारस्य प्रत्यर्पणमित्यर्थः। अन्यः,—अपरः, चारुदत्ताय प्रत्यर्पणभिन्न इति यावत्।

(ल) उपगतः,—प्राप्तः।

मदनिकया पुनः प्रदर्शितस्य उपायस्य सारवत्तां स्वीकुर्व्वाणः शर्व्विलकः तामेव प्रशंसन्नाह, मयेति।—मया—शर्व्विलकेनेत्यर्थः, भवतीं—त्वाम्, अनुगच्छता—अनुसरता सता, महती—उत्कृष्टा, बुद्धिः,—ज्ञानम्, उपदेश इति यावत्, आप्ता—लब्धा, तथा हि,—नष्टचन्द्रायाम्—अस्तमितनिशानाथायाम्, अन्धकारसमाच्छन्नायामित्यर्थः, निशायां—रजन्यां, मार्गदर्शकः,—सत्पथप्रदर्शकः, [ "मार्गदर्शकः" इत्यत्र "हाम दर्शकः" इति पाठान्तरम् ] दुर्लभः,—दुष्प्रापः; किन्तु किंकर्त्तव्यविमूढस्य मम

मद। तेण हि तुमं इमस्सिं कामदेव-गेहे मुहुत्तअं चिठ्ठ, जाव अज्जआए तुह आगमणं णिवेदेमि। *

शर्वि। एवं भवतु।

मद। [वसन्तसेनाम् उपसृत्य] अज्जए! एसो क्खु चारुदत्तस्स सआसादो बम्हणो आअदो। †

वस। हञ्जे! तस्स केरअं त्ति कधं तुमं जाणासि? ‡

मद। अज्जए!. अत्तकेरअं पि ण जाणामि!! §

वस। [स्वगतं सशिरःकम्पं विहस्य] जुज्जदि। [प्रकाशम्] पविसदु। ¶

मद। जं अज्जआ आणवेदि। [उपगम्य] पविसदु सव्विलओ। **

शर्वि। [उपसृत्य सवैलक्ष्यम्]। स्वस्ति भवत्यै।

वस। अज्ज वंदामि, उवविसदु अज्जो। ††

शर्वि। सार्थवाहस्त्वां विज्ञापयति, जर्ज्जरत्वात् गृहस्य दूरस्थमिदं भाण्डम्; तत् गृह्यताम्। [इति मदनिकायाः समर्प्य प्रस्थितः]।

वस। अज्ज! ममावि दाव पड़िसंदेसं तहिं अज्जो णेदु। ‡‡

---

* तेन हि त्वमस्मिन् कामदेवगेहे मुहूर्त्तकं तिष्ठ, यावदार्य्यायै तवागमनं निवेदयामि।

† आर्य्ये! एष खलु चारुदत्तस्य सकाशात् ब्राह्मणः आगतः।

‡ हञ्जे! तस्य सम्बन्धीति कथं त्वं जानासि?

§ आर्य्ये! आत्मसम्बन्धिनमपि न जानामि!!

¶ युज्यते। प्रविशतु।

** यदार्य्या आज्ञापयति। प्रविशतु शर्विलकः।

†† आर्य्य! वन्दे। उपविशतु आर्य्यः।

‡‡ आर्य्य! ममापि तावत् प्रतिसन्देशं तत्र आर्य्यो नयतु।

भवती एव मार्गदर्शिका सुलभेति वैधर्म्येण प्रतीयते, इति वाक्यार्थयोः साम्यस्य प्रणिधानम्यत्वात् वैधर्म्येण दृष्टान्तालङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २१॥

शर्वि। [स्वगतम्] कस्तव यास्यति? [प्रकाशम्] कः प्रतिसन्देशः?

वस। पड़िच्छदु (व) अज्जो मदणिअं। *

शर्वि। भवति! न खलु अवगच्छामि।

वस। अहं अवगच्छामि। †

शर्वि। कथमिव?

वस। अहं अज्जचारुदत्तेण भणिदा, जो इमं अलंकारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा; ता सो ज्जेव्व एदं दे देदि त्ति एव्वं अज्जेण अवगच्छिदव्वं। ‡

शर्वि। [स्वगतम्] अये! विज्ञातोऽहमनया! [प्रकाशम्] साधु, आर्य्य चारुदत्त! साधु,—

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः॥२२॥

---

* प्रतीच्छतु आर्य्या मदनिकाम्।

† अहम् अवगच्छामि।

‡ अहमार्य्यचारुदत्तेन भणिता, य इममलङ्कारं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या; तत् स एव एतां ते ददातीति एवमार्य्येण अवगन्तव्यम्।

(व) प्रतीच्छतु—गृह्णातु।

स्वाभिमतानुरूपं स्वत एवार्य्यचारुदत्तेन व्यवस्थापितमिति शृण्वन् आनन्दाप्लुतहृदयः शर्व्विलकः तस्य गुणवत्तां ख्यापयन्नाह, गुणेष्वेवेति।—पुरुषैः,—लोकैः, गुणेषु—औदार्य्यादिषु, एव सदा—नित्यं, हि—निश्चयेन, प्रयत्नः,—प्रयासः, गुणवान् भवितुं प्रकृष्टोद्यमः इत्यर्थः, कर्त्तव्यः,—विधातव्यः; गुणयुक्तः,—गुणवान्, दरिद्रोऽपि—धनहीनोऽपि, अगुणैः—गुणहीनैः, ईश्वरैः,—धनिभिः, समः,—तुल्यः, न, भवतीति शेषः; धनिभ्यो हि गुणवान् श्रेष्ठ इति भावः। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः; न चात्र काव्यलिङ्गमेवास्तु इति वाच्यं, पूर्व्ववाक्यार्थं प्रति परवाक्यार्थस्यानिष्पादकतया अत्र काव्यलिङ्गस्य अविषयत्वात्, निष्पादकहेतुतास्थल एव तस्य विषयादिति दिक्॥ २२॥

अपि च,—

गुणेषु यत्नः पुरुषेण कार्य्यो न किञ्चिदप्राप्यतमं गुणानाम्।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥२३॥

वस। को ऽत्थ पवहणिओ ? * (अ)

चेटः। [ सप्रवहणः प्रविश्य ] अज्जए ! सज्जं पवहणं। †

वस। हञ्जे मदणिए ! सुदिट्ठं मं करेहि, दिण्णासि, आरुह पवहणं, सुमरेसि मं। ‡ (ब)

मद। [ रुदती ] परिच्चत्तम्हि अज्जआए। § (स)

[ इति पादयोः पतति ]।

* कोऽत्र प्रवहणिकः ? † आर्य्ये ! सज्जं प्रवहणम्।
‡ हञ्जे मदनिके ! सुदृष्टां मां कुरु, दत्ताऽसि, आरोह प्रवहणं, स्मरसि माम्।
§ परित्यक्ताऽस्मि आर्य्यया।

उक्तामेवास्य गुणवत्तां पुनरपि विशेषयन्नाह, गुणेष्विति।—पुरुषेण—जनेन, गुणेषु—दयादाक्षिण्यादिषु, यत्नः,—उद्यमः कार्य्यः,—विधातव्यः, किञ्चिदपि—किमपि वस्तु, गुणानां—दयादाक्षिण्यादिरूपाणामित्यर्थः, अप्राप्यतमम्—अतिदुष्प्रापं, न. अस्तीति शेषः, तथा हि,—उडुपेन—तारापतिना, चन्द्रेण इत्यर्थः, ("नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः) गुणप्रकर्षात्—गुणातिशय्यात्, अलङ्घ्य—लङ्घितुमशक्यं, केनापि न लङ्घितपूर्व्वमित्यर्थः [ "अलङ्घ्यमुल्लङ्घितम्" इत्यत्र "अलङ्घितं लङ्घितम्" इति पाठान्तरेऽपि स एवार्थः ] शम्भोः,—हरस्य, उत्तमाङ्गं—शिरः, ("उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः) उल्लङ्घितं—समाक्रान्तम्। अत्र गुणप्रकर्षात् चन्द्रकर्त्तृकहरशिरोलङ्घनरूपेण विशेषेण गुणशालिनः पुरुषस्य सकलकार्य्यक्षमत्वरूपसामान्यस्य समर्थनात् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। उपेन्द्रवज्रा वृत्तम् ॥ २३ ॥

(अ) प्रवहणिकः,—कर्णीरथचालकः, सारथिरित्यर्थः, शिविकावाहीत्यर्थो वा।

(ब) सुदृष्टां मां कुरु—मयि सम्यक् प्रसन्नदृष्टिं निपातय, तव पुनर्दर्शनस्य दुर्लभत्वात्. यतोऽहं वेश्या, त्वं पुनः गार्हस्थ्यधर्म्मावलम्बिनीति भावः। दत्ताऽसि—विवाहविधिना परहस्तं गमिताऽसीत्यर्थः। [ "सुमरेसि" इत्यत्र "सुमरेहि" इति पाठे "स्मरिष्यसि" इति संस्कृतम् ; एतदेव साधु मन्ये, एवम् उत्तरत्र ]।

(स) "परिच्चत्तम्हि" इत्यत्र "परिब्भट्ठम्हि" इति पाठान्तरे "परिच्युताऽस्मि"

वस। संपदं तुमं ज्जेव्व वंदणीआ संवुत्ता ; (ह) ता गच्छ, आरुह पवहणं, सुमरेसि मं। *

शर्वि। स्वस्ति भवत्यै। मदनिके!—

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥२४॥

[ इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः ( क ) ]।

[ नेपथ्ये ] कः कोऽत्र भोः! राष्ट्रियः समाज्ञापयति,—"एष

* साम्प्रतं त्वमेव वन्दनीया संवृत्ता ; तत् गच्छ, आरोह प्रवहणं, स्मरसि माम्।

इति संस्कृतम्। अस्मिन् पचे "अज्जआए" इत्यस्य "आर्य्यायाः" इति पचे ... कल्पनीयम्।

( ह ) भुजिष्यात्वमपहाय ब्राह्मणगामितया ब्राह्मणकलत्रपदवाच्यत्वात् मदनिकायाः वन्दनीयत्वम् ; वसन्तसेनायास्तु एकनायकत्वेऽपि वेश्यापदवाच्यत्वान्न तथेति समुदिताशयः।

वसन्तसेनाप्रसादात् प्राप्ताभीष्टः तस्यै कृतवेदित्वं विज्ञापयितुं मदनिकामादिशन्नाह, सुदृष्ट इति।—एषः,—दृश्यमानः, जनः,—वसन्तसेनारूपः सुदृष्टः—प्रसन्नावलोकितः, क्रियतां—विधीयतां, तथा शिरसा—मस्तकेन, शिरोनमनपूर्व्वकमित्यर्थः, वन्द्यतां—स्तूयतां, सविनयमभिवाद्यतामिति यावत् ; यत्र—जने अनुकम्पमाने सति इति शेषः, [ हेतावाधारविवक्षयैव वाऽत्र सप्तमी ] ते—तव, [ कर्त्तुः शेषत्वविवक्षया षष्ठी ] दुर्लभम्—अप्राप्यं, वेश्याभुजिष्यात्वादिति भावः वधूशब्दावगुण्ठनं—वधूशब्दः,—वधूशब्दवाच्यत्वरूपम् एव, अवगुण्ठनम्—आवरणं, यद्वा—वधूशब्दावगुण्ठनं—वधूशब्देन सह अवगुण्ठनं, वधूशब्दम् अवगुण्ठनञ्चेत्यर्थः ; वधूनामेव हि परपुरुषानवलोकनीयत्वात् इति भावः, प्राप्तं—लब्धम् ; त्वं पूर्व्वं वेश्यावासित्वात् साधारणी आसीः, इदानीं मया परिणीता एकपत्नीव्रता अभूरिति भावः। [ "यत्रैते........वधूशब्दावगुण्ठने" इति पाठस्तु साधुतरः इति केचित् ; तत्र वधूशब्दश्च अवगुण्ठनञ्च इति द्वन्द्वः ]। अत्र पूर्व्वार्द्धगतवाक्यार्थं प्रति परार्द्धगतवाक्यार्थस्य हेतुतया काव्यलिङ्गमलङ्कारः, तथा उपदेशनं नाम नाट्यालङ्कारश्च ; यथा दर्पणे,—"शिक्षा स्यादुपदेशनम्" इति। पथ्यावक्त्रं वृत्तम् ॥ २४ ॥

( क ) प्रवृत्तः,—आरब्धवान्, [ अत्र प्रवृत्तेरादिकर्म्मणि निष्ठा ]।

खलु आर्य्यको गोपालदारको राजा भविष्यतीति सिद्धादेश-प्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे बन्धनागारे बद्धः, ततः स्वेषु स्वेषु स्थानेषु अप्रमत्तैर्भवद्भिर्भवितव्यम्"। (ख)

शर्वि। [आकर्ण्य] कथम्! राज्ञा पालकेन प्रियसुहृदार्य्यको मे बद्धः!! कलत्रवांश्चास्मि संवृत्तः। आः कष्टम्! अथवा, (ग)—

द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च।
सम्प्रति तु सुन्दरीणां शतादपि सुहृद् विशिष्टतमः॥२५॥

भवतु, अवतरामि। [इत्यवतरति]।

(ख) राष्ट्रियः,—राष्ट्रपालः, नगररक्षायां नियुक्तः राजपुरुष इत्यर्थः। गोपाल-दारकः,—गोपसुतः। सिद्धादेशेति।—सिद्धानां—सिद्धपुरुषाणां, यः आदेशः,—आज्ञावाक्, तस्मिन् यः प्रत्ययः,—विश्वासः, तस्मात् परित्रस्तः,—भीतः तेन। घोषात् —आभीरपल्ल्याः, ["घोष आभीरपल्ली स्यात्" इत्यमरः। "घोषात्" इत्यत्र "गोष्ठात्" इति पाठान्तरं, गोष्ठात्—गोचारणस्थानात्, "गोष्ठं गोस्थानकम्" इत्यमरः]। घोरे— भयङ्करे। बद्धः —निक्षिप्तः. ["बद्धः" इत्यत्र "क्षिप्तः" इति पुस्तकान्तरसम्मतः पाठः] स्वेषु स्वेषु—स्वस्वाधिकृतेष्वित्यर्थः। अप्रमत्तैः,—अवहितैः।

(ग) कलत्रवान्—सस्त्रीकः, नवपरिणीता भार्य्या मे समीपे वर्त्तते इत्यर्थः। आः कष्टम्!—सुहृत्-कलत्रयोरुभयोरेव प्रियत्वात् अवश्यरक्षणीयत्वाच्च एकाकिनीमिमां पत्नीं परित्यज्य सुहृत्साहाय्यार्थं कथं यामीति मनसिकृत्य उक्तम् आः! कष्टमिति। सुहृद्व्यसने दारा अपि उपेक्षणीया इति विचार्य्य पुनरपि पक्षान्तरमाश्रयति,—अथवेति।

सुहृत्कलत्रयोरुभयोरेव प्रियतमत्वेऽपि स्वस्मात् कलत्रात् विपन्नः सुहृदेव विशेषतः रक्षणीय इत्याह द्वयमिति।—नराणां—मनुष्याणां, सुहृच्च—मित्रञ्च,वनिता च—रमणी च,(प्रियत्वे उभयोरेव प्राधान्यद्योतनार्थं चकारद्वयम्) इदम्—उक्तरूपं,द्वयं लोके—जगति, अतीव प्रियं—प्रीतिकरं, तु—किन्तु, सम्प्रति—इदानीं, सुहृद एतादृशविपत्तिसमये इत्यर्थः, सुहृत्—मित्रं, सुन्दरीणां—सौन्दर्य्यसम्पन्नानां नारीणामित्यर्थः (अपरि-हार्य्यत्वख्यापनार्थं रमण्यर्थे सुन्दरीति पदं प्रयुक्तम्) शतादपि—शतसङ्ख्याया अपीत्यर्थः, विशिष्टतमः,—अधिकप्रिय इत्यर्थः, ईदृशावस्थायां सर्व्वथा मित्रसाहाय्यमेव अवश्यकर्त्तव्यमिति भावः। अत्र आश्रयो नाम नाट्यालङ्कारः, यथा,—"ग्रहणं गुणवत् कार्य्यहेतोराश्रय उच्यते" इति। आर्य्या वृत्तम्॥ २५॥

मद। [सासमञ्जलिं बद्धा] एव्वं णेदं; ता परं (घ) णेदु मं अज्जउत्तो समीवं गुरुअणाणं। *

शर्वि। साधु,प्रिये! साधु; अस्मच्चित्तसदृशमभिहितम्। [चेटमुद्दिश्य] भद्र! जानीषे रेभिलस्य सार्थवाहस्य उदवसितम्? (ङ)

चेटः। अधइं। †

शर्वि। तत्र प्रापय (च) प्रियाम्।

चेटः। जं अज्जो आणवेदि। ‡

मद। जधा अज्जउत्तो भणादि। अप्पमत्तेण दाव अज्जउत्तेण होदव्वं। § [इति निष्क्रान्ता]।

शर्वि। अहमिदानीम्,—

ज्ञातीन्, विटान्, स्वभुजविक्रमलब्धवर्णान्
राजापमानकुपितांश्च नरेन्द्रभृत्यान्।
उत्तेजयामि सुहृदः परिमोक्षणाय
यौगन्धरायण इवोदयनस्य राज्ञः ॥२६॥

* एवमेतत्; तत् परं नयतु माम् आर्य्यपुत्त्रः समीपं गुरुजनानाम्।

† अथ किम्। ‡ यदार्य्य आज्ञापयति।

§ यथा आर्य्यपुत्त्रो भणति। अप्रमत्तेन तावदार्य्यपुत्त्रेण भवितव्यम्।

(घ) तत्—तस्मात्, परम्—अतःपरम्।

(ङ) उदवसितम्—आवासं, गृहमित्यर्थः, ("गृहगेहोदवसितम्" इत्यमरः)।

(च) तत्र—रेभिलस्य गृहे। प्रापय—नय।

श्रुतसुहृद्बन्धनवृत्तः शर्व्विलकः सम्प्रति सुहृन्मोक्षोपायं निर्द्धारयन्नाह, ज्ञातीनिति। —उदयनस्य राज्ञः,—वत्सराजस्य नृपतेः, यौगन्धरायणः,—तदाख्यः प्रधानामात्य इव, सुहृदः,—मित्रस्य, आर्य्यकस्येत्यर्थः, परिमोक्षणाय—कारामोचनार्थं, ज्ञातीन्—स्वगोत्रजान्, विटान्—पूर्वोक्तलक्षणान् धूर्त्तान्, तथा स्वभुजविक्रमेण—निजबाहुबलेन, लब्धवर्णान्—प्राप्तयशसः ("वर्णो द्विजातिशुक्लादियशोगुणकथासु च" इति मेदिनी) अथवा,—स्वभुजविक्रमेण—स्वबाहुविक्रमप्रकाशेन, लब्धवर्णान्—

अपि च,—

प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः।
सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥२७॥

[ इति निष्क्रान्तः ]।

चेटी। [ प्रविश्य ] अज्जए! दिट्ठिआ वड्ढसि; अज्जचारुदत्तस्स सआसादो बम्हणो आअदो। *

* आर्ये! दिष्ट्या वर्द्धसे, आर्य्यचारुदत्तस्य सकाशात् ब्राह्मणः आगतः।

विचक्षणान् ("लब्धवर्णो विचक्षणः" इत्यमरः) तथा राजापमानकुपितान्—राज्ञः,—पालकस्य, अपमानेन—अवज्ञया, राजकर्त्तृकावज्ञया इत्यर्थः, कुपितान्—मनसि जातक्रोधानित्यर्थः, नरेन्द्रभृत्यान्—राजपुरुषान्, उत्तेजयामि—तत्तत्कारणं प्रदर्श्य तेषाम् अन्तःकोपमुद्दीपयामि, तान् भेदयामि इति यावत्। पुरा किल उदयनो नाम वत्सराजः उज्जयिनीपतिना राज्ञा चन्द्रसेनेन कुतश्चित् कारणात् कारायां निक्षिप्तः। अथ तत्सचिवः यौगन्धरायणः स्वबुद्धिकौशलेन तस्य राज्ञः प्रकृतिकोपमुत्पाद्य स्वामिनं ततो मोचयामास इति पौराणिकी कथाऽत्रानुसन्धेया। अत्र यौगन्धरायण-शर्व्विलकयोः राज-आर्य्यकयोश्च परस्परमवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥२६॥

पुनरपि उपायान्तरमुद्भावयन्नाह, प्रियेति।—अकारणे—कारणाभावे सत्यपि, विना हेतुम् इत्यर्थः, (केवलसिद्धपुरुषादेशेनेति मन्तव्यम्), आहिता—स्थापिता, आत्मनि—स्वस्मिन्, शङ्का—भयं यैः तैः, असाधुभिः,—दुःशीलैः, रिपुभिः,—शत्रुभिः, गृहीतं—धृतम्, अवरुद्धमित्यर्थः, अत एव राहुमुखे—राहुकवले इत्यर्थः, शशाङ्कबिम्बं—चन्द्र-मण्डलमिव, स्थितं, प्रियसुहृदम्—आर्य्यकं, सरभसं—सवेगं यथा स्यात् तथा, ("रभसो वेगहर्षयोः" इति मेदिनी) अभिपत्य—गत्वा, रक्षिवर्गम् आक्रम्येत्यर्थः, मोचयामि—मुक्त-बन्धनं करोमीत्यर्थः। अत्र राहुमुखप्रविष्टचन्द्रमण्डलमोचनेन राजकाराकद्धार्य्यकापरि-रक्षणस्यावैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः। पुष्पिताग्रा वृत्तम्,—"अयुजि नयुग-रेफतो यकारो, युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ २७ ॥

वस। अम्मो! रमणीअदा अज्ज दिवसस्स। ता हञ्जे! सादरं बंधुलेण (क्ष) समं पवेसेहि णं। *

चेटी। जं अज्जआ आणवेदि। † [इति निष्क्रान्ता विदूषक-बन्धुलाभ्यां सह पुनः प्रविशति]।

विदू। ही, ही, भोः! तवच्चरणकिलेसविणिज्जिदेण रक्खस-राआ रावणो पुप्फकेण विमाणेण गच्छदि; अहं उण बम्हणो अकिदतवच्चरणकिलेसो वि णअरणारीजणेण (ज) गच्छामि। ‡

चेटी। पेक्खदु अज्जो अम्हकेरकं गेहदुआरं। §

विदू। [अवलोक्य सविस्मयम्] अम्मो! सलिलसित्तमज्जिदकिद-हरिदोवलेवणस्स, विविह-सुअंधिकुसुमोवहार-चित्तलिहिदभूमि-

* अहो! रमणीयता अद्य दिवसस्य। तत् हञ्जे! सादरं बन्धुलेन समं प्रवेशयैनम्।

† यदार्य्या आज्ञापयति।

‡ आश्चर्य्यं भोः! तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति, अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नगरनारीजनेन गच्छामि।

§ प्रेक्षतामार्य्योऽस्मदीयं गेहद्वारम्।

¶ अहो! सलिलसिक्त-मार्जित-कृत-हरितोपलेपनस्य, विविध-सुगन्धि-कुसुमोपहार-

(क्ष) अत्र "अज्ज" इत्यत्र "अस्स" इति पाठे "अस्य" इति संस्कृतम्, अयमेव पाठः साधीयान्। बन्धुलेन—"परगृहललिताः परान्नपुष्टाः" इति वक्ष्यमाणलक्षण-पुरुषविशेषेण, (एतदङ्कगताष्टाविंशतिश्लोकनिर्द्दिष्टेन)।

(ज) तपश्चरणक्लेशविनिर्जितेन—तपश्चरणेन—तपोऽनुष्ठानेन, यः क्लेशः,—कष्टं, तेन विनिर्ज्जितम्—अधिकृतं तेन, तपसा लब्धेनेत्यर्थः। पुष्पकेण—पुष्पकाख्येन, विमानेन—व्योमयानेन, आकाशगमनसाधनेन पुष्पकाख्यरथेनेत्यर्थः, ("व्योमयानं विमानोऽस्त्री" इत्यमरः)। नगरनारीजनेन—नगरनारी—साधारणनागरिकभोग्या स्त्री, वेश्या इत्यर्थः, सा एव जनः तेन। अत्र उपमानीभूतात् रावणात् उपमेयीभूतस्य आत्मनः उत्कृष्टत्वकथनात् व्यतिरेकालङ्कारो बोद्धव्यः; तल्लक्षणं दर्पणे,—"आधिक्य-मुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेकः,—" इति।

भाअस्स, गअणतलालोअण-कोदूहल-दूरुण्णामिदसीसस्स, दोलाअमाणावलंबिदैरावणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स, समुच्छिददंतिदंततोरणावभासिदस्स, महारअणोवराअ-सोहिणा पवणबलंदोलणा-ललंतचंचलग्गहत्थेण "इदो एहि" त्ति वाहरंतेण विअ मं सोहग्गपड़ाआणिवहेणोवसोहिदस्स, तोरणधरणत्थंभ-वेदिआणिक्खित्त-समुल्लसंतहरिदचूदपल्लव-ललाम-फटिअ-मंगल-कलसाभिरामोहअपास्सस्स, महासुरवक्खत्थल-दुब्भेज्जवज्जणिरंतरपडिबद्धकणअकवाड़स्स, दुग्गदजणमणोरहाआसअरस्स, वसंतसेणाभवणदुआरस्स सस्सिरीअदा !! जं सच्चं, मज्झत्थस्स वि जणस्स बलाहिट्ठिं आआरेदि। ¶ (झ)

चित्रलिखितभूमिभागस्य, गगनतलालोकनकौतूहलदूरोन्नमित-शीर्षस्य, दोलायमानावलम्बितैरावणहस्त-भ्रमायित-मल्लिकादामगुणालङ्कृतस्य, समुच्छ्रितदन्तिदन्ततोरणावभासितस्य, महारजनोपरागशोभिना पवनबलान्दोलना-ललच्चञ्चलाग्रहस्तेन "इत एहि" इति व्याहरतेव मां सौभाग्यपताका-निवहेनोपशोभितस्य, तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लव-ललाम-स्फटिक-मङ्गलकलसाभिरामोभयपार्श्वस्य, महासुरवक्षःस्थलदुर्भेद्य-वज्र-निरन्तरप्रतिबद्ध-कनक-कपाटस्य, दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता !! यत् सत्यं, मध्यस्थस्यापि जनस्य बलात् दृष्टिमाकारयति।

(झ) सलिलेत्यादि।—सलिलेन—जलेन, सिक्तम्—आर्द्रीकृतं, मार्जितं—मार्जनीभिः परिष्कृतम्, अनन्तरं, कृतं—विहितं, हरितोपलेपनं—हरिद्वर्णरञ्जनविशिष्टगोमयोपलेपः यत्र तादृशस्य; विविधानां—नानाप्रकाराणां, सुगन्धीनां,—सुरभीणां, कुसुमानाम् उपहारैः,—पुष्परचनाभिः, चित्रलिखित इव—आलेख्याङ्कित इव, भूमिभागः यस्य तादृशस्य, ["भूमिआभागस्स" इति पाठे "भूमिकाभागस्य" इति संस्कृतम्] गगनतलस्य—आकाशस्य, आलोकनाय—दर्शनाय इत्युत्प्रेक्षा, यत् कौतूहलम्—औत्सुक्यं, तेन दूरं यथा तथा उन्नमितम्—उत्क्षिप्तं, शीर्षं—शिरोभागः यस्य तथोक्तस्य; दोलायमानः,—इतस्ततश्चलन् अत एव अवलम्बितः,—अधोलम्बितः, ऐरावणहस्तभ्रमायितः,—ऐरावतशुण्डभ्रमजनकः, ("ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः) यः मल्लिकादामगुणः,—मल्लिकापुष्पमाला, तेन

चेटी। एदु एदु अज्जो, इमं पढमं पओट्ठं पविसदु अज्जो। *

विदू। [प्रविश्यावलोक्य च]। ही, ही, भोः! इधो वि पढमे पओट्ठे ससि-संख-मुणालसच्छाओ, विणिहिद-चुण्णमुट्ठिपाण्डुराओ, विविहरअणपड़िबद्धकंचणसोवाणसोहिदाओ, पासादपंतिओ ओलंबिदमुत्तादामेहिं फटिअवादाअणमुहचंदेहिं

* एतु एतु आर्य्यः, इमं प्रथमं प्रकोष्ठं प्रविशतु आर्य्यः।

† आश्चर्य्यं भोः! इहापि प्रथमे प्रकोष्ठे शशि-शङ्ख-मृणालसच्छायाः विनिहितचूर्णमुष्टिपाण्डुराः, विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः, प्रासादपङ्क्तयः अवलम्बित-

अलङ्कृतस्य—शोभितस्य। समुच्छ्रितेन—समुन्नतेन, दन्तिदन्ततोरणेन—हस्तिदन्तनिर्म्मितवहिर्द्वारेण अवभासितस्य—विराजितस्य। महारजनं—कुसुम्भपुष्पं, स्वर्णं वा तस्य, ("महारजनं कुसुम्भे स्वर्णे" इति हेमचन्द्रः) उपरज्यते अनेनेति उपरागः,—वर्णः, तेन शोभिना,["महारअणोवराअसोहिणा" इति प्राकृतस्य "महारत्नोपरागशोभिना" इति संस्कृतं केचित् पठन्ति] पवनबलेन—वातवेगेन, या आन्दोलना—इतस्ततः सञ्चालनं, तया ललन्—कम्पमानः, चञ्चलः अग्रहस्तः,—हस्ताग्रं यस्य तेनेव स्थितेनेत्यर्थः, व्याहरतेव—वदतेव, सौभाग्याय—सुमङ्गलाय, पताकानां—ध्वजानां, निवहः,—समूहः, तेन उपशोभितस्य—विराजितस्य,तोरणधरणाय—वहिर्द्वारावलम्बनाय ("तोरणोऽस्त्री वहिर्द्वारम्" इत्यमरः) ये स्तम्भाः,—स्थूणाः, तेषां वेदिकाः,—तलस्थवद्धप्रदेशाः इत्यर्थः, तासु निक्षिप्ताः,—स्थापिताः, समुल्लसन्तः,—दीप्यमानाः, हरिताः —पालाशवर्णाः, हरिद्वर्णाः इत्यर्थः, ("पालाशो हरितो हरित्" इत्यमरः) ये चूतपल्लवाः,—आम्रपल्लवाः, ते एव ललामाः,—भूषणानि येषां ते तथोक्ताः, स्फटिकाः,—स्फटिकनिर्म्मिताः, ये मङ्गलकलसाः,—माङ्गलिकपूर्णकुम्भाः, तैः अभिरामं—रमणीयम्, उभयपार्श्वं यस्य तथाभूतस्य, महाऽसुरस्य—हिरण्यकशिपोः, वक्षःस्थलम्—उरोदेश इव, दुर्भेद्यं—भेत्तुमशक्यं, वज्रेण—हीरकनिर्म्मितकीलविशेषेण, निरन्तरं—निविड़ं यथा तथा, प्रतिबद्धं—ग्रथितं, कनककपाटं—स्वर्णमयाररं ("कपाटमररं तुल्ये" इत्यमरः) यत्र तथोक्तस्य, तथा दुर्गतानां—दरिद्राणां, जनानां—मानवानां, मनोरथस्य—अभिलाषस्य, यः आयासः,—परिश्रमः, तं करोतीति तस्य। सश्रीकता—सौन्दर्य्यम्। मध्यस्थस्य—उदासीनस्य, विषयनिस्पृहस्येति यावत्। आकारयति—आह्वयति, आकर्षतीति यावत्; वसन्तसेनाया तोरणद्वारस्य एतादृशी रमणीयता, या निस्पृहाणां विषयोपरतानामपि दृष्टिं बलपूर्व्वकम् आकर्षतीति भावः।

णिज्झाअंती विअ उज्जइणिं। सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि दोवारिओ। सदहिणा कलमोदणेण पलोहिदा ण भक्खंति वायसा बलिं सुधासवण्णदाए। (ञ) आदिसदु भोदी। †

चेटी। एदु एदु अज्जो। इमं दुदिअं पओट्ठं पविसदु अज्जो। *

विदू। [ प्रविश्यावलोक्य च ] ही, ही, भोः! इधो वि दुदिए पओट्ठे पज्जंतोवणीदजवसबुसकवलसुपुट्ठा तेल्लब्भंगिदविसाणा बद्धा पवहणबइल्ला। अअं अण्णदरो अवमाणिदो विअ कुलीणो दीहं णीससदि सेरिहो। इदो अ अवणीदजुज्झस्स मल्लस्स

---

मुक्तादामभिः स्फटिकवातायन-मुखचन्द्रैर्निध्यायन्तीव उज्जयिनीम्। श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः। सदध्ना कलमौदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया। आदिशतु भवती।

* एतु एतु आर्य्यः। इमं द्वितीयं प्रकोष्ठं प्रविशतु आर्य्यः।

† आश्चर्य्यं, भोः! इहापि द्वितीये प्रकोष्ठे पर्य्यन्तोपनीत-यवस-वुष-कवल-सुपुष्टाः, तैलाभ्यक्तविषाणाः बद्धाः प्रवहणबलीवर्दाः। अयमन्यतरोऽवमानित

---

(ञ) शशीयादि।—शशिनः,—चन्द्रस्य, शङ्खस्य—तन्नामप्रसिद्धशुभ्रद्रव्यस्य, मृणालस्य—विसस्य च, समाना छाया—कान्तिः यासां ताः, [ "समानस्य—" (६।३।८४ पा० ) इति सूत्रे समानस्येति योगविभागेन सकारादेशः। "छाया सूर्य्यप्रिया कान्तिः प्रतिविम्बमनातपः" इत्यमरः ] विनिहिताः,—अर्पिताः, लिप्ता इत्यर्थः, ये चूर्णमुष्टयः,—मुष्टिपरिमिताः चूर्णाः, तैः पाण्डुराः,—शुभ्रवर्णाः। निध्यायन्ति इव—निरीक्षन्ते इव, [ निपूर्व्वकस्य ध्यायतेर्दर्शनार्थकत्वात् ]। श्रोत्रियः,—छान्दसः, वेदनिष्ठः ब्राह्मण इत्यर्थः। सदध्ना—दधियुक्तेन। कलमस्य—धान्यविशेषस्य, यत् ओदनम्—अन्नं तेन, [ "कलमोदणेण" इत्यत्र "फलमोदणेण" इति पाठे,—"फल-मोदकेन" इति संस्कृतम् ]। बलिः,—निवेदितन्यः तम्। सुधासवर्णतया—चूर्णसमानवर्णतया। अत्र अत्यन्तशुभ्रतासाम्यात् बलिषु वायसानां चूर्णभ्रमात् भ्रान्तिमानलङ्कारः।

विश्र महीश्रदि गीवा मेसस्म। इदा इदो श्रन्नाणं श्रस्साण केसकप्पणा करीश्रदि। श्रश्रं श्रवरो पाड्च्चरा विश्र दिढ़वद्धो मंदुराए साहामिश्रो। ( ट ) [ अन्यतोऽवलोक्य च ] इदो श्र कूरच्चुश्रतेल्लमिस्सं पिंडं हत्थी पड़िच्छावीश्रदि मेत्थपुरिसेहिं। ( ठ ) आदिसदु भोदो। †

---

इव कुलीनो दीर्घं निश्वसिति सैरिभः। इतश्च अपनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य। इत इतोऽपरेषाम् अश्वानां केशकल्पना क्रियते। अयमपरः पाटच्चर इव दृढ़-बद्धो मन्दुरायां शाखामृगः। इतश्च कूरच्युततैलमिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः। आदिशतु भवती।

---

( ट ) पर्य्यन्तेत्यादि।—पर्य्यन्तेषु—प्रान्तसीमासु, उपनीतानि—पुञ्जीकृतानि, यानि यवसानि—तृणानि, तथा बुषाणि—धान्यत्वचः, ("यवसं तृणमर्जुनम्" इति "कडङ्गरो बुषं क्लीवे धान्यत्वचि पुमांस्तुषः" इति चामरः) तेषां कवलैः,—ग्रासैः, सुपुष्टाः,—सुखेन वर्द्धिताः, स्थूलदेहा इत्यर्थः; तैलेन—स्नेहपदार्थेन, अभ्यक्तानि—लिप्तानि, विषाणानि—शृङ्गाणि येषां ते; प्रवहणस्य—रथविशेषस्य, (चालनार्थं) बलीवर्द्दाः,—पुङ्गवविशेषाः। अन्यतरः,—द्वयोर्मध्ये एकः, कुलीनः,—सत्कुलोत्पन्नः पुरुषः, पक्षे,—कौ—पृथिव्यां, लीनः,—निषण्ण इत्यर्थः। सैरिभः,—महिषः। निश्वसिति—निश्वासत्यागेन दुःखं प्रकाशयति, गवां यत्नदर्शनात् ईर्ष्ययेवेति भावः। केश-कल्पना—केशानां -ग्रीवावर्त्तिनां लोम्नां, कल्पना—रचना, सज्जना इत्यर्थः, ("कल्पना सज्जना समे" इत्यमरः)। पाटच्चरः,—तस्करः, ("प्रतिरोधिपरास्कन्दिपाटच्चरमलि-म्लुचाः" इत्यमरः)। मन्दुरायाम्—अश्वशालायां, ("वाजिशाला तु मन्दुरा" इत्यमरः)। शाखामृगः,—वानरः। (अश्वशालायां वानरावस्थितौ अश्वानां रोगनाशो भवतीति अश्वशास्त्रोक्तिः)।

( ठ ) कूरच्युततैलमिश्रं—कूरात्—द्रव्यविशेषात्, च्युतं—निःसृतं, यत् तैलं—स्नेहपदार्थः, तेन मिश्रं—युक्तं पिण्डम्—अन्नं, कूरो भक्तम् इति हलायुधः तस्माच्युतं—च्यवनयोग्यं यत् तैलं तन्मिश्रं पिण्डम्, अधिकतैलमिश्रितभक्तपिण्डमित्यर्थः इति कस्यचिद्याख्यानम्; लल्लादीक्षितस्तु तैलशब्दोऽयं घृतपरत्वेन मन्यते। ["कूरच्चुश्र" इत्यत्र "कूरत्थिश्र" इति पाठान्तरे,—"कूरास्थिज" इति "कुलत्थज" इति वा संस्कृतम्] मात्रपुरुषैः,—महामात्रकपपुरुषैः, हस्तिपकाधिपैरित्यर्थः, मात्रशब्दोऽत्र महामात्रवाचकः, ("महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे" इति मेदिनी)।

चेटी। एदु एदु अज्जो। इमं तइअं पओट्ठं पविसदु अज्जो। *

विदू। [प्रविश्य दृष्ट्वा च]। ही, ही, भोः! इधो वि तइए पओट्ठे इमाइं दाव कुलउत्त-जणोववेसण-णिमित्तं विरचिदाइं आसणाइं। अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ। एसो अ मणिमअ-सारिआ-सहिदो पासअपीठो। इमे अ अवरे मअणसंधिविग्गह-चदुरा विविह वण्णिआविलित्त-चित्तफलअग्ग-हत्था (ड) इदो तदो परिब्भमंति गणिआ वुड्ढविड़ा अ। आदिसदु भोदी। †

चेटी। एदु एदु अज्जो। इमं चउत्थं पओट्ठं पविसदु अज्जो। ‡

* एतु एतु आर्य्यः। इमं तृतीयं प्रकोष्ठं प्रविशतु आर्य्यः।

† आश्चर्य्यं, भोः! इहापि तृतीये प्रकोष्ठे इमानि तावत् कुलपुत्रजनोपवेशन-निमित्तं विरचितानि आसनानि। अर्द्धवाचितं पाशकपीठे तिष्ठति पुस्तकम्। एतच्च मणिमयसारिकासहितं पाशकपीठम्। इमे च अपरे मदनसन्धि-विग्रह-चतुरा विविध-वर्णिका-विलिप्त-चित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च। आदिशतु भवती।

‡ एतु एतु आर्य्यः। इमं चतुर्थं प्रकोष्ठं प्रविशतु आर्य्यः।

(ड) अर्द्धेत्यादि।—अर्द्धवाचितम् - अर्द्धपठितम्। पाशकपीठे—पाशकपीठ-वत् विचित्रे आसनविशेषे। पुस्तकं—ग्रन्थः, कामशास्त्रस्येति अर्थतः प्राप्तम्। मणि-मयसारिकासहितं—मणिनिर्म्मितपाशकक्रीड़ोपयोगिगुटिकायुक्तं, ["एसो अ मणि-मअ" इत्यत्र "साहीणमणिमअ" इति पाठान्तरे,—"स्वाधीनमणिमय" इति संस्कृतम्। अस्मिन् पक्षे, - स्वाधीन—स्वतन्त्रम्, अकृत्रिममिति यावत्] पाशकपीठं—पाशकस्य—क्रीड़ाविशेषसाधनस्य, पीठम्—आसनं, स्थानमित्यर्थः। मदनस्य—कामस्य, सन्धिः,—मेलनं, विग्रहः,—कलहश्च, तयोः चतुराः,—निपुणाः। विविधाभिः,—नाना-प्रकाराभिः, वर्णिकाभिः,—वर्णैः, विलिप्त—विशेषेण लिप्त, चित्रितमिति यावत्, यत् चित्रफलकम्—आलेख्यपटः, तत् अग्रहस्ते—हस्ताग्रे येषां यासां वा तथाभूताः।

विदू। [प्रविश्यावलोक्य च]। ही, ही, भोः! इधो वि चउट्ठे पओट्ठे जुवदिकर-ताड़िदा जलधरा विअ गंभीरं णदंति मुदंगा, खीणपुण्णाओ विअ गअणादो तारआओ णिवडंति कंसतालआ, महुअर-विरुअ-महुरं वज्जदि वंसो। इअं अवरा ईसापणअ-कुविद-कामिणी विअ अंकारोविदा कररुह-परामरिसेण सारिज्जदि वीणा। इमाओ अवराओ कुसुम-रस-मत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआ-दारिआओ णच्चीअंति, णट्टअ पठीअंति, ससिंगारओ ओवग्गिदा। गवक्खेसु वादं गेण्हंति सलिलगग्गरीओ। (ढ) आदिसदु भोदी। *

* आश्चर्य्यं, भोः! इहापि चतुर्थे प्रकोष्ठे युवतिकरताड़िता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः; क्षीणपुण्या इव गगनात् तारका निपतन्ति कांस्यतालाः; मधुकर-विरुतमधुरं वाद्यते वंशः। इयमपरा ईर्ष्याप्रणय-कुपितकामिनीव अङ्कारोपिता कर-रुहपरामर्शेन सार्य्यते वीणा। इमा अपराश्च कुसुमरसमत्ता इव मधुकर्य्योऽतिमधुरं प्रगीता गणिका-दारिका नर्त्यन्ते, नाट्यं पाठ्यन्ते सशृङ्गारा अपवल्गिताः। गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्य्यः। आदिशतु भवती।

(ढ) युवतिकरताड़िताः,—तरुणीकराहताः। मृदङ्गाः—वाद्यभेदाः। क्षीणपुण्याः,—उपभुक्तसुकृतपरिपाकाः। कांस्यतालाः,—कांस्यनिर्म्मितवाद्यभेदाः, "करताल" इति प्रसिद्धाः; (न च तालशब्देनैव कांस्यवाद्ययन्त्रभेदबोधनात् पुनः कांस्यपदप्रयोगः व्यर्थ इति वाच्यं, श्रवणकुण्डलादिशब्दवत् विशेषार्थप्रतिपत्तेरावश्यकत्वात्; तेन चात्र तादृशवाद्यभेदस्य कांस्यातिरिक्तधात्वन्तर्निर्म्मितत्वरूपविशेषबोधः इति न कश्चित् विरोधः) मर्त्याः हि उपचितपुण्यबलेन स्वर्लोकमुपेताः गगने ताराकारेण प्रतिभासन्ते,भोगात् क्षीणे पुण्ये पुनर्भुवि निपतन्तीति प्रसिद्धिः, तथा च, तादृशास्तारकाः यथा अन्तराऽन्तरा पतन्ति, तथा अन्येष्वपि वाद्यध्वनिषु सत्सु यथाकालमन्तराऽन्तरा कांस्यताला अपि पतन्तः शब्दमुत्पादयन्तीति समुदितार्थः। मधुकरविरुतमधुरं—मधुकराणाम्—अलिनां, विरुतमिव—झङ्कारवत्, मधुरं—सुमिष्टं, श्रुतिसुखकरं यथा स्यात् तथेत्यर्थः। अङ्कारोपिता—क्रोड़निहिता। कररुहपरामर्शेन—अङ्गुलिसंस्पर्शेन। सार्य्यते—संक्रियते,वीणादण्डस्थकीलमोटनादिना स्वरसंयोगः क्रियते इति यावत्। कुसुमरसमत्ताः,—

चेटी। एदु एदु अज्जो। इमं पंचमं पओट्ठं पविसदु अज्जो। *

विदू। [प्रविश्य दृष्ट्वा च] ही, ही, भोः! इधो वि पंचमे पओट्ठे अअं दलिद्दजण-लोहुप्पादणअरो आहरइ उवचिदो हिंगुतेल्लगंधो। विविह-सुरहि-धूमुग्गारेहिं णिच्चं संताविज्जमाणं णोससदि विअ महाणसं दुआरमुहेहिं। अधिअं उस्सुआवेदि मं साहिज्जमाण-बहुविह-भक्ख-भोअण-गंधो। अअं अवरो पड़च्चरं विअ हदपह्नदलपोट्टिं धोअदि रूपिदारओ। बहुविहाहारविआरं उवसाहेदि सूवआरो। बज्झंति मोदआ, पच्चंति अ पूवआ। (ण) [आत्मगतम्] अवि दाणिं इह वड्डिअं भुंजसु

* एतु एतु आर्य्यः। इमं पञ्चमं प्रकोष्ठं प्रविशतु आर्य्यः।

† आश्चर्य्यं, भोः! इहापि पञ्चमे प्रकोष्ठे अयं दरिद्रजनलोभोत्पादनकर आहरत्युपचितो हिङ्गुतैलगन्धः। विविधसुरभिधूमोद्गारैः नित्यं सन्तप्यमानं निःश्वसितीव महानसं द्वारमुखैः। अधिकमुत्सुकयति मां साध्यमान-बहुविध-भक्ष्यभोजनगन्धः। अयमपरः पटच्चरमिव हतपशूदरपेशिं धावति रूपिदारकः। बहुविधाहारविकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः, पच्यन्ते च पूपकाः। अपि इदानीमिह

सुमनोमकरन्दपानोद्भ्रान्ताः। अतिमधुरम्—अतिशयश्रुतिसुखावहम्। प्रगीताः,—प्रकर्षेण गानपरा इत्यर्थः। गणिकादारिकाः,—वेश्याकुमार्य्यः। नर्त्त्यन्ते—नृत्यं कार्य्यन्ते, नाट्याचार्य्यैरिति शेषः, एवं पाठ्यन्ते इत्यत्रापि बोध्यम्। नाट्यं—नाट्यशास्त्रम्। सशृङ्गाराः,—आदिरससरसिकाः, नाट्यरसविशेषवेदिन्यः इति यावत्, [ "शृङ्गारः सुरते नाट्यरसे च गजमण्डने" इति मेदिनी। शृङ्गाररसस्य लक्षणमप्युद्दङ्कितम् अमरटीकाकृता भरतेन यथा,—"पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा। स शृङ्गारः इति ख्यातो रतिक्रीड़ादिकारणम्॥" इति; यद्वा,—सशृङ्गाराः,—उज्ज्वलवेशधारिण्यः, "शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः]। अपवर्ज्जिताः,—भङ्गिविशेषयुताः, नृत्यसूचकमनोहराङ्गविक्षेपविशिष्टा इति यावत्। सलिलगर्गर्य्यः,—जलपूर्णपात्रविशेषाः, क्षुद्रकुम्भा इति यावत्, ("कुंजो" इति भाषा) गवाक्षेषु—वातायनेषु। वातं गृह्णन्ति—नक्तञ्चैभिरन्तराऽन्तरा शीतलजलपानाय गवाक्षेषु निधापिताः सत्यः शीतलसमीरणसम्पर्केण स्वस्थं जलं शीतलयन्तीति यावत्।

(ण) दरिद्रेति।—दरिद्रजनानां—दीनदुःखानां, लोभोत्पादनकरः,—आकाङ्क्षो-

त्ति पादोदग्रं (त) लहिस्सं ? [अन्यतोऽवलोक्य च] इदो गंधव्व-सुरगणेहिं विअ विविहालंकारसोहिदेहिं गणिआजणेहिं बंधुलेहिं अ जं सच्चं सग्गीअदि (थ) एदं गेहं। भोः! के तुम्हे बंधुला णाम ? ‡

वर्द्धितं भुङ्क्ष्व इति पादोदकं लप्स्ये ? इह गन्धर्वसुरगणैरिव विविधालङ्कारशोभितैः गणिकाजनैः बन्धुलैश्च यत् सत्यं स्वर्गायते इदं गेहम्। भोः! के यूयं बन्धुला नाम ?

दीपकः, सततबुभुक्षाऽनलसन्तप्ता दरिद्राः एवं सुमधुरसौरभाघ्राणेन नूनमेव लोभपरवशाः भवन्तीति भावः। आहरति—आ—समन्तात्, हरति—वहति, उद्गच्छतीत्यर्थः। उपचितः,—वर्द्धितः। महानसं—पाकस्थानं, रन्धनशाला इत्यर्थः, ("रसवत्यान्तु पाकस्थानमहानसे" इत्यमरः) चुल्ली वा। विविधसुरभिधूमोद्गारैः,—नानाप्रकारसुगन्ध-धूमोद्गीरणैः, अयमेव च निश्वसनोत्प्रेक्षणे हेतुर्बोध्यः। उत्सुकयति—सतृष्णं करोतीत्यर्थः, ["उत्सुकायते" इत्यपपाठः]। साध्यमानानां—पच्यमानानां, बहुविधानाम्—अनेक-प्रकाराणां, भक्ष्याणां—चर्व्याणां, भोजनानां—खाद्यानां, व्यञ्जनादीनामिति यावत्, [भुज्यते अनेनेति व्युत्पत्त्या करणल्युटा निष्पन्नः अयं भोजनशब्दः व्यञ्जनादिवचन इति न भक्ष्यपदेन पौनरुक्त्यमिति बोध्यम्] गन्धः,—आमोदः। पटच्चरं—जीर्णवस्त्रं, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः)। हतपशूदरपेशि—हतानां—भोजनार्थं मारितानां, पशूनां—जन्तूनां, छागादीनामिति यावत्, उदरपेशिम्—उदरस्थदीर्घाकृतिकोमलमांस-विशेषम्। धावति—प्रक्षालयति। रूपिदारकः—रूपं—पशुः, ("रूपं स्वभावे सौन्दर्य्ये नामगे पशुशब्दयोः" इति मेदिनी) तद्योगात् रूपी—वैतंसिकः, मांस-विक्रयीत्यर्थः, तस्य दारकः,—बालकः, मांसिकतनय इत्यर्थः. अथवा—रूपिणं—प्राणिनं, पशुसमूहमिति यावत्, दारयति—विदारयति, छिनत्तीति यावत्, पशुघातक इत्यर्थः; यद्वा,—रूपी—रूपवान्, सुन्दर इत्यर्थः, दारकः,—बालकः। बहुविधानाम्—अनेक-प्रकाराणाम्, आहाराणां—भोजनीयानां, विकारः,—विविधं करणं, विविधानि आहार्य-वस्तूनि इत्यर्थः। उपसाधयति—सम्पादयति। सूपकारः—पाचकः। मोदकाः,—मिष्टान्नविशेषाः. "मोया" इति भाषा। पूपकाः—पिष्टकानि।

(त) वर्द्धितं—वृद्धियुक्तं, यथेष्टमित्यर्थः, व्यञ्जनादिनानाविधोपकरणोपचितम् इति यावत्। पादोदकं—पादप्रक्षालनार्थं जलम्।

(थ) स्वर्गीयते—स्वर्गवत् आचरति।

बन्धुलाः। वयं खलु,—

परगृहललिताः, परान्नपुष्टाः,

परपुरुषैर्जनिताः पराङ्गनासु।

परधननिरता गुणेष्ववाच्या

गजकलभा इव बन्धुला ललामः॥ २८॥

विदू। आदिसदु भोदी। *

चेटी। एदु एदु अज्जो। इमं छट्ठं पओट्ठं पविसदु अज्जो। †

विदू। [प्रविश्यावलोक्य च] ह्ही, ह्ही, भोः! इधो वि छट्ठे पओट्ठे अमूं दाव सुवस्स-रअणाणं कम्मतोरणाइं णीलरअण-विणिक्खित्ताइं इंदाउहट्ठाणं विअ दरिसअंति, वेदुरिअ-मोत्तिअ--पवालअ -पुप्फराअ -इंदणील--कक्केतरअ- पउमराअ-मर-

* आदिशतु भवती।

† एतु एतु आर्य्यः। इमं षष्ठं प्रकोष्ठं प्रविशतु आर्य्यः।

‡ आश्चर्य्यं, भोः! इहापि षष्ठे प्रकोष्ठे अमूनि तावत् सुवर्णरत्नानां कर्म्म-तोरणानि नीलरत्नविनिक्षिप्तानि इन्द्रायुधस्थानमिव दर्शयन्ति वैदूर्य्य-मौक्तिक-

के यूयमिति जिज्ञासिताः बन्धुलाः स्वेषां स्वरूपं प्रकटयन्तः आहु, परगृहेति।— परगृहे—परस्वामिकभवने, ललितम्—ईप्सितं येषां ते, परावसथवासनिरता इत्यर्थः, परान्नपुष्टाः—परेषाम्—अन्येषाम्, अन्नेन—भक्ष्यद्रव्येणेत्यर्थः. पुष्टाः,—प्रतिपालिताः, परान्नभोजिन इति यावत्, तथा पराङ्गनासु—परकीयासु स्त्रीषु, परपुरुषैः—परै-रित्यर्थः, जनिताः,—उत्पादिताः. परधननिरताः.—परार्थोपजीविनः, तथा गुणेषु—दयादाक्षिण्यादिषु, अवाच्याः,—अवचनीयाः. वागगोचरगुणा इत्यर्थः, निर्गुणा इति यावत्, बन्धुलाः,—उच्छलचणा असतीपुत्त्राः, वयमिति गद्यस्थेनान्वयः, गजकलभाः, —हस्तिशावका इव, ललामः,—विहरामः; गजकलभा यथा राजमन्दिरे अत्यादरेण विहरन्ति, तद्वत् वयमपि अत्र सुखम् तिष्ठामः इति भावः। [ललधातोश्चौरादिकत्वात् ललाम इति पदं चिन्त्यम्। वस्तुतस्तु "लड विलासे" इत्यस्य भौवादिकस्य लड-धातो रूपमिदम्; अनुप्रासानुरोधात् डकारस्य लकारादेश इति बोध्यम्। "ललामाः" इति पाठे,—ललामाः—प्रधाना इत्यर्थः, "ललाम लाञ्छने ध्वजे। प्रभे प्रधाने भूषायां रम्ये वालधिपुण्ड्रयोः" इति मेदिनी] पुष्पिताग्रा वृत्तम्॥ २८॥

गअ-पहुदिआइं रअणबिसेसाइं अण्णोण्णं बिचारेंति सिप्पिणो, बज्झंति जादरूवेहिं माणिक्काइं, घड़िज्जंति सुवण्णालंकारा रत्तसुत्तेण, गत्थीअंति मोत्तिआभरणाइं, घसीअंति धीरं वेदुरिआइं, छेदीअंति संखआ, साणिज्जंति पवालआ, सुक्खविअंति ओलंबिदकुंकुमपत्थरा, सालीअदि सअज्जअं, विसेसेण घिस्सदि चंदणरसो, संजोईअंति गंधजुत्तीओ, दीअदि गणिआ-कामुकाणं सकप्पूरं तांबोलं, अवलोईअदि सकडक्खअं, पअट्टदि हासो, पिबीअदि अ अणवरअं ससिक्कारं मइरा। इमे चेड़ा, इमा चेड़िआओ, इमे अवरे अवधीरिद-पुत्तदारवित्ता मणुस्सा करआ-सहिद-पीदमदिरेहिं गणिआ जणेहि जे मुक्का ते पिअंति। (द) आदिसदु भादी। ❀

---

प्रवालक-पुष्परागेन्द्रनील-कर्केतरक-पद्मराग-मरकतप्रभृतीन् रत्नविशेषान् अन्योऽन्यं विचारयन्ति शिल्पिनः, बध्यन्ते जातरूपैर्माणिक्यानि, घट्यन्ते सुवर्णालङ्कारा रक्तसूत्रेण, ग्रथ्यन्ते मौक्तिकाभरणानि, घृष्यन्ते धीरं वैदूर्य्याणि, छिद्यन्ते शङ्खाः, शाणयन्ते प्रवालकाः शोष्यन्ते अवलम्बितकुङ्कुमप्रस्तराः, साध्यते कस्तूरिका, विशेषेण घृष्यते चन्दनरसः संयोज्यन्ते गन्धयुक्तयः, दीयते गणिका-कामुकयोः सकर्पूरं ताम्बूलम् अवलोक्यते सकटाक्षं प्रवर्त्तते हासः, पीयते च अनवरतं ससीत्कारं मदिरा। इमे चेटाः इमाश्चेटिकाः इमे अपरे अवधीरितपुत्रदारवित्ताः मनुष्याः करका-सहित-पीत-मदिरैर्गणिकाजनैर्ये मुक्ताः ते पिबन्ति। आदिशतु भवती।

---

(द) कर्म्मेति।—कर्म्मतोरणानि—कर्म—शिल्पक्रिया, रचनाविशेष इति यावत्, तद्विशिष्टानि तोरणानि—स्वर्णरत्नादीनां कारुकार्य्यविशिष्टवहिर्द्वारप्रदेशविशेषा इत्यर्थः। नीलरत्नैः,—नीलवर्णमणिविशेषैः, इन्द्रनीलैरित्यर्थः, विनिक्षिप्तानि—निखचितानि, अवभासितानि सन्तीयथः। इन्द्रायुधस्थानं—शक्रधनुषः अवकाशभूमिमिव। दर्शयन्ति—प्रकटयन्ति, आत्मानमिति शेषः ; यद्वा,—सुवर्णरत्नानां कर्म्मतोरणानि—सुवर्णरत्नशिल्पखचितषष्ठप्रकोष्ठस्य बहिर्द्वारविशेषाः. नीलरत्नेषु—इन्द्रनीलघटितकुट्टिमप्रदेशेषु, विनिक्षिप्तानि—विच्छुरितानि, प्रतिबिम्बितानि सन्तीत्यर्थः. इन्द्रायुधस्थानं—इन्द्रायुधस्य—शक्रचापस्य, स्थानं—सादृश्यं ("स्थानं सादृश्ये वकाशे" इति मेदिनी) अथवा,—स्थानं—स्थितिं. "कृदभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायेन अवस्थितमिन्द्रायुधमित्यर्थः, तदिव

चेटी। एदु एदु अज्जो। इमं सत्तमं पओट्ठं पविसदु अज्जो। *

विदू। [प्रविश्यावलोक्य च] ही, ही, भोः! इधो वि सत्तमे पओट्ठे सुसिलिट्ठ-विहंगवाडो-सुहणिसणाइं, अण्णोण्णचुंवण-पराइं सुहं अणुभवंति पारावद-मिहुणाइं। दहिभत्त-पूरिदो-दरो वम्हणो विअ सुत्तं पढ़दि पंजरसुओ। इअं अवरा सामि-

* एतु एतु आर्य्यः। इमं सप्तमं प्रकोष्ठं प्रविशतु आर्य्यः।

† आश्चर्य्यं, भोः! इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुखनिषण्णानि अन्यो-ऽन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि। दधिभक्तपूरितोदरो ब्राह्मण

दर्शयन्ति, आत्मानमिति शेषः। ["वेदुरिअ" इत्यत्र "वेरुलिअ" इति पाठोऽपि,—"वैदूर्य्य" इति संस्कृतम्]। कर्केतरकं—मणिविशेषः। शिल्पिनः,—शिल्पकाराः। जातरूपैः,—स्वर्णैः, ("चामीकरं जातरूपं महारजतकाञ्चने" इत्यमरः)। घट्यन्ते—ग्रथ्यन्ते, [णिजन्तघटधातोः कर्म्मणि रूपम्]। शाण्यन्ते—शाणैः घृष्यन्ते इत्यर्थः। अवलेपितम्—इतस्ततो मर्द्दितं, कुङ्कुमं येषु तथाविधाः। प्रस्तराः,—पाषाणाः, प्रस्तरः,—कुङ्कुमाधारचर्म्मपुटः इत्याहुः प्राचीनाः। यद्वा,—"ओलविद" इति प्राकृतस्य "अवतारित" "आर्द्र" इति वा संस्कृतम्; तत्र अवतारितानाम्—आधा-रात् वहिष्कृतानां, कुङ्कुमानां प्रस्तराः; आर्द्राः,—सिक्ताः, कुङ्कुमप्रस्तरा इति वाऽर्थः ["ओलविद" इत्यत्र "ओल्लविद" इति "अविद" इति च पाठान्तरम्]। सार्य्यते—परिष्क्रियते। ["सालीअदि" इत्यत्र "सामीअदि" इति पाठान्तरे—"आर्द्री-क्रियते" इति केचित् व्याचख्युः]। अवधीरितानि—अगणितानि, पुत्राः,—सुताः, दाराः,—स्त्रियः, वित्तानि च—धनानि च यैः तादृशाः, पुत्रकलत्रधनमायावर्जिता इत्यर्थः। करकेति।—करकया—वर्षोपलेन, वर्षोपलसदृशसान्द्रतुषारेण इति यावत्, ("वरफ" इति भाषा) सहिता—मिश्रिता, पीता—पानेन गलाधःकृता च, मदिरा—मद्यं यैः तादृशैः, ["करआसहिदपीद" इत्यत्र "आसवकरआपीद" इति पाठान्तरे "आसवकरकापीत" इति संस्कृतम्; तत्र आसवकरकेण—मद्यपानपात्रविशेषेण, ("करकः नारिकेलफलास्थि" इति राजनिघण्टुः) आपीता—सम्यक्पीता इत्यर्थः]; वेश्याऽऽसक्तत्वात् पत्नीपुत्रादिकं विसृज्य सततवेश्यावासात् निर्द्धनत्वेन ताड़िता अपि पुरुषाः गत्यन्तराभावतया तत्रैव स्थिताः सन्तः गणिकापीतावशिष्टानि मद्यानि सादरं पिबन्तीति भावः।

संमाणणा-लद्धपसरा विअ घरदासी अधिअं कुरुकुराअदि मदणसारिआ। अणेअफलरसास्साद-पहट्टकंठा कुंभदासी विअ कूअदि परपुट्टा। आलंबिदा णागदंतेसु पंजरपरंपराओ, जोधीअंति लावआ, आलवीअंति पंजरकविंजला, पेसीअंति पंजरकवोदा। इदो तदो विविहमणिचित्तलिदो विअ अअं सहरिसं णच्चंतो रविकिरणसंतत्तं पक्खुक्खेवेहिं विधुवेदि विअ पासादं घरमोरो। (ध) [अन्यतोऽवलोक्य] इदो पिंडीकिदा

इव सूक्तं पठति पञ्जरशुकः। इयमपरा स्वामिसम्माननना-लब्धप्रसरा इव गृहदासी अधिकं कुरकुरायते मदनसारिका। अनेक-फलरसास्वादप्रतुष्टकण्ठा कुम्भदासीव कूजति परपुष्टा। आलम्बिता नागदन्तेषु पञ्जरपरम्पराः। योध्यन्ते लावकाः। आलाप्यन्ते पञ्जर-कपिञ्जलाः। प्रेष्यन्ते पञ्जर-कपोताः। इतस्ततो विविधमणिचित्रित इवायं सहर्षं नृत्यन् रविकिरणसन्तप्तं पक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः।

(ध) सुश्लिष्टेत्यादि।—सुश्लिष्टा—सुघटिता, या विहङ्गवाटी—पक्षिशाला, कपोतपालिका इति यावत्, तस्यां सुखेन—अक्लेशेन, निषण्णानि—उपविष्टानि, स्थितानि इत्यर्थः; अन्योऽन्यचुम्बनपराणि—परस्परचुम्बनासक्तानि। पारावतमिथुनानि—कपोतयुगलानि, दधिभक्तपूरितोदरः,—दध्ना—दुग्धविकारभेदेन, भक्तेन—अन्नेन च, दधिमिश्रितान्नेनेत्यर्थः, पूरितं—परिपूर्णम्, उदरं—जठरं यस्य तथोक्तः। सूक्तं—वेदोक्तमन्त्रविशेषं, सुवचनञ्च। स्वामीति।—स्वामिनः,—पत्युः, सम्माननया—आदरेण, लब्धः,—अधिगतः, प्रसरः,—प्रभावः यया तादृशी। कुरकुरायते—कुरकुरेति अव्यक्तं शब्दायते, अन्यत,—मुखरायते। मदनसारिका—"मयना" इति प्रख्याता। अनेकेति।—अनेकेषां—बहुविधानां, फलानां—रसालादीनां रसास्वादेन,—रसग्रहणेनेत्यर्थः, प्रतुष्टः,—परितृप्तः, कण्ठः,—कण्ठदेशो यस्याः तथोक्ता। कुम्भदासी—कुट्टिनी ("कुम्भदासी तु कुट्टनी" इति शब्दरत्नावली)। परपुष्टा—परभृता, कोकिला इत्यर्थः; ("वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः)। नागदन्तेषु—गृहान्निर्गतकाष्ठखण्डविशेषेषु, गृहभित्तिप्रोथितकाष्ठकीलेषु इति यावत्, ("नागदन्तो द्विपरदे गृहान्निर्गतदारुणि" इति मेदिनी)। पञ्जरपरम्पराः,—पक्षिबन्धनसाधनयन्त्रविशेषसमूहाः, "पिंजरा" इति वङ्गभाषा। लावकाः,—"लाउया" इति ख्याताः पक्षिविशेषाः। पञ्जरकपिञ्जलाः, पञ्जराबद्धाः गौरतित्तिरयः पक्षिणः। प्रेष्यन्ते—मेल्यन्ते, युद्धार्थमिति भावः। विधुवतीव - कम्पयतीव, वीजयतीव इत्यर्थः; पक्षे,—अविधुं

विश्र चंदपादा पदगदिं सिक्खंता विश्र कामिणीणं पच्छादो परिब्भमंति राश्रहंसमिहुणा। एदे अवरे वुड्ढमहल्लका विश्र इदो तदो संचरंति घरसारसा। ह्री, ह्री, भोः! पसारणश्रं किदं गणिश्राए णाणापक्खिसमूहेहिं। (न) जं सच्चं क्खु णंदणवणं विश्र मे गणिश्राघरं पड़िभासदि। आदिसदु भोदी। †

चेटी। एदु एदु अज्जो! इमं श्रट्ठमं पश्रोट्ठं पविसदु अज्जो। *

विदू। [प्रविश्यावलोक्य च] भोदि! को एसो पट्टपावारश्र-पाउदो अधिश्रदरं अच्चब्भुद-पुणरुत्तालंकार-लंकिदो अंग-भंगेहिं परिक्खलंतो (प) इदो तदो परिब्भमदि ? †

इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षमाणानीव कामिनीनां पश्चात् परिभ्रमन्ति राजहंसमिथुनानि। एते अपरे वृद्धमहत्तराः इव इतस्ततः सञ्चरन्ति गृह-सारसाः। आश्चर्य्यं, भोः! प्रसारणं कृतं गणिकया नानापक्षिसमूहैः। यत् सत्यं खलु नन्दनवनमिव मे गणिकागृहं प्रतिभासते। आदिशतु भवती।

* एतु एतु आर्य्यः। इममष्टमं प्रकोष्ठं प्रविशत्वार्य्यः।

† भवति! क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्तालङ्कारालङ्कृतः अङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ?

विधुं करोति इति विधुशब्दात् क्विप्, ततो नामधातुत्वात् लटि अपि गुणाभावात् विधुवति, पुच्छस्थचन्द्रकाणां विस्तारात् विधुमयं करोति इति यावत्; "सलिलमयः शशी हि रविकिरणसम्पातात् उज्ज्वलीभवति" इति ज्योतिषोक्तेः। गृहमयूरः,—पालितशिखी इत्यर्थः।

(न) इतः पिण्डीकृताः चन्द्रपादा इव राजहंसमिथुनानि कामिनीनां पदगतिं शिक्षमाणानीव पश्चात् परिभ्रमन्तीति अन्वयः। पिण्डीकृता इव—राशीकृता इव। चन्द्रपादाः,—चन्द्रकिरणाः। वृद्धमहत्तराः,—अतिवृद्धाः, गमनमान्द्यादिति भावः। प्रसारणं—विस्तारः, व्यापनमिति यावत्, पक्षिसमूहैः व्याप्तमिति यावत्।

(प) पट्टप्रावारकेण—कौषेयोत्तरीयवस्त्रेण। प्रावृतः,—वेष्टितगात्र इत्यर्थः। अतीति।—अत्यद्भुतैः,—अत्याश्चर्य्यैः, पुनरुक्तैः,—अधिकाधिकैः, अलङ्कारैः,—भूषणैः,

चेटी। अज्ज! एसो अज्जआए भादा भोदि। *

विदू। केत्तिअं तवच्चरणं कदुअ वसंतसेणाए भादा भोदि? अधवा मा दाव, जदि वि एसो उज्जलो सिणिद्धो अ सुअंधो अ, तहवि मसाणवीधीए जादो विअ चंपअरुक्खो अणहिगमणीओ लोअस्स। (फ) [अन्यतोऽवलोक्य] भोदि! एसा उण का फुल्लपावारअ-पाउदा, उवाणहजुअलणिक्खित्त-तेल्ल-चिक्कणेहिं पादेहिं (ब) उच्चासणे उवविट्ठा चिट्ठदि? †

चेटी। अज्ज! एसा क्खु अम्हाणं अज्जआए अत्तिआ। ‡

* आर्य्य! एष आर्य्याया भ्राता भवति।

† कियत्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति? अथवा मा तावत्, यद्यपि एष उज्ज्वलः स्निग्धश्च सुगन्धश्च, तथाऽपि श्मशानवीथ्यां जात इव चम्पकवृक्षः अनभिगमनीयो लोकस्य। भवति! एषा पुनः का पुष्पप्रावारकप्रावृता उपानद्युगल-निक्षिप्त-तैलचिक्कणाभ्यां पादाभ्यामुच्चासने उपविष्टा तिष्ठति?

‡ आर्य्य! एषा खलु अस्माकम् आर्य्याया माता।

अलङ्कृतः,—शोभितः। अङ्गभङ्गैः,—अङ्गानां—देहानां, भङ्गैः,—चालनाविशेषैः। परिखेलन्—हिल्लोलयन्, दोलयन्निति यावत्।

(फ) केत्तिअं इति।—कियत्—किम्परिमितम्। तपश्चरणं—तपस्यामित्यर्थः। वसन्तसेनायाः,—एतावदैश्वर्य्यशालिन्या रमण्या इत्यर्थः। [अत्र "शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः?। सुमुखि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥" इत्यादिसाहित्यदर्पणोदाहरणवत् विदूषकप्रौढ़ोक्तिसिद्धेन वस्तुना "वसन्तसेनाया भ्रातृत्वं पुण्यातिशयलभ्यम्" इति वस्तु ध्वन्यते इति सुधीभिर्विभाव्यम्]। एतादृग्विभववत्त्वेऽपि अस्य गणिकाभ्रातृत्वेनातिशयापवित्रतया तत्सम्पर्कः न कथमपि स्पृहणीय इति पक्षान्तरमाह, अथवेति।—श्मशानवीथ्यां—श्मशानगतपथे। अनभिगमनीयः,—अस्पृश्य इत्यर्थः, वेश्याजातत्वादिति भावः।

(ब) पुष्पप्रावारकप्रावृता—पुष्पैः प्रावारकैश्च, यद्वा,—सूक्ष्मसूत्रचित्रितपुष्पवत् प्रावारकैः. "पुष्पपट" इति प्रसिद्धैः. प्रावृता—आच्छादिता। उपानद्युगले—पादत्रद्वये, निक्षिप्ताभ्यां,—स्थापिताभ्यां, तैलचिक्कणाभ्यां—तैललेपनेन मसृणाभ्याम्; पादाभ्यां—चरणाभ्याम्; [पादाभ्यामिति विशेषणे तृतीया]।

विदू। अम्मो! से अपवित्तडाइणीए पोट्टवित्थारो!! ता किं एदं पवेसिअ महादेवं विअ दुआरसोहा इध घरे णिम्मिदा? *(भ)

चेटी। हदास! मा एव्वं उवहस अम्हाणं अत्तिअं। एसा क्खु चाउत्थिएण (म) पोड़ीअदि। †

विदू। [सपरिहासम्] भअवं चाउत्थिअ! एदिणा उवआरेण मं वि बम्हणं आलोएहि। ‡ (य)

* अहो! अस्या अपवित्रडाकिन्या उदरविस्तारः!! तत् किमेतां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता?

† हताश! मैवमुपहसास्माकं मातरम्। एषा खलु चातुर्थिकेन पीड्यते।

‡ भगवन् चातुर्थिक! एतेनोपचारेण मामपि ब्राह्मणमालोकय।

(भ) अहो—विस्मयजनकः, "उदरविस्तारः" इत्यनेनान्वेति। ["अपवित्त-डाइणीए" इत्यत्र "करट्टडाइणीए" इति पाठान्तरेऽपि, "अपवित्रडाकिन्याः" इति संस्कृतम्। तत्र करट्टशब्दः महाराष्ट्रदेशभाषायाम् अपवित्रभक्ष्यभोजिद्विजवचनः, तद्वत् अपवित्रायाः डाकिन्या इत्यर्थः]। उदरविस्तारः,—कुक्षेः परिसरः। महादेवमिव—स्थूलाकारशिवमिव, स्थूलोदराम् इति भावः, (वसन्तसेनाया मातुः स्थौल्योत्कर्षबोधनार्थमेतदुपमानं ज्ञातव्यं, महादेवस्य स्थौल्यं, विशेषतः स्थूलोदरत्वञ्च लोकविश्रुतमेव)। एतां—दृश्यमानां, वसन्तसेनामातरमित्यर्थः. निर्मिता—कृता। महादेवमिव एतामादौ गृहमध्ये संस्थाप्य पश्चात् गृहस्यास्य ईदृशानि सुशोभनानि द्वाराणि निर्मितानि किम्? अन्यथा एवंविधस्वल्पविस्तारद्वारेण द्वारप्रमाणाधिक-स्थूलदेहायाः अस्याः गृहप्रवेशः असम्भव एव स्यात् इति भावः।

(म) हताश!—निर्दय! यद्वा—हताश!—पिशुन! खलस्वभाव इत्यर्थः, परोत्कर्षे असूयापरवश इति यावत्, "हताशो निर्दये चाशारहिते पिशुनेऽपि च" इति मेदिनी। उपहस—परिहासं कुरु, ["उवहस" इत्यत्र "उवक्खिव" इति पाठान्तरे,—"उपक्षिप" इति संस्कृतम्; अवजानीहि इति चार्थः] चातुर्थिकेन प्रतिचतुर्थ-दिवसीयेन ज्वररोगविशेषेण इत्यर्थः; यदुक्तं निदाने "—चतुर्थेऽह्नि चतुर्थकः" तथा "—अस्थिमज्जगतः पुनः। कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम्॥" इति "चातुर्थको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसम्भवः॥" इति च।

(य) भगवन्—ऐश्वर्य्यादिषड्विभूतिसम्पन्नेत्यर्थः,—"ऐश्वर्यस्य समग्रस्य वीर्यस्य

चेटी। हदास! मरिस्ससि। *

विदू। [सपरिहासम्] दासीए धीए! वरं इदिसो सूणपीण-जढ़रो (र) मुदो ज्जेव्व। †—

सीहुसुरासवमत्तिआ एआवत्थं गदा हि अत्तिआ।

जइ मरइ एत्थ अत्तिआ भोदि सिआल-सहस्स-जत्तिआ ‡ ॥२८॥

* हताश! मरिष्यसि।

† दास्याः पुत्रि! वरम् ईदृशः शूनपीनजठरो मृत एव।—

‡ शीधुसुराऽऽसवमत्ता एतामवस्थां गता हि माता।

यदि म्रियते अत्र माता भवति शृगालसहस्रयात्रा॥

यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतः॥" इत्युक्तेः। तत्प्रभावेणैव अस्या एवं स्थूलत्वप्राप्तेः चातुर्थिकस्य भगवत्तया आमन्त्रणमिति बोध्यम्। उपचारेण—स्वाश्रयेणेत्यर्थः। मामपि आलोकय—मय्यपि शुभदृष्टिं पातयेत्यर्थः।

(र) ईदृशः,—वसन्तसेनामातृसदृश इत्यर्थः। शूनेति।—शूनं—वृद्धिं प्राप्तं, पीनं—स्थूलं, जठरम्—उदरं यस्य तादृशः ["शूनम्" इति श्विधातोः, "पीनम्" इति च प्यायधातोः निष्ठाप्रत्ययेन निष्पन्नम्] जनः इति शेषः, वरं—मनाक्प्रियः; ("देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिये" इत्यमरः)।

अस्या जीवनापेक्षया मरणमेव मनाक्प्रियमिति पूर्व्वोक्तमेव युक्त्या समर्थयमान आह, शीधुसुरेति।—शीधुसुराऽऽसवैः,—तत्तन्नामप्रसिद्धैः विविधमद्यैः इत्यर्थः, मत्ता—प्राप्तमदा, सततैतत्पानरता इत्यर्थः उक्तानां त्रिविधानामेव मद्यानां लक्षणान्युक्तानि भावप्रकाशे; तत्र शीधोः लक्षणं गुणाश्च यथा,—"इक्षोः पक्वैः रसैः सिद्धः शीधुः पक्वरसश्च सः। आमैस्तैरेव यः शीधुः स च शीतरसः स्मृतः॥ शीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्। वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत्॥ विबन्धमेदः-शोथार्शःशोफादरकफामयान्। तस्मादल्पगुणः शीतरसः स लेखनः स्मृतः॥" एवं सुराया लक्षणं गुणाश्च यथा,—"शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता। सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा॥ ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत्॥" तथा आसवस्य लक्षणं गुणाश्च यथा—"यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः॥" इति। माता—गर्भधारिणी, वसन्तसेनाया इति शेषः, [लल्लादीक्षितः मातृशब्दस्य पुनरुक्तिभिया द्वितीयपादे "अत्तिया" इत्यत्र "गत्तिया" इति पाठं कृत्वा "अतिवृद्धा" इति व्याचख्यौ] एताम्—ईदृशीम्,

भोदि ! किं तुम्हाणं जाणवत्ताइं वहंति ? * (ल)

चेटी। अज्ज ! ण हि ण हि। †

विदू। किं वा एत्थ पुच्छीअदि, तुम्हाणं क्खु पेम्मणिम्मल-जले मअणसमुद्दे त्थणणिअंबजहणा ज्जेव्व जाणवत्ताइं मणहरणाइं। एव्वं वसंतसेणाए बहुवुत्तंतं अट्ठपओट्ठं भवणं पेक्खिअ जं सच्चं जाणामि, एकत्थं विअ तिविट्ठअं दिट्ठं, पसंसिदुं णत्थि मे वाआ-विहवो। किं दाव गणिआघरो ? अहवा कुवेरभवणपरिच्छेदो त्ति ? (व) कहिं तुम्हाणं अज्जआ ? ‡

* भवति ! किं युष्माकं यानपात्राणि वहन्ति ?

† आर्य्ये ! न हि न हि।

‡ किं वा अत्र पृच्छ्यते, युष्माकं खलु प्रेमनिर्म्मलजले मदनसमुद्रे स्तननितम्बजघना-न्येव यानपात्राणि मनोहराणि। एवं वसन्तसेनाया बहुवृत्तान्तम् अष्टप्रकोष्ठं भवनं प्रेक्ष्य यत् सत्यं जानामि, एकस्थमिव विपिष्टपं दृष्टं, प्रशंसितुं नास्ति मे वाग्विभवः। किं तावत् गणिकागृहम् ? अथवा कुवेरभवनपरिच्छेदः ? इति। कुत्र युष्माकमार्य्या ?

अवस्थां—दशां, शृनत्व-पीनत्वादिरूपामित्यर्थः, गता—प्राप्ता सती, अत्र—अस्मिन् काले, यदि म्रियते—जीवनं त्यजति, (यदिशब्दयोगात् "यदा-यद्योरुपसङ्ख्यानम्" (वा०) इति लिङ एव प्रसक्तेः "म्रियते" इत्यत्र "म्रियेत" इत्येव साधु) तदा शृगालसहस्राणां—बहुसहस्रगोमायूनामित्यर्थः, यात्रा - उत्सवः, ("यात्रा तु यापने-ऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी। यात्रा—पर्य्याप्तिका, सौहित्य-मिति यावत्, इति प्राचीनानां व्याख्या) भवति—जायते, (अत्रापि भवेदित्येव साधु इति बोध्यम्) इयमधुना म्रियेत चेत्, ईदृङ्मांसलदेहम् आसाद्य शृगालानां महती प्रीतिर्भवेदिति भावः। अत्र शृगालसहस्रमहोत्सवं प्रति प्रथमार्द्धगतवाक्यार्थस्य हेतु-तया काव्यलिङ्गमलङ्कारः। आर्य्या वृत्तम् ॥ २९ ॥

(ल) यानेति।—यानपात्राणि—इतस्ततो गमनसाधनानि, शकटपोतादयः इत्यर्थः वहन्ति—चलन्ति, वाणिज्यार्थमिति भावः ; विना वाणिज्यं कथमीदृग्विभवः ? इति प्रश्नकर्त्तुराशयः।

(व) एतस्य गृहस्य एवमसामान्यमैश्वर्य्यं वाणिज्यं विनाऽसम्भवमिति कृतप्रश्नोऽपि

चेटी। अज्ज ! एसा रुक्खवाडिआए चिट्ठदि, ता पविसदु अज्जो। *

विदू। [प्रविश्य दृष्ट्वा च] ही, ही, भोः। अम्मो ! रुक्खवाडिआए सस्सिरीअदा !! अच्छरीदि-कुसुमा जत्थ रोविदा अणेअ-पादवा, णिरंतर-पादवतल-णिम्मिदा जुवदिजणजहणप्पमाणा पट्टदोला, सुवण्णजूधिआ-सेहालिआ-मालई-मल्लिआ-णोमालिआ-कुरवआ-अदिमोत्तअप्पहुदिकुसुमेहिं सअं णिवड़िदेहिं जं सच्चं, लहुकरेदि विअ णंदणवणस्स (श) सस्सिरीअदं। [अन्यतोऽवलोक्य]

* आर्य्य ! एषा वृक्षवाटिकायां तिष्ठति, तत् प्रविशतु आर्य्यः।

† आश्चर्य्यं, भोः ! अहो ! वृक्षवाटिकायाः सश्रीकता !! अच्छरीतिकुसुमा यत्र रोपिता अनेकपादपाः, निरन्तरपादपतलनिर्म्मिता युवतिजनजघनप्रमाणा पट्टदोला, सुवर्णयूथिका—शेफालिका—मालती—मल्लिका-नवमल्लिका—कुरुवकातिमुक्तक-प्रभृतिकुसुमैः

स्वयमेव एतादृशातुलविभवसाधनं वाणिज्यविशेषं दर्शयिष्यन् प्रश्नस्यैवानवकाशमाह, किमिति।—अत्र—एतस्मिन्, अतुलैश्वर्य्यविषये इत्यर्थः। युष्माकं—भवतीनां, वेश-वासनिरतानामित्यर्थः, [स्तनेत्यादिना अन्वयः] प्रेमनिर्म्मलजले—प्रेम—प्रणय एव, निर्म्मलम्—अतिस्वच्छम्, अतिपवित्रमिति यावत्, जलं—सलिलं यत्र तादृशे, मदनसमुद्रे—कामसागरे, स्तननितम्बजघनान्येव—स्तनौ—पयोधरौ, नितम्बः,—स्त्रीकटिपश्चाद्भागः, जघनं—स्त्रीकटिपुरोभागः, एतान्येवेत्यर्थः, ("पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः)। तथा च,—वणिजो यथा पोतादिसाधनेन दुस्तरं सागरमुत्तीर्य्य विविधपण्येन धनान्यर्ज्जयन्ति, तथा यूयमपि स्तननितम्बजघनादिसाधनेन कामसागरमुत्तीर्य्य यौवनपण्येन कामिभ्यो धनान्यर्ज्जयथेति युष्माकमेवं गृहविभव इति भावः। अत्र निरपह्नुतविषये मदनादौ समुद्रादेः तादात्म्येनारोपात् रूपकमल-ङ्कारः, तत्र मदनादौ समुद्राद्यारोपः प्रेमादौ जलाद्यारोपे कारणमिति परम्परित-रूपम्। ["मणाहरणाइं" इत्यत्र "अच्छाहरणाइं" इति पाठान्तरं, "मत्स्याहरणानि" इति संस्कृतम्]। एकस्थं—पुञ्जीभूतमित्यर्थः, त्रिपिष्टपं—स्वर्गलोकः। कुबेरभवन-परिच्छेदः,—कुबेरस्य—धनपतेर्देवस्य, भवनपरिच्छेदः—गृहांशः, गृहमिदमिति निश्चयो वा।

(श) वृक्षवाटिकायाः,—गणिकावयस्यादिभिः सार्द्धमुपसेव्यस्य गृहसमीपस्थस्य

इदो अ उदअंतसूरसमप्पहेहिं कमलरत्तोप्पलेहिं संभाअदि विअ (ष) दीहिआ। †

अवि अ,—

एसो असोअबुच्छो णवणिग्गदकुसुमपल्लवो भादि।

सुभड़ो व्व समरमज्झे घण-लोहिद-पंक-चच्चिक्को * ॥ ३० ॥

भोदु, ता कहिं तुम्हाणं अज्जआ ? †

स्वयं निपतितैर्यत् सत्यं, लघूकरोतीव नन्दनवनस्य सश्रीकताम्। इतश्च उदयत्सूर्य्यसमप्रभैः कमलरक्तोत्पलैः सन्ध्यायत इव दीर्घिका।

* अपि च,—एषोऽशोकवृक्षो नवनिर्गतकुसुमपल्लवो भाति।

सुभट इव समरमध्ये घनलोहितपङ्कचर्च्चिकः॥

† भवतु, तत् कुत्र युष्माकमार्य्या ?

उपवनस्येत्यर्थः. सश्रीकता—रमणीयत्वम्। अच्छेत्यादि।—अच्छा—निर्म्मला, मनोहरेति यावत्, रीतिः,—दलानां विन्यासप्रकारः, नीलपीतादिवर्णानां विन्यास-परिपाटी वा येषां तादृशानि कुसुमानि—पुष्पाणि येषां तथोक्ताः। [ "अच्छरीदि-कुसुमा जत्थ रोविदा अणेअपादवा" इत्यत्र "अच्छरीअकुसुमपत्थाराणरोविदाणेअ-पादवा" इति पुस्तकान्तरसम्मतपाठे,—"आश्चर्य्यकुसुमप्रस्ताराणरोपितानेकपादपाः" इति संस्कृतम्। प्रस्तारः,—विस्तार इत्यर्थः ]। निरन्तरेति।—निरन्तराः,—घनसन्नि-विष्टाः, ये पादपाः,—शाखिनः, तेषां तले—अधोदेशे, निर्म्मिता—रचिता, [ एतेन पादपानां घनसन्निविष्टतया तत्तलस्थदोलायाः प्रच्छायप्रदेशवर्त्तित्वं सूचितम् ]। युवति-जनजघनप्रमाणा—तरुणीजननितम्बपरिमिता, [ एतेन दोलायन्त्रस्यासनस्य सुविस्तृतत्वं सूचितम् ] पट्टदोला—कौषेयसूत्रावलम्बित-उद्यानक्रीड़ासाधनदोलनयन्त्रमित्यर्थः। सुवर्णयूथिका—सुवर्णवर्णा यूथिका, अतिमुक्तकः,—माधवीलता। लघूकरोतीव—खर्व्वीकरोतीव. [ इत्युत्प्रेक्षा ]। नन्दनवनस्य—स्वर्गस्थनन्दनकाननस्यापीत्यर्थः।

( ष ) उदयत्सूर्य्यसमप्रभैः,—उदयन्—उदयाचलादुद्गच्छन्. यः सूर्य्यः,—दिवाकरः, आरक्तवर्ण इत्यर्थः, तेन समा—सदृशी, प्रभा—कान्तिः येषां तथोक्तैः, अधिकरक्त-वर्णैरिति यावत्, कमलानि—पद्मानि, रक्तोत्पलानि—कोकनदानि, ("रक्तकमल" इति वङ्गभाषा ) तैः, सन्ध्यायते—सन्ध्या इव आचरति। सन्ध्याऽत्र प्रातःसन्ध्या बोध्या।

इत्थवाटिकास्थितम् अशोकपादपं वर्णयन्नाह, एष इति।—नवनिर्गताः,—अभि-

चेटी। अज्ज ! ओणमेहि दिट्ठिं, पेक्ख अज्जअं। *

विदू। [ दृष्ट्वा उपसृत्य च ] सोत्थि भोदीए। †

वस। अये ! मैत्रेयः !! [ उत्थाय ] स्वागतम् ? इदमासनम्, अत्रोपविश्यताम्। (स)

विदू। उवविसदु भोदी। ‡ [ उभावुपविष्टतः ]।

वस। अपि कुशलं सार्थवाहपुत्रस्य ?

विदू। भोदि ! कुसलं। §

वस। आर्य्य मैत्रेय ! अपीदानीम्,—

गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीयपुष्पम्।
तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति ? ॥ ३१॥

* आर्य्ये ! अवनमय दृष्टिं, पश्य आर्य्याम्। † स्वस्ति भवत्यै।

‡ उपविशतु भवती। § भवति ! कुशलम्।

नववहिर्गताः, कुसुमपल्लवाः—पुष्पपत्राणि यस्य तथोक्तः. अत एव समरमध्ये—रणाभ्यन्तरे घनलोहितपङ्कचार्च्चिकः.—घनैः,—सान्द्रैः. लोहितैः,—रक्तैः एव, पङ्कैः.—कर्दमैः, कर्दमवद्गाढैरित्यर्थः, चर्च्चा—अङ्गरागशोभा तां वेद, तया युक्त इत्यर्थः; [ "कनकथादिसूत्रान्ताट्ठक्" ( ४ । २ । ६ पा० ) इति ठक्। अत्र "चर्च्चिकः" इत्यस्य "चाकचक्यः" इति संस्कृतं भवेत् तदा सुष्ठु स्यात्। तत्र घनेन—घनीभूतेन, रक्तपङ्केन, चाकचक्यं—सौन्दर्य्यं यस्य तादृशः इत्यर्थः ] सुभटः,—सुयोद्धा इव. एषः,—सम्मुखवर्त्ती, अशोकवृक्षः,—अशोकपादपः. भाति—शोभते। अत्र रक्ताक्तयोद्धपुरुषेण लोहितकुसुमसमन्विताशोकपादपस्य अवैधर्म्यसाम्यकथनादुपमा नामालङ्कारः। आर्य्या वृत्तम् ॥ ३० ॥

(स) "अये ! मैत्रेयः" इत्यादिवाक्यं वसन्तसेनाया वैदग्ध्यद्योतनाय संस्कृतभाषया निबद्धं, तदाह भरतः,—"कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः। योषित्सखीबालवेश्याकितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा ॥" इति।

य एव बन्धुम्मन्याः विभववन्तमाश्रयन्ति, त एव क्षीणे विभवे तमुपेक्षन्ते इति प्रसिद्धिः, परन्तु क्षीणधनं चारुदत्तं सुहृद्वान् इदानीमपि सेवते किम् ? इति जिज्ञासमाना आह, गुणप्रवालमिति।—सुहृदः—मित्राणि एव, विहङ्गाः—पक्षिणः, गुणाः,—दयादाक्षिण्यादय एव, प्रवालाः,—पल्लवाः यस्य तथोक्तं, विनयः,—नम्रता एव,

विदू। [स्वगतम्] सुट्ठु उवलक्खिदं दुट्टविलासिणीए। (ह) [प्रकाशम्] अधइं। * (क)

वस। अये! किमागमनप्रयोजनम्?

विदू। सुणादु भोदी.—तत्तभवं चारुदत्तो सीसे अंजलिं कादुअ भोदिं विण्णवेदि—"। †

वस। [अञ्जलिं बद्धा] किमाज्ञापयति?

विदू। "—मए तं सुवण्णभंडअं विस्संभादो अत्तणकेरकेत्ति कादुअ जूदे हारिदं, सो अ सहिओ राअवात्थहारी (ख) ण जाणिअदि, कहिं गदो त्ति"। ‡

---

* सख उपलक्षितं दुष्टविलासिन्या। अथकिम्।

† शृणोतु भवती,—तत्रभवान् चारुदत्तः शीर्षे अञ्जलिं कृत्वा भवतीं विज्ञापयति—"।

‡ "—मया तत् सुवर्णभाण्डं विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितं, स च सभिकी राजवार्त्ताहारी न ज्ञायते. कुत्र गत इति"।

---

प्रशाखा—प्रकृष्टा शाखा यस्य तादृशं, विश्रम्भः,—विश्वास एव, मूलं यस्य तथोक्तं, महनीयपुष्पं—महनीयं—पूजनीयं, पूजनीयचरितमेव इति यावत्, पुष्पं—कुसुमं यस्य तादृशं, तथा स्वगुणैः,—विशिष्टनिजगुणैः, [अभेदे तृतीया] फलाढ्यम्—उत्कृष्टगुणफलयुक्तमित्यर्थः, तं—चारुदत्तरूपं, साधुवृक्षं—सज्जनपादपं, सुखं—सानन्दं यथा तथेत्यर्थः; आश्रयन्ति?—आश्रित्य वर्त्तन्ते किम्? इत्यर्थः। अत्र निरपह्नुतविषये चारुदत्तादौ वृक्षादेस्तादात्म्येनान्वयात् रूपकमलङ्कारः, तत्र चारुदत्ते वृक्षारोपः गुणादिषु प्रवालाद्यारोपे कारणमिति परम्परितरूपं बोध्यम्। उपजाति वृत्तम्॥ ३१॥

(ह) उपलक्षितम्—अनुभूतम्, अधिकांश एव सुहृदां तमिदानीमधनं ज्ञात्वा विजहाविति यत् उपकल्पितं, तत्रास्या बुद्धिप्रतिभा सम्यक् परिस्फुटा इत्यत्र नास्ति कोऽपि संशयलेश इति भावः।

(क) सुहृदन्तःपातितया मय्यपि अनया कटाक्षः कृतः इति विभावयन्नाह, अथकिमिति।—स्वीकारार्थकमव्ययमिदम्, आश्रयन्त्येव इत्यर्थः, बन्धुवर्गस्यानाश्रितत्वे कथमहं तदर्थमागतः? इति भावः।

(ख) विश्रम्भात्—त्वयि विश्वासात्, ("समौ विश्रम्भविश्वासौ" इत्यमरः) तव्यय-

चेटी। अज्जए ! दिट्ठिआ वड्ढसि, अज्जो जूदिअरो संवुत्तो ।*(ग)

वस। [स्वगतम्] कधं ! चोरेण अवहिदं पि सोंडीरदाए (घ) जूदे हारिदं त्ति भणादि !! अदो ज्जेव्व कामीअदि। †

विदू। ता तस्स कारणादो गेण्हदु भोदी इमं रअणावलिं। ‡

वस। [आत्मगतम्] किं दंसेमि तं अलंकारअं ? [विचिन्त्य] अधवा ण दाव। §

विदू। किं दाव ण गेण्हदि भोदी एदं रअणावलिं ? ¶

वस। [विहस्य (ङ) सखीमुखं पश्यन्ती] मित्तेअ ! कधं ण गेण्हिस्सं

* आर्य्ये ! दिष्ट्या वर्द्धसे, आर्य्यो द्यूतकरः संवृत्तः।

† कथं ! चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति !! अत एव काम्यते।

‡ तत् तस्य कारणात् गृह्णातु भवती इमां रत्नावलीम्।

§ किं दर्शयामि तमलङ्कारम् ? अथवा न तावत्।

¶ किं तावत् न गृह्णाति भवती इमां रत्नावलीम् ?

मेतावद्विश्वस्तः, यत् त्वया न्यासीकृतमपि वस्तु आत्मीयत्वेन मन्यमानः द्यूते पणतया कल्पितवानिति भावः। राजवार्त्ताहारी—राजवार्त्तावहः, राजवार्त्तामादाय स कुत्र गत इति न ज्ञायते इत्यर्थः। [एतेन तदलङ्कारस्य सहसा पुनः प्राप्त्याशा न सम्भाव्यते इति सूच्यते। लल्लादीक्षितस्तु,—"राअवात्थकारी" इत्यत्र "राआवत्थ-कारी" इति पाठमङ्गीकृत्य "राजावश्यकारी" इति अनूद्य च, राज्ञः अवश्यम्—अवश्यकृत्यं, करोतीति व्याचख्यौ। "राजापात्रकारी" इति कश्चित्] "राजवार्त्ता-हरः" इति साधु संस्कृतम्।

(ग) द्यूतकारादयो नष्टचरित्रा एव वेश्यानां नायका भवन्ति, चारुदत्तस्य द्यूत-करत्वे वेश्याऽऽसक्तिरवश्यम्भाविनीति चेट्याः आनन्दकारणम्, अत एव "दिष्ट्या वर्द्धसे" इत्युक्तम्। तदेव हर्षकारणं दर्शयन्ती आह, अज्जो इति।—द्यूतकरः—द्यूतासक्तः।

(घ) शौण्डीरतया—अत्यौदार्य्येण इत्यर्थः।

(ङ) विहस्य—मध्यमं हास्यं कृत्वेत्यर्थः,—"आकुञ्चितकपोलाक्षं सस्वनं निस्वनं तथा। प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः॥" इत्युक्तलक्षणं नात्युच्चैः नातिनीचैः हास्यं कृत्वेति यावत्, ("मध्यमः स्याद्विहसितम्" इत्यमरः)। चौरेणापहृतमपि अलङ्कारं

रअणावलिं? [इति गृहीत्वा पार्श्वे स्थापयति। स्वगतम्] कधं! झीणकुसुमादो वि सहआरपादवादो मअरंदबिंदओ णिवड़ंति? (च) [प्रकाशम्] अज्ज! विण्णवेहि तं जूदिअरं मम वअणेण अज्जचारुदत्तं, अहं वि पदोसे अज्जं पेक्खिदुं आअच्छामि त्ति। * (छ)

विदू। [स्वगतम्] किं अण्णं तहिं गदुअ गेण्हिस्सदि? (ज) [प्रकाशम्] भोदि! भणामि,—[स्वगतम्] "णिअत्तीअदु इमादो गणिआपसंगादो" त्ति। (झ) [इति निष्क्रान्तः]।

---

* मैत्रेय! कथं न ग्रहीष्यामि रत्नावलीम्? कथं! हीनकुसुमादपि सहकार-पादपात् मकरन्दविन्दवो निपतन्ति? आर्य्य! विज्ञापय तं द्यूतकरं मम वचनेन आर्य्यचारुदत्तम्, अहमपि प्रदोषे आर्य्यं प्रेक्षितुमागच्छामीति।

† किमन्यत् तत्र गत्वा ग्रहीष्यति? भवति! भणामि,—"निवर्त्ततामस्मात् गणिकाप्रसङ्गात्" इति।

---

यदयं द्यूतापहृतत्वेन प्रकाशयति, तस्य आमूलं वृत्तान्तस्तु अस्माभिः पूर्व्वमेव विज्ञात इति हास्यकारणमत्र ज्ञेयम्।

(च) 'हीनकुसुमात्—पुष्पविरहितादपि, [एतेन पादपस्य मकरन्दसत्तासम्भवः सूचितः। तथा च कुसुमशून्यसहकारपादपात् मकरन्दपातरूपात् सामान्यादप्रस्तुतात् निर्द्धनचारुदत्तादेतद्रत्नावल्यागमरूपविशेषप्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः]।

(छ) "द्यूतकरम्" इति अस्याः सोत्प्रासवचनम्। प्रदोषे हि चन्द्रोदयो भवति, तत्र दृष्ट्वा मत्ता भवन्ति चकोर्य्यः; अहमपि प्रदोषे त्वन्मुखचन्द्रं दृष्ट्वा तथा भविष्यामीति एतद्वाक्यात् ध्वन्यते इति बोद्धव्यम्।

(ज) वेश्यानामर्थरुचित्वात् विदूषकः, हारं लब्ध्वा इयं पुनरपि किञ्चिल्लब्धुं तत्-समीपं गन्तुमिच्छतीति चिन्तयति, किमन्यदिति।—रत्नावलीभिन्नमपरं किञ्चिदित्यर्थः।

(झ) गणिकाप्रसङ्गात्—वेश्यासंसर्गात्; वसन्तसेनया प्रदोषे आत्मनः चारु-दत्तसमीपगमनसंवादं विज्ञापयितुमादिष्टः विदूषकः केवलं "भणामि" इत्युक्तवान्, किन्तु किं भणामि इति तु प्रकाशं नोक्तवानिति वसन्तसेनया तदुक्तव्यमेव वदिष्यति इत्यवगतम्; विदूषकस्तु स्वगतोक्त्या भणामीत्यस्य कर्म्मपदत्वेन निवर्त्ततामित्यादिवाक्य-मुक्तवानिति कवेर्वचनविन्यासकौशलं सुधीभिर्बोध्यम्।

वस। हञ्जे! गेण्ह एदं अलंकारअं; चारुदत्तं अहिरमिदुं गच्छम्ह। *

चेटी। अज्जए! पेक्ख पेक्ख, उण्णमदि अकालदुद्दिनं। † (अ)

वस। उदयन्तु नाम मेघाः, भवतु निशा, वर्षमविरतं पततु।
गणयामि नैव सर्वं दयिताऽभिमुखेन हृदयेन॥३२॥

हञ्जे! हारं गेण्हिअ लहुं आअच्छ। ‡ [इति निष्क्रान्ताः सर्वे]।

इति मदनिकाशर्व्विलको नाम चतुर्थोऽङ्कः॥ ४॥

* हञ्जे! गृहाणैतमलङ्कारम्; चारुदत्तमभिरन्तुं गच्छामः।

† आर्य्ये! पश्य पश्य, उन्नमति अकालदुर्दिनम्।

‡ हञ्जे! हारं गृहीत्वा लघु आगच्छ।

(अ) अकाले—असमये, दुर्द्दिनं—मेघोदयः, "मेघाच्छन्नेऽह्नि दुर्द्दिनम्" इति अमरोक्तिसत्त्वेऽप्यत्र लक्षणया दुर्द्दिननिमित्तीभूतमेघोदय एव बोध्यते। अत्र "पौषादि-चतुरो मासान् प्रोक्ता वृष्टिरकालजा" इति स्मृत्युक्ताकालवर्षा बोध्याः; तथा च "ईदृशे दुर्द्दिने तव बहिर्गमनं न युक्तिसिद्धम्" इति चेट्या आशयः।

अविज्ञातहृदये! किं मामिदानीं दर्शयसि जलदोदयविभीषिकाम्? सम्प्रति तत्प्रणयसमाकृष्टहृदयाया मम अभिसारप्रतिरोधाय किमपि नालमित्याह, उदय-न्त्विति।—मेघाः,—जलदाः, उदयन्तु—उन्नच्छन्तु, नाम इति स्वीकारे, ("नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते॥" इति मेदिनी) निशा—अन्धकारमयी रात्रिरित्यर्थः, भवतु—अस्तु, अविरतं—निर-न्तरं, वर्षं—वृष्टिः, पततु—क्षरतु, अहं दयिताभिमुखेन—प्रियाभिमुखगमनोत्सुकेन, हृदयेन—चेतसा, एतत् सर्वं—मेघोदयादिरूपं, नैव गणयामि—लक्षयामि। एतेषाम् एकैकस्यैव गमनविघातकत्वेऽपि युगपत् सर्वोदयेऽपि नाहमिदानीं कथमपि स्थातुं शक्ष्यामि इति भावः। आर्य्या वृत्तम्॥ ३२॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां
चतुर्थोऽङ्कः॥ ४॥

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति आसनस्थः सोत्कण्ठश्चारुदत्तः ] ।

चारु० । [ ऊर्ध्वमवलोक्य ] उन्नमति अकालदुर्दिनम् । यदेतत्-

आलोकितं गृहशिखण्डिभिरुत्कलापैः
हंसैर्यियासुभिरपाकृतमुन्मनस्कैः ।
आकालिकं सपदि दुर्दिनमन्तरीक्षम्
उत्कण्ठितस्य हृदयञ्च समं रुणद्धि ॥ १ ॥

पूर्व्वप्रस्तुतमकालदुर्द्दिनमेव तत्तल्लक्षणोल्लेखपुरःसरं षड्भिः श्लोकैरुपवर्णयन्नाह, आलोकितमिति ।—उत्कलापैः,—ऊर्ध्वप्रसारितवर्हैः, प्रकृतिसिद्धानन्दममुद्भवादिति भावः, ( मेघोदये हि कलापिनः परमानन्देनोत्कलापाः भवन्तीति कविसमयप्रसिद्धिः, "मेघध्वानेषु नृत्यं भवति च शिखिनाम्" इति दर्पणकृद्वचनात् ) गृहशिखण्डिभिः,—गृहपालितमयूरैः, आलोकित - सम्यक् दृष्टं, तथा यियासुभिः,—यातुं—मेघदर्शनात् गन्तुमिच्छुभिः, मानसं सर इति शेषः, ( "जलधरसमये मानसं यान्ति हंसाः" इति कविसमयप्रसिद्धिप्रस्तावे दर्पणकृद्वचनात् ) अत एव उन्मनस्कैः,—मानसगमनाय अपेक्षायतया अन्यमनस्कैरित्यर्थः, हंसैः,—मरालैः, अपाकृत—निराकृतम्, अनभिनन्दितमिति यावत्, इदानीन्तनमेघोदयस्य आकालिकत्वादिति भावः. [ "अपाकृतम् —अपकारकमिव मत्वा स्थितम्" इति लल्लादीक्षितव्याख्यानम् ] आकालिकम्— असमयोत्पन्नं, दुर्द्दिनं—दुः,—दुष्टं, वर्षणालोकाभावादिना अप्रीतिकरं, दिनं यस्मात् तत्, मेघ इत्यर्थः, ( दुर्द्दिनशब्देनात्र लक्षणया मेघ एव बोध्यः ) सपदि—झटिति, अतर्कितरूपमित्यर्थः, अन्तरीक्षम्—आकाशम्, उत्कण्ठितस्य—प्रियविरहोत्कलिकाकुलचित्तस्य जनस्य, हृदयञ्च—अन्तःकरणञ्च, समं—युगपत्, रुणद्धि—आवृणोति. पक्षे,— विषयान्तरात् विमुखीकरोतीत्यर्थः । अत्र सममिति सहार्थतात्पर्य्यकयौगपद्यबोधकशब्दबलात् अन्तरीक्ष-उत्कण्ठितहृदययोरेकावरोधक्रिययाऽन्वयात् सहोक्तिरलङ्कारः,— "सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत् ॥" इति दर्पणोक्तेः ; तन्मूलीभूता अतिशयोक्तिश्चात्र दुर्द्दिनदर्शनजन्यहृदयरोधस्य समकालीनत्वेनाध्यवसितत्वात् बोध्या । वसन्ततिलकं वृत्तम् ॥ १ ॥

अपि च,—

मेघो जलार्द्रमहिषोदर-भृङ्गनीलो
विद्युत्प्रभारचित-पीत-पटोत्तरीयः ।
आभाति संहतबलाक-गृहीतशङ्खः,
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ २ ॥

तदेव प्रकारान्तरेण वर्णयन्नाह, मेघ इति ।—जलार्द्रमहिषस्य—जले अवस्थानात् सिक्तदेहस्य महिषस्य इत्यर्थः, उदरं—कुक्षिः, (महिषस्य सहजश्यामत्वेऽपि सद्यो-जलोत्थितावस्थायां श्यामतातिशय्यं, तत्रापि उदरस्य श्यामतायां विशेषो बोध्यः) तथा भृङ्गस्य—भ्रमरस्य, तद्वत् नीलः,—श्यामः, विद्युत्प्रभया—तडिद्दीप्तिकाशेन, रचितं—कल्पितं, चित्रितमित्यर्थः, पीतपट इव—पीतवसनमिव, उत्तरीयम्—ऊर्ध्वदेहधार्य-वसनमित्यर्थः यस्य तादृशः; यद्वा—विद्युत्प्रभा एव रचितं—चित्रितं, पीतं—गौराभञ्च, पटं—परिधेयवस्त्रम् उत्तरीयञ्च यस्य तादृशः; तथा संहतः,—पुञ्जीभूतः, संलग्नः इत्यर्थः, खगात्वे इति भावः, बलाकः,—बकः एव, [बलाकशब्दः पुंलिङ्गो-ऽपि दृश्यते, स एवात्र प्रयुक्तः; बलं—कम्पनम्, अकति—गच्छति; बलेन—शक्त्या, अकति—ऊर्ध्वं गच्छति इति वा व्युत्पत्त्या बल+अक-अच् इति पवर्गीयबकारादि-बलाकशब्दः निष्पद्यते। "वल संवरणे" इति भौवादिकात् दन्त्यवकारादिवलधातोः आकन्-प्रत्ययेन च वलाक इति पदं भवितुमर्हतीति बोध्यम्] गृहीतशङ्खः,—हस्त-धृतपाञ्चजन्यं यस्य तथाभूतः, मेघः,—जलदः, अपरः,—अन्यः, प्रसिद्धातिरिक्तः इत्यर्थः, केशव इव—वामनरूपधारी नारायण इव, खम्—आकाशम्, आक्रमितुम्—आच्छादयितुम्, अन्यत्र,—पादविक्षेपेण अधिकर्त्तुमित्यर्थः, प्रवृत्तः—उद्युक्तः सन्, आभाति—विराजते। पुरा किल वामनरूपी हरिः बलियज्ञे त्रिपादमितां भूमिं भिक्षित्वा एकेन पदा आकाशमाचक्रामेति पौराणिकी वार्त्ताऽत्रानुसन्धेया। अत्र प्रसिद्धातिरिक्तकेशवस्याभेदेन मेघे उत्कटकोटिकसंशयादुत्प्रेक्षाऽलङ्कारः; एवं प्रथमे पादे तादृशमहिषोदरभृङ्गाभ्यां मेघस्य अवैधर्म्यसाम्यकथनात् उपमा, द्वितीये च विद्युत्प्रभायां विषये तादात्म्येनारोपितस्य पीतोत्तरीयस्य केशवसाम्यरूपप्रकृतार्थोप-योगित्वात् परिणामालङ्कारः, तृतीये च निरपह्नुतविषये बलाके शङ्खस्य अभेदेना-रोपात् रूपकम् इत्येतेषामलङ्काराणां परस्परसापेक्षतया सङ्करः। वसन्ततिलकं वृत्तम् ॥ २ ॥

किञ्च,—

केशवगात्रश्यामः कुटिल-बलाकावली-रचितशङ्खः।
विद्युद्गुण-कौशेयश्चक्रधर इवोन्नतो मेघः॥ ३॥

एता निषिक्त-रजतद्रव-सन्निकाशा
धारा जवेन पतिता जलदोदरेभ्यः।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति॥ ४॥

उक्तमेवार्थमार्य्यया पुनः प्रकारान्तरेणाह, केशवेति।—केशवगात्रवत्—श्रीकृष्णाङ्गमिव, श्यामः,—नीलः, कुटिला—वक्रगमनशीला, या बलाकावली—वकपङ्क्तिः, सा एव (शुभ्रत्वादिति भावः) रचितः,—धृतः, शङ्खः येन तथोक्तः, तथा विद्युदेव—तड़िदेव, गुणः,—तन्तुः विद्युद्गुणः, स एव कौशेयं—क्रिमिकोशजवस्त्रं यस्य सः तथोक्तः, ("कौशेयं क्रिमिकोशोत्थम्" इत्यमरः) मेघः,—जलधरः, चक्रधर इव—कृष्ण इव, उन्नतः,—उदितः। अतिगाढ़नीलोज्ज्वलाकृतिः शुभ्रवकराजिविराजितः विद्युद्विलासरुचिरो जलधरः, श्यामलसुन्दराकृतिः करधृतशङ्खः पीतवसनः देवकीनन्दन इव आभातीति सरलार्थः। तथा चात्र तादृशविशेषणविशिष्टमेघस्य तादृशविशेषणोपेतचक्रधरेण सर्वधर्म्यसाम्यकथनात् उपमाऽलङ्कारः, स च निरपह्नुतविषये बलाकादौ शङ्खादेस्तादात्म्येन अध्यवसानाद्रूपकेणानुप्राणित इति बोध्यम्। आर्य्या वृत्तमिदम्॥ ३॥

पुनरपि भङ्ग्यन्तरेण तदेव दुर्द्दिनमुपवर्णयन्नाह, एता इति।—निषिक्ताः,—क्षरिताः, ये रजतद्रवाः,—द्रवीभूतरजतानीत्यर्थः, तेषां सन्निकाशाः—सदृशाः, ["निभसङ्काशनीकाशप्रतीकाशोपमादयः। तुल्यार्थाः—" इत्यमरप्रमाणात् "इकः काशे" इति वार्त्तिकेन दीर्घस्य वैकल्पिकत्वात् ह्रस्वादिर्दीर्घादिः वा नी(नि)काशशब्दः सदृशार्थस्य वाचकः] जलदोदरेभ्यः,—मेघजठरेभ्यः, मेघाभ्यन्तरादित्यर्थः, पतिताः,—निर्गताः, एताः,—परिदृश्यमानाः, धाराः,—जलधाराः, विद्युदेव—तड़िदेव, प्रदीपशिखा—दीपज्वाला, तया क्षणेन—मुहूर्त्तकालेन नष्टाः,—ध्वान्ताच्छन्नतया अदर्शनं गताः, दृष्टाः,—पश्चात् विद्युत्प्रदीपशिखया दृष्टिविषयं प्राप्ताश्चेत्यर्थः, अम्बरपटस्य—आकाशरूपवसनस्य, दशाः,—प्रान्तभागाः, सूत्राणीत्यर्थः, (दशानां शुभ्रवर्णत्वेन लम्बमानत्वेन च धारासादृश्यं बोध्यम्) छिन्नाः,—उक्तरूपाद्दसनात् त्रुटिता इव, जवेन—वेगेन, पतन्ति—क्षरन्तीत्यर्थः। अत्र प्रकृते जलधारापाते शुभ्रलम्बमानत्वादिसाम्यात् अप्रकृतच्छिन्नाम्बरपटदशापातत्वेन सम्भा-

संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्त्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥
एतत्तद्धृतराष्ट्रवक्त्र-सदृशं मेघान्धकारं नभः,
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।

वनात् उत्प्रेक्षाऽलङ्कारः, स च अनपह्नुतविषयेऽम्बरादौ पटादित्वादात्म्यनारोपात् रूपकेणानुप्राणितः ; एवम् अम्बरपटस्येत्यत्र "भुजङ्गकुण्डली" इत्यादिवत् अम्बरशब्दस्य आपाततः वस्त्रार्थतया पुनरुक्तवत् आभासमानत्वात् पुनरुक्तवदाभासोऽलङ्कारः, इत्येषां परस्परमङ्गाङ्गित्वेन साङ्कर्य्यम् । वसन्ततिलकं वृत्तम् ॥ ४ ॥

तदेवाकालदुर्द्दिनं भङ्ग्यन्तरेण वर्णयन्नाह, संसक्तैरिति ।—संसक्तैः,—परस्पर-मिलितैः, चक्रवाकमिथुनैः,—कोकयुगलैरिव, प्रडीनैः,—उड्डीयमानैः, हंसैः,—मरालैरिव व्याविद्धैः,—समुद्रमन्थनादुत्पतितैः, परितो भ्रान्तैरिति वा, मीनानां—मत्स्यानां, चक्रैः,—समूहैः, तथा मकरैः,—स्वनामख्यातजलजन्तुविशेषैः इव, प्रोच्छ्रितैः,—समुन्नतैः, हर्म्यैः —प्रासादैरिव, तैः तैः,—तत्तद्विग्रवस्थितैरित्यर्थः, आकृतिभिः —आकार-भेदेन, विस्तरैः,—बहुलैः, वायुना—वातेन विश्लेषितैः —विभिद्य गमितैः, इतस्ततश्चालितै-रित्यर्थः,[ "विश्लेषितैः"इत्यत्र"विश्लेषितम्"इति पाठान्तरे गगनविशेषणं बोध्यम् ] वायुवशात् विभिन्नाकारतया बहुविधैरिति यावत्, अनुगतैः,—युक्तैः, समभ्युन्नतैः,—अत्युच्छ्रितैः, मेघैः,—जलदैः,करणीभूतैरित्यर्थः, इह—एतत्प्रदेशीयदेशावच्छिन्नं, गगनम्—आकाशतलं, पत्त्र-च्छेद्यम्—आलेख्यमिव, भाति—विराजते, गगनं चित्रमिव रमणीयं शोभते इत्यर्थः । [लल्लादीक्षितस्तु "पत्त्रच्छेद्यपदम् आलेख्यापरपर्य्यायस्य चित्रपदार्थस्य वाचकं रूढम्" इत्याह] । अत्र वायुवेगविच्छिन्ने प्रकृते मेघे तत्तद्विशेषणविशिष्टानां परेषां चक्रवाकमिथु-नादीनाम् उत्कटकोटिकसंशयात् उत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

तादृशे काले यादृशः स्वभावः समुत्पद्यते स एव इदानीमपि जात इति दर्शय-न्नाह एतदिति ।—एतत्—दृश्यमानं मेघान्धकारं—मेघैः,—जलदैः, अन्धकारः,—ध्वान्तं यस्मिन् तत्, मेघावृततया प्रगाढतमःसमाच्छन्नमित्यर्थः, नभः,—आकाशं, तस्य—प्रसिद्धस्य, (तच्छब्दोऽत्र प्रसिद्धार्थे पर्य्यवसितः, तस्मादेव चात्र यच्छब्दस्य

अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलः,
हंसाः सम्प्रति पाण्डवा इव वनादज्ञातचर्य्यां गताः ॥ ६ ॥

नापेक्षा ; यदुक्तं दर्पणकृद्भिः विश्वनाथपादैः,—"तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्य आर्थत्वमेव" इति ) धृतराष्ट्रचक्रस्य—धृतराष्ट्रसैन्यस्य, ( "चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः" इति मेदिनी ) सदृशं, वर्त्तते इति शेषः, [ सादृश्यञ्च तयोरन्धकारकारित्वेन, तत्कारित्वञ्च सैन्यस्य रथचक्राद्युत्क्षिप्तधूलिपटलैः, नभसश्च सान्द्रजलधरनिकरैः चन्द्रार्कमण्डलाच्छादकतयेति बोध्यम् ; "धृतराष्ट्रवक्त्रसदृशम्" इति पाठे तु,—प्रगाढमेघेन आच्छादनात् चन्द्रसूर्य्यशून्यतया प्रगाढान्धकारं नभः, धृतराष्ट्रस्य अन्धतया चक्षुर्द्वयविहीनेन तद्वक्त्रेण सदृशमित्यर्थः ] तथा शिखी—मयूरः, अतिदर्पितबलः,—अतिदर्पितम्—अतिशयगर्व्वितं, बलं—सैन्यं यस्य तादृशः, गर्व्वित-सैन्यसमभिव्याहृत इत्यर्थः. पक्षे,—अतिदर्पितं—मेघसन्दर्शनजानन्देनात्यन्तगर्व्वाभि-व्यञ्जकं, बलं—रूपम्. आकृतिरित्यर्थः यस्य सः. ( "बलं गन्धरसे रूपे स्थामनि स्थौल्य-सैन्ययोः" इति मेदिनी ) दुर्य्योधनो वा—दुर्य्योधन इव, ( "वा स्यात् विकल्पोपमयो-रेवार्थेऽपि समुच्चये" इति विश्वः ) हृष्टः,—आनन्दितः सन्, गर्ज्जति—स्वपौरुष-मुच्चैर्वदति, पक्षे,—शब्दायते ; ( दर्पितबलत्वञ्च शिखिनो मेघदर्शनेन, दुर्य्योधनस्य च सुभटप्राचुर्य्येण बोध्यम् )। तथा कोकिलः,—पिकः, अक्षद्यूते—पाशक्रीड़ायां, जितः,—पराभूतः, युधिष्ठिरः—धर्म्मराज इव, अध्वानम्—अशब्दं, मौनमिति यावत्, ( "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः ) गतः,—प्राप्तः, कोकिलो वसन्तापगमात्, युधिष्ठिरश्च द्यूतपराजयनिमित्तकदुःखातिशयात् निःशब्दो जात इत्यर्थः, [ लल्लादीक्षितस्तु युधिष्ठिरपक्षे,—"अध्वानं—पन्थानं, गतः" इति व्याच-कार। "अध्वानम्" इत्यत्र "अरण्यम्" इति पाठे,—कोकिलो युधिष्ठिरश्च अरण्यं—वनं, गतः ; वसन्तापगमे कोकिलानां शब्दाश्रवणात् वनगमनस्य कविसमयप्रसिद्ध-त्वात्, यद्वा कोकिलपक्षे,—रणः,—शब्दः, रण एव इति रण्यः, स्वार्थे ष्यञ्. तस्य अभावः अरण्यं—निःशब्दतामिति. "रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम्" इति मेदिनी ] सम्प्रति—जलदागमसमये, हंसाः,—मरालाः, पाण्डवा इव—पाण्डु-तनययुधिष्ठिरादय इव, वनात्—स्वप्रचारस्थानात्, जलाद्वा, ( "पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः ) द्वादशवर्षोषितात् अरण्यात् च [ अपादाने पञ्चमी, यद्वा—वनात् इति ल्यब्लोपे पञ्चमी. वनं प्राप्य, वनं परित्यज्य वेत्यर्थः ] अज्ञातचर्य्याम् —अज्ञाते—परैरविदिते मानसाख्ये सरसि, चर्य्या—गमनं, "जलधरसमये मानसं

[ विचिन्त्य ] चिरं खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य, नाद्यापि आगच्छति।

विदू। [ प्रविश्य ] अम्हो! गणिआए लोभो अदक्खिणदा अ; जदो ण कधा वि किदा अणआए, अणाअरेण ज्जेव्व अभणिअ किं पि एव्वं ज्जेव्व गहिदा रअणावली। एत्तिआए ऋद्धीए ण तए अहं भणिदो,—"अज्ज मित्तेअ! वीसमीअदु, मल्लकेण पाणीअं पि पिविअ गच्छीअदु" त्ति। ता मा दाव दासीए धीआए गणिआए मुहं पि पेक्खिस्सं। ( क ) [ सनिर्वेदम् ]

* अहो! गणिकाया लोभः अदक्षिणता च, यतो न कथाऽपि कृता अनया, अनादरेणैव अभणित्वा किमपि एवमेव गृहीता रत्नावली। एतावत्या ऋद्ध्या न तया अहं भणितः,—"आर्य्य मैत्रेय! विश्रम्यतां, मल्लकेन पानीयमपि पीत्वा गम्यताम्" इति। तत् मा तावत् दास्याः पुत्र्या गणिकाया मुखमपि द्रक्ष्यामि।

यान्ति हंसाः" इति कविसमयप्रसिद्धेः; अन्यत्र,—अज्ञाते—परैरविदिते स्थाने, विराटराज्ये इत्यर्थः. चर्य्यां—छद्मवेशेनाज्ञातवासम्, [ "अज्ञातचर्य्याम्" इत्यत्र "परिचर्य्या-परिसर्य्या-मृगया-ऽटाट्यानामुपसङ्ख्यानम्" ( वा० ) इति सूत्रे परैरविवक्षात: चरधातोः क्यप्प्रत्यये रूपं सिद्धम्। "अज्ञातचर्य्यम्" इति पाठान्तरे तु—"गदमदचरयमश्चानुपसर्गे" ( ३।१।१०० पा० ) इति यप्रत्ययः ] गताः,—प्राप्ताः। अत्र हंसादीनां पाण्डवादिभिरवैधर्म्यसाम्यकथनादुपमाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ६॥

( क ) अदक्षिणता—अनुदारता, [ "अणआए" इति प्राकृतस्य "अनयया" इति वा संस्कृतम्; नास्ति नयः,—नीतिः यस्याः तथोक्तया, अनीतिज्ञया इत्यर्थः। "अणा" इति पाठान्तरे,—"अनया" इति संस्कृतं साधुतया न सङ्गच्छते, अन्या इत्येव सङ्गतम्; किन्तु अयं पाठः न तथा मनोरमः प्रतिभातीति बोध्यम्; तथात्वे, अन्या—चारुदत्तस्य कुशलप्रश्नं विना अपरा, कथं हारितं सुवर्णभाण्डमित्यादिरूपा इत्यर्थः ] किमपि अभणित्वा—"केन सार्कं हारितं सुवर्णभाण्डम्? कदा वा? कथञ्चैतत् प्रतिदानम्?" इति अकथयित्वा इत्यर्थः, यद्वा,—यद्गतं, तद्गतं, तेन किम्? अल्पमूल्यस्य तस्य कृते बहुमूल्यामिमां न गृहीष्यामि इत्यादिकं किमपि अनुक्त्वा इत्यर्थः। ऋद्ध्या—सम्पत्त्या, [ विशेषणे तृतीया ]। मल्लकेन—मल्ल एव मल्लकः तेन, पात्रविशेषेण इत्यर्थः; [ "मल्लः पात्रे कपोले च" इति मेदिनी। "मल्लकेण" इत्यत्र "गल्लकेण" इति

सुट्ठु क्खु वुच्चदि, अक्कंदसमुत्थिदा पउमिणी, अवंचओ वाणिओ, अचोरो सुवस्सआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति दुक्करं एदे संभावोअंति। (ख) ता पिअवअस्सं गदुअ इमादो गणिआपसंगादो णिवत्तावेमि। [परिक्रम्य दृष्ट्वा च] कधं! पिअवअस्सो रुक्खवाड़िआए उवविट्ठो चिट्ठदि, ता जाव उवसप्पामि। [उपसृत्य] सोत्थि भवदे, (ग) वड्ढदु भवं। ॐ

चारु। [विलोक्य] अये! सुहृन्मे मैत्रेयः प्राप्तः। वयस्य! स्वागतम्? आस्यताम्।

विदू। उववि‌ट्ठोम्हि। *

चारु। वयस्य! कथय तत् कार्य्यम्।

विदू। तं क्खु कज्जं विणट्ठं। †

चारु। किं तया न गृहीता रत्नावली?

ॐ सुष्ठु खलु उच्यते, अकन्दसमुत्थिता पद्मिनी, अवञ्चकी वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करमेते सम्भाव्यन्ते। तत् प्रियवयस्यं गत्वा अस्मात् गणिकाप्रसङ्गात् निवर्त्तयामि। कथं! प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति, तत् यावदुपसर्पामि। स्वस्ति भवते, वर्द्धतां भवान्।

* उपविष्टोऽस्मि।

† तत् खलु कार्य्यं विनष्टम्।

पाठान्तरं,—"गल्वर्केण" इति संस्कृतम्। गल्वर्केण—चषकेण, पानपात्रेणेत्यर्थः। "पाणीअं पि पिबिअ गच्छीअदु त्ति" इत्यत्र "पाणीअ पि पिवीअदु" इति पाठान्तरं, "पानीयमपि पीयताम्" इति संस्कृतम्]।

(ख) अकन्दसमुत्थिता—कन्दः,—मूलविशेषः (भुँपीति भाषा) तस्मान्न समुत्थिता—विना कन्दं समुत्पन्ना। ["पउमिणी" इति "उः पद्मतन्वीसमेषु" इति सूत्रेण पद्मशब्दस्य मकारस्य विप्रकर्षः, दकारस्य च उकारः]। ग्रामसमागमः,—ग्राम्यलोकानामेकत्र सम्मीलनम् इत्यर्थः। दुष्करं सम्भाव्यन्ते—सम्भावना दुष्करा, नैव सम्भाव्यन्ते इत्यर्थः।

(ग) ["भवदे" इत्यत्र "भोदे" इति पाठान्तरस्यापि "भवते" इति संस्कृतम्]।

विदू। कुदो अम्हाणं एत्तिअं भाअधेअं? णवणलिणकोमलं अंजलिं मत्थए कदुअ पड़िच्छिआ। * (घ)

चारु। तत् किं ब्रवीषि विनष्टमिति?

विदू। भो:! कधं ण विणट्ठं? जं अभुत्तस्स अपीदस्स चोरेहिं अवहिदस्स अप्पमुल्लस्स सुवस्सभंडअस्स कारणादो चदुस्समुद्दसारभूदा रअणमाला (ङ) हारिदा। †

चारु। वयस्य! मा मैवम्,—

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृत:।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥७॥

विदू। भो वअस्स! एदं पि मे दुदिअं संतावकारणं, जं सहीअण-दिस-सस्साए पड़ंतोवारिदं मुहं कादुअ अहं उव-

* कुतोऽस्माकमेतावद्भागधेयम्? नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतीष्टा।

† भो:! कथं न विनष्टम्? यत् अभुक्तस्य अपीतस्य चौरैरपहृतस्य अल्पमूल्यस्य सुवर्णभाण्डस्य कारणात् चतु:समुद्रसारभूता रत्नमाला हारिता।

‡ भो वयस्य! एतदपि मे द्वितीयं सन्तापकारणं, यत् सखीजनदत्तसंज्ञया

(घ) भागधेयं—भाग्यं, येन सा न ग्रहीष्यतीति भाव:। प्रतीष्टा—प्रतिगृहीता।

(ङ) चतु:समुद्रसारभूता—चतुर्षु समुद्रेषु—सागरेषु, य: सार:,—श्रेष्ठांश:, तद्भूता—तत्स्वरूपा, सागरान्तर्वर्त्तिरत्नानां सर्वप्रधानरत्नस्वरूपेत्यर्थ:, [“रअणमाला” इत्यत्र “रअणाबली” इति पाठान्तरं, “रत्नावली” इति संस्कृतम्]।

अल्पस्य हेतोर्बहुत्त्यागं स्वीकृत्य त्वया न युक्तमाचरितमित्यस्य विदूषकवाक्यस्य प्रत्युत्तरमाह, यमिति।—तया—रमण्या, वसन्तसेनया इत्याशय:, यं विश्वासं—प्रत्ययं, समालम्ब्य—समाश्रित्य, अस्मासु—मादृशेषु, न्यास:,—अलङ्कारनिक्षेप:, कृत:,—विहित:, महत:—अमितमूल्यस्येत्यर्थ:, तस्य प्रत्ययस्य—विश्वासस्यैव, एतत्—रत्नावलीरूपं वस्तु, मूल्यं—निष्क्रयं, दीयते—प्रत्यर्प्यते; नैतदपहृतसुवर्णभाण्डस्य मूल्यम्, अपि तु अमूल्यस्य विश्वासस्येति नात्र न्यूनाधिकविचार: कर्त्तव्य: इति भाव:। पथ्यावक्त्रं वृत्तम् ॥ ७ ॥

हसिदो। ता अहं बम्हणो भविअ दाणिं भवंतं सीसेण पडिअ विण्णवेमि,—णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो गणिआ-पसंगादो। गणिआ णाम पादुअंतरप्पविट्टा विअ लेट्टुआ दुक्खेण उण णिराकरीअदि। अविअ,—भो वअस्स! गणिआ, हत्थी, काअत्थओ, भिक्खु, चाटो, रासहो अ, जहिं एदे णिवसंति, तहिं दुट्टा वि ण जाअंति। ❀ (च)

पटान्तापवारितं मुखं कृत्वा अहमुपहसितः। तदहं ब्राह्मणो भूत्वा इदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि,—निवर्त्त्यतामात्मा अस्मात् बहुप्रत्यवायात् गणिका-प्रसङ्गात्। गणिका नाम पादुकान्तरप्रविष्टा इव लेष्टुका दुःखेन पुनर्निराक्रियते। अपि च,—भो वयस्य! गणिका, हस्ती, कायस्थः, भिक्षुः, चाटः, रासभश्च, यत्र एते निवसन्ति, तत्र दुष्टा अपि न यान्ति।

(च) सन्तापकारणं—मनस्तापहेतुः। किं तदित्याह, यदिति।—सखीजन-दत्तसंज्ञया—सखीजनाय—स्ववयस्यायै, चेव्यै इत्यर्थः, दत्ता—कृता इति यावत्, संज्ञा—सङ्केतः यया तथोक्तया, तया वसन्तसेनयेति शेषः, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः)। पटान्तापवारितम्—अञ्चलाच्छादितम्। तत्—तस्मात्, तत्कृतोपहासजन्यावमाननादित्यर्थः। ब्राह्मणो भूत्वा—ब्राह्मणवंशे उत्पन्नः सन्नपीत्यर्थः। भवन्तं शीर्षेण पतित्वा—शिरसा तव पादयोः पतित्वा इत्यर्थः, तव चरणोपरि मस्तकं संस्थाप्य इति यावत्। बहुप्रत्यवायात्—पापभूयिष्ठात्, विघ्न-बहुलाद्वा, गणिकाप्रसङ्गात्—वेश्यासम्पर्कात्। पादुकान्तरप्रविष्टा—चरणपरिहितोपा-नदन्तर्वर्त्तिनी। लेष्टुका—क्षुद्रलोष्टं, "काँकर" इति वङ्गभाषा। ["लोष्टानि लेष्टवः पुंसि" इत्यमरः, अतः लेष्टुशब्दात् क्षुद्रार्थे कः। स्त्रीत्वमविवक्षितम्] निराक्रियते—अपसार्य्यते; गणिकाप्रणयः अनायासेन न निराकर्त्तुं शक्यते इति भावः। चाटः,—प्रतारकः, विश्वासघातीत्यर्थः, "यो विश्वास्य परधनमपहरति" इति मिताक्षरायाम् आचाराध्याये; "क्षुद्रविषयभोक्ता" इति प्राचीनाः। रासभः,—गर्द्दभः। यत्र—यस्मिन् आश्रये। निवसन्ति—वासं कुर्व्वन्ति। दुष्टाः,—सदोषा अपि जनाः, का कथा निर्द्दोषाणामिति भावः। न यान्ति—न गच्छन्ति इत्यर्थः, तत्र दोषातिरेक-स्यावश्यम्भावात् इति भावः। ["जाअंति" इति प्राकृतस्य "जायन्ते", इति संस्कृतं पुस्तकान्तरे दृश्यते। तथात्वे जायन्ते—प्रादुर्भवन्ति, विद्यन्ते इत्यर्थः। लक्षादीधितस्तु,

चारु। वयस्य ! अलमिदानीं सर्व्वं परिवादमुक्त्वा, अवस्थया एव अस्मि निवारितः। (क) पश्य,—

वेगं करोति तुरगस्त्वरितं प्रयातुं,
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्व्वत्र यान्ति पुरुषस्य चलाः स्वभावाः,
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥ ८ ॥

—"दृष्टाः" इति दुषधातोः भावे क्तप्रत्ययेन निष्पन्नं, दोषाः इत्यर्थः, न जायन्ते ? अपि तु जायन्ते एव इत्येवमर्थं काक्वा समर्थयते। तद्धि गजनिमीलिकेव, भावे क्तप्रत्ययान्तस्य नपुंसकतायाः अपरिहार्य्यत्वात् ]।

( क ) परिवादं—निन्दाम्। उक्त्वा अलं—किं, निन्दावादो निष्प्रयोजन इत्यर्थः, [ "सर्व्वं परिवादम्" इत्यत्र "सर्व्वपरिवादम्" इति पाठः समीचीनतया प्रतिभाति, तत्र सर्वेषां परिवादम् इति व्यासः करणीयः ] [ "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" ( ३।४।१८ पा० ) इति अलंयोगे क्त्वाप्रत्ययः ]। अवस्थयैव—वर्त्तमानया मदीयदुर्द्दशयैव। निवारितः,—प्रतिषिद्धः, अस्मात् गणिकाप्रसङ्गादिति शेषः; गणिकाप्रसङ्गस्य निन्दावादप्रचारेण तवायं गणिकाप्रसङ्गात् मन्मनोनिवर्त्तनप्रयासो निष्प्रयोजन एव, यतः इदानीमहमीदृग्दुरवस्थः सञ्जातः, यन्मामेवं विभवहीनमालोक्य धनलुब्धा काऽपि गणिका नाश्रयिष्यतीति भावः।

उक्तमेवार्थं दृष्टान्तप्रदर्शनेन समर्थयमान आह, वेगमिति।—तुरगः,—अश्वः, त्वरितं—शीघ्रं, प्रयातुं,—गन्तुं, वेगं—जवं, द्रुतपदक्षेपमित्यर्थः, करोति—विधत्ते, तु—किन्तु, चरणाः,—पादाः, तदीया इति शेषः, प्राणव्ययात्—प्राणनाशमाशङ्क्य, [ इति ल्यब्लोपे पञ्चमी ] अथवा,—प्राणव्ययात्—बलक्षयात्, दुर्बलतया इत्यर्थः, अधिकसमयपर्य्यटनेन इति भावः, तथा—त्वरितमित्यर्थः, न वहन्ति—न धावन्ति; तथा हि, पुरुषस्य—जनस्य, दरिद्रस्येति भावः, चलाः,—चञ्चलाः, स्वभावाः,—प्रकृतयः, सर्व्वत्र—सर्वेष्वेव विषयेषु, साध्येषु असाध्येषु चेत्यर्थः, यान्ति—धावन्ति, ततः खिन्नाः,—खेदं प्राप्ताः सन्तः, तत्तत्कार्य्याक्षमतयेति भावः, पुनः,—भूयः, हृदयमेव—स्वावासभूतमन्तःकरणमेवेत्यर्थः, विशन्ति—लयं गच्छन्ति, कल्पनामात्रसारत्वादिति भावः। ( अस्यानुरूपः श्लोको यथा,—"उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः। बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव॥" इति )। अत्र "मम स्वभावः

अपि च, वयस्य!—

यस्यार्थास्तस्य सा कान्ता, धनहार्य्यो ह्यसौ जनः।

[स्वगतम्] न, गुणहार्य्यो ह्यसौ जनः। [प्रकाशम्]—

वयमर्थैः परित्यक्ताः, ननु त्यक्तैव सा मया॥ ९॥

विदू। [अधोऽवलोक्य स्वगतम्] जधा एसो उद्धं पेक्खिअ दीहं णिस्ससदि, तधा तक्केमि, मए विणिवारिअंतस्स अधिअदरं वड्ढिदा से उक्कंठा, ता सुट्ठु क्खु एव्वं वुच्चदि, "कामो वामो" (ज) त्ति। [प्रकाशम्] भो वअस्स! भणिदं अ ताए,—"भणेहि चारु-

* यथा एष ऊर्द्ध्वं प्रेक्ष्य दीर्घं निश्वसिति, तथा तर्कयामि, मया विनिवार्य्यमाणस्य अधिकतरं वृद्धा अस्योत्कण्ठा, तत् सुष्ठु खलु एवमुच्यते, "कामी वामः" इति। भो

वसन्तसेनागतोऽपि अर्थाभावेन दुःखितः सन् ततः प्रतिनिवृत्तः" इति विशेषे प्रस्तुते सादृश्यसामान्यस्याप्रस्तुतस्याभिहितत्वात् शेषार्द्धे अप्रस्तुतप्रशंसाऽलङ्कारः; स च सत्वरं चलितुमभिलषन्नपि तुरगः असामर्थ्यान्न प्रभवतीति समानधर्म्मस्य वस्तुनः प्रति-बिम्बनात् पूर्व्वार्द्धगतदृष्टान्तालङ्कारेण सङ्कीर्णः। वसन्ततिलकं वृत्तम्॥ ८॥

मद्गुणैकपक्षपातिनी वसन्तसेना विभवपरिहीणमपि मां कथमपि न परि-त्यक्ष्यतीति मनसा सम्यक् जानन्नपि विदूषकमन्यथा बोधयन्नाह, यस्येति।—यस्य—जनस्य, अर्थाः,—धनानि, सन्तीति शेषः, सा—वसन्तसेना, तस्य—धनवतो जनस्य, कान्ता—प्रिया; हि—यतः, असौ जनः,—वसन्तसेनारूपः, धनहार्य्यः,—धनेन हार्य्यः,—वश्यः, वेश्यात्वादिति भावः। न इति धनहार्य्यत्वरूपायाः पूर्व्वोक्तेः परिहार-बोधकम्। प्रकाशमेवमुक्तौ मुखरः मैत्रेयः अन्यद्वा किमपि वदेत् इति विचिन्त्य स्वगतमेवोक्तं विज्ञचारुदत्तेन इति विद्वद्भिर्विभाव्यम्। हि—निश्चितम्, असौ जनः गुणहार्य्यः,—वेश्यात्वेऽपि गुणवश्य इत्यर्थः; वयम्—अस्मादृशाः, अर्थैः,—विभवैः, परित्यक्ताः,—हीनाः, दरिद्रा इत्यर्थः, ननु—भोः! सा मया त्यक्ता एव—सुतरां त्यक्ता इत्यर्थः; अतः तत्प्रसङ्गपरिहारार्थं तवायमनुरोधः निरर्थक एवेति भावः। अत्र चतुर्थ-पादार्थं प्रति तृतीयपादार्थस्य हेतुतया काव्यलिङ्गमलङ्कारः॥ ९॥

(ज) वामः,—प्रतिकूलः, दुर्निवार्य्यतया अतिकुटिलः इति यावत्।

दत्तं, अज्ज पओसे मए एत्थ आअंतव्वं"त्ति, ता तक्केमि, रअणा-
वलीए अपरितुट्टा अवरं मग्गिदुं आअमिस्सदि (ञ) त्ति। *

चारु। वयस्य! आगच्छतु, परितुष्टा यास्यति।

चेटः। [प्रविश्य] अवेध (ञ) माणहे! *—

जधा जधा वश्शदि अब्भखंडे, तधा तधा तिम्मदि पुट्ठिचम्मे।
जधा जधा लग्गति शीदवादे, तधा तधा वेवदि मे हलक्के †॥१०॥

[प्रहस्य]।—वंशं वाए शत्तछिद्दं, शुशद्दं,
वीणं वाए शत्ततंतिं णदंतिं।
गीअं गाए गद्दहश्शाणुलूअं
को मे गाणे तंबुलू णालदे वा? ‡॥११॥

---

वयस्य! भणितश्च तया,—"भण चारुदत्तम्, अद्य प्रदोषे मया अत्रागन्तव्यम्" इति। तत् तर्कयामि, रत्नावल्या अपरितुष्टा अपरं मार्गयितुम् आगमिष्यतीति।

* अपेत मानवाः!—

† यथा यथा वर्षति अभ्रखण्डं, तथा तथा तिम्यति पृष्ठचर्म।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम्॥

‡ वंशं वादयामि सप्तच्छिद्रं सुशब्दं, वीणां वादयामि सप्ततन्त्रीं नदन्तीम्।
गीतं गायामि गर्दभस्यानुरूपं, को मे गाने तुम्बुरुर्नारदो वा?॥

---

(ञ) अपरं—रत्नावलीभिन्नमन्यत् किञ्चिदित्यर्थः। मार्गयितुं—याचितुम्। ["आअमिस्सदि" इत्यत्र "आअच्छदि" इति पाठान्तरम्; "आगच्छति" इति संस्कृतम्]।

(ञ) अपेत—अपगच्छत। ["अवेध" इति प्राकृतस्य "अपेत" इति संस्कृतम्, "अवगच्छत" इत्यर्थश्च प्राचीनसम्मतः]।

वृष्टिजलसिक्तकायो वेपमानश्चेटः अन्यानवहितान् कुर्वन् स्वामवस्थां वर्णयन्नाह, जधेति।—अभ्रखण्डं—मेघशकलं, यथा यथा वर्षति—वर्षणं करोति, पृष्ठचर्म—पश्चाद्भाग इत्यर्थः, तथा तथा तिम्यति—आर्द्रीभवति. एवं शीतवातः,—शीतलो वायुः, यथा यथा लगति—गात्रं स्पृशति इत्यर्थः, तथा तथा मे—मम, हृदयम्—अन्तः-करणम्, [अत्र हृदयपदं सर्व्वशरीरोपलक्षकं बोध्यम्] वेपते—कम्पते। उपेन्द्रवज्रा वृत्तम्॥ १०॥

इदानीं स्वस्य गीतकलापारदर्शितामाह, वंशमिति।—सप्तछिद्रं—सप्तस्वरोत्पादक-

आणत्तम्हि अज्जआए वशंतशेणाए,—"कुंभीलआ! गच्छ तुमं, मम आगमणं अज्जचारुदत्तश्श णिवेदेहि" त्ति। ता जाव अज्जचारुदत्तश्श गेहं गच्छामि। [ परिक्रम्य प्रविश्यालोक्य दृष्ट्वा ] एशे चारुदत्ते रुक्खवाडिआए चिट्ठदि; एशे वि शे दुट्टवडुके; ता जाव उवशप्पेमि। कधं! ढक्किदे दुवाले रुक्खवाडिआए!! भोदु, एदश्श दुट्टवडुअश्श शण्णं देमि। * (ट) [इति लोष्टगुटिकाः क्षिपति ]।

विदू। अए! को दाणिं एसो पाआरवेट्टिदं (ठ) विअ कइत्थं मं लोट्टकेहिं ताडेदि? †

चारु। आराम-प्रासाद-वेदिकायां (ड) क्रीडद्भिः पारावतैः पातितं भवेत्।

* आज्ञप्तोऽस्मि आर्य्यया वसन्तसेनया,—"कुम्भीलक! गच्छ त्वं, ममागमनमार्य्यचारुदत्तस्य निवेदय" इति। तद्यावत् आर्य्यचारुदत्तस्य गेहं गच्छामि। एष चारुदत्तो वृक्षवाटिकायां तिष्ठति; एषोऽपि स दुष्टवटुकः; तद्यावदुपसर्पामि। कथम्! आच्छादितं द्वारं वृक्षवाटिकायाः!! भवतु, एतस्य दुष्टवटुकस्य संज्ञां ददामि।

† अयि! क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति?

सप्तरन्ध्रविशिष्टमित्यर्थः, सुशब्दं—सुस्वरं, वंशं—वेणुं, वादयामि—शब्दितं करोमि, तथा नदन्तीं—शब्दायमानां, सप्ततन्त्रीं—सप्तस्वरोत्पादकसप्ततन्त्र युक्तां, वीणाञ्च वादयामि, तथा गर्द्दभस्य—रासभस्य, अनुरूपं—सदृशं, गीतं—गानं, गायामि—करोमीत्यर्थः, अतः गाने—गीतविद्यायां, तुम्बुरुर्नारदो वा—स्वनामख्यातो गीतचुञ्चुः गन्धर्व्वः, तथाविधो देवर्षिविशेषो वेत्यर्थः, मे—मम समीपे, कः?—कीदृक् गुणशाली? न गण्य इत्यर्थः। अत्र उपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः। शालिनी वृत्तम्,—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्॥ ११॥

(ट) संज्ञां—सङ्केतम्। ददामि—ज्ञापयामि।

(ठ) प्राकारवेष्टितं—प्राचीरान्तःस्थितं, कपित्थं—फलविशेषं, "कयेदबेल" इति वङ्गभाषया प्रसिद्धम्।

(ड) आरामप्रासादवेदिकायाम्—आरामे—उपवने, ("आरामः स्यात् उप-

विदू। दासीए पुत्त दुट्टपारावअ ! चिट्ठ, चिट्ठ, जाव एदिणा दंडकट्ठेण सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाड़इस्सं। * [ इति दण्डकाष्ठमुद्यम्य धावति ]।

चारु। [ यज्ञोपवीते आकृष्य ]। वयस्य! उपविश, किमनेन? तिष्ठतु दयितासहितस्तपस्वी (ढ) पारावतः।

चेटः। कधं ! पारावद पेक्खदि, मं ण पेक्खदि !! भोदु, अवराए लोट्टगुड़िआए पुणो वि ताड़इस्सं। † [ तथा करोति]।

विदू। [ दिशोऽवलोक्य ] कधं कुंभोलओ !! ता जाव उवसप्पामि। [ उपसृत्य द्वारमुद्घाट्य च ] अरे कुंभोलअ! पविश, साअदं दे ? ‡

चेटः। [ प्रविश्य ] अज्ज ! वंदामि। §

विदू। अरे ! कहिं तुमं ईदिसे दुद्दिणे अंधआरे आअदो ? ¶

चेटः। अले ! एशा शा। **

विदू। का एशा का ? ††

चेटः। एशा शा। ‡‡

* दास्याः पुत्र दुष्टपारावत ! तिष्ठ, तिष्ठ, यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलम् अस्मात् प्रासादात् भूमौ पातयिष्यामि।

† कथम् ! पारावतं पश्यति, मां न पश्यति !! भवतु, अपरया लोष्टगुटिकया पुनरपि ताडयिष्यामि।

‡ कथं कुम्भीलकः !! तत् यावदुपसर्पामि। अरे कुम्भीलक ! प्रविश, स्वागतं ते ?

§ आर्य्य ! वन्दे।

¶ अरे ! कुत्र त्वमीदृशे दुर्दिने अन्धकारे आगतः ?

** अरे ! एषा सा। †† का एषा का ? ‡‡ एषा सा।

वनम्" इत्यमरः ) यः प्रासादः,—बृहदट्टालिका, तत्र या वेदिका—प्रासादालिन्दे रचितबद्धप्रदेशविशेषः तस्याम्।

(ढ) दयितासहितः,—प्रियतमोपेतः, सस्त्रीक इति यावत्। तपस्वी—वराकः, क्षुद्रप्राणितया कृपापात्रम् इत्यर्थः।

विदू। किं दाणिं दासीए पुत्ता ! दुब्भिक्खकाले वुड्ढरंको विअ (ण) उद्धकं सासाअसि, एसा सा सा त्ति ? *

चेटः। अले ! तुमं पि दाणिं इंदमह-कामुको विअ (त) मुह्रु किं काकाअसि, का का त्ति ? †

विदू। ता कहेहि। ‡

चेटः। [स्वगतम्] भोदु, एव्वं भणिश्शं। [प्रकाशम्] अले ! पण्हं दे दइश्शं। §

विदू। अहं दे मुंडे गोड़ं दइस्सं। ¶

चेटः। अले ! जाणाहि दाव तेण हि, कश्शिं काले चआ मोलेंति ? ** (थ)

विदू। अरे दासीए पुत्ता ! गिम्हे। ††

---

* किमिदानीं दास्याः पुत्र ! दुर्भिक्षकाले वृद्धरङ्क इव ऊर्द्धकं श्वासायसे, एषा सा सेति ?

† अरे ! त्वमपि इदानीमिन्द्रमखकामुक इव मुहु किं काकायसे, का केति ?

‡ तत् कथय। § भवतु, एवं भणिष्यामि। अरे ! प्रश्नं ते दास्यामि।

¶ अहं ते मुण्डे पादं दास्यामि।

** अरे ! जानीहि तावत् तेन हि, कस्मिन् काले चूताः मुकुलयन्ति ?

†† अरे दास्याः पुत्र ! ग्रीष्मे।

(ण) वृद्धरङ्क इव—वृद्धकृपण इव, दरिद्रवृद्ध इव इत्यर्थः, "रङ्कः कृपणमन्दयोः" इति मेदिनी।

(त) इन्द्रमखकामुक इव—इन्द्रस्य मखः,—यज्ञः, शक्रध्वजपूजा इत्यर्थः, तस्य कामुक इव—आकाङ्क्षीव, शक्रध्वजपूजायां हि काकेभ्यो बलिर्दीयते इति, (एतद्विधिस्तु वृहत्संहितायां द्रष्टव्यः) तद्बलिकामुकः काक इवेति भावः। ["इंदमह-काकपोदओ विअ" इति पाठे,—"इन्द्रमखकाकपोत इव" इति संस्कृतम्। इन्द्रमखे यः काकपोतः,—काकशावकः स इव इत्यर्थः]।

(थ) मुकुलयन्ति—पुष्पिता भवन्ति, [आत्मानं मुकुलवन्तं करोति इति वाक्ये "तत्करोति" इत्यर्थे णिच्, इष्टवद्भावात् मतुपो लुकि सिद्धमिदम्]। "अले ! जाणाहि दाव" इत्यारभ्य "विदू। [विचिन्त्य] वसंतसेणा" इत्यन्तं यावत् वाक्केलिर्नाम वीथ्यङ्गलक्षणलक्ष्यं ज्ञेयं, यदुक्तं,—"वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्" इति।

चेटः। [सहासम्] अले! ण हि, ण हि। *

विदू। [स्वगतम्] किं दाणिं एत्थ कहिस्सं? [विचिन्त्य] भोदु, चारुदत्तं गदुअ पुच्छिस्सं। [प्रकाशम्] अरे! मुहुत्तअं चिट्ठ। [चारुदत्तमुपसृत्य] भो वअस्स! पुच्छिस्सं दाव, कस्सिं काले चूआ मोलेंति? †

चारु। मूर्ख! वसन्ते।

विदू। [चेटमुपगम्य] मुक्ख! वसंते। ‡

चेटः। दुदिअं दे पण्हं दइस्सं। शुशमिद्धाणं गामाणं का लक्खअं कलेदि? §

विदू। अरे! रच्छा। ¶

चेटः। [सहासम्] अले! ण हि, ण हि। **

विदू। भोदु, संसए पडिदम्हि। [विचिन्त्य] भोदु, चारुदत्तं पुणो वि पुच्छिस्सं। †† [पुनर्निवृत्य चारुदत्तं तथैव उदाहरति]।

चारु। वयस्य! सेना।

विदू। [चेटमुपगम्य] अरे! दासिए पुत्ता! सेणा। ‡‡

चेटः। अले! दुवे वि एक्कश्शिं कदुअ शिग्घं भणाहि। §§

विदू। सेणावसंत। ¶¶

* अरे! न हि, न हि।

† किमिदानीमत्र कथयिष्यामि? भवतु, चारुदत्तं गत्वा प्रक्ष्यामि। अरे! मुहूर्त्तकं तिष्ठ। भोः वयस्य! प्रक्ष्यामि तावत्, कस्मिन् काले चूता मुकुलयन्ति?

‡ मूर्ख! वसन्ते।

§ द्वितीयं ते प्रश्नं दास्यामि। सुसमृद्धानां ग्रामाणां का रक्षां करोति?

¶ अरे! रथ्या।

** अरे! न हि, न हि।

†† भवतु, संशये पतितोऽस्मि। भवतु, चारुदत्तं पुनरपि प्रक्ष्यामि।

‡‡ अरे! दास्याः पुत्र! सेना।

§§ अरे! द्वे अपि एकस्मिन् कृत्वा शीघ्रं भण।

¶¶ सेनावसन्ते।

चेटः। णं पलिवत्तिअ भणाहि। *

विदू। [ कायेन परिवृत्य ] सेणावसंते। †

चेटः। अले मुक्खवडुअ! पदाइं पलिवत्तावेहि। ‡

विदू। [ पादौ परिवर्त्य ] सेणावसंते। §

चेटः। अले मुक्ख! अक्खलपदाइं पलिवत्तावेहि। ¶

विदू। [ विचिन्त्य ] वसंतसेणा। **

चेटः। एशा शा आअदा। ††

विदू। ता जाव चारुदत्तस्स णिवेदेमि। [ उपसृत्य ] भो चारुदत्त! धणिओ दे आअदो। ‡‡

चारु। कुतोऽस्मत्कुले धनिकः?

विदू। जइ कुले णत्थि, ता दुआरे अत्थि। एसा वसंतसेणा आअदा। §§

चारु। वयस्य! किं मां प्रतारयसि?

विदू। जइ मे वअणे ण पत्तिआअसि, ता एदं कुंभीलअं पुच्छ। अरे दासीए पुत्ता कुंभीलअ! उवसप्प। ¶¶

चेटः। [ उपसृत्य ] अज्ज! वंदामि। ***

चारु। भद्र! स्वागतम्? कथय, सत्यं प्राप्ता वसन्तसेना?

* ननु परिवर्त्य भण। † सेनावसन्ते।

‡ अरे! मूर्खवटुक! पदे परिवर्त्तय। § सेनावसन्ते।

¶ अरे मूर्ख! अक्षरपदे परिवर्त्तय। ** वसन्तसेना।

†† एषा सा आगता।

‡‡ तत् यावत् चारुदत्तस्य निवेदयामि। भोः चारुदत्त! धनिकस्ते आगतः।

§§ यदि कुले नास्ति, तत् द्वारे अस्ति। एषा वसन्तसेना आगता।

¶¶ यदि मे वचने न प्रत्ययसे, तदिमं कुम्भीलकं पृच्छ। अरे दास्याः पुत्र कुम्भीलक! उपसर्प।

*** आर्य्य! वन्दे।

चेटः। एशा शा आअदा वशंतशेणा। *

चारु। [सहर्षम्] भद्र! न कदाचित् प्रियवचनं निष्फलीकृतं मया, तत् गृह्यतां पारितोषिकम्। [इत्युत्तरीयं प्रयच्छति]।

चेटः। [गृहीत्वा प्रणम्य सपरितोषम्] जाव अज्जआए णिवेदेमि। †

[इति निष्क्रान्तः]।

विदू। भो! अवि जाणासि, किं णिमित्तं ईदिसे दुद्दिणे आअदेत्ति? ‡

चारु। वयस्य! न सम्यगवधारयामि।

विदू। मए जाणिदं, अप्पमुल्ला रअणावली, बहुमुल्लं सुवण्णभंडअं त्ति ण परितुट्ठा, अवरं मग्गिदुं आअदा। §

चारु। [स्वगतम्] परितुष्टा यास्यति।

[ततः प्रविशति उज्ज्वलाभिसारिकावेशेन सोत्कण्ठा वसन्तसेना, छत्रधारिणी विटश्च]

विटः। [वसन्तसेनामुद्दिश्य]।—

अपद्मा श्रीरेषा, प्रहरणमनङ्गस्य ललितं,
कुलस्त्रीणां शोको, मदनवरवृक्षस्य कुसुमम्।
सलीलं गच्छन्ती, रतिसमयलज्जाप्रणयिनी,
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता॥ १२॥

---

* एषा सा आगता वसन्तसेना। † यावदार्य्यायै निवेदयामि।

‡ भोः! अपि जानासि, किं निमित्तम् ईदृशे दुर्दिने आगतेति?

§ मया ज्ञातम्, अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डम् इति न परितुष्टा, अपरं मार्गयितुम् आगता।

अभिसारार्थं प्रचलन्त्याः वसन्तसेनायाः सौन्दर्य्योत्कर्षं वर्णयति, अपद्मेति।—रतिसमये—सुरतारम्भकाले, या लज्जा—त्रपा. कुलस्त्रीणामित्याशयः, तस्याः प्रणयिनी—सहचरी. गणिका भूत्वाऽपि कुलस्त्रीवत् एकानुरक्तत्वात् अप्रगल्भा इत्यर्थः, यद्वा,—रतिसमये या लज्जा; तस्याम् अप्रणयिनी—निर्लज्जा इत्यर्थः, सुरतकाले कुलस्त्रीवत् वेश्यायाः सहजलज्जाया असम्भवादिति भावः, प्रियपथिकसार्थैः,—इष्टपान्थगणैः,

वसन्तसेने ! पश्य पश्य,—

गर्ज्जन्ति शैलशिखरेषु विलम्बिविम्बा
मेघा वियुक्तवनिताहृदयानुकाराः।
येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृन्तैः ॥ १२ ॥

अनुगता—पश्चादनुसृता, रङ्गे—रङ्गभूमौ, नाट्यालये इव आनन्ददायके इति यावत्, रतिचैत्ये—सङ्केतभूमौ, सलीलं—सविलासं गच्छन्ती—व्रजन्ती, एषा—वसन्तसेना, अपद्मा—पद्मरहिता, कमलासने अनुपविष्टा इत्यर्थः, श्रीः,—लक्ष्मीः, अनङ्गस्य—कामस्य, ललितं—सुन्दरं, प्रहरणम्—अस्त्रं, कुलस्त्रीणां—गृहवधूनां, शोकः,—शोकस्थानमित्यर्थः, अस्या दर्शने तासामात्मनि हेयताबुद्ध्यवभासादिति, वसन्तसेनां दृष्ट्वा स्वपतीनां तदासक्तिशङ्कया आत्मनि अनुरागह्राससम्भावनादिति, ईदृग्रमणीयाकृतिरपि वेश्यात्वमापन्ना इत्यहो ! दौर्भाग्यमिति वा भावः ; तथा मदनवरवृक्षस्य—कामरूपश्रेष्ठपादपस्य, कुसुमं—पुष्पम् । अत्र विषयं निरपह्नुत्य वसन्तसेनायां श्रीप्रभृतीनां तादात्म्येनारोपात् रूपकमलङ्कारः, तच्च प्रथमपादार्द्धे श्रियः अपद्मेति विशेषणस्याधिकस्य निवेशेन विशेषार्थस्य बोधादधिकारूढवैशिष्ट्यरूपम् । न त्वत्रातिशयोक्तिः, तस्या उपमेयावाच्यत्वस्थले एव स्वीकारात् ; एवमत्र प्रकृतार्थोपयोगिनोः प्रहरणशोकयोर्वसन्तसेनारूपविषयस्य तादात्म्येनारोपात् परिणामः, तथा प्रहरणमरणहेतुभूताया वसन्तसेनायाः प्रहरणशोकत्वेनाभिधानादभिधाहेतुर्वा इति अभिधाहेतुपरिणामयोः सन्देहसङ्करः । शिखरिणी वृत्तम् ;—"रसै रुद्रैश्छिन्ना य-म-न-स-भ-ला गः शिखरिणी" इति लक्षणात् ॥ १२ ॥

मेघोदयस्य कामोद्दीपकत्वात् अयमेव अभिसारस्य तथा सुरतानन्दानुभवस्य प्रकृष्टावसरः इत्याशयेन मेघोदयं वर्णयति विटः, गर्ज्जन्तीति ।—वियुक्तानां—प्रोषितभर्तृकतया विरहिणीनां, वनितानां—नारीणां, हृदयानुकाराः,—मानससदृशाः, गाढान्धकारा इति यावत्, [ विरहिणीनां हृदयदरीशयलहलविरहानलधूममलिनतया मेघोपमानतेति बोध्यम् ] शैलशिखरेषु,—पर्व्वतशृङ्गेषु, विलम्बिविम्बाः,—जलभारात् लम्बमानमण्डलाः, मेघाः—जलधराः, गर्ज्जन्ति—ध्वनन्ति, येषां—मेघानामित्यर्थः, रवेण—नादेन, सहसा—झटिति, उत्पतितैः,—उड्डीनैः, हर्षातिशय्यादिति भावः, मयूरैः,—शिखिभिः, मणिमयैः—नीलरत्नादिखचितैः, तालवृन्तैः,—व्यजनैः, खम्—आकाशं, वीज्यते इव । अत्र मयूरोत्पतनस्य मणिमयतालवृन्तकरणकवीजनत्वेनोत्प्रेक्षणो उत्कटकोटिकसंशयावभासादुत्प्रेक्षाऽलङ्कारः ; एवञ्चात्र मेघादिरूपप्रसिद्धोपमानस्य

अपि च,—

पङ्कक्लिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः,
कण्ठं मुञ्चति बर्हिणः समदनो नीपः प्रदीपायते।
सन्न्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र सन्तिष्ठते ॥ १४ ॥

उपमेयत्वकल्पनात्, तथा वियुक्तवनिताहृदयरूपप्रसिद्धोपमेयस्य उपमानत्वकल्पनाच्च प्रतीपाख्योऽलङ्कारः; तदुक्तं दर्पणकृता,—"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥" इति तदनयोः संसृष्टिः। वसन्ततिलकं वृत्तम् ॥ १३ ॥

तदेव दुर्द्दिनं विशदभावेन वर्णयितुं तदानीन्तनीं प्राकृतिकीमवस्थां वर्णयन्नाह, पङ्केति।—दर्दुराः,—भेकाः, ("दर्दुरो भेकमेघयोः" इति हेमचन्द्रः) धाराभिः—वृष्टिशीकरवाहिप्रवाहैः, हताः,—ताडिताः, तथा पङ्केन—कर्दमेन, क्लिन्नं—लिप्तं, पङ्किलमित्यर्थः, मुखं—वदनं येषां तथोक्ताः सन्तः, सलिलं—जलं, पिबन्ति; समदनः,—सकामः, बर्हिणीसमागमकामनावानिति यावत्, सानन्द इत्यर्थो वा; (केचित् तु समदनः,—मदनवृक्षसहितः इति नीपस्य विशेषणमिति व्याचक्षते) बर्हिणः,—मयूरः कण्ठं—कण्ठध्वनिं, मुञ्चति—मुक्तकण्ठो भूत्वा सतारं केकारवं करोतीति यावत्, ("कण्ठो गले सन्निधाने ध्वनौ मदनपादपे" इति मेदिनी); नीपः,—कदम्बः, प्रदीपायते—प्रदीप इव आचरति, जलधरकालसम्पर्केण प्रफुल्लत्वादिति भावः; मेघैः,—जलधरैः, कुलदूषणैः,—वंशकलङ्करैः, जनैः,—लोकैः, सन्न्यासः,—व्रतिधर्म्मसाकल्यपरिहार इवेत्यर्थः, चन्द्रमाः,—चन्द्रः वृतः,—आच्छादितः, ["वृतः" इत्यत्र "हृतः" इति पाठे,—अपसारित इत्यर्थः] कुलकलङ्कीभूतो जनः यथा वंशमर्य्यादामुल्लङ्घयन् अत्यन्तविषयासक्तः स्ववंशीयाचरितमपि कुलक्रमागतं सदाचारं विलोपयति, तथा अयमपि मेघः स्वप्रसारं संस्थापयितुं कलधौतविधौतं चन्द्रमसमावृणोति इति सरलार्थः; तथा विद्युत्—सौदामनी, नीचकुलोद्गता—अधमकुलजा, युवतिरिव—तरुणीव, अकुलीना नारीव इत्यर्थः, एकत्र - एकस्मिन् स्थाने, न सन्तिष्ठते—न वर्त्तते, [सन्तिष्ठते इति सम्-पूर्व्वात् तिष्ठतेः "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्। "सन्तिष्ठते" इत्यत्र "विश्राम्यति" इति पाठान्तरेऽपि स एव भावः]। अत्र मेघानां जनैः तथा चन्द्रमसः सन्न्यासेन साम्यकथनादुपमाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

वस। भाव ! सुट्ठु दे भणिदं ! * एषा हि,—

मूढ़े ! निरन्तर-पयोधरया मयैव
कान्तः सहाभिरमते यदि किं तवात्र ?।
मां गर्ज्जितैरिति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १५ ॥

विटः। भवतु एवं तावत्, उपालभ्यतां तावदियम्। (द)

वस। भाव ! किमनया स्त्रीस्वभाव-दुर्विदग्धया उपालब्धया ?
(ध) पश्यतु भावः,—

* भाव ! सुष्ठु ते भणितम्।

---

विटेन कथितं स्वानुकूलं मन्यमाना वसन्तसेना सर्वं तत्कथितञ्च समर्थयमाना आह, मूढ़े इति।—निशा—रात्रिः, कुपिता—क्रुद्धा, सपत्नी—एकस्वामिका इव, इति—एवम्प्रकारैः, गर्जितैः,—स्तनितैः, मुहुः,—वारं वारं, मां—वसन्तसेनामित्यर्थः, विनिवारयन्ती—निषेधन्ती सती, मार्गं—पन्थानं, रुणद्धि—आवृणोति। गर्जितप्रकारमाह, मूढ़े इति।—रे मूढ़े !—मूर्खे ! परसुखदुःखानुभवासमर्थे ! इत्यर्थः, वसन्तसेने ! इति शेषः, निरन्तरपयोधरया—निविड़मेघाऽऽवृतया, पक्षे, —निविड़कुचयुग्मया च, मया—निशया एव, सह—सार्द्धं, कान्तः,—प्रियः, यदि—चेत्, अभिरमते—क्रीड़ति, अत्र—अस्मिन् विषये, तव—वसन्तसेनाया इत्यर्थः, किम् ? —न किमपीत्यर्थः। (निरन्तरपयोधरया इत्यस्य विभक्तिविपरिणामेन निशया सहान्वयः; तेन निशाऽपि निविड़मेघयुक्ता इति बोध्यम्)। अत्रोभयत्र विशेषणीभूतस्य निरन्तरपयोधरयेत्यंशस्य घनकुचयुक्तत्व-निविड़मेघाच्छन्नत्वार्थविभिन्नतापरिचायकत्वेनोल्लेखात् श्लेषो नाम अलङ्कारः, तल्लक्षणं दर्पणे,—"श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते" इति; स च निशायाः सपत्न्या सह साम्यकथनादुपमया सङ्कीर्य्यते। "योषित्-सखी-बाल-वेश्या कितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥" इत्यालङ्कारिकवचनादत्र श्लोकपूर्व्ववर्त्तिगद्यांशम् आरभ्य वसन्तसेनायाः प्राकृतभाषां विहाय संस्कृतभाषया कथनं सङ्गच्छते; एवमुत्तरत्रापि ज्ञेयम्। वसन्ततिलकं वृत्तम् ॥ १५ ॥

(द) उपालभ्यतां—तिरस्क्रियताम्। इयं—निशा इत्यर्थः।

(ध) स्त्रीति।—स्त्रीस्वभावेन—नारीप्रकृत्या, दुर्विदग्धा—अविदुषीव हिंसापरा

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः॥ १६॥

विटः। वसन्तसेने! पश्य पश्य। अयमपरः,—

पवनचपलवेगः स्थूलधाराशरौघः
स्तनितपटहनादः स्पष्टविद्युत्पताकः।
हरति करसमूहं खे शशाङ्कस्य मेघो
नृप इव पुरमध्ये मन्दवीर्य्यस्य शत्रोः॥ १७॥

तया, उपालब्धया—तिरस्कृतया, अस्माभिरिति शेषः, अनया—निशया, किम्? एतया किं करिष्यते? न किमपि कर्तुं शक्यते इति भावः। सपत्नीसौभाग्यमाशङ्क्य नारीसुलभ-हिंसाकलुषितान्तःकरणाया अस्याः मदभीप्सितप्रतिरोधने न किमपि सामर्थ्यमिति भावः। [अत्र "उपालब्धया" इति पाठान्तरं समीचीनतया प्रतिभाति; तदर्थस्तु,—स्वभावतो हिंसापरनारीसुलभेन एवंविधतिरस्कारेण न किमपि प्रयोजनमित्यर्थः]।

निशायाः किञ्चिदनिष्टसाधने अक्षमत्वोक्तिम्, उपालम्भस्य निष्प्रयोजनत्वं समर्थयितं वाऽऽह, मेघा इति।—मेघाः,—पयोधराः, वर्षन्तु—जलं पातयन्तु, गर्ज्जन्तु—नदन्तु, वा—अथवा, अशनिं—वज्रं, मुञ्चन्तु—निक्षिपन्तु, मम गमनप्रतिरोधं यथेष्टमाचरन्तु इत्यर्थः, [वर्षन्तु इत्यादौ अधीष्टे लोट्] किन्तु रमणाभिमुखाः,—कान्तार्थिन्यः, स्त्रियः,—नार्य्यः, ("स्त्रियः" इत्युपलक्षणं, तेन पुरुषा अपि इति बोध्यम्). शीतोष्णं—शिशिरजाड्यं, ग्रीष्मसन्तापं, वर्षणक्लेशश्च इत्यर्थः, ("शीतोष्णम्" इत्युपलक्षणं, तेन वर्षणमपि इति बोद्धव्यम्) न गणयन्ति—प्रतिबन्धकत्वेन न मन्यन्ते इत्यर्थः। अत्र प्रथमार्द्धे मेघानां वर्षणाद्यनेकक्रियासम्बन्धात् दीपकालङ्कारः; परार्द्धे तु अहं रमणाभि-मुखी सती शीतोष्णं न गणयामीति विशेषे प्रस्तुते तादृशसामान्यस्याभिहितत्वादप्रस्तुत-प्रशंसाऽलङ्कारः, इत्यनयोः संसृष्टिः। पथ्यावक्त्रं वृत्तम्॥ १६॥

वसन्तसेनोक्तं मेघोपद्रवं विटोऽपि समर्थयमान आह, पवनेति।—पवनेन—वायुना, चपलः,—चञ्चलः, वेगः,—जवो यस्य सः, अन्यत्र,—पवन इव चपलवेगः,—दुर्निवारवीर्य्य इत्यर्थः, स्थूलधारा—स्थूला—पुष्टा च, असौ धारा—वर्षणप्रवाहः, शरौघः,—बाणसमूह इव यस्य सः, अन्यत्र,—स्थूलधारा इव शरौघो यस्य तादृशः, अविरलशरवर्षीत्यर्थः, स्तनितं—मेघगर्ज्जितं, पटहनादः,—रणवाद्यविशेषरव इव यस्य सः, अन्यत्र,—स्तनितमिव पटहनादो यस्य तादृशः, मेघगर्ज्जनानुकारिरणवाद्य इत्यर्थः, तथा स्पष्टा—सुव्यक्ता, विद्युत्—चपला, पताका—ध्वज इव यस्य सः,

वस। एव्वं ण्णेदं, ता कधं एसो अवरो ? * (न)—

एतैरेव यदा गजेन्द्र-मलिनैराध्मात-लम्बोदरै-
र्गर्जद्भिः सतडिद्बलाक-शबलैर्मेघैः सशल्यं मनः।

* एवं न्विदं, तत् कथमेषोऽपरः ?

अन्वत,—स्पष्टविद्युदिव पताका यस्य तथाभूतः, विद्युद्विकाशवत् वायुवेगेन चपलोज्ज्वल-पताकी इत्यर्थः, मेघः,—जलदः, मन्दवीर्यस्य—हतबलस्य, पराजितस्येति यावत्, शत्रोः,—अरातेः, पुरमध्ये—नगराभ्यन्तरे, नृप इव—विजेता राजेव, खे—आकाशे, शशाङ्कस्य—चन्द्रस्य, करसमूहं—किरणजालम्, अन्यत्र,—राजग्राह्यभागसमुदायं, हरति—अपहरति, आवृणोति इति यावत्, अन्यत्र,—गृह्णातीत्यर्थः। अत्र मेघस्य नृपस्य च करसमूहहरणे साम्यकथनादुपमाऽलङ्कारः; पूर्वार्द्धे च स्थूलधारादौ शरौघा-द्यारोपणात् रूपकम्, एतयोरङ्गाङ्गित्वात् साङ्कर्य्यम्। मालिनी वृत्तं,—"न-न-म-य-ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ १७॥

(न) एवमिति।—भवता इदं यदुक्तं, तत् एवं नु—सत्यमेव इत्यर्थः। तत् इति सप्तम्यन्तमव्ययं, तत्रेत्यर्थः, तत्—तत्र मेघे, एषः,—उपरि परिदृश्यमानः, अपरः,—मेघादन्यः, वकः इति शेषः, कथम् ? अस्तु तावत् मेघानाम् एवंविधदुःखदायकत्वम्, एष हताशः वकस्तु किमर्थं प्रावृट् प्रावृट् इति उक्त्वेव उड्डयते ? इत्यर्थः।

मेघोदयस्य उद्दीपनत्वात् चारुदत्तविरहेणोत्कण्ठिता वसन्तसेना विटोक्तमेघोप-द्रवमनुमन्यमाना अपरमपि उपद्रवप्रकारं वर्णयति, एतैरिति।—यदा—यत्र इत्यर्थः, एतैः,—परिदृश्यमानैः एव, गजेन्द्रमलिनैः,—गजेन्द्रवत्—गजराजवत्, मलिनैः,—कृष्णैः, आध्मातानि—जलपूरितानि, लम्बानि—अधो लम्बमानानि, उदराणि—अभ्यन्तरभागा येषां तैः, तडिद्भिः,—सौदामनीभिः सह वर्त्तमानाः सतडितः, ये बलाकाः,—वकाः, सतडिद्बलाकाः, तैः शबलाः,—विचित्राः तैः; (विचित्रत्वञ्च पिङ्गलवर्णविद्युता सह शुभ्रवर्णबलाकासंयोगेन बोध्यम्; यद्यपि तडिद्-बलाकाभिः शबलैरित्यत्र तृतीयासमासो न सम्भवति, बलाकापदे ह्रस्वत्वानुपपत्तेः, तथाऽपि तडितश्च बलाकाश्चेति द्वन्द्वात् ताभिः सह वर्त्तमाना इति बहुव्रीहौ अत एव शबलाः इति विग्रहेण तडिद्बलाकाभिः सहिताः सतडिद्बलाका इति समासे उप-सर्ज्जनह्रस्वं कृत्वा "सतडिद्बलाकाश्च ते शबलाश्च" इति कर्म्मधारयो वक्तव्यः। सतडिद्-बलाकत्वविशेषणं हेतुगर्भं, तद्गुणसम्बन्धेन शाबल्यसिद्धेः); तथा गर्जद्भिः,—नदद्भिः,

तत् किं प्रोषितभर्त्तृवध्यपटहो हा हा हताशो वकः
प्राहृट् प्राहृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन् ? ॥ १८॥

विटः। वसन्तसेने ! एवमेतत्। इदमपरं पश्य,—

मेघैः,—वारिवाहैः, [ अत्र "कर्त्तृकरणयोस्तृतीया" ( २।३।१८ पा० ) इति करणे तृतीया ] मनः,—चित्तं, विरहिणीनामिति शेषः, समं त्वं—विरहोत्कण्ठाक्रमपशल्यपिशं, प्रथमतो आनतमिति शेषः ; तत् इति पञ्चम्यन्तमव्ययं, तस्माद्धेतोरित्यर्थकम् ; मनसः शल्यविद्धत्वादिति तदर्थः ; हा इति खेदसूचकमव्ययं, प्रोषिताः,—विदेशं गताः, भर्त्तारः,—पतयः यासां ताः, विरहिण्य इत्यर्थः, [ अत्र पुंवद्भावश्चिन्त्यः। न च प्रोषितभर्त्त इत्यत्र बहुव्रीहित्वात् "नद्यृतश्च" ( ५।४।१५६ पा० ) इति सूत्रेण नित्यस्य कपो दुर्वारत्वमिति वाच्यं, पूर्व्वपदे कर्म्मधारयं कृत्वा तत्सम्बन्धिनीनां स्त्रीणां वध्यपटह इति मध्यमपदलोपिसमासाश्रयणेन समासान्तविधेरनित्यत्वाद्वा कथञ्चित् समाधानात् ; यद्वा,—प्रोषिताः,—प्रवासं गताः, प्राणसमप्रणयिनीसमागमोत्सुकाः इत्यर्थः, ये भर्त्तारः, —अचिरकृतदाराः पुरुषाः तेषामिति विग्रहे नास्ति पुंवद्भावानुपपत्तिगन्धोऽपीति ] ता एव वध्याः,—वधार्हाः, विरहिणीनां मेघदर्शनं मरणाधिकदुःखप्रदत्वात् इति भावः, तत्पटहः,—तासां वधसमये वाद्यमानः वाद्यभेदस्वरूपः, वध्यपटहवत् भयावह-शब्दकारीत्यर्थः, शठा—धूर्त्ता, वञ्चनचतुरा इत्यर्थः, धीः,—बुद्धिर्यस्य सः, तथा हता—नष्टा, आशा—तृष्णा, मत्स्यादिधारणाभिलाष इति यावत्. यस्य तादृशः, ग्रीष्मे सलिलसङ्क्षयात् अनायासेनैव मत्स्यादिग्रहणकारे समर्थ आसीत्, इदानीन्तु प्रभूतजलवशादिष्टसाधने असमर्थत्वात् इति भावः वकः,—बलाका, क्षते—व्रणे, क्षारं—लवणं, प्रक्षिपन्—विन्यस्यन्, क्षारप्रक्षेपवदुद्वेगं जनयन्नित्यर्थः, प्राहृट् प्राहृट् —वर्षा वर्षाः. इति ब्रवीति—कथयति, किम् ? वकस्य प्राहृट् प्राहृडिति कथनं तादृशशल्यक्षतमनसः क्षारस्वरूपमिति भावः। अत्र गजेन्द्रमलिनेत्युपमा ; सतड़िद्-बलाकशबलैः इत्यत्र नवमेघस्य सहजश्यामत्वपरिहारेण शबलत्वप्रतिपादनात् तद्गुणः। न च चित्ररूपमध्येऽत्र शबलमेघस्य श्यामत्वस्याप्यनुप्रवेशात् स्वगुणत्यागेनास्तीति वाच्यं, चित्ररूपस्यातिरिक्तत्ववादिनां मते तस्य सुवचत्वात्। वध्यपटह इति रूपकं, क्षारं क्षते प्रक्षिपन् इति निदर्शना, उद्विग्नेऽपि मनसि तदुद्वेगजनकव्यापाराः क्षते क्षारप्रक्षेप इति बिम्बप्रतिबिम्बभावपर्य्यवसानात् ; तस्मादेतेषां निरपेक्षाणामेव सत्त्वात् संसृष्टिः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

बलाका-पाण्डुरोष्णीषं विद्युदुत्क्षिप्तचामरम्।
मत्त-वारण-सारूप्यं कर्त्तुकाममिवाम्बरम्॥ १९॥

वस। भाव! पेक्ख पेक्ख, *—

एतैरार्द्र-तमालपत्र-मलिनैरापीतसूर्य्यं नभो
वल्मीकाः शरताड़िता इव गजाः सीदन्ति धाराहताः।

---

* भाव! पश्य पश्य।

---

वसन्तसेनया कथितं बलाकाऽऽविर्भावं श्रुत्वा विटः सजलदाकाशस्य बलाकादिना मञ्जनिताविशोभाविशेषं वर्णयति, बलाकेति।—अम्बरम्—आकाशं, बलाका—बक-पङ्क्तिरेव, पाण्डुरं—श्वेतम्, उष्णीषं—किरीटं यस्य तत् तथा, ("उष्णीषः शिरोवेष्ट-किरीटयोः" इत्यमरः) बलाकारूपोष्णीषपरिष्कृतमित्यर्थः, विद्युदेव—तड़िदेव, उत्क्षिप्तः,—ऊर्द्धोत्थितः, चामरः,—बालव्यजनं यत्र तथाभूतं, चामराणां शुक्लत्वेऽपि निरन्तरान्दोलनेन एकत्रानवस्थितत्वात् शुक्लभास्वरविद्युत्साम्यं बोध्यम्; अत एव मत्त-वारणसारूप्यं—मत्तस्य—मदोन्मत्तस्य, वारणस्य—गजेन्द्रस्य, सारूप्यं—समानरूपतां, कर्त्तुकाममिव—प्राप्तुमर्थमिवेत्यर्थः वर्त्तते इति शेषः। उष्णीषचामरादिशोभितमत्तगजेन्द्र-वत् अम्बरं शोभते इति समुदितार्थः। अत्र बलाकायामुष्णीषत्वस्य विद्युति चामरत्वस्य च तादात्म्याध्यवसानाद्रूपकालङ्कारः, स च तदुत्थापितस्य मत्तगजेन्द्रसादृश्यस्य चिकीर्षुत्व-सम्भावनया जायमानोत्प्रेक्षाऽलङ्कारेण सङ्कीर्य्यते। पथ्यावक्त्रं वृत्तम्॥ १९॥

विटोक्त्यनन्तरं वसन्तसेनाऽपि पुनः मेघप्राचुर्य्येण तात्कालिकीं प्राकृतिकीमवस्थां वर्णयति, एतैरिति।—आर्द्राणि—वर्षोदकपतनेन जलसिक्तानि, तमालपत्राणि—कालस्कन्धाख्यवृक्षविशेषदलानि, तद्वत् मलिनाः—श्यामाः, एतैः,—परिदृश्यमानैः, मेघैरिति शेषः, नभः,—अम्बरम्, आपीतः,—निःशेषतया कवलितः, आच्छादितः इति यावत्, सूर्य्यः,—प्रभाकरः यस्मिन् तत् तादृशं, जातमिति अध्याहार्य्यम्; (यद्यपि वसन्तसेनया प्रदोषे एव अभिसारः कृतः, प्रदोषे च सूर्य्यस्य मेघावृतत्वम् असम्भवं, तथाऽपि "निरङ्कुशा हि कवयः" इत्युक्त्या, तथा प्रावृट्वर्णनार्थमेवास्याङ्कस्य अवतारणात् प्रावृट्स्वभावं वर्णयितुं तादृगुक्तिः न विशेषदोषमावहति; यद्वा,—दुर्द्दिने हि वसन्तसेनाया अभिसारदर्शनादाकालिकप्रदोषसमुदयात् सूर्य्यस्य मेघ-संवृतत्वं सम्भवतीत्यध्यवसेयम्; अथवा,—आपीतसूर्य्यं प्रायशः अस्तमितदिवाकरं नभः एतैरावृतमित्यध्याहार्य्यम् इति न दोषापातः; यद्वा,—गाढ़मेघावृततया दिवा वा

विद्युत् काञ्चनदीपिकेव रचिता प्रासादसञ्चारिणी
ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य्य मेघैर्हृता ॥२०॥

विटः। वसन्तसेने ! पश्य पश्य,—

एते हि विद्युद्गुण-बद्ध-कक्षा
गजा इवान्योऽन्यमभिद्रवन्तः।
शक्राज्ञया वारिधराः सधाराः
गां रूप्यरज्ज्वेव समुद्धरन्ति ॥ २१ ॥

निशा वा इति निर्णेतुमशक्यत्वात् तथाविधवर्णनं न दुष्टमिति सुधीभिर्विवेच्यम्) धाराभिः,—वृष्टिप्रवाहैः, हताः,—ताड़िताः, वल्मीकाः,—कीटविशेषकृतमृत्तिकास्तूपाः, ("उइ ढिपि" इति वङ्गभाषा) शरताड़िताः,—शराहताः, गजा इव—दन्तिन इव, सीदन्ति—अवसादं गच्छन्ति; शरासारविद्धा गजा यथा पलाय्य अदर्शनं गच्छन्ति, तथा वल्मीका अपि जलवेगेन विशीर्य्य [विलीयन्ते इत्यर्थः; विद्युत्—तड़ित्, प्रासाद-सञ्चारिणी—समुन्नतहर्म्योपरितलविचरणशीला, काञ्चनदीपिकेव—सुवर्णवर्त्तिकेव, रचिता—कल्पिता, विद्युतः पिङ्गलवर्णत्वात् औज्ज्वल्यात् सुवर्णवर्त्तिकासाम्यं बोध्यम्; तथा दुर्बलः,—निर्वीर्य्यः, पराक्रमहीन इत्यर्थः, भर्त्ता—कान्तः यस्यास्तादृशी, वनितेव—स्त्रीव, ज्योत्स्ना—कौमुदी, मेघैः,—अभ्रैः, प्रोत्सार्य्य—बलात् आकृष्य, हृता—नीता, अदर्शनं गता इत्यर्थः; निस्तेजोभर्त्तृका सुन्दरी यथा प्रबलैः लम्पटैरपक्रियमाणा अदृश्या क्रियते, ज्योत्स्नाऽपि प्रभूतमेघैः तथा अपहृता इति भावः। अत्र वल्मीक-विद्युज्ज्योत्स्नानां गज-काञ्चनदीपिका-वनितादिभिः साम्यकथनादुपमाऽलङ्कारः। (अस्यानुरूपः श्लोको यथा,—"चन्द्रार्कौ क्व गतौ तमोभिरभितो ग्रस्ता दिशां द्राघिमा, धारा दीर्घतराः पतन्ति किमुतोत्तिष्ठन्ति पृथ्वीतलात्। अङ्गां निह्नवनात् क्षपाऽपि च निशा द्राघीयसी दृश्यते, मन्ये युक्तजनस्य केवलमहो! हर्षाय वर्षागमः॥" इति)। शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

प्रकारान्तरेण मेघोदयं वर्णयति विटः, एते इति।—अन्योऽन्यं—परस्परम्, अभि-द्रवन्तः,—आक्रामन्तः, युध्यमाना इति यावत्, गजा इव—हस्तिन इव. विद्युदेव—तड़िदेव, गुणः,—तन्तुः तेन, (विद्युतां गुणत्वं लम्बमानतया निगड़साम्यात् बोध्यम्) बद्धा—संयमिता, कक्षा—मध्यबन्धनं येषां तथाभूताः, ('कक्षा स्यान्मध्यबन्धनम्" इति कोषः) एते—उपरि सञ्चरन्तः इत्यर्थः, सधाराः,—वृष्टिप्रवाहसहिताः, वारिधराः,—

अपि च पश्य,—

महावाताध्मातैर्महिषकुल-नीलैर्जलधरैः
चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः।
इयं गन्धोद्दामा नवहरित-शष्पाङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥ २२ ॥

जलदाः, शक्रस्य—इन्द्रस्य, आज्ञया—आदेशेन, रूप्यरज्वा इव—रजतगुणेन इव, गां—पृथ्वीं, ("—गौरुदके इषि। स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि" इति हेमचन्द्रः) समुद्धरन्ति—समुत्थापयन्ति; यथा लोके किमपि भारवद्वस्तु ऊर्द्ध नेतुकामः उत्तोल्यमानद्रव्यभारेण अधःपतनशङ्कानिवारणार्थं मध्यदेशे रज्जुं बद्ध्वा तत् कश्चिदाकर्षति, ततश्च एवं सुरक्षितेन तेन रज्ज्वन्तरेण बद्ध्वैव तत् वस्तु ऊर्द्ध नयति, तथा अधःपतनशङ्कया विद्युद्गुणबद्धकक्षाः मेघाः वारिधाराख्यरज्ज्वा सुरक्षितां पृथिवीं बद्ध्वैव ऊर्द्ध नयन्तीत्यर्थः। धाराणां रूप्यरज्जुत्वं शुक्लतया अविरलपतनात् दीर्घतया चेति ज्ञेयम्। अत्र सधाराणां वारिधराणां सान्द्रकृष्णवर्णत्वेन, स्तनितवत्तया गर्जित-धर्म्मेण च परस्पराक्रमवतां गजानां प्रसिद्धसादृश्यप्रतीतेरुपमा; तेषाञ्च सुदीर्घतरधारा-पतनस्य इन्द्राज्ञया रजतरज्ज्वा पृथिवीसमुद्धरणत्वेन सम्भावनादुत्प्रेक्षा, अनयोरेकाश्रयत्वेन च साङ्कर्य्यम्। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम् ॥ २१ ॥

प्रस्तुतार्थं प्रकारान्तरेण प्रतिपादयति, महेति।—महावातेन—प्रबलवायुना, आध्मातैः,—पूरितैः, महिषकुलानीव—महिषसमूहा इव, नीलाः,—श्यामाः तैः, विद्युदेव—चपला एव, पक्षाः,—सहायाः येषां तैः, ("पक्षः पार्श्वं सहायोऽस्त्री" इत्यमरः] अन्तः,—अन्तरीक्षे, (अन्तरिति अव्ययमत्रान्तरीक्षवाचकं) प्रचलितैः,—आन्दोलितैः, जलधिभिः,—समुद्रैरिव, चलैः,—इतस्ततः सञ्चरद्भिः, जलधरैः,—मेघैः, गन्धोद्दामा—नूतनवारियोगात् उत्थितेन मृत्सुरभिगन्धेन उद्दामा—उत्कटा, अति-सुरभिरित्यर्थः, तथा नवानां—नवोद्गतानां, हरितानां—श्यामवर्णानां, शष्पाणां—बालतृणानां, ये अङ्कुराः,—प्ररोहाः, तद्वती—शष्पाङ्कुरविशिष्टा इत्यर्थः, इयं—परिदृश्यमाना, धरा—पृथिवी, मणिमयशरैः,—तत्तुल्यैः इत्यर्थः, धारापातैः,—वृष्टि-प्रवाहपतनैः, भिद्यते—विध्यते इव। [शष्पाङ्कुराः,—संलग्नशरतुल्याः इति प्राचीनानां व्याख्या]। अत्र अन्तरीक्षे प्रचलितजलधेरप्रसिद्धत्वेन प्रबलवातेरितनीलजलधराणां तथात्वेन गम्यसाम्यप्रतीतेरुत्प्रेक्षा। शिखरिणी वृत्तं,—"रसैः रुद्रैश्छिन्ना य-म-न-स-भ-ला ग: शिखरिणी" इति लक्षणात् ॥ २२ ॥

वस। भाव! एसो अवरो *—

एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः
प्रोड्डीयेव बलाकया सरभसं सोत्कण्ठमालिङ्गितः।
हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः
कुर्वन्नञ्जनमेचका इव दिशो मेघः समुज्जृम्भते॥ २१॥

विटः। एवमेतत्। तथाहि, पश्य—

निष्पन्दीकृत-पद्मषण्डनयनं नष्टक्षपावासरं
विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम्।

* भाव! एषोऽपरः,—

अपरमपि मेघोदयप्रकारं वर्णयति वसन्तसेना. एह्येहीति।—शिखण्डिनां—मयूराणां, केकाभिः.—वाग्भिः ("केका वाणी मयूरस्य" इत्यमरः) एहि एहि—आगच्छ आगच्छ, ("एहि एहि" इति द्विर्वचनं वीप्सायाम् आदरातिशय्यप्रकटनार्थं बोध्यम्) इति पटुतरम्—उच्चैस्तरं यथा तथा, आक्रन्दितः—(अत्र इवशब्दोऽध्याहार्यः) बान्धवबुद्ध्या आहूत इव इत्यर्थः; ("आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोः" इति मेदिनी। जलदोदयस्य मयूराणां हर्षजनकत्वात् तत्र बान्धवबुद्ध्या आह्वानं बोध्यम्) बलाकया—बकपङ्क्त्या, बकस्त्रिया वा, सरभसं—सवेगं, सहर्षं वा, प्रोड्डीय—नभसि उत्थाय, सोत्कण्ठं—समुत्सुकं यथा तथा, आलिङ्गित इव—आश्लिष्ट इव; (मेघोदयस्य बलाकाया गर्भोत्पत्तिहेतुत्वात् आनन्दजनकतया तदालिङ्गनमुत्प्रेक्षितम्। मेघोदये बलाकाया गर्भोत्पत्तिरुक्ता कर्णोदये, यथा,—"गर्भं बलाका दधतेऽभ्रयोगात् नाके निबद्धावलयः समन्तात्" इति। "गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः" इति मेघदूतेऽपि); तथा उज्झितपङ्कजैः,—परित्यक्तकमलैः, हंसाः कमलवने विचरन्ति, वर्षासु च मानसं गच्छन्तीति कविसमयप्रसिद्धिः; हंसैः,—मानसौकोभिः. अतितराम्—अतिशयेन, सोद्वेगं—सौत्कण्ठं यथा तथा, उद्वीक्षितः,—मानसगमनाय ऊर्द्ध्वं निरीक्षितः, मेघः,—बलाहकः. दिशः,—दिक्चक्रम्, अञ्जनमेचकाः,—कज्जलवत् मलिनाः, कुर्वन् इव समुज्जृम्भते—विकाशते, उद्गच्छति इत्यर्थः। ["जृम्भा विकाशजृम्भणयोः" इति मेदिनी। अत्र "समुत्तिष्ठते" इति पाठान्तरम्]। अत्र मेघस्य बलाकालिङ्गनत्वेन, मयूराक्रन्दितत्वेन च सम्भावनात्, तथा दिशो मेचकीकरणत्वेन च गम्यसाम्यप्रतीतेरुत्प्रेक्षाद्वयमित्यनयोः परस्परनैरपेक्ष्येण संस्थितेः संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्॥ २१॥

निश्चेष्टं स्वपितीव सम्प्रति पयोधारा-गृहान्तर्गतं
स्फीताम्भोधर-धाम-नैकजलद-च्छत्रापिधानं जगत् ॥ २४ ॥

मेघाच्छन्नतया जगतस्तात्कालिकीमवस्थां वर्णयन्नाह विटः, निष्पन्दीति।—सम्प्रति—इदानीं, निष्पन्दीकृतानि—मेघाच्छन्नतया सूर्योदयाभावेन पद्मानां विकाशाभावात् निद्राऽऽवेशवशेनेव अस्पन्दीकृतानि, परित्याजितसाहजिकचाञ्चल्यानीत्यर्थः, (रविकिरण-सम्पर्कात् पद्मविकाशस्य प्रसिद्धेः) [निर्गतः स्पन्दो यस्य इति व्युत्पत्त्या विसर्गलोपाभावे "इदुदुपधस्य चाप्रत्ययस्य" इति पाणिनिसूत्रेण षत्व-त्वे] पद्मषण्डान्येव—पद्मसमूहा एव, ("षण्डादिकदम्बे षण्डमस्त्रियाम" इत्यमरः) नयनानि—चक्षूंषि येन तत्, निमीलित-पद्मनयनमिति यावत्, नष्टौ—अदर्शनं प्राप्तौ, मेघावृततया स्वरूपतः नानुभूतौ इत्यर्थः, क्षपावासरौ—रात्र्यहनी यस्य तादृशं, नानुमितरात्रिन्दिवमित्यर्थः, इयं निशा दिवा वेति विनिर्णेतुमक्षमं सदैव निद्रावशं गतमित्याशयः; विद्युद्भिः,—तडिद्भिः, तडिद्-विकाशेनेत्यर्थः, क्षणं—निमेषक्रियायाः चतुर्थभागपरिमितकालविशेषं व्याप्य. नष्टम्—अपहृतं, दृष्टं—पश्चात् विद्युतामभावे व्यक्तीभूततया लक्ष्यीभूतञ्च तिमिरम्—अन्ध-कारः यत्र तथाभूतं, ["क्षणनष्टदृष्टतिमिरम्" इत्यत्र "क्षणदृष्टसुष्ठुतिमिरम्" इति पाठान्तरे,—क्षणं—क्षणकालं व्याप्य दृष्टं—लक्षितं, सुष्ठु—प्रकृष्टं, निविडमित्यर्थः, सूचीभेद्यमिति यावत् तिमिरम्—अन्धकारः, आलोकाभावरूपः यत्र तत्, विद्युद्-विकाशानन्तरं क्षणकालं गाढान्धकाराच्छन्नम् इत्यर्थः. आलोकोद्भासितप्रदेशात् आलोकापसरणे कृते यथा क्षणकालम् अत्यर्थं गाढान्धकारोऽनुभूयते, तद्वत् गाढान्धकाराच्छन्नमिति भावः] प्रच्छादितानि—आवृतानि, मेघपटलैरिति शेषः, आशामुखानि—दिशः मुखानीव यत्र तथोक्तम्, अत एव तिमिरपटलावृतदिङ्मण्डल-रूपमाननमित्यर्थः, पयोधाराः,—पयसां—जलानां, धाराः,—प्रवाहाः, ता एव गृहाणि—भवनानि, तेषाम् अन्तर्गतं—सुसुखं निद्रामुपभोक्तुमेव तन्मध्यस्थितमित्यर्थः, सलिलप्रवाहमग्नमिति यावत्, तथा स्फीते—विशाले, अन्धकारेण तरुभूधराद्यदर्शना-दतिदीर्घायमाणे इत्यर्थः, अम्भोधराणां—मेघानां. धामनि—अधिकरणे, आकाशे इत्यर्थः, यद्वा—स्फीतानाम्—अतिप्रवृद्धानां, भूयसामित्यर्थः, अम्भसां—जलानां, धराणि—धारकाणि. धामानि—आधाराः, सञ्चितानां जलानामाश्रयस्वरूपाः इत्यर्थः, ये नैकजलदाः—बहवो मेघाः, ते छत्राणि—आतपत्राणीव, तानि अपिधानानि—आच्छादनानि यस्य तथोक्तं, मेघानां जगतः उपरि अवस्थानात् छत्र-

वस०। भाव ! एव्वं ण्णेदं, ता पेक्ख पेक्ख, *—

गता नाशं तारा उपकृतमसाधाविव जने
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः।
प्रकामान्तस्तप्तं त्रिदशपति-शस्त्रस्य शिखिना।
द्रवीभूतं मन्ये पतति जलरूपेण गगनम् ॥२५॥

* भाव ! एवं नु इदं, तत् पश्य पश्य—

यत् शिरसः उपरि अवस्थानात् मध्योन्नततया निम्नपार्श्वचतुष्टयत्वेन च छत्रत्वोत्प्रेक्षा, जगत्—भुवनं, निश्चेष्टं—निष्क्रियं सत्, स्वपितीव—निद्रातीवेत्युत्प्रेक्षाऽलङ्कारः। लोको यथा अतिदुर्द्दिने गृहान्तरेव स्थित्वा तूलगर्भप्रच्छदपटेन मुखादिसर्व्वावयवमाच्छाद्य निश्चेष्टं स्वपिति, जगदपि एतादृशदुर्द्दिने तथा इति भावः। अत्र स्फीताम्भोधरादिविशेषणं निकेतनान्तर्गतस्य प्रसुप्तस्य चोपरि छत्रधारणरूपविशेषार्थप्रकाशनार्थमुपन्यस्तम् अत एतद्-प्रसिद्धमिति तु नाशङ्कनीयं, नवजलधराणां हि स्वभावश्यामगुणयोगात् घनसन्निविष्टतया नियतमेवोर्द्ध्वदेशावस्थानात् आतपत्राकारेणैवाकारितत्वं दृश्यते इति प्रकृतमेव वस्तु अनुरुध्य एतदेव व्यक्तीकर्तुमुपमेयभूते जलदे छत्रत्वारोपः कृतः इति रूपकं सुव्यक्तमेवेति विशेषोध्यम्। शार्दूलविक्रीड़ितं छन्दः॥ २४॥

विटोक्तिमनुमन्यमाना वसन्तसेना अपरमपि तात्कालिकं प्राकृतिकदृश्यमुपवर्णयति, गतेति।—तारा—नक्षत्रं, (जातित्वादेकवचनम्), असाधौ—दुष्टे, जने—लोके, उपकृतं—कृतोपकार इव, नाशम्—अदर्शनं, गता—प्राप्ता,; यथा असाधुजनेषु कृतोपकारः न केवलं विफलः भवति, प्रत्युत तेषां पुनः असाधुत्वाचरणेनाहतः सन् कृतानामुपकृतीनामस्वीकारात् अन्तर्हितः भवति, उपकारकस्य कमपि प्रत्युपकारं न दर्शयति, तथा उद्गताऽपि तारा मेघावृततया सर्व्वथैव अदर्शनतां गता न निशायाः शोभादिरूपं कमपि उपकारं कर्त्तुमभिलषतीत्यर्थः; ककुभः,—दिशः, वधूरूपा इत्यर्थः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः) कान्तेन—पत्या, [सूर्य्येणेति ध्वनिः] वियुक्ताः,—विरहिताः, विरहिण्य इत्यर्थः, स्त्रिय इव—वनिता इव, न राजन्ति—न शोभन्ते; कान्तविरहिताः स्त्रिय इव सूर्य्यविरहिता दिशो न शोभन्ते इति भावः; प्रोषितभर्तृकाणां हि कुलस्त्रीणामङ्गसंस्काराणां निषेधात् माङ्गलिकेतराल-ङ्कृतीनां परिहारदर्शनाच्च; तथा गगनं—नभोमण्डलं, [कर्तृ] त्रिदश-पतिशस्त्रस्य—इन्द्रायुधस्य, वज्रस्य इत्यर्थः, शिखिना—अग्निना, प्रकामान्तस्तप्तं,—

अपि च पश्य,—

उन्नमति नमति वर्षति गर्ज्जति मेघः करोति तिमिरौघम्।
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ २६ ॥

प्रकामं—सम्यक् यथा तथा, अन्तः,—अभ्यन्तरे, तप्तम्—औष्ण्यात् सन्तप्तम्, अत एव द्रवीभूतं—तरलीभूतं सत्, जलरूपेण—सलिलाकारेण, पतति—स्रवतीत्यर्थः, इति मन्ये—सम्भावयामीत्यर्थः। यथा किञ्चित् घनीभूतं वस्तु कठोराग्निसन्तापेन द्रवीभूतं सत् चरति, तद्वत् वज्राग्नितप्तं गगनं द्रवीभूतं सत् जलरूपेण पततीति निष्कृष्टार्थः। अत्र पूर्व्वार्द्धे उपमा, परार्द्धे नीरूपस्य गगनस्य द्रवीभूतत्वासम्भवात् अत्र प्रकृतस्योपमेयस्य गगनस्य उपमानभूतजलात्मकत्वसम्भावनया इदं जलमेव किमित्याकारकोत्कटैककोटिकसंशयसमुदयादुत्प्रेक्षा, सा च मन्ये शब्दप्रयोगात् व्यज्यते, यदुक्तं दण्डिना,—"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृशः॥" इति उपमोत्प्रेक्षयोः सङ्करः। श्लोकेऽस्मिन् उपमेयोपमानयोः तारोपकारयोः लिङ्गवचनभेदस्य दर्शनात् दोषग्रस्तेयमुपमेति तु नाशङ्कनीयं, "हीनाधिकत्वं वचन-लिङ्गभेदौ विपर्य्ययः। असादृश्यासम्भवौ च दोषाः सप्तोपमागताः॥" इति प्राचीनकारिकाऽनुसारेण एतेषाम् उपमादूषकत्वेऽपि उपमेयोपमानगतहीनाधिकत्वादीनां मासृणशोभनरूपस्य सुव्यक्तस्य सामान्यधर्म्मस्य उभयत्राबाधितत्वेन सामाजिकानां साम्यस्य झटित्यवबोधात् नोपमाव्याघातकदोषावकाशः; यदुक्तं तत्रैव—"न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥" इति सुधीभिर्विभाव्यम्। शिखरिणी वृत्तम्॥ २५॥

नवाभ्युदयमागच्छतः पुरुषस्येव नवजलधरस्य अनेकरूपत्वं दर्शयति, उन्नमतीति।—मेघः,—पयोदः, प्रथमा—अधुनातनी, न तु पितृपैतामहीत्यर्थः, अचिरोत्पन्ना स्वेनैवोपार्ज्जितत्वादित्याशयः, श्रीः,—सम्पत् यस्य तादृशः, [वैकल्पिकत्वात् कबभावः] प्रथमलब्धसम्पत् इत्यर्थः, पुरुष इव—दरिद्रचरजन इव, अनेकानि—बहुविधानि, रूपाणि—आकृतीः, विविधभङ्गीविधायकस्वरूपाणि, अपि वा वेशभूषादीनि इत्यर्थः, करोति—धारयतीत्यर्थः; तथा हि, उन्नमति—कदाचित् उत्तिष्ठति. नमति—कदाचित् अधो लम्बते, वर्षति—क्षणं वा वारि मुञ्चति, गर्जति—क्षणं वा नदति, तथा तिमिरौघं—किञ्चित्कालं वा अन्धकारसमूहं, करोति—जनयतीत्यर्थः. अन्यत्र पुरुषपक्षे—उन्नतिकरकार्य्यमाचरति, लोकेनैवाधोगतिमापद्यते, धनानि विकिरति, धनविनियोगामामास्फालनं करोति, पापराशिमातनोतीति बोध्यम्। अत्र प्रथमार्द्धे

विट:। एवमेतत्,—

विद्युद्भिर्ज्वलतीव, संविहसतीवोच्चैर्बलाकाशतै-
र्माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा।
विस्पष्टाशनि-निस्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम्॥ २७॥

एकस्य मेघस्योन्नमनाद्यनेकक्रियासम्बन्धाद्दीपकालङ्कारः, परार्द्धे च उपमा, इत्यनयोः परस्परसापेक्षत्वादङ्गाङ्गित्वेन सङ्करः। आर्या वृत्तम्॥ २६॥

वसन्तसेनया गगनस्थमेघस्य अनेकरूपत्वप्रदर्शनात् विटोऽपि तदुक्तिं समर्थयितुं युक्त्या आकाशस्य नानाऽवस्थां प्रदर्शयन्ति, विद्युद्भिरिति।—अम्बरम्—आकाशं, विद्युद्भिः,—चपलप्रभाभिः, ज्वलतीव—उद्भासते इव, बलाकाशतैः,—उड्डीयमानवकसमूहैः, (करणभूतैः) उच्चैः,—अत्यर्थं यथा तथा, दीर्घकालं व्याप्य इति यावत्, संविहसतीव—मध्यमहास्यं करोतीव, ("मध्यमः स्यात् विहसितम्" इत्यमरः। हासस्य धवलतयोपवर्णनं कविसमयप्रसिद्धेः, वकानां शुभ्रतया च हाससाम्यं बोध्यं, यदुक्तं दर्पणे,—"यशसि धवलता वर्ण्यते हासकीर्त्योः" इति) धाराशरोद्गारिणा—धाराः,—जलधारा एव, शराः,—वाणाः, तान् उद्गिरति—उद्वमति यत् तेन, आसाररूपशरवर्षिणा इत्यर्थः, माहेन्द्रेण धनुषा—इन्द्रचापेन, धनुःप्रदर्शनेनेति यावत्, विवल्गतीव—स्वप्लुतगतिं प्रदर्शयतीव, युद्धार्थमाह्वयते इव इत्यर्थः विपक्षलोकमिति शेषः, विस्पष्टाशनि-निस्वनेन—प्रकटवज्ररवेण रसतीव—उच्चैः नादं करोतीव, वज्रनिर्घोषव्याजेन सिंहनादं करोतीव इत्यर्थः, अनिलैः,—वातैः आघूर्णतीव—मण्डलाकारेण भ्रमतीव, घूर्णमानझञ्झावातच्छलेन युद्धकालिकमण्डलभ्रमणं प्रदर्शयतीवेत्यर्थः, तथा अहिभिरिव—कृष्णसर्पैरिव नीलैः,—श्यामवर्णैः, जलधरैः,—मेघैः, सान्द्रं—गाढं यथा तथा, धूपायतीव—धूपधूमाकुलं भवतीव, आग्नेयास्त्रविसर्जनात् धूपधूमाच्छन्नमात्मानं करोतीवेत्यर्थः, मेघस्य अनृजुगत्या इतस्ततः सञ्चारात् उरसा कुटिलविसर्पणशीलेन सर्पेण साम्यं गम्यते तथा धूमज्योतिःसलिलमरुत्सन्निपातत्वाच्च तेन गगनस्य धूपाकुलत्वम् अवगन्तव्यम्। अत्र प्रकृतानामम्बरपरमशोभाविधायिनां विद्युद्विलसित-बलाकाशत- माहेन्द्रशरासनविकाशादीनामप्रकृतैः प्रज्वलन-सविहसन-विजृम्भणादिभिः तादात्म्याध्यासादुत्कटैककोटिकसंशयसमुदयादुत्प्रेक्षा, वद्योतकानामिवादीनां क्रियागतानामभिधानादवाच्या क्रियास्वरूपा, वस्तुजाती-

वस।—

जलधर! निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम्।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि॥ २८॥

भोः शक्र!—

किं ते ह्यहं पूर्व्वरतिप्रसक्ता यत् त्वं नदस्यम्बुद-सिंहनादैः?।
न युक्तमेतत् प्रियकाङ्क्षिताया मार्गं निरोद्धुं मम वर्षपातैः॥२९॥

---

यानां बहुधोल्लेखादियं मालारूपा वेदितव्या, इत्येतासां सजातीयानामन्योऽन्यसापेक्षतया संस्थितेः सजातीयसङ्करः वेदितव्यः। शार्दूलविक्रीडितं वृत्तम्॥ २७॥

दयितमभिसरन्ती वसन्तसेना इत्थं धाराकरपरामर्शनादिना गमनविघ्नमुत्पादयन्तं जलधरमुपालभते, जलधरेति।—जलधर!—हे पयोवाह! त्वं निर्लज्जः,—निस्त्रपः, यत्—यस्मात्, दयितस्य—प्रियस्य, वेश्म—निकेतनं, ("वेश्म सद्म निकेतनम्" इत्यमरः) गच्छन्तीं—चलन्तीं, मां, स्तनितेन—गर्जितेन, भीषयित्वा—त्रासयित्वा, धाराहस्तैः,—जलसम्पातरूपकरैः, परामृशसि—स्पृशसि; परस्त्रीगात्रे करार्पणं तथा अभिसारिकायाः कान्तसमीपगमनप्रतिरोधार्थं भीतिप्रदर्शनमित्युभयमेव निर्लज्जस्यैव हठकामुकस्य कार्य्यमित्यर्थः। अत्र समेन कार्य्येण प्रस्तुते जलधरे अप्रस्तुतहठकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारः। आर्या वृत्तम्॥ २८॥

एकानुरक्तायाः स्त्रियाः पत्यर्थमनुयान्त्याः गमनविघ्नोत्पादनं महामहिमवद्भिः भवत्सदृशैः महापुरुषैः सर्व्वथैवाविधेयमिति, इदानीन्तु विविधान्तरायोत्पादनैः तद्विरुद्धाचरणं मेघवाहनस्य शक्रस्य समालोक्य वसन्तसेना तमुपालभते, किमिति।—भोः शक्र!—हे इन्द्र! अहं ते—तव, पूर्व्वरतिप्रसक्ता—पूर्व्वस्मिन् काले—भूते समये, प्रागित्यर्थः, कदाचिदपि या, रतिः,—अनुरागः, सम्भोगो वा, तत्र प्रसक्ता—अनुषङ्गिणी किम्? आसमिति शेषः, यद्वा,—किमहं ते जन्मान्तरप्रणयिनी आसमित्यर्थः, यत्—यस्मात्, त्वम् अम्बुदसिंहनादैः,—(अम्बुदशब्देनात्र लक्षणया अम्बुदनादो बोध्यः) तेन अम्बुदनादाः,—मेघगर्ज्जनानि एव, सिंहनादाः,—गर्व्वसूचकध्वनिविशेषाः तैः, मेघगर्ज्जितरूपमहानादैः इत्यर्थः, यद्वा,—अम्बुदानां सिंहनादा इव सिंहनादा तैरित्येवमौपम्यगर्भविग्रहे लक्षणां विनाऽपि पूर्व्वोक्त एवार्थः अनुसन्धेयः; नदसि?—शब्दायसे? निजप्रणयिन्या अन्यासक्तिदर्शने क्रोधोदयस्य स्वाभाविकत्वात् मां भीषयित्वा गमनं प्रतिरोद्धुं सिंहवद्गर्ज्जसि किम्? इत्यर्थः। प्रियाऽसम्मेलनजदुःखाभिज्ञस्य देवराजस्य ते एतत् न युक्तमित्याशयेनाह, नेति।—प्रियकाङ्क्षितायाः,—

अपि च,—

यद्वदहल्याहेतोर्मृषा वदसि शक्र ! गौतमोऽस्मीति ।
तद्वन्ममापि दुःखं निरवेक्ष्य निवार्य्यतां जलदः ॥ ३० ॥

प्रियेण—प्रणयिना. चारुदत्तेनेति यावत्, काङ्क्षितायाः,—अभिलषितायाः, यद्वा,—एतत्प्रियकाङ्क्षितायाः,—एतेन—समीपवर्त्तिगृहस्थितेनेत्यर्थः ; ( तदुक्तम् —"इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥" इति) प्रियेण—चारुदत्तेन, काङ्क्षिता—प्रार्थिता तस्याः ; एषः,—समीपवर्त्तिगृहस्थित इत्यर्थः, प्रियः काङ्क्षितः,—रन्तुमभीप्सितः इत्यर्थः यया तस्याः इति वा ; [ "एतत्प्रिय" इत्यत्र प्रियविशेषणेन एतत्पदेन एवं सूच्यते यत्,—"एष चारुदत्त एव मे प्रियः, न त्वं, न वाऽपरः कश्चित्" इति ] मम मार्गं—पन्थानं, वर्षपातैः,—धारासम्पातैः, निरोद्धुं—प्रतिबद्धुं, न युक्तं—नोचितम्, एतत्—इदं, विवेचय इति शेषः ; प्रियमभिसरन्त्या मानुष्या मे मार्गरोधस्त्वया जलदाधिपतिना देवराजेन न कर्त्तव्यः, प्रत्युत मेघवाहनेन भवता मदीयसा मद्गमनप्रत्यूहबलाहकवर्षणानामपसारणमेव कर्त्तुमुचितमित्यभिप्रायः । यतोऽहं ते पूर्वं रतिप्रसक्ता नासम् इति प्रथमार्द्धप्रतिपाद्यवस्तुनः, "अतो मे मार्गरोधो न कर्त्तव्यः" इति परार्द्धप्रतिपाद्यस्य हेतुतयोपन्यासात् काव्यलिङ्गालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिः वृत्तम् ॥ २९ ॥

एवं तिरस्कृतः शक्रः यदि रोषावेशात् मेघादिस्ववाहनानि विशेषतो विनियोज्य पुनः गमनप्रतिरोधमाचरति इति आशङ्क्य प्रियासङ्गमाभिलाषापूरणे मनःपीडाभिज्ञं शक्रं पूर्ववृत्तान्तं स्मारयन्ती पुनरनुनयति, यदिति ।—शक्र !—हे इन्द्र ! अहल्या—गौतमपत्नी, तस्याः हेतोः,—तां सम्भोक्तुमित्यर्थः, यद्वत्—यथा, गौतमः अस्मीति—कामसन्तापनिवारणार्थं गौतमरूपं धृत्वा अहं गौतम इति, मृषा—मिथ्या, वदसि—मृषावदनमकरोः इत्यर्थः ; [ वदसीत्यत्र "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ( ३।३।१३१ पा० ) इति सूत्रे वृत्तिकृता वर्त्तमानसमीपे भूते भविष्यति च वा लट् इत्युक्तः भूतकालिकस्यापि वस्तुनः वर्त्तमानसामीप्यद्योतनाय लट्प्रयोगः सुधीभिश्चिन्तनीयः ] यद्वा,—भूतायामपि मृषाभाषणक्रियायामुक्तेरैत्कालिकत्वेन स्मृतत्वात् कालसामान्ये लट्प्रयोगः । पुरा किल इन्द्रः शिष्यो भूत्वा कियन्तं कालं गौतमाश्रमे स्थितः । एकदा स्नानाय गते गुरौ गौतमे असौ गौतमरूपमास्थाय रिरंसया अहल्यामुपययौ । तया तु निशाशेषे पतिं प्रस्थितं जानत्या, कस्त्वमिति पृष्टः, गौतमोऽस्मि, त्वत्सम्भोगलालसया पुनः प्रत्यावृत्तः, इत्युक्त्वा तां कामयमान एव दूषयामासेति पौरा-

अपि च,—

गर्ज वा वर्ष वा शक्र ! मुञ्च वा शतशोऽशनिम्।

न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ २१ ॥

यदि गर्ज्जति वारिधरो गर्ज्जतु तन्नाम निष्ठुराः पुरुषाः।

अयि विद्युत् ! प्रमदानां त्वमपि च दुःखं न जानासि ? ॥२२॥

---

धिकी वार्त्ताऽवानुसन्धेया ] ममापि दुःखं—प्रियसम्भोगलालसाजनितमिति भावः, तद्वत्—तथा, भवदनुरूपमेवेत्यर्थः, इति निरवेच्य—निःशेषेण विचार्य्य, जलदः,—मेघः, भवदनुचर इत्यर्थः, निवार्य्यतां—निषिध्यताम्; एतस्य मे प्रियसदनगमने प्रत्यूहकरत्वादित्याशयः। [ "निरवेच्य" इत्यत्र "निरपेच" इति सम्बोधनान्तपाठान्तरे —हे निरपेच !—उदासीन, परदुःखानभिज्ञ ! इत्यर्थः, ममापि दुःखं भवद्वत्, जानीहीति शेषः। तदा किं कर्त्तव्यमित्याह,—निवार्य्यतामिति ] । आर्य्याछन्दमिदम् ॥ २० ॥

एवमनिशमनुनीयापि पुनः मदीयामत्यधिकां कान्ताभिसमागमवासनां निरसितुं मवलोत्पादितानां विघ्नशतानामपि शक्तिर्नास्तीत्यालोच्य तत्र तत्र स्वीयाम् उपेक्षां प्रदर्शयति, गर्जेति।—शक्र !—हे सुरपते ! त्वं गर्ज्ज—स्तनितं कुरु, वा—अथवा, वर्ष—वारिवर्षणं कुरु, वा—किंवा, शतशः,—अनेकशतवारान्, अशनिं—वज्रं, मुञ्च—निक्षिप, यत् ते अभीष्टं तत् कुरु इति भावः, ( किन्तु ) दयितं—कान्तं प्रति, कान्तमभिसर्तुमित्यर्थः, प्रस्थिताः,—चलिताः, स्त्रियः,—कामिन्यः, रोद्धुं—निवारयितुं, न शक्या हि—नैव तद्व्यापारादेता निषेद्धुं शक्याः इति भावः, त्वयेति शेषः। अत्र प्रथमार्द्धे शक्रस्य गर्ज्जनवर्षणाशनिविमोचनरूपानेकक्रियासम्बन्धात् दीपकम्; परार्द्धे तु दयिताभिसारिण्यः भवता कथमपि निवारयितुं न शक्या इति विशेषे वक्तव्ये, कान्तार्थिन्यः कामिन्यः कथमपि न निवार्य्यन्ते इत्यभावमुखेन सामान्यस्याभिधानात् वैधर्म्येण सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, इत्यनयोः परस्परानुकूलत्वेन साकाङ्क्षतया संस्थितेः सङ्करः। पथ्यावक्त्रं वृत्तम् ॥ २१ ॥

एवं प्राक् शक्रमुपालभ्य ततः कामिनीमानसमर्म्मसन्तापमजानतस्तस्य पुरुषस्योपालम्भनेनालमिति निश्चित्य, नारीहृदयसन्तापं जानतीं सजातीयां सौदामनीं तिरस्करोति, यदीति।—वारिधरः,—मेघः, गर्ज्जति यदि—नदति चेत्, गर्ज्जतु—नदतु, मेघस्य गर्ज्जने दृष्टलाभश्चेत् गर्जतु, तत् मे न किमपि दुःखकारम् इति भावः। तत्र हेतुमाह, तदिति।—तत्—तत्र, इदं वक्तव्यमिति शेषः, पुरुषाः,—पुमांसः, निष्ठुराः,—निर्द्दयाः,

विटः। भवति! अलमलमुपालम्भेन, उपकारिणी तवेयम्,—

ऐरावतोरसि चलेव सुवर्णरज्जुः
शैलस्य मूर्ध्नि निहितेव सिता पताका।
आखण्डलस्य भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि सन्निवेशम्॥ ३३॥

आम—स्वीकारे; पुरुषाणां नैष्ठुर्य्यात् स्त्रीजनदुःखसमूहसमुद्घाटने समधिकं कातर्य्यमस्तीति स्वीकरोमीति भावः; अयि विद्युत्!—अयि सौदामनि! कामिनीशिरोमणे इत्यर्थः, प्रमदानाम्—अबलानां, दुःखं—प्रियविरहजक्लेशमिति भावः, त्वमपि—त्वम् अबला सत्यपीति भावः, न जानासि?—नानुभवसि? इत्यर्थः। पुरुषाणां विजातीयानां रमणीहृद्गतदुःखस्य बोधेऽसामर्थ्यं प्रसिद्धं, रमण्य एव रमणीहृदयवेदनाज्ञाने पटीयस्यः सजातीयत्वात्; अतः विभीषकाग्निवत् ज्वलित्वा स्तनितसाहाय्यकं सम्पाद्य तव क्षणेन प्रकाशः क्षणेन च विनाशो नोचितः, अपि तु मम पथिप्रदर्शनार्थं सततमेव तव दीपवत् सुशोभननयनतर्पणप्रकाशो युक्त इति भावः। आर्य्या वृत्तम्॥ ३२॥

वसन्तसेनाकृतमन्याय्यं विद्युदुपालम्भनं समाकर्ण्याबोधकतामूलकं तदिति प्रत्यभिज्ञाय तत् प्रतिषेधं प्रत्युत विद्युतः तस्याः उपकारित्वं स्वातन्त्र्येण प्रतिपादयति विटः, ऐरावतोरसीति। ऐरावतस्य—अभ्रमातङ्गस्य, उरसि—वक्षसि, अर्पिता इति शेषः, चला—स्वगात्रसञ्चालनादिना चञ्चला, सुवर्णरज्जुरिव—हिरण्मयबन्धनसाधनदाम इव, स्थिता इति शेषः, शैलस्य—नियततुषारावृतस्य तुहिनाचलस्य, यद्वा, सुदामनाम्नः स्फटिकमयपर्व्वतस्य, (तदेकदेशे जातत्वात् सौदामन्याः चञ्चलया श्वेतपताकया साद्धर्मत्र साम्यं सुसङ्गच्छते इति बोध्यम्) मूर्ध्नि—शिखरे, निहिता—स्थापिता, सिता—शुभ्रा, पताकेव—वातविधूतध्वज इव, आखण्डलस्य—इन्द्रस्य, भवनोदरदीपिका—भवनं—वैजयन्ताख्यः सुधाधवलप्रासादः ("स्यात् प्रासादो वैजयन्तः" इत्यमरः) तस्य उदरम्—अभ्यन्तरभागं, दीपयति—प्रकाशयति या सा, वैजयन्तप्रासादाभ्यन्तरसञ्चारिणी वातेरितदीपशिखास्वरूपा, विद्युद्दीपिकयैव वा तस्य सदोद्भासितत्वादिति भावः; इयं—विद्युत्, ते—तव, प्रियतमस्य—अतिप्रियचारुदत्तस्य, सन्निवेशं—भवनं, सौधमिति यावत्, आख्याति हि—कथयत्येव, प्रदर्शयत्येवेति यावत्; विद्युद्विकाशेनैव चारुदत्तस्य आलयं दृश्यते, अतस्तवोपकारिणीयं विद्युच्छोपालम्भनीयेति भावः। अत्र तादृशोपमानद्वयस्याप्रसिद्धा प्रकृतायाः विद्युतः

वस। भाव ! एव्वं, तं ज्जेव एदं गेहम्। *

विट:। सकलकलाऽभिज्ञाया न किञ्चिदिह तवोपदेष्टव्यम् अस्ति, तथाऽपि स्नेहः प्रलापयति ; अत्र (प) प्रविश्य कोपोऽत्यन्तं न कर्त्तव्यः,—

यदि कुप्यसि नास्ति रतिः, कोपेन विनाऽथवा कुतः कामः।
कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम् ॥३४॥

* भाव ! एवं, तदेव एतद्गेहम्।

उपमानभूतयोः सुवर्णरज्जु-सितपताकयोस्तादात्म्याध्यासादुत्कटैककोटिकसंशयसमुदयात् उत्प्रेक्षाद्वयमङ्गाङ्गिभावेन सजातीयतया सङ्कीर्य्यते ; परार्द्धे तु विद्युद्रूपं विषयं सर्व्वथैव निगीर्य्य आखण्डलभवनोदरदीपिकास्वरूपत्वेन तदभिधानात् निश्चयात्मिकायाः प्रतीतेरुदया-दभेदाध्यवसानरूपातिशयोक्तिः पूर्व्वोक्ताभ्यामुत्प्रेक्षाभ्यां सापेक्षतया संस्थितेः सङ्कीर्य्यते। वस-तिलकं वृत्तम् ॥ ३३ ॥

(प) सकलेति।—सकलासु कलासु—चतुःषष्टिनृत्यगीतादिविद्यासु, अभिज्ञायाः,—विशेषज्ञानवत्याः। प्रलापयति—मुखरयति, मां वक्तुमिति शेषः। अत्र—चारुदत्तगृहे इत्यर्थः।

कलैकदेशज्ञो धूर्त्तो विटः स्वाभिज्ञत्वं प्रतिपादयितुं चारुदत्तसकाशे वसन्तसेनायाः कर्त्तव्यमुपदिशति, यदीति।—यदि कुप्यसि—केवलमेव क्रोधं करोषि, तदा रतिः,—अनुरागः, सम्भोगो वा, नास्ति—न भवति, सततकोपे न रतिसुखसम्भव इत्यर्थः, अतो नातिकोपः त्वया करणीय इति भावः। कामोद्दीपनार्थमीषत् प्रणयकोपः कर्त्तव्य एव इत्यभिप्रेत्याह, कोपेनेति।—अथवा—किंवा, कोपेन विना—प्रणयक्रोधादृते, कामो न—रतिर्न, कदाचित् प्रदर्शितः ईषत् कोपः कान्तस्य रमणक्रियायां प्रतिहतायां, समुदीयमाने हि विरहे, निरुद्धे परिवाहे जलपूर इव कामवृद्धये भवतीति भावः,—"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इति दर्पणधृतवचनात् ; त्वं कुप्य च—कदाचित् स्वयं क्रुद्धा भव च, कोपय च—कदाचित् आत्मानं प्रति क्रोधमुत्पादय च कान्तस्येति शेषः, प्रसीद च—कदाचित् प्रसन्ना भव च, कान्तानुरागादिकं दृष्ट्वेति भावः, प्रसादय च—प्रसन्नतामुत्पादय च, चुम्बनालिङ्गनदानादिना कान्तस्येति शेषः। अत्रार्य्याभेदान्तर्गतं गीतिवृत्तं, तल्लक्षणमुक्तं वृत्तरत्नाकरे यथा,—"आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥" इति ॥ ३४ ॥

भवतु एवं तावत्। भोः! भोः! निवेद्यताम् आर्य्य-चारुदत्ताय,—

एषा फुल्ल-कदम्ब-नीप-सुरभौ काले घनोद्भासिते
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका।
विद्युद्वारिद-गर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नूपुरलग्नकर्द्दमधरौ प्रक्षालयन्ती स्थिता ॥ २५ ॥

चारु। [आकर्ण्य] वयस्य! ज्ञायतां किमेतदिति।

विदू। जं भवं आणवेदि। [वसन्तसेनामुपगम्य सादरम्] सोत्थि भोदीए? *

* यत् भवानाज्ञापयति। स्वस्ति भवत्यै?

चारुदत्तं प्रति वसन्तसेनाया गाढ़ानुरागं तथैतादृशेऽपि दुर्द्दिने विरहजं क्लेशं सोढ़ुमशक्नुवत्या रिरंसया आगमनञ्च विज्ञापयितुमाह विटः, एषेति।—फुल्लैः,—विकाशं गतैः, कदम्बैः,—तन्नामप्रसिद्धैः, नीपैः—धाराकदम्बैश्च. (कदम्बनीपयोः विशेषः पुष्पाणां वर्त्तुलत्वादिवैशिष्ट्येन उक्तः राजनिघण्टौ, स च तत्रैवानुसन्धेयः) यद्वा,—हरिप्रियकुसुमैः बन्धूकपुष्पैश्च. सुरभिः,—सुगन्धः तस्मिन्, घनोद्भासिते—घनैः,—मेघैः, उद्भासिते—उद्दीपिते विपरीतलक्षणया समावृते इत्यर्थः, विद्युत्सनाथैः मेघैः सुशोभिते इति यावत्, काले—प्रावृषि, वर्षासमये इत्यर्थः, समदना—सकामा, रमणाभिलाषिणीति यावत्, जलेन—वर्षणोदकेन इत्यर्थः, आर्द्राः,—सिक्ताः, अलकाः,—चूर्णकुन्तलाः यस्याः तादृशी, एषा—वसन्तसेना इत्याशयः, त्वद्दर्शनाकाङ्क्षिणी—भवन्तं द्रष्टुमभिलाषिणी, अत एव हृष्टा—उत्फुल्ला सती, कान्तस्य—प्रियस्य, तवेति शेषः, आलयम्—आगारम्, आगता—उपस्थिता. परं विद्युद्वारिदगर्जितैः,—विद्युद्भिः,—तड़िद्भिः वारिदानां—मेघानां, गर्जितैश्च—नादैश्च, सचकिता—सत्रासा, तथा नूपुरलग्नकर्द्दमधरौ—मञ्जीरसंसक्तपङ्काप्लुतौ, पादौ—चरणौ, प्रक्षालयन्ती—धावयन्ती, पङ्कमपनोदयन्तीत्यर्थः, स्थिता—तिष्ठतीत्यर्थः, [वर्त्तमाने क्तप्रत्ययः]। त्वां द्रष्टुमेवैवमुत्कण्ठिता इयं जाता, येन विद्युद्वारिदगर्जनपङ्कक्लेदादिकं किमपि नानया गणितमिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

वस । अज्ज ! वंदामि । साअदं अज्जस्स ? [विटं प्रति]
भाव ! एसा छत्तधारिआ भावस्स ज्जेव भोदु । *

विटः । [स्वगतम्] अनेन उपायेन निपुणं प्रेषितोऽस्मि ।
[प्रकाशम्] एवं भवतु । भवति वसन्तसेने !—

साटोप-कूट-कपटानृत-जन्मभूमेः
शाठ्यात्मकस्य रतिकेलि-कृतालयस्य ।
वेश्याऽऽपणस्य सुरतोत्सव-सङ्ग्रहस्य
दाक्षिण्य-पण्यसुख-निष्क्रयसिद्धिरस्तु ॥ ३६ ॥

[ इति निष्क्रान्तः ] ।

* आर्य्ये ! वन्दे । स्वागतमार्य्यस्य ? भाव ! एषा छत्रधारिका भावस्यैव भवतु ।

---

इदानीं गमनकाले विटः वसन्तसेनायाः आगमनसाफल्यम् आशास्ते, साटोपेति ।— साटोपं—सदम्भं, यत् कूटं—माया, कपटं—छलम्, अनृतं—मिथ्या च, तस्य जन्मभूमिः,—आकरस्य, उत्पत्तिस्थानस्येत्यर्थः, मूर्त्तिमद्दर्व्वादिकभूमेरित्यर्थः, शाठ्यं—शठता, चातुरीति यावत् तदेव आत्मा—स्वभावः यस्य तादृशस्य, शठतापूर्णस्येत्यर्थः, रतिकेलिना—सुरतक्रीड़या, कृतः,—रचित इत्यर्थः, आलयः,—आस्पदं यस्मिन् तस्य, रतिक्रीड़ाश्रयस्येत्यर्थः ; यद्वा,—रतिकेलये—निधुवनक्रीड़ार्थं, कृतः,—विहितः, यः, आलयः,—निकेतनं तथाभूतस्य, तथा सुरतोत्सवस्य—शृङ्गारानन्दस्य, सङ्ग्रहः,—सम्यक् ग्रहणम्, आस्वाद इत्यर्थः, यस्मिन् तथाभूतस्य, सुरतजनितानन्दसन्तानसाधकस्य इत्यर्थः, वेश्याऽऽपणस्य—वेश्यारूपस्य आपणस्य—विपणेः, पण्यवीथिकायाः इत्यर्थः, क्रयविक्रयस्थानस्य इति यावत् दाक्षिण्येन—परस्परस्य औदार्य्येण, न तु अर्थविनियोगेन इति भावः पण्यस्य—विक्रेयस्य, स्वयौवनरूपस्य इति भावः, सुखनिष्क्रयः,—सुखनैव—आयासं विनैवेत्यर्थः, निष्क्रयः,—विनिमयः, अक्लेशेनैव यौवनपण्यविक्रयः इत्यर्थः, तस्य सिद्धिः—साफल्यम् अस्तु—भवतु ; स्वस्यासामान्यं दाक्षिण्यं प्रकटय्य चारुदत्ततो निरतिशयं सम्भोगसुखमनुभूयतामित्यर्थः, अन्यथा अकिञ्चनतया ततस्ते सुखं नैव भविष्यतीति विटस्याभिप्रायः ; यद्वा,—दाक्षिण्येन—सारल्येन अकपटमित्यर्थः, पण्यस्य—विक्रेयीभूतस्य क्रेयीभूतस्य चेत्यर्थः, सुखस्य—भवदाश्रयस्य सुरतसुखस्य, भवत्प्रियाश्रितस्य निधुवनानन्दसन्दोहस्य चेत्यर्थः, यः निष्क्रयः,—विनिमयः, परस्परसुखादानप्रदानमित्यर्थः, तस्य सिद्धिः,—साफल्यं, चरितार्थता युवयोरिति यावत्,

वस। अज्ज मित्तेअ! कहिं तुम्हाणं जूदिअरो? * (फ)

विदू। [स्वगतम्] ही, ही, भोः! जूदिअरो त्ति भणंतीए अलंकिदो पिअवअस्सो। [प्रकाशम्] भोदि! एसो क्खु सुक्खरुक्खवाडिआए। †

वस। अज्ज! का तुम्हाणं सुक्खरुक्खवाडिआ वुच्चदि? ‡

विदू। भोदि! जहिं ण खाईअदि, ण पीईअदि। §

वस। [स्मितं करोति]।

* आर्य्य मैत्रेय! कुत्र युष्माकं द्यूतकरः?

† आश्चर्य्यं भोः। द्यूतकर इति भणन्त्या अलङ्कृतः प्रियवयस्यः। भवति! एष खलु शुष्कवृक्षवाटिकायाम्।

‡ आर्य्य! का युष्माकं शुष्कवृक्षवाटिका उच्यते?

§ भवति! यत्र न खाद्यते, न पीयते।

अस्तु—भवतु, इत्याशास्ते माहशो जनः इति तात्पर्य्यम्। लल्लादीक्षितस्तु,—"वेश्याऽऽपणस्य—वेश्याव्यवहारस्य, दाक्षिण्येन—कामतन्त्रनैपुण्येन, यत् पण्यं सुखं—क्रयक्रीतं सुखं, वेश्यासम्भोगादिसुखं पण्यसुखं भण्यते, तद्रूपा निष्क्रयस्य सिद्धिरस्तु। दक्षिणनायकस्य चारुदत्तस्याकिञ्चनतया दाक्षिण्यान्यलभ्यनिष्क्रयविरहेण दाक्षिण्यसहितसम्भोगसुखसिद्धेरेव निष्क्रयसिद्धिरूपत्वादिति परमाशयः; यद्वा,—दाक्षिण्यं—दक्षिणनायकसङ्गजन्यं कामतन्त्रनैपुण्यं, पण्यसुखञ्च एतदुभयरूपा निष्क्रयसिद्धिरित्यर्थः; अथवा,—दाक्षिण्यपण्यसुखनिष्क्रयाणां सिद्धिरित्यर्थः। द्वन्द्वान्तश्रुतेः प्रत्येकं सम्बन्धात्। निष्क्रयो मूल्यं, पण व्यवहारे स्तुतौ च इति धातुः" इति व्याख्यातवान्। वसन्ततिलकं वृत्तम्॥ ३६॥

(फ) अज्ज इति।—आर्य्य मैत्रेय! यो हि मदीयमेव धनमात्मीयमिति कृत्वा यथेच्छं तत् विनियुज्य द्यूतेनात्मानं विनोदयामास. मदीयं न्यासमपि यो हि द्यूतक्रीडायामेव नान्यत्र कुत्रापि अपहारितवानिति व्याजेन रत्नावलीं मह्यं समर्पयता भवता मत्समीपं प्रागभिहितं. अपूर्वद्यूतक्रियाकुशलः भवतां स हि महान् कुत्र आस्ते? इति सपरिहासं पश्चात्त चौरैरेवापहृतत्वेन व्यक्तीभवनोन्मुखं न द्यूतकर्म्मणेति छलनापरं भवद्वचनमित्थं स्वकीयमभिप्रायमावेदयितुं वसन्तसेनायाः सोल्लुण्ठनपूर्वं प्रथमतः द्यूतकर इति सम्बोधनमवगन्तव्यम्।

विदू । ता पविसदु भोदी । *

वस । [जनान्तिकम्] एत्थ पविसिअ किं मए भणिदव्वं ? †

चेटी । "जूदिअर ! अवि सुहो दे पदोसो ?" त्ति । ‡

वस । अवि पारइस्सं ? §

चेटी । अवसरो ज्जेव पारइस्सदि । ¶ (व)

विदू । पविसदु भोदी । **

वस । [प्रविश्योपसृत्य च पुष्पैस्ताडयन्ती] अइ जूदिअर ! अवि सुहो दे पदोसो ? †† (भ)

चारु । [अवलोक्य] अये ! वसन्तसेना प्राप्ता !! [सहर्षमुत्थाय] अयि प्रिये !—

सदा प्रदोषो मम याति जाग्रतः,
सदा च मे निश्वसतो गता निशा ।

* तत् प्रविशतु भवती । † अत्र प्रविश्य किं मया भणितव्यम् ?
‡ "द्यूतकर ! अपि सुखस्ते प्रदोषः ?" इति । § अपि पारयिष्यामि ?
¶ अवसर एव पारयिष्यति । ** प्रविशतु भवती ।
†† अयि द्यूतकर ! अपि सुखस्ते प्रदोषः ?

(व) पारयिष्यति—त्वां वक्तुं समर्थं कारयिष्यतीत्यर्थः, सामयिकवाग्विन्यास-नैपुण्यादिनेति शेषः ।

(भ) अइ जूदिअर ! इति ।—अयमेवाशयः,—सन्ध्यासमये एव द्यूतकरैः द्यूतक्रीडायाः सततमनुष्ठीयमानत्वदर्शनात्, आत्मीयमिति कृत्वा सुवर्णभाण्डं द्यूते अपहारितवतः ते सुखेन प्रदोषः अत्येति मन्ये इति वाच्योऽर्थः, गर्भितार्थस्तु नियत-विरहतापानलदग्धीभूतायाः मे अयमेव जलदागमकालप्रदोषः मदीयं दुःखसम्भार-मतीव वर्द्धयति, यतोऽहं स्वयमेव प्रार्थयमाना अप्रार्थितापि भवद्गेहमागता, भवांस्तु निर्विकारचेता इव सुस्थः तिष्ठति, मन्ये, तर्हि सुखकरः ते अयं प्रदोषः समुदित इति ।

"द्यूतकर ! अपि सुखस्ते प्रदोषः ?" इति सपरिहासव्याजोक्तिमाकर्ण्य प्रदोषकालः हि भवतां सुखकरः मादृशाभिसारिकाणां नियतदुःखदायकः इति गर्भितं वसन्त-सेनाऽऽशयमवबुध्यावसरे एव अनुरूपमुत्तरं दातुं, जलदोदयप्रदोषकालस्य न प्राय

त्वया समेतस्य विशाललोचने!
ममाद्य शोकान्तकरः प्रदोषकः ॥ १७ ॥
तत् स्वागतं भवत्यै? इदमासनम्, अत्रोपविश्यताम्।

विदू। इदं आसणं, उवविसदु भोदी। *

[ वसन्तसेना आसीना ; ततः सर्वे उपविशन्ति ]।

चारु। वयस्य! पश्य पश्य,—

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥ १८॥

* इदमासनम्, उपविशतु भवती।

---

शोकान्तकरत्वमासीत्, इदानीन्तु भवत्समागमेनैव शोकान्तकररूपत्वंनासौ परिणत इत्येवमुपवर्णयति, सदेति।—सदा—नित्यमेव, जाग्रत एव—अनिद्रितस्य एव, मम प्रदोषः,—रजनीमुखं, रात्रेः प्रथमांशः इति यावत्, याति—गच्छति, न केवलं प्रदोषे एव जागर्मि, किन्तु कृत्स्नामेव निशाम् इत्याह, सदा चेति।—मे—मम, निशा—रात्रिरपि, कृत्स्नेति भावः, सदा—सततमेव, निश्वसतः,—दीर्घाद्दीर्घतरं श्वासं त्यजतः, सुतरामनिद्रितस्य एव, गता—अतीता, जाग्रत् निश्वसंश्च सम्पूर्णां निशाम् अतिवाहयामीत्यर्थः ; विशाललोचने!—हे आयतनेत्रे! अद्य—वर्त्तमानदिवसे, त्वया—भवत्या, समेतस्य—मिलितस्य, मम प्रदोषकः,—सन्ध्यासमयः, शोकान्तकरः,—दुःखनाशक इत्यर्थः, भवेदिति शेषः। अत्र "सदा" इति पदस्य पर्य्यायान्तरमप्रयुज्यैव भङ्गीपरावृत्तिमकृत्वा एकयैव भङ्ग्या पुनरुपादानदर्शनादनवीकृतत्वरूपदोष उह्येयः। वंशस्थविलं वृत्तम् ॥ १७ ॥

वृष्टिजलार्द्रायाः वसन्तसेनायाः तात्कालिकीं शोभां दर्शयति, वर्षोदकमिति।—वर्षोदकं—वृष्टिजलबिन्दुम्, उद्गिरता—उद्वमता, सम्पातयतेत्यर्थः, श्रवणान्तविलम्बिना—कर्णान्तविलम्बमानेन, कदम्बेन—कदम्बपुष्पेण, एकः स्तनः,—पयोधरः, वसन्तसेनाया इति शेषः, यौवराज्यस्थः,—युवराजकर्म्मणि वृतः, नृपसुत इव—राजकुमार इव, अभिषिक्तः,—प्राप्ताभिषेकः, आर्द्रीभूत इत्यर्थः, स्नात इति यावत्; यौवराज्याभिषेकसमये राजकुमारो यथा कुसुमसुरभितोदकेन स्नाप्यते, वसन्तसेनायाः स्तनोऽपि तथा इति भावः। [ नृपसुतेनोपमाय स्तनस्यातिसम्माननना प्रदर्शिता, तथा एकस्तनस्य कदम्बपुष्पसलिलेन अभिषेककथनात् वर्षावारिपीड़नेन कर्णान्तरपरिभ्रष्टस्य कदम्बः

तत् वयस्य ! क्लिन्ने वाससी वसन्तसेनायाः, अन्ये प्रधानवाससी (म) समुपनीयेतामिति।

विदू। जं भवं आणवेदि। *

चेटी। अज्ज मित्तेअ ! चिट्ठ तुमं, अहं ज्जेव अज्जअं सुस्सूसइस्सं। † (य) [तथा करोति]।

विदू। [अपवारितकेन (र)] भो वअस्स ! पुच्छामि दाव तत्थ-भोदिं किं पि ? ‡

चारु। एवं क्रियताम्।

विदू। [प्रकाशम्] अध किं-णिमित्तं उण ईदिसे पणट्ठचंदा-लोए दुद्दिण-अंधआरे आअदा भोदी ? §

चेटी। अज्जए ! उजुओ (ल) बम्हणो। ¶

वस। णं णिउणोत्ति भणाहि। ** (व)

---

* यत् भवानाज्ञापयति। † आर्य्य मैत्रेय ! तिष्ठ त्वम्, अहमेवार्य्यां शुश्रूषयिष्यामि।

‡ भोः वयस्य ! पृच्छामि तावत् तत्रभवतीं किमपि ?

§ अथ किं-निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकारे आगता भवती ?

¶ आर्य्ये ! ऋजुको ब्राह्मणः। ** ननु निपुण इति भण।

---

पुष्पान्तरस्य प्रतीतेः वसन्तसेनायाः चारुदत्तदर्शनार्थमत्युत्कण्ठा व्यज्यते]। अत्रोपमा-ऽलङ्कारः स्फुट एव। आर्य्या वृत्तम्॥ ३८॥

(म) क्लिन्ने—जलार्द्रे, वाससी—परिधेयम् उत्तरीयञ्चेत्यर्थः। प्रधानवाससी—उत्कृष्टवसनद्वयमित्यर्थः।

(य) शुश्रूषयिष्यामि—वसनानयनादिना परिचरिष्यामि।

(र) अपवारितकेन—स्वस्थानात् किञ्चिदपसृत्य निम्नस्वरेण, परकीयरहस्य-प्रकाशकनाट्योक्तिविशेषेण इत्यर्थः, तदुक्तं साहित्यदर्पणे,— "—तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते॥" इति।

(ल) ऋजुकः,—सरलः, कापट्यविनिर्मुक्तमतिः इत्यर्थः; यतोऽयम् एवंविधायां रजन्याम् अभिसारार्थमेवेयमागता इत्यपि न वेत्ति इति भावः।

(व) सम्यग् ज्ञात्वाऽपि सुरतरङ्गानभिज्ञ इव किमप्यजानन्तमात्मानं दर्शयति इति वसन्तसेनायाः इङ्गितो भावः।

चेटी। एसा क्खु अज्जआ एव्वं पुच्छिदुं आअदा, केत्तिअं ताए रअणावलीए मुल्लं ? त्ति। *

विदू [जनान्तिकम्] भो! भणिदं मए, जधा अप्पमुल्ला रअणावली, बहुमुल्लं सुवस्सभंडअं, ण परितुट्टा, अवरं मग्गिदुं आअदा। †

चेटी। सा क्खु अज्जआए अत्तणकेरकेत्ति भणिअ जूदे हारिदा। सो अ सहिओ राअवात्थहारो ण आणोअदि, कहिं गदो त्ति। ‡

विदू। भोदि! मंतिदं ज्जेव मंतीअदि। § (अ)

चेटी। जाव सो अस्सेसीअदि, ताव एदं ज्जेव गेण्ह सुवस्सभंडअं। ¶ (ब) [इति दर्शयति]।

* एषा खलु आर्य्या एवं प्रष्टुमागता, कियत् तस्याः रत्नावल्याः मूल्यम् ? इति।

† भोः! भणितं मया, यथा अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डकं, न परितुष्टा, अपरं मार्गयितुमागता।

‡ सा खलु आर्य्यया आत्मीयेति भणित्वा द्यूते हारिता, स च सभिकः राजवार्त्ताहारी न ज्ञायते, कुत्र गत इति।

§ भवति! मन्त्रितमेव मन्त्र्यते।

¶ यावत् सोऽन्विष्यते, तावदिदमेव गृहाण सुवर्णभाण्डकम्।

(अ) प्राक् मया वसन्तसेनासमीपे चौरैरपहृतस्य सुवर्णभाण्डस्य कथनमकृत्वा, आर्य्येण चारुदत्तेन तदेव सुवर्णभाण्डं द्यूते हारितमित्युक्तम्; इयं चेट्यपि मन्मन्त्रितानुरूपमेव भाषते; मया तु प्राक् यादृगानुपूर्व्यवच्छिन्ना वागीरिता, एतयाऽपि तादृगेवाभिधीयते, तत् किमेतत् ? अथवा वसन्तसेनया यदेव मन्त्रितमभिधातुमेषा उक्ता, तद्वचनस्यैवैषा आवृत्तिं करोति, तत् वसन्तसेना चातुर्य्यपूर्णं मद्धोदमप्याक्रमकोधि इत्येवात्र तात्पर्य्यम्।

(ब) अत्र हि, "णं णिउणोत्ति भणाहि" इत्येतद्वाक्यगतं नर्म्म, वसन्तसेनया न केवल सरलः, अपि तु कामकलाकुशल एवेत्यनया रीत्या वैदग्ध्येन प्रकटीकृतमित्यत एतत् कौशिकीवृत्तेः नर्म्म नाम अङ्गं प्रदर्शितम्; तल्लक्षणं यथा,—"वैदग्ध्यक्रीडितं नर्म्म" इति।

विदू। [ विचारयति ]।

चेटी। अदिमेत्तं अज्जो णिज्झाअदि, (ख) ता किं दिट्ठ-पुरुव्वो दे? *

विदू। भोदि! सिप्पकुसलदाए ओबंधेदि (ह) दिट्ठिं। †

चेटी। अज्ज! बंचिदोसि दिट्ठीए, (क) तं ज्जेव एदं सुवण्ण-भंडअं। ‡

विदू। [सहर्षम्] भो वअस्स! तं ज्जेव एदं सुवण्णभंडअं, जं अम्हाणं गेहे चोरेहिं अवहिदं। §

चारु। वयस्य!—

योऽस्माभिश्चिन्तितो व्याजः कर्त्तुं न्यासप्रतिक्रियाम्।
स एव प्रस्तुतोऽस्माकं किन्तु सत्यं विडम्बना॥ २९॥

* अतिमात्रमार्य्यो निध्यायति, तत् किं दृष्टपूर्वं ते?

† भवति! शिल्पकुशलतया अवबध्नाति दृष्टिम्।

‡ आर्य्य! वञ्चितोऽसि दृष्ट्या, तदेवेदं सुवर्णभाण्डकम्।

§ भोः वयस्य! तदेवेदं सुवर्णभाण्डकं, यदस्माकं गेहे चौरैरपहृतम्!

(ख) निध्यायति—निरीक्षते, "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः।

(ह) अवबध्नाति—रुणद्धि, शिल्पसौष्ठवदर्शनात् ततः दृष्टिं सहसा नेतुं न शक्नोमीत्यभिप्रायः।

(क) वञ्चितोऽसि दृष्ट्या—दृष्ट्या—दर्शनशक्त्या, वञ्चितोऽसि—प्रतारितोऽसि, दृष्टिशक्तिहीनो भवसि त्वम् इत्यर्थः; यदि ते दर्शनीयं न दृष्टं, तदा किं चक्षुषा? इति चक्षुष्मानपि भवान् चक्षुषैव प्रतार्य्यते इति तात्पर्य्यम्।

तदेवेदं सुवर्णभाण्डम् उपन्यस्तम् इत्याकर्ण्य विदूषकात् चारुदत्तः आत्मकृता छलना वसन्तसेनया विज्ञाता इति विचिन्त्याह, य इति।—अस्माभिः, न्यासप्रतिक्रियां—न्यासस्य—उपनिधेः, उपनिहितवस्तुनः इत्यर्थः, निक्षिप्तालङ्कारस्य इति यावत्, ("पुमानुपनिधिर्न्यासः" इत्यमरः) प्रतिक्रियां—प्रतिशोधं, कर्त्तुं—विधातुं, रत्नावलीं समर्प्य न्यासीकृतं वस्तु परिशोधयितुमित्यर्थः, यः व्याजः,—छलं, चिन्तितः,—उद्भावितः, अस्माकं—न्यासप्रत्यर्पणोपायमनुसन्धित्सूनामित्यर्थः, सः,—पूर्व्वमनुसृतः व्याजः, युक्त्या रत्नावल्यर्पणरूपः इत्यर्थः, किन्तु—अवास्तकपटाचरणानुरूपमेवेत्यर्थः, प्रस्तुतः,—

विदू। भो वअस्स ! सच्चं सवामि बम्हणेण। * (ख)

चारु। प्रियं नः प्रियम्। (ग)

विदू। [जनान्तिकम्] भो ! पुच्छामि णं, कुदो एदं समासादिदं त्ति ? †

चारु। को दोषः।

विदू। [चेट्याः कर्णे] एव्वं विअ। ‡

चेटी। [विदूषकस्य कर्णे] एव्वं विअ। §

चारु। किमिदं कथ्यते, किं वयं बाह्याः ? (घ)

---

* भोः वयस्य ! सत्यं शपे ब्राह्मण्येन।

† भोः ! पृच्छामि ननु, कुत इदं समासादितमिति ?

‡ एवमिव।

§ एवमिव।

आरब्धः, अन्यविधः व्याजः प्रकटीकृतः इत्यर्थः, वसन्तसेनयेति शेषः अस्मद्व्याजं प्रकटीकर्त्तुं छलान्तरमनुसृतमनयेति भावः, सत्यं विडम्बना एव—प्रतारणेव, प्रतारणारूपेण परिणत इत्यर्थः ; प्रागस्मदाचरितकापट्यं वसन्तसेनया विज्ञातमिति स्वीयासामान्यवैदग्ध्यप्रदर्शनार्थमस्मान् वञ्चयितुमेव पुनः कापट्यान्तरं प्रस्तुतमनयेति भावः। अत्र अस्मदनुसृतस्य सुवर्णभाण्डविनिमयेन रत्नावल्यर्पणव्याजस्य, स्वस्य दुरदृष्टातिशय्यात् न केवलमभीष्टासम्पादकत्वं, प्रत्युत छलोद्घाटनात् लज्जाऽऽतिशय्यकरत्वात् विडम्बनारूपत्वेन परिणमनमिति आरब्धस्य वैफल्यादनर्थागमदर्शनाच्च आरब्धवैफल्यानर्थसम्भवरूपविषमालङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ३९॥

(ख) सत्यं—यथार्थं, शपे—शपथं करोमि, अहमेव वेश्यासक्ततया वेश्यायै सुवर्णभाण्डं दत्तवानिति वयस्यस्य शङ्का मा भूदित्याशयः। यद्वा,—ब्राह्मण्येन—ब्राह्मण इदम् इति ब्राह्मण्यम्—उपवीतं तेन, ब्राह्मणधृतोपवीतस्पर्शेनेत्यर्थः, शपे—शपथं करोमि, यत् सत्यम्—ऋतं, तदेव इदमिति शेषः ; यद्वा,—सत्यं शपे—सत्यशपथं करोमि, तदेवेदमिति, न त्वनया अस्मान् प्रतारयितुमेव भूषणान्तरमुपस्थापितमिति शङ्कितव्यमित्याशयः।

(ग) प्रियं नः प्रियम्—इयं श्रुतिसन्तोषजननी वार्त्ता इत्यर्थः, अतीवप्रियवचनं भवताऽभिहितमिति यावत्।

(घ) बाह्याः,—बहिरङ्गाः, नान्तरङ्गाः इत्यर्थः, अनात्मीयाः इति यावत्, यतः अस्माननुक्त्वा केवलं चेट्याः कर्णे कथयसि इति भावः।

विदू। [ चारुदत्तस्य कर्णे ] एव्वं विश्र। *

चारु। भद्रे! सत्यं तदेवेदं सुवर्णभाण्डम् ?

चेटी। अज्ज! अधइं। †

चारु। भद्रे! न कदाचित् प्रियनिवेदनं निष्फलीकृतं (ङ) मया ; तत् गृह्यतां पारितोषिकमिदमङ्गुलीयकम्। [ इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति ]।

वस। [ आत्मगतम् ] अदो ज्जेव ( च ) कामीअसि। ‡

चारु। [जनान्तिकम् ] भोः! कष्टम।—

धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् ?।
यस्य प्रतीकारनिरर्थकत्वात् कोपप्रसादा विफलीभवन्ति ॥ ४० ॥

* एवमिव। † आर्य्य! अथकिम्। ‡ अत एव काम्यसे।

(ङ) प्रियनिवेदनं—प्रीतिजनकवार्त्ताविज्ञापनं, निष्फलीकृतं—विफलीकृतं, प्रियवार्त्ताश्रवणजनितानन्दम् एकाकी एव कदाऽपि प्राक् नानुभूतवानहमित्यर्थः, अतः इदानीं तन्निवेदयितारमपि पारितोषिकादिभिरानन्दयामि इति भावः ; दूता एवम् आशासते, यत् अस्मै एतत्प्रियनिवेदने कृते एतस्मात् किञ्चित् पारितोषिकं लप्स्यामहे इति, तदप्राप्तौ तु तेषां मनोभङ्गदर्शनात् स्वानन्दस्यापि वैफल्याशङ्का इति भावः।

(च) अतः,—अस्मात्, भवतः एवंविधगुणसङ्गोपेतत्वादित्यर्थः, "गुणानुरक्ता गणिका—" इत्यादि ग्रन्थकारोक्तेः।

प्रियावेदिकायाः प्रीतिं प्रवर्द्धयितुं स्वाङ्गुलीयकदित्सुना चारुदत्तेन हर्षातिरेकात् स्वदरिद्रतामपर्य्यालोच्यैव अङ्गुल्यः समुत्तोलिताः, ततस्तु अङ्गुलीयकशून्याः विलोक्याङ्गुलीः स्वाधन्यतयैव सर्व्वमेव वैभवं नष्टमिति विभाव्य, दातुमशक्यत्वात् कथञ्चित् निरुद्धावेगप्रसरः लज्जावाप्तिनिदानं दारिद्र्यं मन्यमानः सर्व्वदुःखैकमूलमप्रतिकार्य्यञ्च तदिति वर्णयति, धनैरिति।—लोके—जगति, धनैः,—अर्थैः, वियुक्तस्य—विहीनस्य, दरिद्रस्येत्यर्थः, नरस्य—जनस्य, आदितः एव—प्रथमत एव जन्मत एव इति यावत्, जीवितेन—प्राणैः, किं तावत् ?—न किमपि फलमित्यर्थः ; उत्पत्तिमात्रेणैव कथमसौ दरिद्रः जलबुद्बुद इव विलीनतां न गतः इति भावः। यस्य—धनहीनस्य जनस्य, कोपप्रसादाः—क्रोधानुग्रहाः, प्रतीकारनिरर्थकत्वात्—प्रतीकारे—प्रतिशोधे, निरर्थकत्वात्—निर्विषयकत्वात्, प्रतीकारकरणाक्षमत्वादित्यर्थः,

अपि च,—

पक्षविकलश्च पक्षी, शुष्कश्च तरुः, सरश्च जलहीनम्।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ४१ ॥

अपि च,—

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः।
यत् दृष्टपूर्व्वजन-सङ्गम-विस्मृतानाम्
एवं भवन्ति विफलाः परितोषकालाः ॥ ४२ ॥

कोपे प्रतिकर्त्तुं प्रसादे चोपकर्त्तुमसमर्थत्वादिति यावत्, विफलीभवन्ति—निष्फलाः जायन्ते; यो हि जन्मनैव दरिद्रो भवति, तस्याजननमेव वरमिति भावः। अत्र पूर्वार्द्धे प्रियनिवेदिकायाश्चेट्याः पारितोषिकदानासमर्थस्य दरिद्रस्य मम अजननमेव वरमासीदिति प्रस्तुते विशेषे अभिधीयमाने तादृशसामान्यस्याप्रस्तुतसाधारणदरिद्र-रूपवस्तुनोऽभिहितत्वादप्रस्तुतप्रशंसाऽलङ्कारः, परार्द्धवाक्यगतस्य कोपप्रसादविफली-भवनरूपकार्य्यस्य हेतुतया पूर्वार्द्धस्थवाक्यस्योपन्यासात् वाक्यगतकाव्यलिङ्गालङ्कारः, अनयोः परस्परसापेक्षतया संस्थितेः सङ्करः। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिः वृत्तम् ॥ ४० ॥

तदेव भूयसा विशदयति पक्षेति।—लोके—जगति, पक्षविकलः—पक्षशून्यः, पक्षी—विहगः, शुष्कः,—आतपशोषितः, तरुः,—वृक्षः, जलहीनं—सलिलशून्यं, सरः,—जलाशयः, उद्धृतदंष्ट्रः,—विषदन्तविहीनः, सर्पः,—भुजगः, दरिद्रश्च—निर्द्धनश्च, एतत् सर्वमिति शेषः, तुल्यं—स्वाभिलषितमापादयितुमक्षमत्वात् समानम्; वृथा जीवन्ति एते इति भावः। अत्र उपमेयभूतस्य दरिद्रस्य उपमानभूतानां पक्षिप्रभृतीनां तुल्यवत्प्रतीयमानावैधर्म्यसाम्यागमात् उपमालङ्कारः, स चैक-स्यैवोपमेयस्य सुस्फुटसाम्यावबोधनार्थं तादृश एवोपमानभूयस्त्वस्याभिधानात् मालारूपः, तुल्यपदोपादानाच्चेयमार्थी अवगन्तव्या। आर्य्या वृत्तम् ॥ ४१ ॥

दरिद्राणां कोपप्रसादा विफलीभवन्ति इति यदुक्तं, तदेव भङ्ग्यन्तरेण पुनर्विवृणोति, शून्यैरिति।—दरिद्राः—धनहीनाः, पुरुषाः,—नराः, शून्यैः,—उपकरणसम्भार विरहितैः, गृहैः,—गेहैः, तोयरहितैः,—जलहीनैः, कूपैः,—जलाधारैः तथा शीर्णैः—शुष्कैरित्यर्थः, तरुभिश्च—पादपैश्च, खलु—निश्चयेन, समाः,—तुल्याः; यत्—यस्मात्, दृष्टपूर्वजनस्य—परिचितजनस्य, सङ्गमेन—सङ्गमजन्यानन्दातिशयेन हेतुना,

विदू। भो! अलं अदिमेत्तं संतप्पिदेण। [प्रकाशं सपरिहासम्] भोदि! समप्पीअदु मम केरिआ ण्हाणसाडिआ। * (छ)

वस। अज्ज चारुदत्त! जुत्तं णेदं, इमाए रअणावलीए इमं जणं तुलइदुं। † (ज)

चारु। [सविलक्षस्मितम् (झ)] वसन्तसेने! पश्य पश्य,—

* भोः! अलमतिमात्रं सन्तापितेन। भवति! समर्प्यतां मदीया स्नानशाटिका।

† आर्य्य चारुदत्त! युक्तं नेदम्, अनया रत्नावल्या इमं जनं तूलयितुम्।

विश्रुतानां—वर्त्तमानस्वीयदारिद्र्यविश्रुतवतां जनानां, दरिद्राणामिति भावः, परितोषकालाः,—सन्तोषसमयाः, पारितोषिकदानोचितकालाः इति यावत्, एवं—मम यथा विफलाः तद्वदित्यर्थः, विफलाः,—पारितोषिकदानासमर्थतया निष्फलाः, भवन्ति—जायन्ते इत्यर्थः; प्रकृष्टानन्दकालेऽपि पारितोषिकदानोचितद्रव्याद्यभावात् कालानां विफलत्वमिति भावः। अत्रोपमेयभूतस्यैकस्यैव दरिद्रपुरुषस्य बहुभिरेवोपमानभूतैः मूर्खगृहादिभिः अवैधर्म्यसाम्यावबोधात्, तुल्यपदोपादानाच्च आर्थीयमुपमाऽवगन्तव्या, तथा एकस्यैवोपमेयस्य बहूपमानदर्शनात् मालारूपा चेयमिति। वसन्ततिलकं वृत्तम् ॥ ४२ ॥

(छ) स्नानशाटिका—स्नानार्थं शाटिका—वस्त्रखण्डविशेषः, गात्रमार्ज्जनीति यावत्, स्नानकाले परिधेयक्षुद्रवस्त्रविशेषो वा। वसन्तसेनान्यस्तमलङ्कारभाण्डं विदूषकेण प्राक् जीर्णस्नानशाटिकया निबध्य स्थापितं, शर्व्विलकात् तथाविधां तामधिगतवत्या वसन्तसेनया सा छिन्नतया परित्यक्ता; इदानीं तदेव लक्षीकृत्य विदूषकस्येयं परिहासोक्तिः अवगन्तव्या।

(ज) तूलयितुं—तूलवत् लघुं कर्त्तुम्। [तुलयितुमिति पाठे—परिमापयितुं, लुब्धालुब्धत्वज्ञानार्थं स्वल्पमूल्यस्य सुवर्णभाण्डस्य विनिमयेन बहुमूल्याया रत्नावल्या दानेन परीक्षितुं वा; नष्टस्याल्पमूल्यस्य सुवर्णभाण्डस्य कृते बहुमूल्याया रत्नावल्या दानेन वसन्तसेनायां लुब्धत्वसिद्धान्तो दयादिति भावः]।

(झ) सविलक्षस्मितं—सविस्मयमनाक्हास्ययुक्तमित्यर्थः; ("विलक्षो विस्मयान्विते" इत्यमरः) वसन्तसेनाया गणिकाभूताया अपि तादृगलुब्धत्वम् उदारचरितञ्च दृष्ट्वा चारुदत्तस्य विस्मयोऽजायतेति बोध्यम्; वसन्तसेनायाः तथाविधामुक्तिमाकर्ण्य लज्जया अवाङ्मुखीभूय ईषद्धास्यं कुर्व्वन्निति वार्थः।

कः श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ ४३ ॥

विदू। हञ्जे ! किं भोदीए इध ज्जेव सुविदव्वं ? * (ञ)

चेटी। [विहस्य] अज्जमित्तेअ ! अदिमेत्तं दाणिं उजुअं (ट) अत्ताणअं दंसेसि। †

विदू। भो वअस्स ! एसो क्खु ओसारअंतो विअ सुहोवविट्ठं जणं पुणोवि वित्थारि-वारिधाराहिं पविट्ठो पज्जण्णो। ‡ (ठ)

चारु। सम्यगाह भवान्,—

* हञ्जे ! किं भवत्या इहैव स्वप्तव्यम् ?

† आर्य्य मैत्रेय ! अतिमात्रमिदानीम् ऋजुमात्मानं दर्शयसि।

‡ भोः वयस्य ! एष खलु अपसारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारिवारि-धाराभिः प्रविष्टः पर्जन्यः।

---

क इति।—तृतीयेऽङ्के १४२ पृष्ठायां व्याख्यातोऽयम् ॥ ४३ ॥

(ञ) स्वप्तव्यं—निद्रातव्यम्।

(ट) "उजुअं" इत्यत्र "उज्जअं" इति पाठान्तरस्य "उद्यतम्" इति संस्कृतम्, "उद्युक्तम्" इति व्याख्यानञ्च मेनिरे प्राचीनाः। अत्रेदमाकूतम् ;—तथा हि इदानीम् आर्य्ययोः अविलम्बेनैव रहः समागमं साधयितुं भवानतीव सत्वरो भवति इति:। "ऋजुम्" इति संस्कृते तु,—अतिसरलं कामकलाऽनभिज्ञमेवात्मानं दर्शयसि, न हि तात्त्विकतया भवान् सरलः, अस्माकमार्य्या वसन्तसेना अभिसर्त्तुं, स्थित्वैवात्र किल रजनीं यापयितुञ्चागता, एतद्धि सर्वं जानन्नपि किमप्यजानन्निव पृच्छति इत्यपूर्व्वमहो ! ते चातुर्य्यमिति चेट्या आशयः।

(ठ) पर्ज्जन्यः,—(पर्य्यन्यः) इति पदं पर्षते इति सेचनार्थकपृषधातोः मान्ता-देशे अन्यागमे च निपातनात् सिद्धम्। पर्ज्जन्यः.—मेघः, सुखोपविष्टं—सुखासीनं, जनं—लोकं, विस्तारिवारिधाराभिः,—अविरलप्रपाततया उत्तरोत्तरं प्रवर्द्धमानसलिल-सम्पातैः, अपसारयन्—स्थानान्तरं नयन्, वृष्टिजलसिक्तगात्रत्वात् आत्मरक्षार्थं, वृष्टेः पुनः पतनाभावं निश्चित्यानावृते प्रदेशे सुखमुपविष्टन्तं जनं गृहाभ्यन्तरे प्रेरयन्निव इत्यर्थः। पुनरपि—भूयोऽपि, प्रविष्टः,—उपस्थितः, समुदित इत्यर्थः।

अमूर्हि भित्त्वा जलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः।
पतन्ति चन्द्रव्यसनाद्विमुक्ता दिवोऽश्रुधारा इव वारिधाराः॥४४॥

अपि च,—

धाराभिरार्य्यजनचित्त-सुनिर्म्मलाभि-
श्चण्डाभिरर्ज्जुनशर-प्रतिकर्कशाभिः।
मेघाः स्रवन्ति बलदेव-पटप्रकाशाः
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः॥४५॥

विदूषकोक्तं समर्थयितुं वाह्यतोऽपि वारिप्रवाहं वर्णयतीति, अमूरिति।—हि तथाहि, अमूः,—पतन्त्य एता इत्यर्थः, वारिधाराः,—वर्षोदकप्रवाहाः, मृणालसूच्यः,—मृणालानि—बिसानि, पङ्कैर्निःसृत्य पङ्कान्तःप्रविष्टसूचवत् पदार्थाः इत्यर्थः, सूच्य इव—सीवनसाधनयन्त्रविशेषा इव, सूचीसदृशबिसानि इत्यर्थः, पङ्कान्तराणीव,—कर्दमान्तःप्रदेशानिव, जलदान्तराणि जलदानां—मेघानाम्, अन्तराणि—मध्यभागान्, ("अन्तरमवकाशावधि......मध्यात्मसदृशेषु" इति मेदिनी) भित्त्वा—विदीर्य्य, चन्द्रव्यसनात्—चन्द्रस्य—अपाकरस्य, व्यसनं—विपत्, मेघावरणजनितमिति भावः, तस्मात् कारणात्, विमुक्ताः,—परित्यक्ताः, दिवः,—आकाशस्य, अश्रुधाराः,—नेत्रोदकप्रवाहाः इव, पतन्ति—स्रवन्ति। मेघावृततया चन्द्रस्यादर्शनजनितशोकेन दृष्टिच्छलेन दिवः क्रन्दन्तीव इत्यर्थः। पूर्व्वार्द्धे सुव्यक्ता उपमा, परार्द्धे च उपमेयभूतानां वारिधाराणाम् उपमानभूताभिरश्रुधाराभिः सार्द्धं तादात्म्याध्यासेनोत्कटैककोटिकसंशयोदयादुत्प्रेक्षाऽलङ्कारः; स चात्र प्रस्तुताप्रस्तुतसाधारणस्त्रीत्वपुंस्त्वमा[illegible]ण दिवः चन्द्रस्य च नायिकानायकव्यवहारसमारोपात् समासोक्त्यलङ्कारेण पूर्व्वार्द्धस्थितोपमाऽलङ्कारेण च परस्परसापेक्षतया तेषां संस्थितेः सङ्कीर्य्यते। उपेन्द्रेन्द्रवज्रयोः सम्मेलनादुपजातिः वृत्तम्॥४४॥

एतमेवार्थं पुनः भङ्ग्यन्तरेण आह धाराभिरिति।—बलदेवस्य—बलरामस्य, पटः,—वस्त्रं, "नीलाम्बरो रौहिणेयः" इत्यमरोक्तेः नीलवसनमित्यर्थः, तद्वत् प्रकाशः,—आविर्भावः, आभा इत्यर्थः, येषां ते, मेघाः,—जलधराः आर्य्यजनानां—साधुजनानां, चित्तानीव—मनांसीव, सुनिर्म्मलाः,—मालिन्यरहिताः, अपङ्किला इत्यर्थः, निखिलदोषविनिर्मुक्ततयेति भावः, ताभिः, अर्ज्जुनशरेण—पार्थबाणेन, प्रतिकर्कशाः,—तुल्यकठिनाः ताभिः, [प्रति—प्रतिनिधिभूतः, अनुरूप इत्यर्थः, यः कर्कः,—काठिन्यं

प्रिये ! पश्य पश्य,—

एतैः पिष्ट-तमाल-वर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाऽम्भोद-समागम-प्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत् समालिङ्गति ॥४६॥

सः अस्यास्तीति व्युत्पत्त्या अत्यर्थे शप्रत्ययेन सिद्धम्] अत एव चण्डाभिः,—उग्राभिः, धाराभिः,—वृष्टिसम्पातैः, शक्रस्य—इन्द्रस्य, मौक्तिकनिधानं—मौक्तिकानां—मुक्ताफलानां, निधानं—निक्षेपं, मेघाधिपतिना वासवेन मेघेषु न्यासीकृतं मुक्ताराशिमित्यर्थः, उद्गिरन्तः,—उद्वमन्तः इव, स्रवन्ति—चरन्ति। अत्र धाराऽऽर्यचित्तानां सुनिर्मल-त्वादितुल्यधर्मयोगात्, तथा धाराऽर्जुनशराणाञ्च प्रचण्डत्वादिसाधर्म्यसम्बन्धाच्चैव मेघबलदेवपटानाञ्च नीलत्वादिसाम्यात् सर्वेषामेतेषां परस्परविरुद्धधर्मोक्तिविनिर्मुक्तस्य साम्यस्य प्रतीतेः आर्य्यजनचित्तमिव सुनिर्म्मलेति "उपमानानां सामान्यवाचिभिः" इति कर्म्मधारये समासे औपम्यवाचिनः इवादेः लोपे उपमाऽलङ्कारः, एकस्यैव धारारूपस्योपमेयस्य बहुधैवोपमानेन साम्यावबोधनात् मालारूपोऽयं वेदितव्यः; चतुर्थे च पादे धाराणाम् उपमानभूतेन मौक्तिकनिधानेन तादात्म्याध्यासात् उत्कटैककोटिक-संशयसमुदयादुत्प्रेक्षाऽलङ्कारः, एवमेषां परस्पराङ्गाङ्गिभावेनावस्थानात् सङ्करः विद्वद्भि-रूह्येयः। वसन्ततिलकं वृत्तम् ॥ ४५ ॥

पुनश्च प्रकारान्तरेण अम्बरसमागमानुकूलं कान्तायाः विद्युतः कान्ताम्बरसमालिङ्गनादि-रूपं मेघविलसितं वर्णयति. एतैरिति।—अम्भोदसमागमे—जलदोदये, अन्यत्र,—अम्भोदस्य—विरहसन्तापापहारकनायकस्य, समागमे—संयोगे, प्रणयिनी—प्रेमवती, [अम्भोदस्य दक्षिणनायकस्येति ध्वनिः] समागमाकाङ्क्षिणीत्यर्थः, ("प्रणयः प्रश्रये प्रेम्णि याञ्चाविस्रम्भयोरपि" इति मेदिनी) मेघोदये एव विद्युद्दर्शनात्, पक्षे,—कामस्य उद्दीपना-च्चेति भावः, स्वच्छन्दं—स्वेच्छया, अभ्यागता—कुतश्चित् आगता, अकस्मादेवाभ्युदितेत्यर्थः, पक्षे,—स्वैरिणीव स्वयमभिसृत्य रमयितुं कान्तस्यान्तिकमागता; एषा—गगने परि-स्फुरन्ती. रक्ता—रक्तवर्णा, पक्षे,—अनुरागिणी, विद्युत्—चपला, प्रियतमा—अति-प्रेमास्पदीभूता कामिनी, कान्तमिव—प्रियतममिव, पिष्टं—मथितं, यत् तमालं—वृक्ष-विशेषः, तस्य वर्णकः,—विलेपनम्, ("अथ वर्णकः विलेपने मलयजे" इति हेमचन्द्रः) तन्निभैः,—तत्सदृशैः, पिण्डीभूततमालविलेपनप्रतिकाशैः इत्यर्थः, नीलैः इति यावत्,

वस। [ शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति ]।

चारु। [ स्पर्शं नाटयन् प्रत्यालिङ्ग्य ]—

**भो मेघ! गम्भीरतरं नद त्वं, तव प्रसादात् स्मरपीड़ितं मे।**
**संस्पर्श-रोमाञ्चित-जातरागं कदम्बपुष्पत्वमुपैति गात्रम्॥ ४७॥**

अम्भोधरैः,- मेघैः, आलिप्तम्—आवृतं, पक्षे,—अगुरुकस्तूरिकाद्यङ्गरागलिप्ताङ्गं. तथा संसक्तैः,—सततप्रवहद्भिरित्यर्थः, सुरभिभिः,—सुगन्धैः, शीतैः,—शीतलैः, प्रदोषानिलैः,—सन्ध्यावायुभिः, पक्षे,—स्निग्धसुगन्धव्यजनानिलैः, उपवीजितं—ईषत्कृततालवृन्तसञ्चालनम्, अम्बरम्—आकाशं, समालिङ्गति—आश्लिष्यति; यथा काचिदनुरक्ता भर्तृविरहिता कामिनी जलदोदयं दृष्ट्वा सोत्कण्ठं त्वरितं कान्तसमीपमागत्य स्वीयगाढ़ानुरागप्रदर्शनार्थं कान्तम् अगुर्वाद्यनुलेपनैरालिप्य पार्श्वे उपवेशनं कृत्वा सुगन्धिव्यजनानिलैः उपवीज्य आलिङ्गति, तथा विद्युदपि जलदोदयं दृष्ट्वा कान्तरूपाम्बरसकाशमागत्य करोतीत्यर्थः। [ अत्राप्रस्तुतस्य विद्युत्कर्तृकाम्बरालिङ्गनस्य वर्णनेन, एवमेव त्वमपि सम्भोगदानादिना मामनिशं कृतार्थयेति ध्वन्यते। किञ्च इह आलिङ्गनरूपस्य सामान्य-धर्मस्य उभयत्रावबोधे बाधकाभावात् अम्बरकान्तरूपोपमानोपमेययोः लिङ्गवैषम्यं नोपमादूषकम् इति बोध्यम्। अपि चात्र अम्बरशब्दगतं नपुंसकं लिङ्गं नार्थे भासते, येन नपुंसकालिङ्गनरूपदोष उन्नेतुं शक्यते, "कलत्रमालिङ्गति रक्तनायकः" इत्यादि-वत् अत्रापि प्रतिपाद्यार्थे लिङ्गस्याप्रधानत्वं ज्ञातव्यम्। अन्यच्चात्र नपुंसकालिङ्गनं प्रकृतस्य व्यङ्ग्यार्थस्य चमत्कारातिशयद्योतकम्; तथा हि सौदामनी पुंस्त्वाभावतया उपभोगाक्षमम् अम्बरं कान्तभूतमालिङ्ग्यापि तथा सुखं नाप्नोति, त्वन्तु मामालिङ्ग्य यथा रतिसुखमनुभवेः इति च व्यज्यते ]। एतेन च अभिप्रायो नाम नाट्यलक्षणं दर्शितम्; यथा—"अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना" इति। अत्र समेनालिङ्गनादिरूप-कार्य्येण प्रस्तुतायां विद्युति अप्रस्तुतकान्ताव्यवहारसमारोपात् समासोक्तिरलङ्कारः, अपि च अम्बरे विरुद्धधर्मोक्तिशून्यस्य कान्तसाम्यस्याभिधयैव बोध्यत्वादुपमाऽलङ्कारः, इत्यनयोः गुणप्रधानभावेन एकाश्रयस्थितत्वात् सङ्करः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४६॥

विप्रलम्भे मेघादीनामुद्दीपनतया प्रतिकूलता, सति सम्भोगे त्वनुकूलतेत्याह, भो मेघ! इति।—भो मेघ!—हे जलधर! त्वं गम्भीरतरं—सुगभीरं, नद—गर्ज तस्मात् न मे किमपि भयं, प्रत्युत तव गर्जनमिदानीं मम प्रेयस्याश्लेषोद्दीपकत्वात् प्रीतिजनक-मेव इति तात्पर्य्यम्; यतः, तव प्रसादात्,—अनुग्रहात्, ("प्रसादोऽनुग्रहे काव्यगुण-स्वास्थ्यप्रसत्तिषु" इति मेदिनी) मे—मम, स्मरपीड़ितं—कामानलसन्तप्तं, गात्रम्—

विदू। दासीए पुत्त दुद्दिण ! अणज्जो दाणिं सि तुमं, जं अत्तभोदिं विज्जुआए भाआवेसि। * (ड)

चारु। वयस्य ! न अर्हसि उपालब्धुम्,—

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥ ४८ ॥

* दास्याः पुत्र दुर्दिन ! अनार्य्य इदानीमसि त्वं, यत् अत्रभवतीं विद्युता भाययसि।

अङ्गं, संस्पर्शेन—सङ्गेन, प्रियतमाया इति शेषः, रोमाञ्चितं—सञ्जातपुलकम्, अत एव जातरागं—जातः,—उत्पन्नः, बद्धः इत्यर्थः रागः,—अनुरागः, सम्भोगे इति भावः, यस्य तथाभूतं सत्, कदम्बपुष्पत्वम्—उत्फुल्लकेशरनीपकुसुमत्वम्. उपैति—प्राप्नोति, कदम्बपुष्पमिव उद्गतकठोररोमाङ्कुरं भवति इत्यर्थः; गात्रस्य कदम्बकुसुमोपमत्वं सुसङ्गच्छते, नवीनकामुकानामभिनवकामिनीसमागमे पुलकोद्गमस्य दर्शनात्; नीपकोरकविकासं वर्षास्वेवानुगुणमेव इति भावः। अत्र अन्यधर्म्मं कथमन्यः उपैतु? इति गात्रस्य कदम्बपुष्पगतपुष्पत्वस्य च उपगमनमसम्भवत् सदेव कदम्बपुष्पधर्म्मसदृशं नीपकुसुमसधर्म्मगात्रस्य कठोरपुलकोद्गममवगमयत्, गात्रस्य कदम्बपुष्पस्य च बिम्बप्रतिबिम्बभावं बोधयति, इत्यसम्भवद्वस्तुसम्बन्धरूपनिदर्शनाऽलङ्कार एव। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम् ॥४७॥

(ड) अनार्य्यः,—नीच इत्यर्थः। अत्रभवतीं—मान्यां, वसन्तसेनाम् इति यावत्, ("पूज्ये तत्रभवानत्रभवान्" इति कोषः)। भाययसि—भयप्रदर्शनं करोषि, [केचित् "भाआवेसि" इत्यस्य "भीषयसि" इति संस्कृतयन्ति, तदसत्, कर्त्तुरेव हि भयोत्पादकत्वे "भीषयते" "भापयते" इति रूपद्वयं भवेदिति। वस्तुतस्तु "विद्युता" इत्यत्र करणे तृतीया, ततश्च "भियो हेतुभये षुक्" (७।३।४० पा०) "भीस्म्योर्हेतुभये" (१।३।६८ पा०) इति सूत्रद्वयस्य अप्राप्तिः इति]।

प्रियासमागमे दुर्द्दिनस्य अनुकूलतया चारुदत्तः विदूषककृतं तदनौचित्यमूलकं दुर्द्दिनोपालम्भं प्रतिषिध्य तस्य प्रार्थनीयत्वमुपपादयति, वर्षेति।—अविरता—अविच्छिन्ना, धारा—वर्षणप्रवाहः यस्मिन् तत्, दुर्दिनं—मेघाच्छन्नः, वर्षशतं—बहुवर्षं व्याप्य, अस्तु—वर्त्तताम्, शतह्रदा—विद्युच्च, ("शतह्रदा स्त्रियां वज्रे सौदामन्याञ्च कीर्त्तिता" इति मेदिनी) स्फुरतु—दीप्यतु, यत्—यस्मात्, अहम् अस्मद्विधैः,—अस्मादृशैः दरिद्रैः, दुर्लभया—दुष्प्राप्या, तादृशैश्वर्य्याभावात्सम्भोगस्य प्रचुरार्थसाध्यत्वा-

अपि च, वयस्य !—

धन्यानि तेषां खलु जीवितानि,<br>ये कामिनीनां गृहमागतानाम्।<br>आर्द्राणि मेघोदकशीतलानि<br>गात्राणि गात्रेषु परिष्वजन्ति ॥ ४९ ॥

प्रिये वसन्तसेने !—

स्तम्भेषु प्रचलित-वेदिसञ्चयान्तं<br>शीर्णत्वात् कथमपि धार्य्यते वितानम्।

दिति भावः, प्रियया—प्रणयिन्या वसन्तसेनया, परिष्वक्तः,—स्वयङ्गाढमालिङ्गितः; इदानीमतिप्रवलदुर्द्दिनं मतङ्गदास्फुरणञ्च प्रियाभुजनिगडितकण्ठस्य मे सम्पदाय एव समजनि इति भावः। आर्य्यावृत्तमिदम् ॥ ४८ ॥

स्वयमागतायाः कान्तायाः अङ्गसङ्गत्वं स्वीयसुभगत्वैकमूलमित्याह, धन्यानीति।—ये, जनाः इति शेषः, गृहमागतानां—स्वभवनोपगतानां, कामिनीनां—कान्तानां, मेघोदकशीतलानि—वर्षाजलशिशिराणि, अत एव आर्द्राणि—सिक्तानि, वर्षासलिलसिक्ततया सुशीतलानीत्यर्थः, गात्राणि—अङ्गानि, गात्रेषु—स्वशरीरेषु [ अधिकरणवचनात् स्वयङ्गाढालिङ्गनसुखं व्यज्यते ] परिष्वजन्ति—संस्थापयन्ति, गात्राणि स्वगात्रेषु संस्थाप्य दृढमालिङ्गन्तीत्यर्थः, [ "परिष्वजन्ते" इति साधु, स्वन्जधातोरात्मनेपदित्वात्, केचित् तु "परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्" इत्युदाहृतवतः "आत्मनेपदसम्प्राप्ती परस्मै क्वचित् भवेत्" इति कारिकां सूत्रयतो जौमरस्य मतेन अत्रापि परस्मैपदम् इति प्रतिबोधयन्ति। ततश्च "परिनिविभ्यः······स्वन्जाम्" ( ८।३।७० पा० ) इति षत्वम्, "दन्श-सन्ज-स्वन्जां—" ( ६।४।२५ पा० ) इति उपधालोपश्च ] तेषां—स्वयमागतकान्ताश्लिष्टानां जनानां, जीवितानि—जीवनानि, धन्यानि—सार्थकानि, खलु—निश्चये। प्रियतमायाः अप्रार्थितालिङ्गनसुखसम्भोगः केषाञ्चिदेव सुभगानां खलु घटते इति भावः। अत्र गृहागतया वरवर्णिन्या स्वयङ्गाढं गृहीतकण्ठा वयमेवात्र धन्याः इति प्रस्तुते विशेषे वक्तव्ये, अप्रस्तुतानां सामान्यानां जनानां सुभगत्वाभिधानात् अप्रस्तुतप्रशंसाऽलङ्कारः; अपि च, प्रीत्युत्कण्ठामादरे, स्वजते इत्यस्यात्मनेपदनियमितत्वात्, तदुल्लङ्घनात् व्याकरणलक्षणहीनत्वम्, अतः च्युतसंस्कारत्वरूपदोषः विज्ञेयः। इन्द्रवज्रा वृत्तम् ॥ ४९ ॥

एवमत्यारूढमन्मथश्चारुदत्तः पुनिरमालिङ्गनसुखमनुबुभूषुः प्रियायाः गृहाभ्यन्तरनिनीषया आह, स्तम्भेष्विति।—प्रचलितः,—इतस्ततः सञ्चलितः, वायुवेगेनेति भावः,

एषा च स्फुटित-सुधाद्रवानुलेपात्
संक्लिन्ना सलिलभरेण चित्रभित्तिः ॥ ५० ॥

[ ऊर्ध्वमवलोक्य ] अये ! इन्द्रधनुः !! प्रिये ! पश्य पश्य,—

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायत-भुजेन ।
जलधरविवृद्ध-हनुना विजृम्भितमिवान्तरीक्षेण ॥ ५१ ॥

वेद्याः,—उपवनादिषु विश्रामार्थम् अन्तराऽन्तरा स्थापितायाः परिष्कृतायाः बद्धभूमेः, सञ्चये—समूहे, भग्नः,—निर्योजितप्रान्तभागः यस्य तादृशं, वितानम्—उल्लोचः, चन्द्रातप इत्यर्थः, ("अस्त्री वितानमुल्लोचः" इत्यमरः) शीर्णत्वात्—जीर्णत्वात्, पतनोन्मुखत्वादिति भावः, स्तम्भेषु—स्थूणासु, कथमपि—अतिक्लेशेनेत्यर्थः, धार्यते—स्थाप्यते, स्तम्भैः कथञ्चिदेव वितानं विध्रियते इत्यर्थः, एषा—पुरतो दृश्यमाना, चित्रभित्तिः,—विचित्ररूपेण निर्मिता, नानावर्णभूषिता वा, भित्तिः,—कुड्यञ्च, स्फुटितस्य—क्वचित् क्वचित् गलितस्य, सुधाद्रवस्य—द्रवीभूतविलिप्तचूर्णस्य, अनुलेपात्—विलेपाद्धेतोः, ["सुधाद्रवानुलेप" इति पाठः साधुतरः] सलिलभरेण—जलवेगेन, संक्लिन्ना—सम्यक् क्लेदेनेवार्द्रीकृता इत्यर्थः ; विगलितसुधाऽनुलेपे हि कुड्ये संलग्ना जलधारा क्लेदक्लिन्नवत् मालिन्यमुत्पादयतीति भावः । [ एतेन प्रबलवायुवर्षणाभ्याम् अस्य प्रदेशस्य अवस्थानायोग्यत्वं सम्भाव्येतिमिदानीम् अभ्यन्तरं प्रवेष्टव्यमिति ध्वन्यते ] । वृत्तमत्र प्रहर्षिणी,—"त्र्याशाभिर्म-न-ज-र-गाः प्रहर्षिणीयम्" इति लक्षणात् ॥ ५० ॥

पवनविघट्टितसूर्यकिरणयोगात् आतते मेघे एवेन्द्रधनुष उदयदर्शनात्, निशायां तदुदयासम्भवेन "अये ! इन्द्रधनुः !!" इति वसन्तसेनामुद्दिश्य चारुदत्ताभिधानं भ्रान्तिकृतमित्येवावगन्तव्यम्, एतदेवेदानीं विशदीकर्तुं स्तनितचपलाविलासैः आकाशमण्डलस्य भीषणत्वं वर्णयति, विद्युदिति ।—विद्युदेव—तडिदेव, जिह्वा—रसना यस्य तेन, (विद्युतः पाटलवर्णतया लेलिहद्धर्मयोगाच्च चपलतया जिह्वासाम्यं) महेन्द्रचापः,—इन्द्रधनुरेव, उच्छ्रितौ—उत्क्षिप्तौ, उन्नतौ इति यावत्, आयतौ—दीर्घौ च, भुजौ—बाहू यस्य तादृशेन, (इन्द्रधनुषः वियुक्तधर्मिणः मण्डलाकारत्वेन उत्क्षिप्तसम्मिलितहस्तद्वयेन साम्यम् ; तल्लक्षणञ्चोक्तं वराहमिहिरसंहितायां यथा,—"सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे । वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥" इति ) तथा जलधर एव—मेघ एव विवृद्धः,—विशेषेण वृद्धिं गतः, हनुः,—गण्डस्योर्ध्वभागः यस्य तथाभूतेन, अन्तरीक्षेण—गगनमण्डलेन

तदेहि, अभ्यन्तरमेव प्रविशावः। [इत्युत्थाय परिक्रामति]।
प्रिये! पश्य—

तालीषु तारं, विटपेषु मन्द्रं
शिलासु रूक्षं सलिलेषु चण्डम्।

विजृम्भितमिव,—साङ्गभङ्गं मुखव्यादानं कृतमिवेत्यर्थः, इदम्—एतत्, पश्य पश्येत्यन्वयः। निशाचरी यथा हस्तद्वयमुद्यम्य मुखव्यादानं कृत्वा जिह्वां निःसार्य्य जगद्ग्रसितुं धावति, अन्तरीक्षमपि तथा दृश्यते इति निष्कर्षः। सजलमेघे प्रतिफलिताः पवनविधूताः सूर्य्यकिरणाः एव वियति (आकाशे) धनुःसदृशाः प्रतीयन्ते, तथा च सति निशायां तदभावात् कथम् इन्द्रधनुःसन्दर्शनं सम्भवति? इति तु नाशङ्कनीयम्; विद्युतां भास्वरविचित्ररूपदर्शनात् तस्यां चारुदत्तस्य महेन्द्रचापविषयिकायाः भ्रान्तेरुदयात् तथोपवर्णनमिति विभाव्यम्। अकालदुर्द्दिनपरत्वेन प्रागुपवर्णितमिदमित्याशङ्क्यते चेत्, तदा प्रावृड्व्यतिरिक्ते काले नीपकुसुमविकाशासम्भवात् निरङ्कुशा हि कवयः; किञ्च—प्रावृड्वर्णनार्थमेवाङ्कस्यास्य अवतारणा; तथा च नवजलधरच्छटाच्छन्ने गगने, इयं दिवा वा निशा वा इति तत्त्वतः विनिर्णेतुमशक्यतया प्राक्कृतं तारकादीनामुपवर्णनम्, इदानीन्तनञ्च इन्द्रधनुषोऽपि वर्णनं न तादृशं दोषमावहतीत्येवं विभाव्य सुधीभिः प्रकृतिस्थैर्भवितव्यमिति सङ्क्षेपः। अत्र साम्यात् अतथाभूते विद्युद्रूपे वस्तुनि कविप्रौढोक्त्या महेन्द्रचापबुद्धेरुदयात् भ्रान्तिमदलङ्कारः; अपि च अत्र विद्युद्विचित्रविलासस्य प्रकृतस्याप्रकृतस्वरूपेण विजृम्भितत्वादिना सम्भावनादुत्प्रेक्षाऽलङ्कारः; एवञ्चोपमेयभूते विद्युदादौ उपमानभूतानां केवलानां जिह्वादीनां तादात्म्यारोपात् मालारूपं निरङ्गं रूपकमलङ्कारः, एतेषाञ्चान्योऽन्यसापेक्षतया संस्थितेः सङ्करः; एवञ्चात्र कविनिबद्धवक्तृचारुदत्तप्रौढोक्तिसिद्धेन रूपकालङ्कारेण जगद्ग्रसितुमेव समुत्कं व्याददतः करञ्च प्रसारयतः लेलिहज्जिह्वस्य निशाचरस्याप्रकृतस्य समेन विजृम्भितत्वादिकार्य्येण व्यवहारसमारोपप्रतीतेः समासोक्त्यलङ्कारः व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः। आर्य्या वृत्तम्॥ ५१॥

धारापतनप्रकारं पुनः भूयस्तया विवृणोति, तालीष्विति।—धाराः,—वृष्टिप्रवाहाः, तालानुसारेण—तालमनुसृत्य, ताड्यमानाः,—वाद्यमानाः, सङ्गीतवीणा इव—सङ्गीतकालिकस्वनामख्यातवाद्यविशेषा इव, तालीषु—तालवनेषु, तारम्—उच्चैः, विटपेषु—वृक्षशाखासु, मन्द्रं—गम्भीरं, [ "मन्द्रम्" इत्यत्र "मन्दम्" इति पाठे—शनैः, अनुच्चैः इत्यर्थः] शिलासु—पाषाणेषु, रूक्षं—कर्कशं, तथा सलिलेषु—जलेषु, चण्डं

सङ्गीतवीणा इव ताड्यमाना-

स्तालानुसारेण पतन्ति धाराः॥ ५२ ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति अकालदुर्दिनो (ढ) नाम पञ्चमोऽङ्कः ॥ ५ ॥

—तोच्यं यथा तथा, पतन्ति। अत्र उपमाऽलङ्कारः स्फुट एव। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम् ॥ ५२ ॥

(ढ) अकालदुर्द्दिन इत्यत्र अकालशब्दस्य कालसदृशार्थकत्वे अप्रशस्तकालार्थकत्व वा "अब्राह्मणः" "अश्रेषी वेश्या" इत्यादिवत् पर्य्युदासस्यैव नञः तत्पुरुषसमासे कृते, प्रकृतवर्षाकाले अकालशब्दप्रयोगकृतानामाशङ्कितदोषाणां नैवावसरः; तथा हि प्राहुः, —"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥" इति। अत्र कालशब्देन प्रावृट्काल एव लक्ष्यते, पश्चाद्विवर्णितानुसारात्; एवञ्च प्रावृट्कालोदयाव्यवहितप्राक्काले ग्रीष्मर्त्तौ प्रायश एवावसिते सति; यद्वा,—अप्रशस्त इदानीं समधिकतया स्वप्रसारमनधिगते काले वर्षर्त्तौ एव दुर्द्दिनं मेघाच्छन्नमहः प्रायेणाव-सितमिति शेषः, इति सन्ध्यासमयश्च समागतप्राय एवेति बोद्धव्यम्; तथा च सति माहेन्द्रचापानामुदयस्य प्रायशः सन्ध्याकालिकतया दर्शनात्, न तदुपवर्णनमिदानीं विरुध्यते इति बोध्यम्। यदि च शशधरस्य तारकादीनाञ्च प्रदोषाव्यवहितप्राक्काले उदयः असम्भवदुक्तिक इति विभाव्यते, तदा भाविनः शशधरादेरुदयः मेघैरावरिष्यते इति कृत्वा वस्तुतः भावि एव वस्तु एतत्कालिकत्वेनोपवर्णितमित्यवधेयम्; यदि हि एतद्व्याख्यानं न रोचते साधुतया कस्मैचित्, तदा स कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धत्वेन भ्रान्तिकृतमेतत् यथा-व्याख्यातं टीकायामित्यवैतु, तथा च निशाकरतारकादीनामुपवर्णनमपि न किञ्चि-द्विरोधमावहतीति बोध्यम्; अपि च वर्षोदयारम्भे एव नीपकदम्बादीनां विकाशदर्शनात् प्रकृतेऽपि वर्षर्त्तौ अकालशब्दप्रयोगे अणुरपि दोषः नैव पदमादधातीति बोध्य-मिति दिक्।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्या-रत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिक-व्याख्यायां पञ्चमोऽङ्कः ॥ ५ ॥

# षष्ठोऽङ्कः ।

[ ततः प्रविशति चेटी ] ।

चेटी । कधं !! अज्ज वि अज्जआ ण विबुज्झदि !! भोदु, पविसिअ पडिबोधइस्सं । * (क) [ इति नाट्येन परिक्रामति ] ।

[ ततः प्रविशति आच्छादितशरीरा प्रसुप्ता वसन्तसेना ] ।

चेटी । [ निरूप्य ] उत्थेदु उत्थेदु अज्जआ, पभादं संवुत्तं । †

वस । [प्रतिबुध्य] कधं ! रत्ति ज्जेव गदा !! पभादं च संवुत्तं !!‡(ख)

चेटी । अम्हाणं एसो पभादो, अज्जआए उण रत्ति ज्जेव । § (ग)

वस । हञ्जे ! कहिं उण तुम्हाणं जूदिअरो ? ¶

चेटी । अज्जए ! वड्ढमाणअं समादिसिअ पुप्फकरंडअं (घ) जिण्णुज्जाणं गदो अज्जचारुदत्तो । **

---

* कथम् !! अद्यापि आर्या न विबुध्यते !! भवतु, प्रविश्य प्रतिबोधयिष्यामि ।

† उत्तिष्ठतु उत्तिष्ठतु आर्या, प्रभातं संवृत्तम् ।

‡ कथम् ! रात्रिरेव गता !! प्रभातञ्च संवृत्तम् !!

§ अस्माकमेतत् प्रभातम्, आर्यायाः पुन रात्रिरेव ।

¶ हञ्जे ! कुत्र पुनर्युष्माकं द्यूतकारः ?

** आर्ये ! वर्द्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्यचारुदत्तः ।

---

(क) विबुध्यते—जागर्त्ति । प्रतिबोधयिष्यामि—जागरयिष्यामि, निद्राभङ्गं करिष्यामीत्यर्थः ।

(ख) कथमिति ।—निशाजागरणेन निद्राऽऽवेगातुरतया, अभ्यन्तरचतुःशालके सूर्य्यालोकप्रवेशाभावेन अन्धकाराच्छन्नतया वा सहसा जागरणात् किमचिरकालवर्त्तिनी रात्रिरेव प्रभातप्राया जाता इत्यभिप्रायमूलिका वसन्तसेनोक्तिरवगन्तव्या ।

(ग) अस्माकमिति ।—आर्य्यायाः,—भवत्याः, सुखेनैव निशा जागरणेनैव यापिता, इदानीमपि सम्भोगसुखमत्ततया सुखकरी रात्रिरेव प्रार्थ्यते, मादृशानां न तथेति चेट्याः आशयो ज्ञेयः ।

(घ) पुष्पकरण्डकं—पुष्पाणां—कुसुमानां, करण्डकम्—आधारविशेषः तत्, कुसुमितपादपशोभितमिति भावः ।

वस। किं समादिसिअ ? *

चेटी। "जोएहि रत्तीए पवहणं, वसंतसेणा गच्छदु" त्ति। †

वस। हञ्जे ! कहिं मए गंतव्वं ? ‡

चेटी। अज्जए ! जहिं चारुदत्तो। §

वस। [चेटीं परिष्वज्य] हञ्जे ! सुठ्ठु ण णिज्झाइदो (ङ) रत्तीए, ता अज्ज पच्चक्खं पेक्खिस्सं। हञ्जे ! किं पविट्ठा अहं इह अब्भंतर-चदुस्सालअं ? ¶

चेटी। ण केवलं अब्भंतर-चदुस्सालअं, सव्वजणस्स वि हिअअं पविट्ठा। **

वस। अवि संतप्पीयदि चारुदत्तस्स परिअणो ? †† (च)

चेटी। संतप्पिस्सदि। ‡‡

वस। कदा ? §§

चेटी। जदा अज्जआ गमिस्सदि। ¶¶

वस। तदा मए पढमं संतप्पिदव्वं। (छ) [सानुनयम्] हञ्जे !

* किं समादिश्य ?

† "योजय रात्रौ प्रवहणं, वसन्तसेना गच्छतु" इति।

‡ हञ्जे ! कुत्र मया गन्तव्यम् ? § आर्ये ! यत्र चारुदत्तः।

¶ हञ्जे ! सुष्ठु न निध्याती रात्रौ, तदद्य प्रत्यक्षं प्रेक्षिष्ये। हञ्जे ! किं प्रविष्टा अहमिहाभ्यन्तरचतुःशालकम् ?

** न केवलम् अभ्यन्तरचतुःशालकं, सर्वजनस्यापि हृदयं प्रविष्टा।

†† अपि सन्तप्यते चारुदत्तस्य परिजनः ?

‡‡ सन्तप्स्यति। §§ कदा ? ¶¶ यदा आर्या गमिष्यति।

(ङ) निध्यातः—निरीक्षितः चारुदत्त इति शेषः।

(च) वेश्याया ममावागमनादिति भावः।

(छ) सन्तप्तव्यं—शोचनीयम् ; एतान् परित्यज्य गमनात् प्रागेव मयैव अधिकं शोचनीयं, यतो गणिका भूत्वाऽपि अहमेषाम् ईदृशी कृपा सती कथं हि एतान् सुहृदानुरक्तान् सहसा परित्यज्य गमिष्यामि इत्याशयः।

गेण्ह एदं रम्रणावलिं; मम बहिणिआए अज्जा-धूदाए गदुअ समप्पेहि, भणिदव्वं च,—"अहं सिरिचारुदत्तस्स गुण-णिज्जिदा दासी, तदा तुम्हाणं पि; ता एसा तुहज्जेव कंठा-हरणं होदु रम्रणावली"। *

चेटी। अज्जए! कुप्पिस्सदि चारुदत्तो अज्जाए दाव। †

वस। गच्छ, ण कुप्पिस्सदि। ‡

चेटी। [ गृहीत्वा ] जं आणवेदि। §

[ इति निष्क्रम्य पुनः प्रविशति ]।

चेटी। अज्जए! भणादि अज्जा धूदा,—"अज्जउत्तेण तुम्हाणं पसादीकिदा, ण जुत्तं मम एदं गेण्हिदुं। अज्जउत्तो ज्जेव मम आहरणविसेसो (ज) त्ति जाणादु भोदी"। ¶

[ ततः प्रविशति दारकं (झ) गृहीत्वा रदनिका ]।

रदनिका। एहि वच्छ! सअडिआए (ञ) कीलम्ह। **

---

* तदा मया प्रथमं सन्तप्तव्यम्। हञ्जे! गृहाण इमां रत्नावलीं, मम भगिन्यै आर्य्याधूतायै गत्वा समर्पय, भणितव्यञ्च,—"अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि; तदेषा तवैव कण्ठाभरणं भवतु रत्नावली"।

† आर्य्ये! कोपिष्यति चारुदत्तः आर्य्यायै तावत्।

‡ गच्छ, न कोपिष्यति। § यदाज्ञापयति।

¶ आर्य्ये! भणति आर्य्या धूता,—"आर्य्यपुत्रेण युष्माकं प्रसादीकृता, न युक्तं ममैतां ग्रहीतुम्। आर्य्यपुत्र एव ममाभरणविशेषः इति जानातु भवती"।

** एहि वत्स! शकटिकया क्रीड़ावः।

(ज) प्रसादीकृता—अनुग्रहीकृता, प्रीतिप्रदर्शनार्थं युष्मभ्यं दत्ता इत्यर्थः। न युक्तं—नोचितम्। एतां ग्रहीतुं—रत्नावलीं स्वीकर्त्तुमित्यर्थः। आभरणविशेषः,—श्रेष्ठभूषणं "नारीणां भूषणं पतिः" इत्युक्तेः।

(झ) दारकं—बालकं, ( "दारको बालकेऽपि स्यात् भेदकेऽप्यभिधेयवत्" इति मेदिनी )।

(ञ) शकटिकया—क्षुद्रशकटेन। प्रकरणस्यास्य मृच्छकटिकमिति नामधेयं सम्पादयितुमेव कविना मृच्छकटिकाप्रस्तावोऽयमारब्धः, गर्भितमर्थं प्रकाशयितु-

दार। [सकरुणम्] रदणिए! किं मम एदाए मट्टिआसअड़िआए, (ट) तं ज्जेव सोवस्सअड़िअं देहि। *

रद। [सनिर्वेदं निश्वस्य] जाद! कुदो अम्हाणं सुवस्सववहारो? तादस्स पुणो वि रिद्धीए (ठ) सुवस्सअड़िआए कीलिस्ससि। [स्वगतम्] ता जाव विणोदेमि (ड) णं। [प्रकाशम्] अज्जआ-वसंतसेणाए समीवं उवसप्पिस्सं। [उपसृत्य] अज्जए! पणमामि। †

वस। रदणिए! साअदं दे? कस्स उण अअं दारओ? अणलंकिद-सरीरो वि चंदमुहो आणंदेदि मम हिअअं। ‡

रद। एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम। §

---

* रदनिके! किं ममैतया मृत्तिकाशकटिकया, तामेव सौवर्णशकटिकां देहि।

† जात! कुतोऽस्माकं सुवर्णव्यवहारः? तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीड़िष्यसि। तत् यावद्विनोदयाम्येनम्। आर्य्यायाः वसन्तसेनायाः समीपमुपसर्पिष्यामि। आर्य्ये! प्रणमामि।

‡ रदनिके! स्वागतं ते? कस्य पुनरयं दारकः? अनलङ्कृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम्।

§ एष खलु आर्य्यचारुदत्तस्य पुत्रो रोहसेनो नाम।

मेवावागर्भितस्यापि अप्रकृतस्य वस्तुनः, गर्भितप्रकृतार्थकत्वं मृच्छकटिकाप्रसङ्गमवतारितवान् कविः। "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इति प्रकृतगर्भितार्थप्रकाशकनामकरणस्यैवालङ्कारिकैः ख्यातवस्तूपनिबद्धे नाटके उपदिष्टत्वात्, तथा च अप्रख्यातवस्तुन्यस्मिन् मृच्छकटिकप्रकरणे गर्भितार्थप्रकाशनमभिप्रेत्याभिहितमपि काल्पनिकयुक्त्योपनिबद्धतया यथाऽऽलङ्कारिकगणसम्मतं स्यात् तथैतत् न भूतमिति सुधीभिर्विभाव्यम्।

(ट) किम् इति निषेधार्थकमव्ययम् अलम् इत्यर्थः, ("किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी) एतां मृन्मयशकटिकां न ग्रहीष्यामीत्यर्थः।

(ठ) ऋद्ध्या—सम्पत्त्या, ऐश्वर्य्येणेत्यर्थः।

(ड) विनोदयामि—सान्त्वयामीत्यर्थः।

वस । [ बाहू प्रसार्य ] एहि मे पुत्तअ ! आलिंग । [ इति अङ्के उपवेश्य ] अणुकिदं अणेण पिदुणो रूवं । *

रद । ण केवलं रूवं, सीलं पि तक्केमि । एदिणा अज्जचारुदत्तो अत्ताणअं विणोदेदि । †

वस । अध किं णिमित्तं एसो रोअदि ? ‡

रद । एदिणा पडिवेसिअ-गहवइ-दारअ-केरिआए (ढ) सुवण्णसअडिआए कीलिदं ; तेण अ सा णीदा ; तदो उण तं मग्गंतस्स मए इअं मट्टिआ-सअडिआ कदुअ दिण्णा । तदो भणादि, "रदणिए ! किं मम एदाए मट्टिआ-सअडिआए, तं ज्जेव सोवण्णसअडिअं देहि" त्ति । §

वस । हद्धी !! हद्धी !! अअं पि णाम परसंपत्तीए संतप्पदि ? भअवं कअंत ! पोक्खरवत्त-पडिद-जलबिंदुसरिसेहिं

---

* एहि मे पुत्रक ! आलिङ्ग । अनुकृतम् अनेन पितृरूपम् ।

† न केवलं रूपं, शीलमपि तर्कयामि । एतेन आर्य्यचारुदत्तः आत्मानं विनोदयति ।

‡ अथ किं निमित्तम् एष रोदिति ?

§ एतेन प्रतिवेशिक-गृहपति-दारकस्य सुवर्णशकटिकया क्रीडितम् ; तेन च सा नीता ; ततः पुनस्तां याचतो मया इयं मृत्तिकाशकटिका कृत्वा दत्ता । ततो भणति, "रदनिके । किं मम एतया मृत्तिकाशकटिकया, तामेव सौवर्णशकटिकां देहि" इति ।

¶ हा धिक् !! हा धिक् !! अयमपि नाम परसम्पत्त्या सन्तप्यते ? भगवन्

(ढ) प्रतिवेशिकेति ।—प्रतिवेशिकः,—गृहासन्ननिवासी इत्यर्थः, [ प्रति—प्रत्यासन्ने, गृहसमीपे इत्यर्थः, विशति—तिष्ठतीति व्युत्पत्त्या प्रतिपूर्व्वकात् विशतेः कर्त्तरि णिनि प्रतिवेशीति सिद्धं, ततः स्वार्थे कनि प्रतिवेशिकः इति रूपं निष्पन्नम् ] स एव गृहपतिः,—गृहस्थः, तस्य दारकः,—बालकः तस्य, प्रतिवासिगृहस्थ-पुत्रस्येत्यर्थः ।

कीलसि तुमं पुरिस-भाअधेएहिं। (थ) [इति साश्रा] जाद! मा रोद, सोवरण-सअड़िआए कीलिस्ससि। ¶

दार। रदणिए! का एसा? *

वस। पिदुणो दे गुणणिज्जिदा दासी। †

रद। जाद! अज्जआ दे जणणी भोदि। ‡

दार। रदणिए! अलिअं तुमं भणासि, जइ अम्हाणं अज्जआ जणणी, ता कीस अलंकिदा? §

वस। जाद! मुद्धेण मुहेण अदिकरुणं मंतेसि। [नाट्येन आभरणानि अवतार्य्य रुदती] एसा दाणिं दे जणणी संवुत्ता; ता गेण्ह एदं अलंकारअं, सोवस्सअड़िअं घड़ावेहि। ¶

दार। अवेहि, (त) ण गेण्हिस्सं, रोदसि तुमं। **

---

कृतान्त! पुष्करपत्र-पतित-जलबिन्दु-सदृशैः क्रीड़सि त्व पुरुषभागधेयैः। जात! मा रुदिहि, सौवर्णशकटिकया क्रीड़िष्यसि।

* रदनिके! का एषा? † पितुस्ते गुणनिर्जिता दासी।

‡ जात! आर्य्या ते जननी भवति।

§ रदनिके! अलीकं त्वं भणसि, यद्यस्माकमार्य्या जननी, तत् किमर्थमलङ्कृता?

¶ जात! मुग्धेन मुखेनातिकरुणं मन्त्रयसि। एषा इदानीं ते जननी संवृत्ता; तत् गृहाणैतमलङ्कारं, सौवर्णशकटिकां घटय (कारय)।

** अपेहि, न ग्रहीष्यामि, रोदिषि त्वम्।

---

(थ) अयं—दारक इत्यर्थः। परसम्पत्त्या—परकीयसमृद्ध्या, अन्येषामसीमा-महिमालोकेनेत्यर्थः। सन्तप्यते—स्वयमेव सम्यक् तप्यते, निरतिशयं दुःखमनुभवतीत्यर्थः, [कर्म्मकर्त्तरि लटः प्रयोगः]। पुष्करपत्रेत्यादि।—पुष्करपत्रे—पद्मपर्णे, पतिताः,—स्थिताः, ये जलबिन्दवः,—वारिकणाः, तत्सदृशैः,—तन्निभैः, कमलपर्णपतितवारिकणवदस्थिरैरित्यर्थः। पुरुषभागधेयैः,—पुरुषादृष्टैः, धर्म्माधर्मात्मकप्राक्तनपुरुषकृतकर्म्मभिरित्यर्थः, क्रीड़सि—क्रीड़नकभूतं पुरुषं विधाय तेन त्वं नियतमात्मानं विनोदयसीत्यर्थः।

(त) अपेहि—अपसर, गच्छ इत्यर्थः।

वस। [ अश्रूणि प्रमृज्य ] जाद ! ण रोदिस्सं ; गच्छ, कील। [ अलङ्कारैः मृच्छकटिकां पूरयित्वा ] जाद ! कारेहि सोवण्णसअडिअं। *

[ इति दारकमादाय निष्क्रान्ता रदनिका ]।

प्रवहणाधिरूढः चेटः। [ प्रविश्य ] लदणिए ! लदणिए ! णिवेदेहि अज्जआए वसंतसेणाए, "ओहालिअं पक्खदुआलए सज्जं पवहणं (थ) चिट्ठदि"। †

रद। [ प्रविश्य ] अज्जए ! एसो वड्ढमाणओ विण्णवेदि—"पक्खदुआरए सज्जं पवहणं" त्ति। ‡

वस। हञ्जे ! चिट्ठदु मुहुत्तअं, जाव अहं अत्ताणअं पसाधेमि। §

रद। [ निष्क्रम्य ] वड्ढमाणअ ! चिट्ठ मुहुत्तअं, जाव अज्जआ अत्ताणअं पसाधेदि। ¶

चेटः। ही, ही, भोः ! मए वि जाणत्थलके विस्सुमलिदे, ता जाव गेण्हिअ आअच्छामि। एदे णस्सलज्जु-कडुआ ( द )

* जात ! न रोदिष्यामि ; गच्छ, क्रीड। जात ! कारय सौवर्णशकटिकाम्।

† रदनिके ! रदनिके ! निवेदय आर्य्यायै वसन्तसेनायै, "अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति"।

‡ आर्य्ये ! एष वर्द्धमानको विज्ञापयति—"पक्षद्वारे सज्जं प्रवहणम्" इति।

§ हञ्जे ! तिष्ठतु मुहूर्त्तकं, यावत् अहमात्मानं प्रसाधयामि।

¶ वर्द्धमानक ! तिष्ठ मुहूर्त्तकं, यावदार्य्या आत्मानं प्रसाधयति।

** ही, ही, भोः ! मयाऽपि यानास्तरणं विस्मृतं, तत् यावत् गृहीत्वा

( थ ) अपवारितम्—आच्छादितं, वस्त्राद्यावृतमित्यर्थः। पक्षद्वारके—पक्षे—पार्श्वे, स्थितं यत् द्वारं तस्मिन् अन्तःपुरिकाजनगमनोचिते द्वारे इत्यर्थः, ( "खिड़्कि" इति वङ्गभाषा ) सज्जं—सज्जीकृतं, भवद्गमनार्थं सज्जीकृत्य स्थापितमित्यर्थः। प्रवहणं—यानम्।

( द ) ही ही इति।—चमत्कारकृतवस्तुविषयकज्ञानद्योतकमव्ययमव बोध्यम्। यानास्तरणं—शकटाभ्यन्तरे आसनाच्छादनार्हः विचित्रकम्बलादिविशेषः, ( आस्तरण-

वइल्ला। भोदु, पवहणेण ज्जेव गदागदिं कलिश्शं। ** [ इति निष्क्रान्तः चेटः ]।

वस। हञ्जे ! उवणेहि मे पसाहणं, ( ध ) अत्ताणअं पसाधइस्सं। * [ इति प्रसाधयन्ती स्थिता ]।

[ प्रविश्य प्रवहणाधिरूढ़ः स्थावरकश्चेटः। ( न ) ]। आणत्तम्हि लाअशालअशंठाणेण—"थावलआ ! पवहणं गेण्हिअ पुप्फकलण्डअं जिण्णुज्जाणं तुलिदं आअच्छेहि"त्ति। भोदु, तहिं ज्जेव गच्छामि। वहध वइल्ला ! वहध। [ परिक्रम्यावलोक्य च ] कधं णाम शअलेहिं लुद्धे मग्गे !! किं दाणिं एत्थ कलइश्शं ? [ साटोपम् ] अले ले ! ओशलध ओशलध। [ आकर्ण्य ] किं भणाध ?—"एशे कश्श केलके पवहणे ?"त्ति। एशे लाअशालअ-

आगच्छामि। एतौ नस्यरज्जुकटुकौ बलीवर्दौ। भवतु, प्रवहणेनैव गतागतिं करिष्यामि।

* हञ्जे !' उपनय मे प्रसाधनम्, आत्मानं प्रसाधयिष्यामि।

† आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन—"स्थावरक ! प्रवहणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छ" इति। भवतु, तत्रैव गच्छामि। वहतं बलीवर्दौ ! वहतम्। कथं नाम शकटैः रुद्धो मार्गः !! किमिदानीमत्र करिष्यामि ? अरे रे ! अपसरत अपसरत। किं भणथ ?—"एतत् कस्य प्रवहणम् ?" इति। एतत्

शब्दो यद्यपि हस्तिनामेव पृष्ठस्योपरि पातनीये चित्रकम्बलविशेषे प्रयुज्यते, तथाऽपि अत्र लक्षणया आच्छादनसामान्ये एव बोद्धव्यं, विशेषस्यापि सामान्यपरत्वदर्शनात्)। नस्यरज्जुकटुकौ,—नस्यरज्ज्वा—नासिकारन्ध्रार्पितगुणेन, कटुकौ—तीक्ष्णौ, वेगवन्तौ इत्यर्थः। [ "णस्सल्लज्जुकडुआ" इत्यत्र "णस्सकडुआ" इति पाठे—नस्य-दुःसहौ इति संस्कृतम्। नस्येन—नासिकारन्ध्रविन्यस्तरज्ज्वा, दुःसहौ नासारज्जुप्रपीड़ितौ इत्यर्थः। कट्कशब्दस्य तथाविधस्यार्थस्याभिधानिकैरनङ्गीकृतत्वादयमेव पाठः समीचीनतया प्रतिभाति ]।

( ध ) प्रसाध्यते—भूष्यते अङ्गमनेन इति प्रसाधनम्—अलङ्कारः तत्।

( न ) स्थावरकः,—तदाख्यः।

अंठाण-केलके पवहणेत्ति; ता शिग्घं ओशलध। [अवलोक्य] कधं एशे अवले शहिअं विअ मं पेक्खिअ शहशज्जेव जूदपलाइदे विअ जूदिअले, ओहालिअ अत्ताणअं अस्सदो अवक्कंते !! ता को उण एशे ? अधवा किं मम एदिणा, तुलिदं गमिश्शं। अले ले ! गामेलुआ ! ओशलध ओशलध। किं भणाध ?—"मुहुत्तअं चिट्ठ, चक्कपलिवट्टिं (प) देहि" त्ति ? अले ले ! लाअशालअशंठाण-केलके हग्गे शूले चक्कपलिवट्टिं दइश्शं !! अधवा एशे एआई तवश्शी, ता एव्वं कलेमि। एदं पवहणं अज्जचालुदत्तश्श लुक्खवाडिआए पक्खदुआलए थावेमि। [इति प्रवहणं संस्थाप्य] एशेम्हि आअदे। †

[इति निष्क्रान्तः]।

चेटी। अज्जए ! णेमिसद्दो विअ सुणीअदि, ता आअदो पवहणो। ‡

---

राजश्यालकसंस्थानस्य प्रवहणमिति; तत् शीघ्रमपसरत। कथमेषोऽपरः सभिकमिव मां प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरः अपवार्य्यात्मानमन्यतोऽपक्रान्तः !! तत् कः पुनरेषः ? अथवा किं ममैतेन, त्वरितं गमिष्यामि। अरे रे ! ग्राम्याः ! अपसरत अपसरत। किं भणथ ?—"मुहूर्त्तकं तिष्ठ, चक्रपरिवर्त्तनं देहि" इति ? अरे रे ! राजश्यालकसंस्थानस्य अहं शूरः चक्रपरिवृत्तिं दास्यामि !! अथवा, एष एकाकी तपस्वी, तदेवं करोमि। एतत् प्रवहणम् आर्य्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि। एषोऽस्मि आगतः।

‡ आर्य्ये ! नेमिशब्द इव श्रूयते, तदागतं प्रवहणम्।

(प) कथमेष इति।—द्यूतकारकं दृष्ट्वा यथा पराजितद्यूतकरा हारितार्थदानासामर्थ्यात् पलायन्ते, तथा अयं कः पलायते इत्युक्त्याऽत्र गोपालदारकस्यार्य्यकस्य कारागृहात् पलायनं, तथा चक्रपरावर्त्तनावसरं प्राप्यैवासौ चारुदत्तप्रवहणमारोक्ष्यति इति च सूचितम्। अपवार्य्य—वस्त्रादिनाऽऽच्छाद्य। एतेनार्य्यकस्य पलायनमुपक्षिप्तम् इति बोध्यम्। चक्रपरिवृत्तिं—चक्रस्य परिवर्त्तनं, घूर्णयित्वा स्वस्थानाऽऽपादनम् इत्यर्थः।

वस। हञ्जे! गच्छ, तुवरदि मे हिअअं, ता आदेसेहि पक्ख-दुआरअं। *

चेटी। एदु एदु अज्जआ। †

वस। [परिक्रम्य] हञ्जे! वीसम तुमं। ‡

चेटी। जं अज्जआ आणवेदि। § [इति निष्क्रान्ता]।

वस। [दक्षिणाक्षिस्पन्दं सूचयित्वा प्रवहणमधिरुह्य च] किं ण्णेदं! फरदि दहिणं लोअणं!! अधवा, चारुदत्तस्स ज्जेव दंसणं अणि-मित्तं पमज्जइस्सदि। ¶

स्थावरकः। [प्रविश्य] ओशालिदा मए शअडा, ता जाव गच्छामि। [इति नाट्येन अधिरुह्य चालयित्वा स्वगतम्] भालिके पवहणे!! अधवा, चक्कपलिवट्टिआए पलिश्शंतश्श भालिके पवहण पड़िभाशेदि। भोदु, गमिश्शं। जाध गोणा! (क) जाध। **

नेपथ्ये। अरे रे दोवारिआ! अप्पमत्ता सएसु सएसु गुम्मट्ठाणेसु होध। एसो अज्ज गोवालदारओ गुत्तिअं भंजिअ,

* हञ्जे! गच्छ, त्वरते मे हृदयं, तदादिश पक्षद्वारकम्।

† एतु एतु आर्य्या।

‡ हञ्जे! विश्राम्य त्वम्। § यदार्य्या आज्ञापयति।

¶ किं नु इदम्! स्फुरति दक्षिणं लोचनम्!! अथवा चारुदत्तस्यैव दर्शन-मनिमित्तं प्रमार्जयिष्यति।

** अपसारिता मया शकटाः, तत् यावत् गच्छामि। भारवत् प्रवहणम्!! अथवा चक्रपरिवर्त्तनेन परिश्रान्तस्य भारिकं प्रवहणं प्रतिभासते। भवतु, गमिष्यामि। यातं, गावौ! यातम्।

†† अरे रे दौवारिकाः! अप्रमत्ताः स्वेषु स्वेषु गुल्मस्थानेषु भवत। एषोऽद्य

(क) भारिकं भाराक्रान्तं, केनचिद्भारवद्वस्तुना अधिष्ठितमित्यर्थः। गोणा—गावौ; "गौरित्यस्य गावी-गोणी-गोता-गोपोतलिकेत्येवमादयो बहवोऽपभ्रंशाः" इति महाभाष्ये 'प्रथमपादस्य प्रथमाह्निके उक्तम्।

गुत्तिवालअं वावादिअ, बंधणं भेदिअ परिब्भट्टो (ब) अवक्कमदि ; ता गेण्हध गेण्हध । ††

[ प्रविश्य अपटीक्षेपेण सम्भ्रान्त एकचरणलग्ननिगडोऽवगुण्ठितः (भ) आर्य्यकः परिक्रामति ] ।

चेटः । [ स्वगतम् ] महन्ते णअलीए संभमे (म) उप्पण्णे ; ता तुलिदं तुलिदं गमिस्सं । * [ इति निष्क्रान्तः ] ।

आर्य्यकः ।—

हित्वाऽहं नरपतिबन्धनापदेश-
व्यापत्तिव्यसनमहार्णवं महान्तम् ।

---

†† गोपालदारको गुप्तिं भङ्क्त्वा, गुप्तिपालकं व्यापाद्य, बन्धनं भित्त्वा परिभ्रष्टोऽपक्रामति; तत् गृह्णीत गृह्णीत ।

* महान् नगर्य्यां सम्भ्रम उत्पन्नः ; तत् त्वरितं त्वरितं गमिष्यामि ।

---

(ब) गुल्मस्थानेषु—गुल्मस्थानं—द्वयोः त्रयाणां पञ्चानां वा ग्रामाणां मध्ये धार्म्मिकसत्यसन्धैकपुरुषनेतृकं बहुरक्षिपुरुषसङ्कुलं तस्करायुपद्रवनिवारणोपायभूतस्थानं तत्र, प्रधानपुरुषाधिष्ठितरक्षिणां स्वस्वस्थानेषु इत्यर्थः, ("थाना" वा "पुलिश" इति प्रख्यातेषु ) इति भावः ; यदुक्तं मनुना,—"द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् । तथा ग्रामशतानाञ्च कुर्य्याद्राष्ट्रस्य सङ्ग्रहम् ॥" इति । यद्वा,—नगरपालनियोजिताश्वलनरक्षिणां रक्षणीयतया निर्व्वाचितेषु स्वकीयेषु स्थानेषु, स्वीयरक्ष्यप्रदेशेषु इति तु निष्कर्षः । गोपालदारकः,—गोपस्य नन्दनः, आर्य्यकः इत्याशयः । गुप्तिं—दुर्गं, बन्धनागारं वा । गुप्तिपालकं—कारागाराध्यक्षम् । परिभ्रष्टः,—बन्धनगृहात् बहिर्गतः, पलायित इत्यर्थः ।

(भ) अपटीक्षेपेण—पटपरिवर्त्तनमन्तरेणैव. सम्भ्रान्तः,—सभयत्वरायुक्तः, भीतिव्याकुल इत्यर्थः । अवगुण्ठितः,—वस्त्राच्छादितदेहः ।

(म) सम्भ्रमः,—नागरिकाणां विपत्पातशङ्कया इतस्ततः भयादिजनितः वेगः, जनानां भयजनितोद्वेग इत्यर्थः, ("समौ संवेगसम्भ्रमौ" इत्यमरः ) ।

पलायमान आर्य्यकः स्वदुरवस्थां विवृणोति, हित्वेति ।—अहं महान्तं—अगाधमित्यर्थः, [ "महान्तम्" इत्यत्र "नराणाम्" इति पुस्तकान्तरसम्मतः पाठः ] नरपतेः,—राज्ञः, यत् बन्धनं—काराऽवरोधः, तदेव व्यपदेशः,—छलं, तेन या व्यापत्तिः,—

पादाग्रस्थितनिगडैकपाशकर्षी
प्रभ्रष्टो गज इव बन्धनात् भ्रमामि ॥ १ ॥

भोः ! अहं खलु सिद्धादेश-जनित-परित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढ़ागारे बन्धनेन (य) बद्धः। तस्माच्च प्रियसुहृत्शर्विलकप्रसादेन बन्धनात् परिभ्रष्टोऽस्मि।

[ अश्रूणि विसृज्य ]—

भाग्यानि मे यदि तदा मम कोऽपराधः ?
यद्वन्यनाग इव संयमितोऽस्मि तेन।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या
गम्यो नृपो बलवता सह को विरोधः ? ॥ २ ॥

---

विशिष्टरूपा आपत्, कारागारवासरूपा इति यावत्, तथाभूतं यत् व्यसनं—दर्वादिकृतोपद्रवः, तदेव महार्णवः,—दुस्तरसागरः तं, हित्वा—उत्तीर्य्य, बन्धनात्—बन्धनशृङ्खलात् इत्यर्थः, प्रभ्रष्टः—परिस्खलितः, गज इव—करी इव, पादाग्रे—चरणाग्रभागे, स्थितः,—नियोजितः, बद्ध इत्यर्थः, यः निगडः,—शृङ्खलं, स एव एकः,—अद्वितीयः, पाशः,—बन्धनसाधनरज्जुः इत्यर्थः, तस्य कर्षी—आकर्षणकारी सन्, भ्रमामि—व्रजामि, विचरामीत्यर्थः। उपमाऽलङ्कारः। प्रहर्षिणी वृत्तं,—"त्र्याशाभिर्म-न-ज-र-गाः प्रहर्षिणीयम्" इति तल्लक्षणात् ॥ १ ॥

(य) सिद्धेति।—सिद्धस्य—योगिविशेषस्य, आदेशेन—उपदेशेन, भविष्यद्वाण्या इति यावत्, जनितः,—उत्पादितः, परित्रासः,—भयं यस्य तादृशेन। घोषात्—आभीरपल्लीतः, ("घोष आभीरपल्ली स्यात्" इत्यमरः)। विशसने—विनाशकरे, [ विशस्यते अस्मिन्निति व्युत्पत्त्या अधिकरणे ल्युटि रूपम् ; "निर्वापणं विशसनं मारणं प्रतिघातनम्" इत्यमरः ]। गूढ़ागारे—गुप्तगृहे, कारागारे इत्यर्थः। बध्यन्ते अनेनेति बन्धनं—निगड़ादि [ करणे ल्युट् ] तेन।

इदानीमार्य्यकः अदृष्टस्य अलङ्घनीयताम्, आत्मनः निरपराधत्वञ्च प्रदर्शयति, भाग्यानीति।—यदि—चेत्, मे—मम, भाग्यानि—राज्यभोगजनकशुभादृष्टानि, सन्तीति शेषः, तदा—तत्र, मम अपराधः—दोषः, कः ?—न कोऽपीत्यर्थः। यदित्यव्ययं, येन हेतुना, मे राज्यभोगसौभाग्यसत्त्वात् इत्यर्थः, तेन—राज्ञा पालकेन इत्यर्थः, वन्यनाग इव—आरण्यगज इव, संयमितः,—बद्धः, अस्मि—भवामि ;

तत् कुत्र गच्छामि मन्दभाग्यः ? [ विलोक्य ] इदं कस्यापि साधोः अनावृतपक्षद्वारं ( र ) गेहम् ।—

इदं गृहं भिन्नमदत्तदण्डो विशीर्णसन्धिश्च महाकपाटः ।
ध्रुवं कुटुम्बो व्यसनाभिभूतां दशां प्रपन्नो मम तुल्यभाग्यः ॥ ३ ॥

तदत्र तावत् प्रविश्य तिष्ठामि,—

[ नेपथ्ये ] जाध गोणा ! जाध । *

* यातं गावौ ! यातम् ।

[ वन्यनाग इत्युपमया आर्यकस्य दुर्दमनीयत्वमजेतव्यत्वञ्च व्यज्यते ]; दैवी—दैवाधीना, भाग्यायत्ता इति यावत्, सिद्धिरपि—राज्यप्राप्तिरपि, लङ्घयितुम्—अतिक्रामयितुं, न शक्या—न अर्हा केनापि इति शेषः ; अतः नृपः,—राजा, गम्यः,—गत्वा सम्भेयः, आश्रयणीय इत्यर्थः ; राज्यसुखसम्भोगस्य मे अवश्यम्भावित्वे विरोधिना अपि राज्ञा किमपि कर्त्तुं न शक्यते, ततः किमहमेनमाश्रयामीत्याशङ्कायामाह, बलवतेति ।— बलवता—प्रबलेन सह, विरोधः,—विवादः, कः ?—न कर्त्तव्य इति भावः । ( प्राचीनास्तु —नृपः गम्यः—सर्वेषां सेव्यो हि राजा इत्यर्थः, अतो बलवता सह विरोधः न कर्त्तव्यः एवं व्याचख्युः ) । पूर्व्वार्द्धे वन्यनागसाम्योक्तेः उपमाऽलङ्कारः ; अपि च, पराद्धगतः "गम्यः नृपः" इति विशेषार्थस्य बलवद्विरोधः न करणीय इति सामान्यार्थेन सोपपत्ती-करणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः, इत्यनयोः परस्परनिरपेक्षतया संस्थानात् संसृष्टिः । वसन्ततिलकं वृत्तम् ॥ २ ॥

( र ) अनावृतपक्षद्वारम्—उद्घाटितपार्श्वद्वारम् ।

गृहं भग्नं वीक्ष्य स्वावस्थया सह गृहस्वामिनः अवस्थां तुलयति इदमिति ।—इदं—पुरःस्थितं, गृहं—निकेतनं, भिन्नं—भग्नं, तथा अदत्तम्—अनर्पितम्, अनाबद्धमित्यर्थः, दण्डम्—अर्गलं यस्य सः, अरुद्ध इत्यर्थः. अयं महाकपाटश्च—बृहद्द्वारञ्च, विशीर्णसन्धिः, —विशीर्णः,—जीर्णः, सन्धिः,—संयोगस्थानं यस्य सः, अतः कुटुम्बी—गृहपतिरिति भावः, मम तुल्यभाग्यः,—मत्सदृशदुर्भाग्य इत्यर्थः, [ अत्र सापेक्षत्वेऽपि गमकत्वादेव समासः, मत्तुल्यभाग्यः इत्येवमेव समासः न्याय्यः, सापेक्षत्वात् ] व्यसनाभिभूतां—दुःखपूर्णां, दशाम्—अवस्थां, ध्रुवं—निश्चितं, प्रपन्नः,—प्राप्तः ; यथा अहं दरिद्रः विपन्नश्च, तथा अयमपीत्यर्थः । मत्तुल्यभाग्यः पुरुष इति अर्थप्रतिसन्धानेनैव साम्यावबोधादियमार्थी उपमाऽलङ्कृतिः । उपेन्द्रवज्रा वृत्तम् ॥ ३ ॥

आर्य्यकः। [आकर्ण्य] अये! प्रवहणमित एवाभिवर्त्तते॥—

भवेद्गोष्ठीयानं न च विषमशीलैरधिगतं,

वधूसंयानं वा, तदभिगमनोपस्थितमिदम्।

वहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशात्

विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम्॥ ४॥

वर्द्धमानकः चेटः। [प्रवहणेन सह प्रविश्य] होमाणहे! आणीदे

"आध गोम्‌ ! आध" इत्याकर्ण्य प्रवहणागमनं निश्चित्य तेन स्वकीयपलायनं सम्भवति न वा इति विचारयति, भवेदिति।—इदं—प्रवहणमिति शेषः, विषमशीलैः,—दुश्चरित्रैः, अधिगतम्—अधिष्ठितं, गोष्ठीयानं—गोष्ठी—समाजः, सभा इत्यर्थः, उत्सवस्थानमिति यावत्, ("समज्या परिषद्गोष्ठी सभासमितिसंसदः" इत्यमरः) तत्र गमनार्थं यानं—प्रवहणं, न भवेत्—न स्यात्; तस्याः,—वध्वा इत्याशयः, तत्र—गोष्ठ्यां वा, अभिगमनाय—नयनाय, उपस्थितम्—आगतं, वधूसंयानं वा—पटावृतत्वात् वधूवहनयोग्यं यानमित्यर्थः, न भवेदिति शेषः, तथा विधिवशात्—कार्य्यवशात्; यद्वा,—विधिवशात्—दैववशात्, मम भाग्यवशादित्यर्थः, ("विधिर्विधाने दैवे च" इत्यमरः) शून्यं—केनापि अनधिष्ठितमित्यन्वयः; वहिर्नेतव्यं—वाह्यप्रदेशे प्रापणीयं, प्रवरजनानां—श्रेष्ठजनानां, योग्यं—वहनोपयुक्तं वा, भद्रजनारोहणोचितमित्यर्थः, न भवेत् इति अत्रापि योजनीयम्; विविक्तत्वात्—विरलजनसञ्चारदेशोपनीतत्वात्, मम, वहनार्थमिति शेषः; यद्वा,—विविक्तत्वात्—पूतत्वात्, पूतजनारोहणयोग्यत्वादित्यर्थः, ("विविक्तौ पूतविजनौ" इत्यमरः) शून्यं—कैरपि जनैरनधिरूढं, दैवविहितं—दैवेन प्रेरितं, खलु—निश्चितं, भवेत्; अनुकूलदैवस्य मम पलायनार्थमेव शून्यं प्रवहणं समागतमिति भावः। इदं यदि गोष्ठीयानं स्यात्, तदा सत्पुरुषयोग्यत्वादस्याप्यदादिभिरसद्वृत्तैरेतदनभिगमनीयं, यदि वधूसंयानं स्यात्, तदा पुरस्त्रीजनोचितत्वादस्य पुरुषैरनाश्रयणीयमेतत्, यदि हि वहिर्देशनयनयोग्यं स्यात्, तदा धनिजनोचितत्वादस्य मत्सदृशदीनजनारोहणायोग्यमेतत्; नैतत् सर्व्वमाशङ्कास्पदं, यतः, निर्जनदेशोपस्थितत्वादस्य केनाप्यनारूढस्य मम सौभाग्येनैवैतत् प्रेरितं भवेत्, इति आदौ संशये अन्ते च निश्चयोदयादयं निश्चयान्तः सन्देहोऽलङ्कारः, "विषमशीलैरधिगतम्" इत्यादेः विशेषणविधया टीकाप्रदर्शितव्याख्यानानुसारेऽपि स एवालङ्कार इति बोद्धव्यम्। शिखरिणी वृत्तम्॥ ४॥

मए जाणत्थलके। लदणिए! णिवेदेहि अज्जआए वसंत-सेणाए, "अवत्थिदे सज्जे पवहणे अहिलुहिअ पुप्फकलंडअं जिण्णुज्जाणं गच्छदु अज्जआ"। *

आर्य्यकः। [आकर्ण्य] गणिकाप्रवहणमिदं, बहिर्यानञ्च, भवतु, अधिरोहामि। [इति स्वैरमुपसर्पति] (ल)

चेटः। [श्रुत्वा]। कधं णेउलशद्दे! ता आअदा क्खु अज्जआ। अज्जए! इमे णश्शकडुआ बइल्ला, ता पिट्ठदो ज्जेव (व) आलुहदु अज्जआ। †

आर्य्यकः। [तथा करोति]।

चेटः। पादुप्फालचालिदाणं णेउलाणं वोशंतो शद्दो; भलक्कंते (श) अ पवहणे; तधा तक्केमि, शंपदं अज्जआए आलूढाए होदव्वं; ता गच्छामि। जाध, गोणा। जाध। ‡

[इति परिक्रामति]।

* आश्चर्यम्! आनीतं मया यानान्तरणम्। रदनिके! निवेदय आर्य्यां वसन्तसेनायै, "अवस्थितं सज्जं प्रवहणम् अधिरुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छतु आर्य्या"।

† कथं नूपुरशब्दः! तदागता खलु आर्य्या। आर्य्ये! इमौ नस्यकटुकौ बलीवर्दौ, तत् पृष्ठत एव आरोहतु आर्य्या।

‡ पादास्फालनचालितानां नूपुराणां विश्रान्तः शब्दः; भाराक्रान्तञ्च प्रवहणम्; तथा तर्कयामि, साम्प्रतमार्य्यया आरूढया भवितव्यम्; तत् गच्छामि। यातं, गावौ! यातम्।

(ल) बहिर्यानं—बहिः—बाह्यप्रदेशे, नेतव्यं यानं—शकटः। स्वैरं—मन्दं मन्दमित्यर्थः।

(व) कथमिति।—आर्य्यकपादाग्रनिहितशृङ्खलस्य शब्दं नूपुरध्वनिसदृशमाकर्ण्यैवं वितर्कितं, कथं नूपुरशब्दः इत्यादिना। तत्—तस्मात्, पृष्ठत एव—पश्चाद्देशेव।

(श) पादास्फालनचालितानां—पादयोः,—चरणयोः, आस्फालनेन—चालनविशेषेण, ["पादोत्फालचालितानाम्" इत्यनुवादे स एव अर्थः] चालितानां—

वीरकः । [प्रविश्य] । अरे रे ! अरे ! जअ-जअमाण-चंदणअ-मंगल-फुल्लभद्दप्पमुहा ! *—

किं अच्छध वीसद्धा ? जो सो गोवालदारओ बद्धो ।
भेत्तूण समं वच्चइ णरवइहिअअं बंधणं अ † ॥ ५ ॥

अले ! पुरत्थिमे पदोलीदुआरे चिठ्ठ तुमं, तुमं पि पच्छिमे, तुमं पि दक्खिणे, तुमं पि उत्तरे । जो वि एसो पाआर-खंडो, (ख) एदं अहिरुहिअ चंदणेण समं गदुअ अवलोएमि । एहि, चंदणअ ! एहि इदो दाव । ‡

* अरे रे ! अरे ! जय-जयमान चन्दनक-मङ्गल-पुष्पभद्रप्रमुखाः !—

† किं स्थ विश्रब्धाः ? यः स गोपालदारको बद्धः ।
भित्त्वा समं व्रजति नरपतिहृदयं बन्धनञ्च ॥

‡ अरे ! पुरस्तात् प्रतोलीद्वारे तिष्ठ त्वं, त्वमपि पश्चिमे, त्वमपि दक्षिणे, त्वमपि उत्तरे । योऽपि एष प्राकारखण्डः, एतमधिरुह्य चन्दनेन समं गत्वा अवलोकयामि । एहि चन्दनक ! एहि इतस्तावत् ।

अवधीकृतानाम् । विश्रान्तः—निवृत्त इत्यर्थः, निःशब्दो जात इति यावत् । भारा-क्रान्तम्—आरोह्यधिष्ठानेन सभारमिति भावः ।

आर्यकस्य पलायनमुद्घोष्य रक्षिणः सतर्कयति वीरकः किमिति ।—किं—कथं, केन प्रकारेण इत्यर्थः, विश्रब्धाः,—विश्वस्ताः, निःशङ्का इत्यर्थः, स्थ—तिष्ठथ, कालं नयथ इत्यर्थः, यूयमिति शेषः ; यः गोपालदारकः,—गोपतनयः, बद्धः,—आबद्धः, राज्ञा इति शेषः, सः,—श्रुतपूर्व्व इत्यर्थः, नरपतिहृदयं—राज्ञः पालकस्य चित्तं, बन्धनञ्च —निगडञ्च कारागारञ्च वा, समं—युगपदेव, भित्त्वा—एकत्र व्याकुलीकृत्य, अन्यत्र—भङ्क्त्वा, व्रजति—गच्छति, पलायते इत्यर्थः । अत्र नरपतिहृदयभेदनं बन्धनभेद-नञ्चमपि समकालिकत्वेन अध्यवसितत्वात् कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपातिशयोक्ति-मूलकः सहार्थस्य बलात् एकस्यैव भेदनस्य तादृशोभयान्वयितया च सहोक्तिरलङ्कारः । आर्य्या वृत्तम् ॥ ५ ॥

(ख) पुरस्तात्—पूर्व्वस्यां दिशि प्रतोलीद्वारे—रथ्याया उपरिस्थद्वारे, बहिर्द्वारे इत्यर्थः, ("रथ्या प्रतोली विशिखा" इत्यमरः) प्राकारखण्डः,—प्राचीरांशः, ("प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः) ।

[प्रविश्य सम्भ्रान्तः चन्दनकः] अरे रे! वीरअ-विसल्ल-भीमंगअ-दंडकालअ-दंडसूरप्पमुहा! *—

आअच्छध वीसत्था! तुरिअं जत्तेह लहु करेआह।
लच्छी जेण ण रण्णो पहवइ गोत्तंतरं मंतुं † ॥ ६ ॥

अवि अ,—

उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे।
तं तं जोएह तुरिअं, संका वा जाअए जत्थ ‡ ॥ ७ ॥

* अरे रे! वीरक-विशल्य-भीमाङ्गद-दण्डकाल-दण्डशूरप्रमुखाः!—

† आगच्छत विश्वस्ताः! त्वरितं यतध्वं लघु कुरुत।
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम्॥

‡ अपि च,—उद्यानेषु सभासु च मार्गे नगर्यामापणे घोषे।
तं तमन्वेषयत त्वरितं, शङ्का वा जायते यत्र॥

वीरकाहूतः चन्दनकोऽपि प्रविश्य अधीनरक्षिणाम् अप्रमत्ततया सावहितावस्थान-मादिशति, आगच्छतेति।— विश्वस्ताः!—भोः विश्वासिपुरुषाः! त्वरितं—शीघ्रम्, आगच्छत—आयात, लघु—तूर्णं, यतध्वं—चेष्टध्वं, बन्दिग्रहणार्थमिति भावः। ["जत्तेह" इति प्राकृतस्य "यात्राम्" इति संस्कृतं कृत्वा, यात्रां—गमनम् इति प्राचीन-सम्मता व्याख्या] येन—याह्गुपायेन, राज्ञः,—नृपस्य, लक्ष्मीः,—राजश्रीरित्यर्थः, गोत्रान्तरं—कुलान्तरम्, अन्यकुलमित्यर्थः, ("गोत्रं नाम्नि कुलेऽचले" इति कोषः) गन्तुं—यातुं, न प्रभवति—समर्था न भवतीत्यर्थः, तथा लघु—शीघ्रं, काकाक्षि-गोलकन्यायेन "लघु" इत्यस्य उभयत्रापि अन्वयः; कुरुत - विधत्त; सर्वे गोत्रान्तरा-श्रयणोत्सुकां राजश्रियमचलां कर्तुं चेष्टध्वमिति भावः। गाथा छन्दः॥ ६॥

अन्वेषणयोग्यस्थानं निर्दिशति, उद्यानेष्विति।—उद्यानेषु—आक्रीडेषु, साधारण-नागरिकाणां विहारोपयोगिषु राजकीयकृत्रिमकाननेषु इत्यर्थः, ("पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्" इत्यमरः) सभासु—समितिषु, मार्गे—पथि, नगर्यां—पुर-मध्ये, ["टाङसिङसामिनात्स्याः" इति सूत्रेण नगरीशब्दात् ङेः स्थाने अकारादेशे "णअरीअ" इति निष्पन्नम्; अतोऽत्र गणभङ्गाभावादार्य्यालक्षणयोगः बोध्यः। "णअ-रीए" इति पाठे तु न तथा इति ध्येयम्]। आपणे—हट्टे, क्रयविक्रयशालायां वा, घोषे—गोपपल्लां, ("घोष आभीरपल्ली स्यात्" इत्यमरः) वा—अथवा, यत्र—

रे रे वीरअ ! किं किं दरिसेसि, भणासि दाव वीसद्धं ।
भेत्तूण अ बंधणअं को सो गोवालदारअं हरइ ? * ॥ ८ ॥
कस्स ट्ठमो दिणअरो ? कस्स चउत्थो अ वट्टए चंदो ?
छट्ठो अ भग्गवगहो ? भूमिसुओ पंचमो कस्स ? † ॥ ९ ॥

रे रे वीरक ! किं कि दर्शयति, भणसि तावदविस्रब्धम् ।
भित्त्वा च बन्धनकं कः स गोपालदारकं हरति ? ॥
कस्याष्टमी दिनकरः ? कस्य चतुर्थश्च वर्त्तते चन्द्रः ? ।
षष्ठश्च भार्गवग्रहः ? भूमिसुतः पञ्चमः कस्य ? ॥

यस्मिन् यस्मिन् स्थाने, शङ्का—तस्य अवस्थितिसंशयः, जायते—उत्पद्यते, तं तं, सर्वं प्रदेशमिति शेषः त्वरितं—शीघ्रम्, अन्वेषयत—अनुसन्धानं कुरुत । गाथा छन्दः ॥ ७ ॥

आर्य्यकस्य सम्बन्धे वीरकेण किं किं ज्ञातं, तज्ज्ञातुं पृच्छति, रे रे इति ।— रे रे वीरक !—अरे वीरक ! (त्वं) किं किं दर्शयसि ?—[स्वार्थे णिच्] पश्यसीत्यर्थः, यद्वा—गोपालदारकान्वेषणाय अधीनपुरुषान् किं किं दर्शयसि ?—उपदिशसीत्यर्थः । [अत्र "दरिसेसि" इत्यत्र "दरिसेमि" इति पठित्वा "दर्शयामि" इति व्याख्यातं पृथ्वीधरेण] तथा विस्रब्धं—विश्वस्तं, तवाधीनविश्वासिरक्षिपुरुषमिति यावत्, यद्वा—विस्रब्धमिति क्रियाविशेषणं, विस्रब्धं यथा तथा, निर्विकारचेतसा इत्यर्थः, किं कि भणसि ?—कथयसि ? तावदिति साकल्ये, किं किं कर्त्तुमुपदिशसि ? इत्यर्थः, वाक्यालङ्कारे वा ; बन्धनकं—कारागारं, शृङ्खलं वा, भित्त्वा—भङ्क्त्वा, अत्र यः इति कर्त्तृपदमूहनीयं, यः गोपालदारकं—गोपतनयं, हरति—मुष्णाति, स्थानान्तरं नयतीत्यर्थः, स कः ? इति प्राक् परीक्ष्यावरुध्यतामित्याशयः । आर्य्याभेदान्तर्गत गीत्याख्यं वृत्तम्,—"आर्य्याप्रथमार्द्धसमं यस्याः परार्द्धमपीरिता गीतिः" इति लक्षणात् ॥ ८ ॥

आर्य्यकस्य पलायने येन साहाय्यं कृतं तस्य सर्वे एव ग्रहाः दुष्टस्थानावस्थिततया कुपिता वर्त्तन्ते, यदवशेन तस्येदृशी दुर्मतिर्जाता इति ज्ञापयितुम् अशुभग्रहान् द्वाभ्यां निर्दिशति, कस्य इति ।—कस्य, जनस्येति शेषः, अष्टमः,—जन्मराशेः अष्टमराशिस्थित इत्यर्थः, दिनकरः,—सूर्य्यः । भार्गवग्रहः,—शुक्रः, भूमिसुतः,—मङ्गलः, एषां शेषस्थानस्थितत्वे अशुभफलदायकत्वादिति भावः । आर्य्या छन्दः ॥ ९ ॥

**भण कस्स जम्मछ्ठो जीओ ? णवमो तहेअ सूरसुओ ?**
**जीअंते चंदणए, को सो गोवालदारअं हरइ ? * ॥ १० ॥**

भण, कस्य जन्मषष्ठो जीवः ? नवमस्तथैव सूरसुतः ? ।
जीवति चन्दनके कः स गोपालदारकं हरति ? ॥

भणेति।—जीवः,—बृहस्पतिः, कस्य—किन्नामधेयस्य, जनस्येति शेषः, जन्मषष्ठः,—जन्मराशितः षष्ठराशिस्थित इत्यर्थः, भण—कथय, तदिति शेषः; सूरसुतः,—रवितनयः, शनैश्चरः इत्यर्थः, तथैव नवमः,—तद्वदेव जन्मराशितः नवमराशिस्थितः इत्यर्थः। चन्दनके मयि जीवति—विद्यमाने सतीत्यर्थः, यः, जनः इति शेषः, गोपालदारकं हरति, सः,—अतिसाहसवानित्यर्थः, स्वनिधनस्याप्यगणितत्वादित्याशयः; कः ?—किन्नामधेयः; नूनं तस्य रव्यादयः अष्टमाद्यरिष्टराशिस्थाः, तादृशानां रव्यादीनां घोरतरापत्सूचकत्वेन शास्त्रदृष्टत्वादिति भावः।

तथा च जन्मतः अष्टमसूर्य्यफलं मरणं, यथाऽऽह ज्योतिषे बादरायणः,—

"हुतवहभयमारश्चन्द्रजः सौख्यमुग्रं
धनहरणमथार्किर्भार्गवश्चार्थलाभम्।
मरणमथ पतङ्गः स्थानमाशं सुरेज्यः
सृजति निधनसंस्थो नैवरोगञ्च चन्द्रः॥

जन्मतश्चतुर्थचन्द्रफलं कुक्षिरोगः; यथाऽऽह स एव,—

सूक्ष्मां शास्त्रविबोधिकामपि धियं मूढां करोत्यङ्गिरा
घोरां दुःखपरम्परां दिनकरः कुक्ष्यामयं चन्द्रमाः।
सौम्यो रोगविनाशमिच्छति नृणां रोगक्षयं भार्गवो
भौमः शत्रुभयं चतुर्थभवने सौरिश्च वित्तक्षयम्॥

जन्मतः षष्ठशुक्रफलं मरणं, युवतिजनितं वैरञ्च, यथा,—

स्थिताः षष्ठे राशौ दिनकरमहीजार्कतनयाः
बुधश्चन्द्रश्चैवं प्रचुरधनधान्यानि ददति।
समृद्धिं शत्रूणां मनसि च विषादं सुरगुरुः
भृगुर्नाशं कुर्य्याद् युवतिजनितवैरञ्च परमम्॥

जन्मतः पञ्चममङ्गलफलमुद्वेगः, यथा,—

दौर्भाग्यं शशलाञ्छनः क्षितिसुतश्चोद्विग्नतां चेतसो
दोषोत्पत्तिमनुत्तमां रविसुतः शिर्व्वर्वियोगं रविः।

वीरकः। भड़ (क) चंदणआ ! *—

अवहरइ कोवि तुरिअं चंदणअ ! सवामि तुज्झ हिअएण।
जह अद्धुद-दिणअरे गोवालअ-दारओ खुड़िदो † ॥ ११ ॥

* भट चन्दनक !—

† अपहरति कोऽपि त्वरितं चन्दनक ! शपे तव हृदयेन।
यथा अर्द्धोदितदिनकरे गोपालक-दारकः खोड़ितः॥

दौर्भाग्यं विदधाति चन्द्रतनयः प्राप्तिं परां भार्गवः
कुर्य्यात् पञ्चमराशिगोचरगतो जीवो नृणां निर्वृतिम् ॥

अन्यतः षष्ठगुरुफलं शत्रुवृद्धिर्मनोदुःखञ्च, यथा,—"स्थिताः षष्ठे राशौ दिनकर—" इत्यादि।

अन्यतो नवमशनैश्चरफलमर्थनाशः, यथा,—

धर्मस्थाने दिनकरसुतो नाशमर्थस्य कुर्य्यात्
रोगं सौम्यो धरणितनयो भार्गवश्चार्थलाभम्।
त्रासं सोमो जनयति नृणां शोकविद्वेषमर्कः
स्थानं मानं प्रसुतयुतञ्चापि जीवः प्रकामम् ॥"

अष्टमसूर्य्ये मरणं, चतुर्थचन्द्रे कुक्षिपीड़ा, षष्ठशुक्रे मरणं युवतिजनवैरञ्च, पञ्चमकुजे उद्वेगः, षष्ठजीवे शत्रुवृद्धिर्मनःपीड़ा च, तथा नवमशनैश्चरे अर्थनाश इति बोद्धव्यम्। अत्र आर्य्याभेदान्तर्गतं गीत्याख्यं वृत्तम् ॥ १० ॥

(क) भट !—हे वीर ! ("भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च" इति मेदिनी)।

वीरकः स्वकीयामवधानतां प्रतिपादयितुं शपथपूर्व्वकम् आर्य्यकस्य पलायनकालं विवृणोति, अपहरति इति। हे चन्दनक ! कोऽपि—अज्ञातपुरुष इत्यर्थः, त्वरितं—शीघ्रम्, अल्पक्षणेनैव इति यावत्, अपहरति—अपाहरदित्यर्थः, [वर्त्तमानसामीप्ये लट् भूते भविष्यति च प्रयुज्यते] आर्य्यकमिति शेषः, ; तव हृदयेन—हृदयं स्पृष्ट्वा, शपे—शपथं करोमि, सत्यं वदामीति भावः। यथा—तस्य अत्यल्पसमयेनैव पलायने प्रमाणं यथेतिशब्दार्थः, अर्द्धोदितदिनकरे—सूर्य्ये उदयाचलात् बहिः सर्व्वलोकप्रकाशकतामनधिगते एव, सम्पूर्णतया अप्रकाशिते इत्यर्थः, अतिप्रत्यूषे इति भावः, गोपालकदारकः—गोपसुतः, खोड़ितः,—शकटं भेदयित्वा विनोदितः इत्यर्थः,

चेटः। [नेपथ्ये] जाध गोणा ! जाध। * (ह)

चन्द। [दृष्ट्वा] अरे रे ! पेक्ख, पेक्ख, †—

ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स।
एदं दाव विआरह, कस्स कहिं पवसिओ पवहणो त्ति ‡ ॥१२॥

वीरकः। [अवलोक्य] अरे पवहणवाहआ ! मा दाव एदं

* यातं गावौ ! यातम्।

† अरे रे ! पश्य, पश्य,—

‡ अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य।
एतत्तावद् विचारय, कस्य कुत्र प्रेषितं प्रवहणमिति।

---

[भेदनार्थकात् चौरादिकात् खण्डयतेः रूपम्]। निशायां पलायनसम्भवः इति मत्वा वय कारयामिव निशां तस्य रक्षणकार्य्ये नियुक्ता आस्म, तदा स तत्रैव स्थितः, निशाशेषं ज्ञात्वा इदानीं तत्पलायनमसम्भवितं विविच्य यदा वयं किञ्चित् विश्रमितुं प्रवृत्ताः, तदा असम्पूर्णसूर्य्योदये अहर्मुखे एव स पलायितः इत्यहं शपथं कृत्वा वदामि इति वीरक-स्याशयः। आर्य्या वृत्तम् ॥११॥

(ह) "अपहरति कोऽपि" इत्युक्त्यनन्तरं "यातं गावौ यातम्" इत्युक्तिदर्शनात्, इदानीमार्य्यकस्य कारागृहात् पलायनं विदित्वाऽपि रक्षिणा निरपराधस्य तस्य तदु-द्धारकस्य च निर्बाधं पलायनमनुमोदितं गुप्तञ्च तयोर्निर्बाधा एवेति बीजार्थप्रति-पादनात् काव्यबन्धाश्रितवचसः सातिशयश्लिष्टत्वाच्च द्वितीयं पताकास्थानमिदं वेदि-तव्यम्।

अस्थावृतं प्रवहणं दृष्ट्वा तेन आर्य्यकस्य पलायनमाशङ्क्य तत्परीक्षणार्थमादिशति चन्दनकः अपवारितमिति।—राजमार्गस्य—राजकीयपथस्य, मध्येन—मध्यप्रदेश-माश्रित्य इत्यर्थः, मार्गपार्श्वस्थजनानां कथञ्चिद्दर्शनाशङ्कयेति भावः; अपवारितम्—आच्छादितं, प्रवहणं—यानं, व्रजति—गच्छति. ["वच्चइ" इत्यत्र "वजइ" इति पाठान्तरेऽपि, "व्रजति" इति संस्कृतम्। "व्रो व्रजनृत्योः" इति सूत्रेण व्रजधातोः अन्त्यस्य जकारस्य स्थाने च्चादेशः। क्वचित् "वज्जइ" इति वा पाठः] एतत्—इदं, प्रवहणं—शकटं, कस्य, जनस्य इति शेषः, तथा, कुत्र—कस्मिन् स्थाने, प्रेषितं—प्रेरितं, केनेति शेषः, इति—इत्थम्, इमं वृत्तान्तमित्यर्थः, तावत्—सत्वरमेव, विशेष-रूपेणेत्यर्थः, विचारय—आलोचय, पुङ्खानुपुङ्खेन जानीहीत्यर्थः। गाथा छन्दः ॥१२॥

पवहणं वाहेहि; कस्सकेरकं एदं पवहणं ? (क) को वा इध आरूढो ? कहिं वा वच्चइ ? *

चेटः। एशे क्खु पवहणे अज्जचालुदत्ताह्केलके, इध अज्जआ वशंतशेणा आलूढा, पुप्फकलंडअं जिण्णुज्जाणं कीलिदुं (ख) चालुदत्तश्श णीअदि। †

वीरकः। [ चन्दनकमुपसृत्य ] एसो पवहणवाहओ भणादि, "अज्जचारुदत्तस्स पवहणं वसंतसेणा आलूढा, पुप्फकलंडअं जिण्णुज्जाणं णीअदि" त्ति। ‡

चन्दः। ता गच्छदु। §

वीरकः। अणवलोइदो ज्जेव ? ¶ (ग)

चन्दः। अघइं। **

वीरकः। कस्स पच्चएण ? †† (घ)

---

* अरे प्रवहणवाहक ! मा तावदेतत् प्रवहणं वाहय; कस्य एतत् प्रवहणम् ? को वा इहारूढः ? कुत्र वा व्रजति ?

† एतत् खलु प्रवहणम् आर्य्यचारुदत्तस्य, इहार्य्या वसन्तसेना आरूढा, पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य नीयते।

‡ एष प्रवहणवाहको भणति, "आर्य्यचारुदत्तस्य प्रवहणं, वसन्तसेना आरूढा, पुष्पकरण्डकं जीर्णोद्यानं नीयते" इति।

§ तद्गच्छतु। ¶ अनवलोकित एव ? ** अथकिम् ? †† कस्य प्रत्ययेन ?

(क) वाहय—पुरतः प्रापय, चालय इत्यर्थः। कस्य, जनस्य इति शेषः, एतत् प्रवहणम् ?

(ख) क्रीडितुं—रन्तुं, [ चारुदत्तस्य इति सम्बन्धे षष्ठी, जीर्णोद्यानमित्यनेन सम्बध्यते ]। नीयते—प्राप्यते, वसन्तसेनेत्यन्वयः, अस्माभिः इति शेषः।

(ग) अनवलोकित एव अदृष्ट एव, अस्माभिरिति भावः, शकटः गच्छतु इति शेषः।

(घ) प्रत्ययेन—विश्वासेन हेतुना, कस्य उपरि विश्वासं संस्थाप्य इत्यर्थः; कं विश्वस्य एतत् नावलोकयसीति भावः।

चन्द। अज्जचारुदत्तस्स। *

वीरकः। को अज्जचारुदत्तो? का वा वसंतसेणा? जेण अणवलोइदं वच्चइ? †

चन्द। अरे! अज्जचारुदत्तं ण जाणासि? ण वा वसंतसेणिअं? जइ अज्जचारुदत्तं वसंतसेणिअं वा ण जाणासि; ता गअणे जोण्हासहिदं चंदं पि तुमं ण जाणासि, ‡—

को तं गुणारविंदं सीलमिअंकं जणो ण जाणादि।
आवस्स-दुक्ख-मोक्खं, चउ-साअरसारअं रअणं? § ॥ १२ ॥

* आर्य्यचारुदत्तस्य।

† क आर्य्यचारुदत्तः? का वा वसन्तसेना? येनानवलोकितं व्रजति?

‡ अरे! आर्य्यचारुदत्तं न जानासि? न वा वसन्तसेनाम्? यदि आर्य्यचारुदत्तं वसन्तसेनां वा न जानासि, तदा गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि।—

§ कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति।
आपन्नदुःखमोक्षं चतुःसागरसारकं रत्नम्? ॥

सर्व्वजनप्रसिद्धस्य महीयसः विश्वासैकभूमेः चारुदत्तस्य गुणं विवृणोति, क इति। —गुणेषु—दयादाक्षिण्यादिषु, अरविन्दम् इव,—कमलमिव, दयादाक्षिण्यादिजनित-यशःसौरभेण सुगन्धिकमलमिव सर्व्वलोकमनोहरणम् इत्यर्थः, अथवा,—गुणा अरविन्दानीव यस्य तम्, अरविन्दसदृशमनोहरगुणशालिनमित्यर्थः, शीलं—सुचरित्रं, मृगाङ्कः,—चन्द्रः इव तं, निर्म्मलपूतचरित्रवत्त्वेन जनाह्लादकतया चेति भावः; आपन्नानां—विपन्नानां, दुःखस्य—क्लेशस्य, मोक्षः,—मुक्तिर्यस्मात् तम्, आर्त्तजनैक-शरणमित्यर्थः, चतुःसागरसारकं रत्न—चतुर्णां सागराणां सारकं—सारभूतं, रत्नं—निधिभूतं, चतुरः सागरान् विचित्य लब्धं महामूल्यं यत् वस्तु, तद्वत् इत्यर्थः, तं चारुदत्तमित्याशयः, कः,—को जनः, न जानाति?—न वेत्ति? अपि तु सर्व्व एव तं जानातीत्यर्थः, अत्रोपमानोपमेययोरभेदारोपात् मालारूपं केवलस्यैव रूपकाख्य निरङ्ग-रूपकमलङ्कारः। आर्य्या वृत्तम्॥ १२॥

दो ज्जेव पूअणीआ इह णअरीए तिलअभूदा अ ।

अज्जा वसंतसेणा, धम्मणिही चारुदत्तो अ * ॥ १४ ॥

वीरकः । अरे ! चंदणआ !.†—

जाणामि चारुदत्तं, वसंतसेणं अ सुट्ठु जाणामि ।

पत्ते अ राअकज्जे, पिदरं पि अहं ण जाणामि ‡ ॥ १५ ॥

चार्य्यकः । [स्वगतम्] अयं मे पूर्व्ववैरी, अयं मे पूर्व्वबन्धुः ; (ङ) यतः,—

---

* द्वावेव पूजनीयौ इह नगर्य्यां तिलकभूतौ च ।
आर्य्या वसन्तसेना धर्म्मनिधिश्चारुदत्तश्च ॥

† अरे चन्दनक !—

‡ जानामि चारुदत्तं, वसन्तसेनाञ्च सुष्ठु जानामि ।
प्राप्ते च राजकार्य्ये, पितरमपि अहं न जानामि ॥

द्वौ ज्जेव इति ।—आर्य्या—उदारस्वभावा इत्यर्थः, वसन्तसेना, धर्म्मनिधिः—धर्म्म एव निधिः,—महामूल्यं रत्नं यस्य तथाभूतः, धर्म्मैकधन इत्यर्थः, चारुदत्तश्च, द्वौ एव—उभौ एव, मान्यः इत्यर्थः, पूजनीयौ—अर्हणीयौ, प्रशस्तौ इत्यथः, इह—अस्यां, नगर्य्यां—पत्तने, उज्जयिन्यामित्यर्थः, तिलकभूतौ—ललाटादिषु धार्य्यौ स्वनामख्यातौ चन्दनादिकृतविशेषकस्वरूपौ, नगर्य्याः शिरोभूषणभूतौ, प्रधानौ वा इत्यर्थः, ("तिलको द्रुमरोगा········। ·········स्त्रियान्तु विशेषके" इति मेदिनी)। श्लोकोऽयमार्य्याभेदयोरुद्गीत्यार्य्यागीत्योर्मिश्रणेन रचितः। तयोः लक्षणे यथा,—"आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः" इति "आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृक् परार्द्धमार्य्यागीतिः" इति च ॥ १४ ॥

वीरकः स्वकर्त्तव्यपरायणताम् अपक्षपातित्वञ्च प्रतिपादयति, जानामीति ।—चारुदत्तं जानामि—वेद्मि, अहमिति शेषः, वसन्तसेनाञ्च—वसन्तसेनामपि, सुष्ठु—सम्यक्, विशेषभावेन इत्यर्थः, जानामि—अवगच्छामि, किन्तु प्राप्ते च राजकार्य्ये—चकारः पुनरर्थे, राजप्रयोजने उपस्थिते पुनः, पितरमपि—स्वजनकमपि, न जानामि—अयं जनकः अपरो वा इति पृथक्तया न वेद्मि, सदोषं जनकं न मुञ्चामि अपरञ्च न बध्नामि इत्याशयः, अथवा कुत्रापि न विश्वसिमीति भावः। गाथा छन्दः ॥ १५ ॥

(ङ) अयं—वीरकः इत्याशयः, मे—मम, पूर्व्ववैरी—पूर्व्वस्मिन् जन्मनि शत्रुः

एककार्य्यनियोगेऽपि नानयोस्तुल्यशीलता।
विवाहे च चितायाञ्च यथा हुतभुजोर्द्वयोः॥ १६॥

चन्द। तुमं तन्तिलो (च) सेणावई रण्णो पच्चइदो, एदे धारिदा मए वइल्ला, अवलोएहि।*

वीरकः। तुमं पि रण्णो पच्चइदो बलवई, (छ) ता तुमं ज्जेव अवलोएहि।†

* त्वं तन्त्रिलः सेनापतिः राज्ञः प्रत्ययितः, एतौ धारितौ मया बलीवर्दौ, अवलोकय।

† त्वमपि राज्ञः प्रत्ययितो बलपतिः, तत् त्वमेव अवलोकय।

एव आसीत्, यतः इह जन्मनि सहजशत्रुवत् मयि निष्कृपः दृश्यते इति भावः, अयञ्च—चन्दनकः इति भावः, मे—मम, पूर्व्वबन्धुः,—पूर्व्वस्मिन् जन्मनि, मित्रं—सहज-सुहृदासीत्, यतोऽयं न किमप्युपकृतोऽपि मयि दयार्द्रहृदयः सञ्जातः इति भावः।

तुल्यकार्य्यत्वेऽपि वीरकचन्दनकयोः स्वस्य शत्रुमित्रत्वे संस्थापयितुं सदृष्टान्तं हेतुं विवृणोति, एकेति।—विवाहे—पाणिग्रहणकर्म्मणि, चितायाञ्च—प्रेतदहनचुल्लाञ्च, स्थितयोः इति शेषः, द्वयोः हुतभुजोः यथा,—अग्नित्वेन एकत्वेऽपि कार्य्यभेदेन द्विविधयोः अग्न्योः इवेत्यर्थः, अनयोः,—वीरक-चन्दनकयोः इत्यर्थः, एकस्मिन् कार्य्ये—रक्षणरूपे अभिन्ने कर्म्मणि, नियोगेऽपि—आदेशेऽपि, नियोजनेऽपीत्यर्थः, न तुल्यशीलता—समाना प्रकृतिर्नेत्यर्थः; विवाहाग्निर्यथा संसारस्थित्यर्थं, चिताग्निर्यथा संसारध्वंसार्थं प्रवर्त्तते, तथा एतयोरपि एकः मम रक्षार्थम् अपरश्च नाशार्थं प्रवृत्तः भवतीत्यर्थः। अत्रैकस्मिन्नेव वाक्ये उपमानोपमेयभूतयोः हुतभुग्रक्षिपुरुषयोः विरुद्धधर्म्मोक्तिमुखसाम्यस्य प्रतीतेः उपमाऽलङ्कारः; न चात्र दीपकमाशङ्कनीयं, तस्य प्रस्तुताप्रस्तुतविषयकत्वात्, प्रकृते च चिताविवाहयोरुभयोरेव अप्रस्तुतत्वात्; तथा च विभिन्नकार्य्यकारित्वादेवानयोः अग्निद्वयसाम्यमात्रं प्रदर्शितमिति बोद्धव्यम्। पथ्यावक्त्रं वृत्तम्॥ १६॥

(च) तन्त्रिलः,—राज्यचिन्तासु कुशलः, राज्यचिन्तापरः इत्यर्थः, [ "तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तने" इत्यमरः, फेनिलवदस्यार्थे "लोमादि—" (५।२।१०० पा०) इति पिच्छादिभ्यः इलच्प्रत्ययान्तः ]।

(छ) प्रत्ययितः,—राजप्रत्ययवान् विश्वस्तः इत्यर्थः, [ जातार्थे इतच् ]। बलपतिः,—सेनापतिः।

चन्द। मए अवलोइदं तुए अवलोइदं भोदि। *

वीरक:। जं तुए अवलोइदं, तं रण्णा पालएण अवलोइदं

चन्द। अरे! उण्णामेहि धुरं। ‡

चेट:। [ तथा करोति ]।

आर्य्यक:। [ स्वगतम् ]। अपि रक्षिणो मामवलोकर अयमस्त्रयास्मि मन्दभाग्य:!! अथवा,—

भीमस्यानुकरिष्यामि. बाहु: शस्त्रं भविष्यति।
वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने ॥ १७ ॥

अथवा साहसस्य तावदनवसर: ( ज )।

* मयाऽवलोकितं त्वयाऽवलोकितं भवति।

† यत् त्वयाऽवलोकितं, तत् राज्ञा पालकेनावलोकितम्।

‡ अरे! उन्नामय धुरम्।

रक्षिभि: स्वावरोधमाशङ्कमान आर्य्यक: तदानीन्तनकर्त्तव्यं निरूपयति, भीमस्येति।—भीमस्य—वृकोदरस्य, कर्म्म इति शेष:, भीमव्यवहारमित्यर्थ:, अनुकरिष्यामि —भीमवद्व्यवहारं दर्शयिष्यामि इत्यर्थ:, भीमो यथा विना शस्त्रं करचरणादिभि: प्रहृत्य युद्धं कृतवान्, अहमपि एतान् तथा प्रहृत्य आत्मानं रक्षिष्यामीति भाव:; बाहु:.—भुज:, मम इति शेष:, शस्त्रं—प्रहरणं. भविष्यति—सम्पत्स्यते, बाहुभ्यामेव शस्त्रकृत्यं सम्पादयिष्यामीत्यर्थ:, व्यायच्छत:,—युध्यमानस्य. शस्त्राभावे व्यायतविशालकरचरणादिभिरपि प्रहारं कुर्व्वत इत्यर्थ:. [ "व्यायच्छत:.—परपरिभवं कुर्व्वत:" इति प्राचामभिप्राय: ] मृत्यु:.—निधनं, वरं—मनाक् प्रिय:; बन्धने—कारागारे, गृहीतस्य—निबितस्य, मृत्यु: न, वरमिति शेष:। "हतो वा प्राप्स्यसि स्वर्गम्" इति "सङ्ग्रामे निहता: शूरा: ब्रह्मलोकमागता:" इति च स्मरणात्, युद्धे मृतस्य स्वर्गभाक्त्वेन देवत्वलाभश्रुते: युद्धमेव वरं, न तु विना युद्धमात्मसमर्पणमिति भाव:। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

(ज) अस्थाने अतिसाहसप्रदर्शनस्यायमनवसर इति निश्चित्य इदानीं युद्धोद्यमस्यापि नेष्टसाधकत्वं विचिन्त्याह, अथवेति।—साहसस्य—बलप्रदर्शनस्य, अविमृश्यकारिताया वा, तावत्—पुन:, अनवसर:,—अनवकाश:, असमय इत्यर्थ:; एते खलु बहव:, अहं पुन: एकाकी, साहसोपक्रमे एव सर्व्वे एकीभूय मां ग्रहीष्य

चन्द। [ नाट्येन प्रवहणमारुह्य अवलोकयति ]।

आर्य्यकः। शरणागतोऽस्मि।

चन्द। [ संस्कृतमाश्रित्य ] अभयं (झ) शरणागतस्य।

आर्य्यकः।—

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति॥ १८॥

चन्द। कधं! अज्जओ गोवालदारओ सेण-वित्तासिदो विअ पत्तरहो साउणिअस्स (ञ) हत्थे णिवडिदो॥ [ विचिन्त्य ] एसो अणवराधो, सरणाअदो, अज्जचारुदत्तस्स पवहणं आरूढ़ो,

• कथम्! आर्य्यको गोपालदारकः श्येनवित्रासित इव पतरथः शाकुनिकस्य हस्ते निपतितः!! एषोऽनपराधः, शरणागतः, आर्य्यचारुदत्तस्य प्रवहणमारूढः,

---

संयम्य कारां नेष्यन्ति एकः अहम् आत्मसमर्पणादन्यत् किमपि कर्त्तुं न शक्नोमि; अतः विरुद्धमिदानीं साहसप्रदर्शनस्य फलं भविष्यति, अत उपायान्तरं चिन्तनीयमिति भावः।

(झ) अभयं—भयाभावः, अस्तु इति शेषः; न भेतव्यमिति भावः।

शरणागतरक्षणमवश्यकर्त्तव्यमिति प्रतिपादयितुं शरणागतपरित्यागे दोषमाह, त्यजतीति।-यः, जन इति शेषः, शरणागतम्—आश्रयार्थिनं, खलु त्यजति—जहाति, नाश्रयं ददातीत्यर्थः, जयश्रीः,—विजयलक्ष्मीः, तं—शरणागतत्यागिनं, त्यजति—उज्झति, किल—निश्चितं, मित्राणि—सुहृदः, बन्धुवर्गश्च—ज्ञातिसमूहश्च, जहति—त्यजन्ति, तथा सदा—सर्वदा, उपहास्यः—उपहसनीयः, सर्व्वैर्निन्दनीय इत्यर्थः, भवति च। शरणागतपरित्यागः सर्व्वथैव अधःपतनाय इति भावः। आर्य्या वृत्तम्॥ १८॥

(ञ) श्येनेति।-श्येनेन—हिंस्रपक्षिविशेषेण, वित्रासितः—भापितः, ताड़ित इत्यर्थः, पतरथः,—पक्षी, ( "शकुन्ति-पक्षि-शकुनि············। ············पतत्-पतरथाण्डजाः" इत्यमरः ) शाकुनिकस्य—जीवान्तकस्य, शकुनविहन्तुः व्याधस्य इत्यर्थः, ( "जीवान्तकः शाकुनिकः" इत्यमरः ) अत्यल्पापदः आत्मानं मोचयितुमिच्छन्निदानीं प्रत्यवायभूयिष्ठे अस्मिन्नसेऽयं द्विगुणभिया पलायमान आशीविषमुखे इव निपतितः इति भावः।

प्राणप्पदस्स मे अज्जसव्विलअस्स मित्तं; अण्णदो राअणिओओ, ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुं? अधवा, जं भोदु तं भोदु, पढमं ज्जेव (ट) अभअं दिण्णं। *

भीदाभअप्पदाणं दत्तस्स परोवआररसिअस्स।

जइ होइ होउ णासो, तहवि अ लोए गुणो ज्जेव * ॥ १९॥

[ समग्रमवतीर्य ] दिट्ठो अज्जो—" [ इत्यर्द्धोक्ते ] ण, अज्जआ वसंतसेणा। तदो एसा भणादि,—"जुत्तं णेदं, सरिसं णेदं, ज अहं अज्जचारुदत्तं अहिसारिदुं गच्छंती राअमग्गे परिभूदा" † ( ठ )।

* प्राणप्रदस्य मे आर्यशर्विलकस्य मित्रम्; अन्यतो राजनियोगः; तत् किमिदानीमत्र युक्तमनुष्ठातुम्? अथवा यद्भवतु तद्भवतु, प्रथममेवाभयं दत्तम्।

भीताभयप्रदानं ददतः परोपकाररसिकस्य।

यदि भवति भवतु नाशस्तथाऽपि च लोके गुण एव ॥

† दृष्ट आर्यः,—" न, आर्या वसन्तसेना। तत एषा भणति,—"युक्तं नेदं, सदृशं नेदं, यदहमार्यचारुदत्तमभिसर्तुं गच्छन्ती राजमार्गे परिभूता"।

(ट) अनुष्ठातुम्—आचरितुं, कर्त्तुमित्यर्थः। प्रथममेव—शरणप्रार्थनाचणे एव इत्यर्थः।

परोपकारार्थं जीवनत्यागोऽपि वरमित्यभिप्रेत्याह, भीतेति।—भीतेभ्यः,—विपन्नेभ्य इत्यर्थः, अभयप्रदानं—न भेतव्यमित्यादिरूपमाश्वासदानं, ददतः,—"तण्डुल-पाकं पचति" इतिवत् "भीताभयप्रदानं ददतः" इत्यत्र दाधातोः सामान्यार्थपरतया कुर्वतः इत्येवार्थः; परेषाम्—अन्येषाम्, उपकारे—आनुकूल्यसम्पादने, रसिकस्य—रसज्ञस्य, अनुरागिणः इत्यर्थः यदि सम्भावनायां, नाशः,—व्यापत् मरणं वा, भवति—जायते, भवतु—अस्तु, नाशः इति शेषः, तथाऽपि—नाशे सत्यपि, च लोके—संसारे, साधारणसमाजे इत्यर्थः, गुण एव—अनुराग एवेत्यर्थः। "कीर्त्तिर्यस्य स जीवति" "परोपकरणं कायादसारात् सारमाहरेत्" इत्याद्युक्तेः शरणागतरक्षणार्थं मरणमपि स्वर्गप्रापकत्वात् श्रेयस्करमेव इति भावः। गाथा छन्दः ॥१९॥

(ठ) परिभूता—तिरस्कृता, अपमानिता इत्यर्थः।

वीरकः । चंदणआ ! एत्थ मह संसओ ( ड ) समुप्पण्णो । *

चन्द । कधं दे संसओ ? †

वीरकः ।—

संभम-घग्घर-कंठो तुमं पि जादोसि, जं तुए भणिदं ।
दिट्ठो मए क्खु अज्जो, पुणो वि अज्जा वसंतसेणेत्ति ‡ ॥ २० ॥

एत्थ मे अप्पच्चओ । §

* चन्दनक ! अत्र मम संशयः समुत्पन्नः ।

† कथं ते संशयः ?

‡ सम्भ्रम-घर्घर-कण्ठस्त्वमपि जातोऽसि यत्त्वया भणितम् ।
दृष्टो मया खलु आर्यः पुनरप्यार्या वसन्तसेनेति ॥

§ अत्र मे अप्रत्ययः ।

( ड ) अत्र—तव वाक्ये इत्यर्थः । संशयः,—वसन्तसेना न वेति सन्देहः ।

राजविश्वस्तेन चन्दनकेन सम्यक् परीक्ष्य "नायमार्य्यकः, अपि तु वसन्तसेना" इत्युक्तेऽपि वीरकः स्वस्य संशयकारणमाह, सम्भ्रमेति ।—त्वं—भवान्, सम्भ्रमेण—अलीकवाक्यप्रयोगजनितोद्वेगेन, घर्घरः —अव्यक्तशब्दविशेषवान्, कण्ठः,—कण्ठस्वरः यस्य तथाभूतः, [ अत्र कण्ठपदेन निरूढलक्षणया कण्ठस्वरो लक्ष्यते ] जातोऽसि—प्रतीयमानः भवसीत्यर्थः, त्वया—भवता, यदपि —यच्च वाक्यमित्यर्थः, [ अपिरत्र चार्थे ] भणितं—कथितं, तदपि न सुष्ठुतया विश्वासास्पदम् इति शेषः । किं तदित्याह, दृष्ट इति ।—मया—चन्दनकेन खलु—निश्चितम्, आर्य्यः,—कश्चित् पुरुष इति भावः, दृष्टः,—अवलोकितः, पुनरपि—आर्य्यो दृष्ट इति कथनानन्तरमेव इत्यर्थः, आर्य्या वसन्तसेना, दृष्टा इति शेषः, यदि सत्यमेव वसन्तसेना दृष्टा, तदा कथं त्वं सम्भ्रमघर्घरकण्ठः जातः ? कथं वा प्राक् त्वया दृष्टः आर्य्यः इत्युक्तम् ? अतो मे संशयः ; सत्यवादिनः नैवं कदाऽपि यथार्थोक्तौ कण्ठावरोधो वाग्द्वैधीभावश्च भवतीति भावः ; आर्य्यकदर्शनप्रकाशयतः चन्दनकस्य स्वोक्त्या एव वीरकः "आर्य्या वसन्तसेना" इत्यादि मृषोद्यमेवत्यबोधि इति वेदितव्यम् । गीतिः वृत्तम्—"आर्य्याप्रथमार्द्धसमं यस्याः अपरार्द्धमाह तां गीतिम्" इति लक्षणात् ॥ २० ॥

चन्द। अरे! को अप्पच्चओ तुह? अम्हं दक्खिणत्ता अव्वत्त-भासिणो, खस-खत्तिखड़ो-खड़ट्टो-बिलअ-कण्णाट-कण्ण-प्पावरणअ-दविड़-चोल-चीण-बव्बर-खेर-खाण-मुख-मधुघादपहुदीणं मिलिच्छ-जादीणं अणेअदेसभासाभिण्णा जहेट्टं मंतआमो; "दिट्ठो दिट्ठा वा, अज्जो अज्जआ वा"। * (ढ)

वीरक:। णं अहं पि पलोएमि; राअअण्णा एसा; अहं रण्णो पच्चइदो। †

चन्द०- ता किं अहं अप्पच्चइदो संवुत्तो? ‡

वीरक:। णं! सामि-णिओओ। §

चन्द। [स्वगतम्] अज्जगोवालदारओ अज्जचालुदत्तस्स पवहणं अहिरुहिअ अवक्कमदि त्ति जइ कहिज्जदि, तदो

* अरे! कोऽप्रत्ययस्तव? वयं दाक्षिणात्या अव्यक्तभाषिण:, खस-खत्तिकड़-कड़ट्ट-बिल-कर्णाट-कर्ण-प्रावरण-द्राविड़-चोल-चीन-वर्व्वर-खेर-खान-मुख-मधुघातप्रभृतीनां म्लेच्छजातीनाम् अनेकदेशभाषाऽभिज्ञा यथेष्टं मन्त्रयाम:,—"दृष्टो दृष्टा वा, आर्य्य: आर्य्या वा"

† ननु अहमपि प्रलोकयामि, राजाज्ञा एषा; अहं राज्ञ: प्रत्ययित:।

‡ तत् किमहमप्रत्ययित: संवृत्त:?

§ ननु! स्वामिनियोग:।

¶ आर्य्यगोपालदारक: आर्य्यचारुदत्तस्य प्रवहणमधिरुह्य अपक्रामति, इति यदि

(ढ) खसेत्यादि म्लेच्छीभूता: क्षत्रजातय:। यथेष्ट—यथाऽभिलषितं, मन्त्रयाम:,—कथयाम: इत्यर्थ:। किं शब्दविचारेण, सर्व्वासु देशभाषासु सम्यगभिज्ञतया वयं यथेच्छं वक्तुं शक्नुम:, कस्याञ्चित् भाषायां "दृष्ट:" इति "दृष्टा" इति कृत्वा "आर्य्य:" इति "आर्य्या" इति कृत्वा उच्चार्य्यते, वयन्तु विविधभाषाविद: दाक्षिणात्यवासव्यतया सुस्पष्टमभिधातुमसमर्थाश्च इति एकस्यां भाषायां कथयितव्यायां कदाचित् जिह्वा-जाड्यादन्यविधाऽपि भाषा उदीर्य्यतेऽस्माभि:, लिङ्गभेदनिबन्धनदोषोऽपि प्रायिकतया तासु तासु देशभाषासु दृश्यते, तत्र किल पुंलिङ्गे प्रयोक्तव्ये स्त्रीलिङ्गप्रयोग:, स्त्रीलिङ्गे प्रयोक्तव्ये पुंलिङ्गप्रयोग: स्वत: सिद्ध एव; अत इदानीं प्रोक्तरूपमालोचनं विफल-मित्यर्थ:। स्त्रीपुंनपुंसकविपर्य्ययकृतं भाषणं प्रायिकमेवास्माकम् इति भाव:।

अज्जचारुदत्तो रस्रा सासिज्जइ, (ण) ता को एत्थ उवाओ? [विचिन्त्य] कण्णाट-कलह-प्पओअं (त) करेमि। [प्रकाशम्] अरे वीरअ! मए चंदणकेण पलोइदं पुणो वि तुमं पलोएसि? को तुमं? ¶

वीरकः। अरे! तुमं वि को? *

चन्द। पूइज्जंतो माणिज्जंतो तुमं अप्पणो जादिं ण सुमरेसि? † (थ)

वीरकः। [सक्रोधम्]। अरे! का मह जादी? ‡

चन्द। को भणउ? §

वीरकः। भणउ। ¶

चन्द। अहवा ण भणामि। **—

जाणंतो वि हि जादिं तुज्झ अ ण भणामि सीलविहवेण।
चिट्ठउ मह च्चिअ मणे, किं हि कइत्थेण भग्गेण? †† ॥२१॥

शिष्यते, ततः आर्यचारुदत्तो राज्ञा शिष्यते, तत् कोऽत्र उपायः? कर्णाटकलहप्रयोगं करोमि। अरे वीरक! मया चन्दनकेन प्रलोकितं पुनरपि त्वं प्रलोकयसि? कस्त्वम्?

* अरे! त्वमपि कः? † पूज्यमानो मान्यमानस्त्वमात्मनो जातिं न स्मरसि?

‡ अरे! का मम जातिः? § को भणतु? ¶ भणतु।

** अथवा न भणामि।—

†† जानन्नपि हि जातिं तव च न भणामि शीलविभवेन।
तिष्ठतु ममैव मनसि, किं हि कपित्थेन भग्नेन? ॥

(ण) शिष्यते—दण्डयिष्यते, भविष्यत्सामीप्ये वर्त्तमानप्रयोगः।

(त) कर्णाटकलहप्रयोगं—कर्णाटदेशीयेतरजनोचितविवादानुष्ठानम्, अकारण-कलहमिति यावत्।

(थ) "ण सुमरेसि?" इत्यत्र "अणुसुमरेसि?" इति पाठान्तरं—"अनुस्मरसि?" इति संस्कृतम्। राज्ञो विश्वस्तभूतस्त्वम्, अत एव एतादृक् पूज्यमानः मान्यमानश्च सन् निजजातिं कदाचित् चिन्तयसि किम्? इत्यर्थः।

लोकसमक्षं कस्यचित् वंशस्य हीनताप्रकाशनं न साधुजनोचितमित्याह, जान-न्निति।—तव—भवतः, जातिः,—वंशः, यस्मिन् कुले तव जन्म इत्यर्थः, तां, जानन्—

वीरक:। णं भणाउ भणाउ। *

चन्द। [ संज्ञां ( द ) ददाति ]।

वीरक:। अरे ! किं ण्णेदं ? †

चन्द।—

सिस्ससिलाअल-हत्थो पुरिसाणं कुच्च-गंठिसंठवओ।
कत्तरि-वावुदहत्थो, तुमं पि सेणावई जादो ‡॥ २२॥

* ननु ! भणतु भणतु। † अरे ! किं नु इदम् ?

‡ शीर्णशिलातलहस्त: पुरुषाणां कूर्चग्रन्थिसंस्थापन:।
कर्त्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जात: ॥

विदन् अपि, शीलविभवेन—सुशीलतया, अहेतुकपरकीयदोषानुसन्धाने आत्मन: महत्त्वहानिर्भवतीति स्वस्य सत्स्वभावसम्पदमचुण्णां कर्त्तुमित्यर्थ:. न भणामि—वदामि, लोकसमक्षं प्रकाशयामीत्यर्थ:. मम मनसि—चित्ते एव, तिष्ठतु—विराजतु इत्यर्थ: ; तव अपकृष्टजातावुत्पन्नत्वात् तत्कथने मम शीलभङ्गापत्तिरिति हृदयम्। "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्" इत्युक्तेरिति भाव:। कथं मनस्येव तिष्ठतु ? इत्यत आह, किमिति।—कपित्थेन—तदाख्यफलविशेषेण, भग्नेन—खण्डितेन, किम्—अलमित्यर्थ:, [ वारणार्थककिंशब्दयोगात् कपित्थेनेत्यत्र तृतीया ] ; यथा बाह्यत एव रमणीयस्य कपित्थस्य भग्नस्याभ्यन्तरे केवलं सिकथबीजादिपूर्णे हेदवत्पदार्थे पश्यतां लोकानां मनसि तद्विषयिका हेयत्वबुद्धिरुदेति, तथा तवापि जाते: विशेषेण कथने सर्व्वथा स्वरूपप्रकाशात् त्वयि साधारणजनावज्ञा नियत-मुदेष्यतीति भाव: ; चन्दनकस्यातीव हेयत्वद्योतनार्थं, केषाञ्चित् शून्यगर्भत्वात् केषाञ्चिच्च बीजबहुलाम्लरसवत्सारपूर्णत्वात् फलेष्वधमस्य कपित्थस्य. बाह्यत: कठिमादभ्यन्तरतश्च सरसात् विल्वनारिकेलादिफलात् व्यवच्छिन्नस्यैवोपादानं वेदितव्यम्। आर्य्या वृत्तम् ॥ २१ ॥

( द ) संज्ञां—जात्युचितक्रियाऽभिनयं, नापितजातिसूचकसङ्केतम् इति भाव:।

जात्युचितक्रियाकथनद्वारा जातिं ज्ञापयति. शीर्णेति।—शीर्णशिलातलहस्त:, शीर्णं—भग्नं, शिलातलं—प्रस्तर एव, [ भूमितलं करतलमितिवत् तलशब्दस्तत्र स्वरूपार्थबोधक: बोद्धव्य: ] हस्ते—करतले यस्य तादृश:, अस्त्रनिशानार्थं धृतशिला-पट्टखण्ड इत्यर्थ:, पुरुषाणां—नराणां, कूर्चग्रन्थिसंस्थापन:,—कूर्चानां—श्मश्रूणां, ("कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी) य: ग्रन्थि:,—बन्धनं,

वीरकः। अरे चंदणआ! तुमं पि माणिज्जंतो अप्पणो केरिकं जादिं ण सुमरेसि ? *

चन्द। अरे! का मह चंदणअस्स चंदविसुद्धस्स (प) जादी ? †

वीरकः। को भणाउ ? ‡

चन्द। भणाउ भणाउ। §

वीरकः [ नाट्येन संज्ञां (न) ददाति ]।

* अरे चन्दनक! त्वमपि मान्यमानः आत्मनो जातिं न स्मरसि ?

† अरे! का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः ?

‡ को भणतु ? § भणतु भणतु।

मूलदेशकौटिल्यम् इत्यर्थः, यद्वा,—ग्रन्थिवत् संयोग इत्यर्थः, तस्य संस्थापनं—समुच्छेदः यस्मात्, [ सम्पूर्व्वकस्थाधातोः नाशार्थेऽपि प्रयोगदर्शनात्; तथा हि अमरः,—"परासु-प्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः" इति ] यद्वा,—संस्थापनं—सम्यक्—प्रकृतिभावेन, स्थापनम्—अवस्थापनं, समीकरणमित्यर्थः, यस्मात् सः, ("सन्निवेशे च संस्थानम्" इत्यमरः) श्मश्रुमुण्डनकारी इत्यर्थः, नापित इति यावत्। [ "कुच-गंठिसंठवणो" इत्यत्र "कुक्कगंठिसंठवणो" इति पाठान्तरे—"कुञ्चितग्रन्थिसंस्थापनः" इति संस्कृतम्। तत्र कुञ्चितस्य—भग्नस्य, ग्रन्थेः,—अस्थिसन्धिस्थलस्य, संस्थापनं—संवाहनकौशलेन यथास्थानं पुनर्व्यवस्थापनं यस्मात् स तथोक्तः, नापितेन हि एवं भग्नसन्धिव्यवस्थापनं लोकप्रसिद्धमेव। "संठवणो" इत्यत्र आकाराभावश्छान्दसो बोध्यः ]। कर्त्तरीव्यापृतहस्तः,—कर्त्तर्य्यां—केशादिवपनसाधनास्त्रविशेषे, कर्त्तरी-सम्पाद्यकेशादिकर्त्तनकर्म्मणि इति यावत्, व्यापृतः,—व्यासक्तः, नियुक्त इत्यर्थः, हस्तः यस्य तादृशः, त्वमपि—अन्त्यावसायिसदृशः नापितोऽपि इति भावः, सेनापतिः—सेनाध्यक्षः, जातः,—भूतः, राज्ञा सेनापतिपदे नियुक्त इत्यर्थः; एवं मत्कुलप्रसूतः त्वमपि इदानीं राज्ञा सेनापतिपदे कृतः गर्व्वातिशयात् सर्व्वमेवाकुलीनं वेत्सि इति तु हृदयम्। आर्य्या वृत्तम्॥ २२॥

(प) चन्द्रविशुद्धस्य—चन्द्रवत्—सुधाकरवत्, विशुद्धस्य—पवित्रस्य, कालिम-दोषविनिर्मुक्ततया स्वभावनिर्म्मलस्येत्यर्थः।

(न) संज्ञां—चर्म्मकारजातिज्ञापकं सङ्केतविशेषमित्यर्थः।

चन्द। अरे! किंखेदं? *

वीरक:। अरे! सुणाहि सुणाहि। †—

जादी तुम्ह विसुद्धा, मादा भेरी, पिदा वि दे पडहो।
दुम्मुह! करडअ-भादा, तुमं पि सेणावई जादो ‡॥ २२॥

चन्द। [सक्रोधम्] अहं चंदणओ चम्मारओ? ता पलोएहि पवहणं। §

वीरक:। अरे! पवहणवाहआ! पडिवत्तावेहि पवहणं, पलोइस्सं। ¶

* अरे! किं नु इदम्?  † अरे! शृणु शृणु।

‡ जातिस्तव विशुद्धा, माता भेरी, पिताऽपि ते पटह:।
दुर्मुख! करटक-भ्राता, त्वमपि सेनापतिर्जात:॥

§ अहं चन्दनकश्चर्मकार:? तत् प्रलोकय प्रवहणम्।

¶ अरे प्रवहणवाहक! परिवर्त्तय प्रवहणं प्रलोकयिष्यामि।

चन्दनकस्य अतिनीचकुलोद्भूतिं प्रकाशयितुं जातिस्वभावसुलभं क्रियाविशेषं वर्णयति, जातिरिति।—ते तव, माता—जननी, भेरी—स्वनामप्रसिद्ध: वाद्यविशेष:, जननीव भेरी ते उदरपोषिका इति भाव:; पिता—जनक: अपि, पटह:—ढक्का, पिता यथा जीविकासम्पादनेन प्रतिपालयति पटहोऽपि तथा ते जीविकां निर्व्वाहयतीत्यर्थ:; दुर्मुख!—मुखर! अप्रियभाषिन्! इत्यर्थ:, ("दुर्मुख: कपिभिन्नागभिदोर्ना मुखरे त्रिषु" इति मेदिनी) करटक:,—वाद्यभेद:, एव भ्राता—सहोदर: यस्य तथाविध:, करटकस्य सहोदरवत् सर्व्वदा एकस्थानस्थिततया तन्नियतोपजीविक: इत्यर्थ:, अत एव तव—भवत:, जाति:,—वंश:, विशुद्धा—अतिपवित्रा इत्यर्थ:, [इयञ्च सोत्प्रासोक्तिरिति विपरीतलक्षणया जातेरत्यविशुद्धत्वं ध्वन्यते] त्वमपि—एवंविधविशुद्धकुलोत्पन्न: भवानपि, सेनापति:,—सैन्यनायक:, जात:,—राज्ञा कृत: इत्यर्थ:। एतेन वाद्ययन्त्रविशेषाणां परिचयेन अस्य चर्म्मकारजातीयत्वं सूचितम्; अत्र हास्यो रस:, विकृताकारचेष्टावान् वीरक एवात्र आलम्बनं, तथा तस्य विकृताकारकपाङ्गभङ्गादिविचेष्टनमेवात्रोद्दीपनं, वदनस्मेरतादिकमत्र अनुभाव: अवहित्थादयश्चात्र व्यभिचारिण: एतैरभिव्यक्त: सहृदयसंवेद्य: हासभाव: हास्यरसरूपतामुपैति, तस्य नीचपात्रगतत्वेनातिहसितात्मकत्वं वेदितव्यम्। गाथा छन्द:॥ २२॥

चेटः। [ तथा करोति ]।

वीरकः। [ माल्येन प्रवहणमारोढुमिच्छति ]।

चन्द। [ सहसा केशेषु गृहीत्वा पातयति, पादेन ताडयति च ]

वीरकः। [ सक्रोधमुत्थाय ] अरे! अहं तुए वीसत्थो राआणत्तिं करेंतो, सहसा केसेसु गेण्हिअ पादेण ताडिदो; ता सुणु रे! अहिअरणमज्झे जइ दे चउरंगं ण कप्पावेमि, (प) तदो ण होमि वीरओ। *

चन्द। अरे! राअउलं, अहिअरणं वा वच्च, किं तुए सुणअ-सरिसेण? † (फ)

वीरकः। तह। ‡ [ इति निष्क्रान्तः ]।

चन्द। [ दिशोऽवलोक्य ] गच्छ रे पवहणवाहआ! गच्छ। जइ को वि पुच्छेदि, तदो भणेसि,—"चंदणअ-वीरएहिं अव-

* अरे। अहं त्वया विश्वस्तो राजाज्ञप्तिं कुर्वन्, सहसा केशेषु गृहीत्वा पादेन ताडितः। तत् शृणु रे! अधिकरणमध्ये यदि ते चतुरङ्गं न कल्पयामि, तदा न भवामि वीरकः।

† अरे! राजकुलम्, अधिकरणं वा व्रज, किं त्वया शुनकसदृशेन?

‡ तथा।

(प) विश्वस्तः,—राजप्रत्ययवान्, राजविश्वासैकभूमिरित्यर्थः। राजाज्ञप्तिं—राजादेशम्। कुर्व्वन्—अनुपालयन्, नृपतेराज्ञां पालयितुमेवारभमाणः इत्यर्थः, मदीयापमाने कृते राज्ञः पालकस्यैवापमानं कृतं भवेदित्याशयः। केशेषु—शिरोरुहेषु, [ अत्र अवच्छेदे सप्तमी, साकल्यञ्च बहुवचनादेव लभ्यते इति सकलकेशावच्छेदेनान्यर्थो लभ्यते ]। अधिकरणमध्ये—विचारालये, चतुरङ्गं कल्पयामि—अङ्गेषु शास्तिं कारयिष्यामीति यावत् [ "चौरङ्ग् कर् दूंगा" इति हिन्दी भाषा ]।

(फ) शुनकसदृशेन—कुक्कुरसमेन, त्वं हि कुक्कुरवत् केवलं जीविकार्थमेव राजानं सेवसे, स्वनियोगाक्षमतया न ते राजसमीपे काचित् प्रतिपत्तिरस्तीति कुक्कुरवत् क्वैव ते चीत्कारः भविष्यति इति भावः।

लोइदं पवहणं बच्चइ"। अज्जे वसंतसेणे! इदं च अहि-
ण्णाणं (ब) दे देमि। * [इति खड्गं प्रयच्छति]।

आर्य्यक:। [खड्गं गृहीत्वा सहर्षमात्मगतम्]—

अये! शस्त्रं मया प्राप्तं, स्पन्दते दक्षिणो भुज:।
अनुकूलञ्च सकलं, हन्त संरक्षितोऽप्यहम् ॥२४॥

चन्द। अज्जए!—

एत्थ मए विण्णविदा, पच्चइदा, चंदणं पि सुमरेसि।
ण भणामि एस लुद्धो, णेहस्स रसेण बोल्लामो † ॥२५॥

---

* गच्छ रे प्रवहणवाहक! गच्छ। यदि कोऽपि पृच्छति, तदा भणिष्यसि,—"चन्दनक-वीरकाभ्यामवलोकितं प्रवहणं व्रजति"। आर्य्ये वसन्तसेने! इदञ्च अभिज्ञानं ते ददामि।

† आर्य्ये!—अत्र मया विज्ञप्ता प्रत्ययिता चन्दनमपि स्मरसि।
न भणामि एष लुब्ध: स्नेहस्य रसेन ब्रूम:॥

(ब) अभिज्ञानं—साक्षीभूतं निदर्शनं, परिचायकचिह्नमित्यर्थ:।

पूर्व्वम् अगृहीतास्त्रत्वात् आर्य्यक: आत्मरक्षणे असमर्थमात्मानं मन्यमान: अतीव खिन्न आसीत्, इदानीं शस्त्रप्राप्त्या कीनचित् पुनराक्रमणे कृतेऽपि शस्त्रबलेन आत्मरक्षणे समर्थो भविष्यामि इति विचिन्त्य हर्षं प्रकाशयति, अये इति।—अत्र अये इति शस्त्र-प्राप्तिजनितहर्षसूचकमव्ययम्; मया—आर्य्यकेणेत्यर्थ:, शस्त्रं—खड्गरूपमित्यर्थ:, प्राप्तं—चन्दनकसकाशात् लब्धम्; दक्षिण:,—सव्येतर:, भुज:,—बाहु:, स्पन्दते—स्फुरति; [दक्षिणाङ्गस्फुरणफलं यथा मत्स्यपुराणे,—"अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥" इति] हन्तेत्यपि हर्षसूचकमव्ययम्; अह-मपि—अतिविपन्न इति भाव:, अधुनेति शेष:, संरक्षित:,—परित्रात:, चन्दनकेनेति शेष:, (अत:) सकलं—सर्व्वमेवेत्यर्थ:, अनुकूलम्—अविरुद्धं, जातमिति शेष:; शस्त्र-प्राप्त्यादिरूपानुकूल्येन इदानीं मम अबाधितगतेरधिकसम्भावना इति भाव:। अत्र एकेनैव शस्त्रेणात्मरक्षणकार्य्यस्य समाहितौ सत्यामपि दैवात् दक्षिणभुजस्पन्दनरूप-कारणान्तरस्य समवधानेन प्रोक्तकार्य्यस्य सुकरत्वदर्शनात् समाधिर्नामालङ्कार:; "समाधि: सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात्" इति लक्षणात्। पथ्यावक्त्रं वृत्तम्॥ २४॥

सङ्कटगमनानुमतिदानावसरे तस्मिन् निरतिशयमनुरागमावेदयितुं सम्पदि विपदि वा सदा स्वकीयमानुकूल्यं प्रार्थयमान: वर्णिनमाह, अत्रेति।—अत्र—

आर्य्यकः।—

**चन्दनश्चन्द्रशीलाढ्यो दैवादद्य सुहृन्मम।**

**चन्दनं भोः! स्मरिष्यामि, सिद्धादेशस्तथा यदि ॥२६॥**

चन्द।—

**अभअं तुह देउ हरो विण्हू बम्हा रवी अ चंदो अ।**

**हत्तूण सत्तुवक्खं सुंभ-णिसुंभे जधा देवी * ॥२७॥**

अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च।

हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी॥

---

उपस्थितव्यापारे, मया विज्ञप्ता—कथिता, त्वम् इति शेषः, किं विज्ञाप्यते? इत्याह, प्रत्ययितेति।—प्रत्ययिता—सञ्जातप्रत्यया, विश्वस्ता सती इत्यर्थः. चन्दनमपि—चन्दनं मामपि इत्यर्थः, स्मरसि—स्मृतिविषयीभूतं करोषि इत्यर्थः. मयि विश्वासे कृते न तव काऽप्यनिष्टाशङ्का इत्याशयः; एषः,—एवं विज्ञापकः. अहमिति शेषः, लुब्धः,—लाभः किञ्चित्प्राप्तुकामः सन् इत्यर्थः, न भणामि—न कथयामि स्नेहस्य—प्रेम्णः, रसेन—अनुरागेण, स्नेहवशेनेत्यर्थः, ब्रूमः.—कथयामः, त्वं नृपतिर्भूत्वा मां किञ्चित् दास्यसि इति लोभाक्रष्टतया मम स्मरणं न याचे, त्वां प्रति निरतिशया प्रीतिरेव मामेवं वक्तुं मुखरयति इति समुदितार्थः। गाथा छन्दः॥ २५॥

कृतश्च आर्य्यकः चन्दनकवाक्यस्य प्रत्युत्तरमाह, चन्दन इति।—चन्द्रस्य—शशिनः इव, निर्म्मलमित्यर्थः, यत् शीलं—सत्स्वभावः, तेन आढ्यः,—युक्तः, चन्दनः,—भवानित्यर्थः, दैवात्—भाग्यवशेन, मम—मे, सुहृत्—मित्रं, जात इति शेषः; भोः,—हे चन्दन! इत्यर्थः, सिद्धादेशः,—सिद्धपुरुषस्य आज्ञा, यदि—चेत्, तथा—तादृशः, राज्यप्राप्तिफलक इत्यर्थः, भवेदिति शेषः, यद्यहं सत्यं राजा भवामीति भावः, तदा चन्दनं—भवन्तमिति यावत्, स्मरिष्यामि—त्वत्कृतोपकारस्मरणं करिष्यामीत्यर्थः; भवन्तमेवंविधमहेतुकोपकारकं राजासनमधिष्ठायापि कदाऽपि स्मृतिपथात् नापनेष्यामीति हृदयम्। अत्र चन्द्रशीलाढ्यः इति चन्द्रेण शीलस्य निर्म्मलत्वरूपावैधर्म्यसाम्य-कथनात् समासगता उपमा नामालङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २६॥

इदानीं गमनसमये चन्दनकः आर्य्यकस्य शुभमाशंसते, अभयमिति।—देवी—दुर्गा, शुम्भनिशुम्भौ यथा—तदाख्यौ दैत्याधिपावुभौ भ्रातरौ इव इत्यर्थः, हरः,—शिवः, विष्णुः,—नारायणः, ब्रह्मा—पद्मयोनिः, रविः,—सूर्य्यः, चन्द्रश्च—शशी च, तव—भवतः, शत्रुपक्षम्—अरिकुलं, हत्वा—समूलं विनाश्य, अभयम्—अभीतिप्रत्यायकं

चेटः। [ प्रवहणेन निष्क्रान्तः ]।

चन्द। [ नेपथ्याभिमुखमवलोक्य ] अरे! णिक्कमंतस्स मे पिअ-वअस्सो सव्विलओ पिट्ठदो ज्जेव अणुलग्गो गदो। भोदु, पधाण-दंडधारओ वीरओ राअ-पच्चअ-आरो विरोधिदो, ता जाव अहं पि पुत्त-भादु-पडिवुदो एदं ज्जेव अणुगच्छामि। * ( भ )

[ इति निष्क्रान्तः ]।

इति प्रवहणविपर्य्ययो नाम षष्ठोऽङ्कः॥ ६॥

* अरे! निष्क्रामतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गतः। भवतु, प्रधानदण्डधारको वीरको राजप्रत्ययकारको विरोधितः; तत् यावदहमपि पुत्रभ्रातृ-परिवृत एतमेवानुगच्छामि।

---

समाश्वासनमित्यर्थः. ददातु—प्रयच्छतु। देवी यथा दुर्द्दान्तौ शुम्भनिशुम्भौ निहत्य अभयदानेन देवान् रक्षयामास, तथा हरिहरादयोऽपि तव रिपून् विनाश्य अभयदानेन त्वां रक्षन्तु इति समुदितार्थः। अत्र प्रस्तुतानां हरादीनामेकाभयदानक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः; अपि चोपमानभूतया देव्या सह हरादीनां देवानां रक्षण-साम्यबोधात् उपमा इत्यनयोरङ्गाङ्गिभावेन सङ्करः। आर्य्या छन्दः॥ २७॥

( भ ) निष्क्रामतः,—निर्गच्छतः। मम—चन्दनकस्येत्यर्थः। प्रियवयस्यः,—स्निग्धमित्रम्, अहेतुकप्रणयीत्यर्थः। पृष्ठतः एव—पश्चादेव, अनुलग्नः,—संसक्तः सन्, गतः,—प्रस्थितः, आर्य्यकमनुयात इत्यर्थः। प्रधानदण्डधारकः,—रक्षिश्रेष्ठ इत्यर्थः। एतमेव—आर्य्यकमेव. अनुगच्छामि—अनुसरामि।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां षष्ठोऽङ्कः॥ ६॥

# सप्तमोऽङ्कः ।

[ ततः प्रविशति चारुदत्तो विदूषकश्च ] ।

विदू । भो ! पेक्ख पेक्ख पुप्फकरंडअ-जिण्णुज्जाणस्स सस्सिरीअदां । * (क)

चारु । वयस्य ! एवमेतत्, तथाहि,—

वणिज इव भान्ति तरवः, पण्यानीव स्थितानि कुसुमानि ।
शुल्कमिव साधयन्तो मधुकरपुरुषाः प्रविचरन्ति ॥१॥

---

* भोः ! पश्य पश्य पुष्पकरण्डक-जीर्णोद्यानस्य सश्रीकताम् ।

---

( क ) सश्रीकतां—सौन्दर्य्यं, रमणीयतामित्यर्थः ; [ श्रिया सह वर्त्तमानं यत् तत् इति बहुव्रीहौ समासान्त-क-प्रत्ययान्तात् भावे तलि रूपम् ] ।

समृद्धस्य पुरुषस्य समापतितायां दुर्गतावस्थायामपि सामयिकानन्दक्षणे प्रागनुभूतकार्य्यकलापाः चेतश्चटुलयन्तितराम् उल्लासयन्ति च मानसिकीं वृत्तिम्, अत एव नवौनदौनः सार्थवाहसधर्म्मा चारुदत्तः जीर्णोद्यानतरुकुसुमादिषु सम्पदा वणिक्पण्यादिसाधर्म्यं सन्दर्शयन्नाह, वणिज इति ।—तरवः,—वृक्षाः, वणिज इव—सार्थवाहा इव, भान्ति—शोभन्ते, कुसुमानि—पुष्पाणि, पण्यानि—विक्रेयद्रव्याणीव, स्थितानि—विराजितानि, तथा मधुकराः,—भ्रमराः, पुरुषाः,—राजनियुक्ताः शुल्कग्राहिणः पुरुषविशेषा इव, [ अत्र मधुकराः पुरुषा इवेति विग्रहे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( २।१।५६ पा० ) इत्युपमितसमासः ] शुल्कं—राजग्राह्यकरविशेषं, ( "शुल्कं घट्टादिदेये स्यात् वराद्यर्थग्रहेऽस्त्रियाम्" इति मेदिनी ) साधयन्त इव—आददाना इव, प्रविचरन्ति—इतस्ततः भ्रमन्ति । यथा हि श्रेष्ठिनः विपणिषु विविधद्रव्यसम्भारान् सम्प्रदर्शयन्ति, करग्राहिणः पुरुषाश्च तेभ्यः करमादातुमितस्ततो विचरन्ति, तथैव तरवः विविधानि स्वकुसुमानि विस्तार्य्य शोभन्ते, मधुकराश्च तेषां मकरन्दं स्वेच्छया सङ्गृहीतुं सानन्दं सर्व्वतः समुड्डयन्ते इति तात्पर्य्यम् । [ एतेन पालकराज्ये विक्रयणात् पूर्व्वमेव पण्यसाराणां सङ्ग्रहणोपवर्णनात् अर्थगृध्नूनां राजपुरुषाणां सुमहानुपद्रवः व्यज्यते ] । अत्र तरूणां वणिग्भिः सह, कुसुमानां पण्यैः सह विरुद्धधर्म्मोक्तिविनाकृतं साम्यं प्रतीयते इत्युपमाऽलङ्कारः, तथा विचरणस्य प्रकृतस्य

विदू। भो! इमं असङ्कार-रमणीअं (ख) सिलाअलं उव-विसदु भवं। *

चारु। [उपविश्य] वयस्य! चिरयति वर्द्धमानकः।

विदू। भणिदो मए वड्ढमाणओ, "वसंतसेणिअं गेण्हिअ लहुं लहुं आअच्छ" त्ति। †

चारु। तत् किं चिरयति?—

किं यात्यस्य पुरः शनैः प्रवहणम्? तस्यान्तरं मार्गते?
भग्नेऽक्षे परिवर्त्तनं प्रकुरुते? छिन्नोऽथवा प्रग्रहः?।
वर्त्मान्तोज्झित-दारु-वारित गतिर्मार्गान्तरं याचते?
स्वैरं प्रेरितगोयुगः किमथवा स्वच्छन्दमागच्छति? ॥ २ ॥

---

* भोः! इदमसंस्काररमणीयं शिलातलम् उपविशतु भवान्।

† भणितो मया वर्द्धमानकः, "वसन्तसेनां गृहीत्वा लघु लघु आगच्छ" इति।

---

शुल्कसाधनरूपाप्रकृतस्वरूपेण तादात्म्याध्यासादुत्कटैककोटिकसंशयसमुदयादुत्प्रेक्षाऽलङ्कारः; मधुकराः पुरुषा इव इति समासे औपम्यवाचिन इवादेः लोपे समासगता लुप्तोपमेत्येतेषामलङ्काराणामन्योऽन्यसापेक्षतया संस्थितेः सङ्करः। आर्य्या वृत्तम् ॥ १ ॥

(ख) असंस्काररमणीयम्—असंस्कारेऽपि—संस्काराभावसत्त्वेऽपि, रमणीयं—मनोरमं, स्वभावसुन्दरमित्यर्थः।

वर्द्धमानकस्य विलम्बकारणं बहुधा वितर्कयन्नाह किमिति।—अस्य—वर्द्धमानकस्य इत्यर्थः, पुरः,—अग्रे, प्रवहणं—शकटम्, अपरमिति शेषः, शनैः,—मन्दं मन्दं, याति—गच्छति, किम्? तस्य—अग्रतः गच्छतः प्रवहणान्तरस्य, अन्तरम्—अवकाशं मार्गते—प्रतीक्षते इत्यर्थः, किम्? अक्षे—चक्रे, कस्मिंश्चित् चक्रे इत्यर्थः भग्ने—खण्डिते सति, परिवर्त्तनं—नवचक्रनियोगं, भग्नाक्षं परित्यज्य अपरस्य कस्यचिदक्षस्य योजनमित्यर्थः, प्रकुरुते—विधत्ते, किम्? अथवा—पक्षान्तरे प्रग्रहः,—बलीवर्द्दरश्मिः, ("तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च" इत्यमरः) छिन्नः?—त्रुटितः किम्? अथवा वर्त्मनः,—मार्गस्य, अन्ते—मध्यभागे, उज्झितेन—परित्यक्तेन, केनचिदिति शेषः, दारुणा—काष्ठेन, वृहत्काष्ठेनेति भावः, वारिता—रुद्धा, गतिः,—गमनं यस्य तथाभूतः सन्, मार्गान्तरम्—अन्यं पन्थानं,

[ प्रविश्य गुप्तार्य्यकप्रवहणस्थः चेटः ] जाध गोणा ! जाध। *

आर्य्यकः। [ स्वगतम् ]—

नरपतिपुरुषाणां दर्शनाद्भीतभीतः
सनिगडचरणत्वात् सावशेषापसारः।
अविदितमधिरूढ़ो यामि साधोस्तु याने
परभृत इव नीड़े रक्षितो वायसीभिः॥ ३॥

---

* यातं गावौ ! यातम्।

---

याचते—अवलम्बते, वक्रीभूतापरपथेन समागच्छति इत्यर्थः, किम्? अथवा स्वैरं—मन्दं मन्दं, स्वेच्छाऽनुरूपमिति यावत्, प्रेरितं—चालितं, गोयुगं—बलीवर्द्दद्वयं येन तादृशः सन्. स्वच्छन्दं—स्वेच्छया, आगच्छति :किम्? [ "वर्त्मान्तोज्झित" इत्यत्र "कर्म्मान्तोज्झित" इति "कर्म्मान्तोत्थित" इति च पाठान्तरम्। "कर्मान्तः,—राजादीनां नियोगविशेषः" इति पृथ्वीधरः ]। वसन्तसेनाऽऽगमने समयातिपातमसहमानस्य चारुदत्तस्य चित्तौत्सुक्यमत्यधिकमावेदयतीयमुक्तिः। अत्रौत्कण्ठाविकाशः, तल्लक्षणं यथा,—"सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यनुमन्यते। तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः॥" इति। अत्र वसन्तसेनाचिरागमनरूपैकविषयस्य प्रतिभोत्थितयानान्तरावरोधनादिरूपानेककारणजन्यत्वेनोद्भावनात् समानबलतया च तेषामनेककोटिस्फुरणेनैकतरस्य निर्णेतुमशक्यत्वात् संशयस्यैव पर्य्यवसानात् शुद्धसन्देहालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्॥ २॥

भीत आर्य्यकः स्वपलायनमिदानीमपि अनिर्बाधमिति विचिन्तयन्नाह, नरपतीति।—
—नरपतिपुरुषाणां—राजपुरुषाणां, रक्षिणामित्यर्थः, कोकिलपक्षे,—नरपतिपुरुषाणां,—शाकुनिकानामिति ध्वनिः, दर्शनात्—ईक्षणात्, भीतभीतः,—भीतादपि भीतः, अतिभीत इत्यर्थः, तथा सनिगड़चरणत्वात्—शृङ्खलबद्धैकपादत्वात्, पक्षे,—सनिगड़चरण इव—शृङ्खलनियन्त्रितपद इव कुलायात् यथेच्छं पलायितुमक्षमः, उड्डयने सम्यगनभ्यस्ततया मन्दगतिर्वा इति ध्वनिः. सावशेषः,—किञ्चिदवशिष्टः, अपसारः,—पलायनं यस्य तादृशः, यावत् निगड़ं न त्रोटयामि. तावत् मम पलायनं सर्व्वथाऽसम्भवितमिति भावः; अहं वायसीभिः—काकीभिः. नीड़े—कुलाये. ("कुलायो नीड़मस्त्रियाम्" इत्यमरः) रक्षितः,—पालितः. परभृतः,—कोकिल इव, ("वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः) अविदितम्—अज्ञातं यथा तथा, साधोः,—चारुदत्तस्य इति यावत्, याने—शकटे, अधिरूढ़ः.—अधिष्ठितः

अहो ! नगरात् सुदूरमपक्रान्तोऽस्मि, तत् किमस्मात् प्रवहणादवतीर्य्य वृक्षवाटिकागहनं प्रविशामि ? उताहो प्रवहण-स्वामिनं पश्यामि ? अथवा कृतं वृक्षवाटिकागहनेन, अभ्युपपन्नवत्सल: खलु तत्रभवान् आर्य्य-चारुदत्त: (ग) श्रूयते, तत् प्रत्यक्षीकृत्य गच्छामि ।—

स तावदस्माद्व्यसनार्णवोत्थितं
निरीक्ष्य साधु: समुपैति निर्वृतिम् ।

सन्, यामि—गच्छामि ; कोकिलशावको यथा परगृहे वायसीभि: रक्षित: व्याध-भयात् विकम्पितहृदय: निभृतस्तिष्ठति, तथा अहमपि रक्षिभयात् सदा शङ्कित: चारुदत्तस्य शकटे वसन्तसेनाव्यपदेशेन आत्मानं गोपायित्वा वर्द्धमानकेन रक्षित: निभृतमवस्थितो यामीति समुदितार्थ: । अत्र परभृतेन सार्द्धम् आर्य्यकस्यावैधर्म्म-साम्योक्ते: उपमाऽलङ्कार: एवम् आत्मीयत्वभ्रमात् वायस्य: यथा परभृतशावकं स्वकुलाये संरक्षन्ति, तथा शकटवाहकस्य वसन्तसेनाभ्रमात् आर्य्यकस्य संरक्षणं समुपपन्नमिति उपमायां सर्व्वांशे पूर्णतया सादृश्यं समुन्नेयम् । मालिनी वृत्तं, तदुक्तं—"न-न-म-य-ययुतेयं मालिनी भोगिलोकै:" इति ॥ ३ ॥

(ग) वृक्षवाटिकागहनं—वृक्षवाटिकाया:,—गृहसमीपस्थस्योपवनस्य, गहनं—दुष्प्रवेशं स्थानं, विरलजनसञ्चारं वृक्षवाटिकाया: प्रदेशविशेषमित्यर्थ: । उताहो—अथवा । प्रवहणस्वामिनं—शकटाधिपतिम् । कृतमिति ।—वृक्षवाटिकागहनेन—वृक्षवाटिकाया: गहनप्रदेशे प्रवेशेनेत्यर्थ:, कृतम्—अलमित्यर्थ:, ("कृतं युगेऽल-मर्थेऽपि" इति मेदिनी) अधुना वृक्षवाटिकागहनप्रवेशं न करोमीति भाव: । अभ्युपपन्नवत्सल:,—अभ्युपपन्नेषु,—विपन्नेषु, शरणागतेष्वित्यर्थ:, वत्सल:,—समधिक-स्नेहवानित्यर्थ: । प्राक् किलार्य्यकेण यानमधिकृत्य सुगुप्तं तिष्ठता पथि नगर-रक्षकेण वीरकेण "कस्येदं प्रवहणं कुत्र वा नीयते ?" इति पृष्टस्य यानचालकस्योत्तरेण शरणागतवत्सलस्य चारुदत्तस्यैवैतत् यानमिति विज्ञातम् ; असौ चातीव दीनवत्सल: इति लोकमुखादजस्रमाकर्णितञ्च, तेनैव शरणागतस्य अपराधशतमसौ आत्मगुणेन प्रमार्ज्जयिष्यतीति निश्चित्य, तदनुमतिं विनैव तद्यानम् :आत्मीयमिति कृत्वा, तत्रैव स्थितमिति वदितव्यम् ।

आपदेकशरण: महोदारचेता: चारुदत्त: नूनं तद्यानाश्रयेणैव विपत्सागरोत्तीर्णं मामालोक्य असीममानन्दमुपगमिष्यतीति मया इदानीमवश्यमेव तेन साक्षात्कार:

शरीरमेतद्गतमीदृशीं दशां
धृतं मया तस्य महात्मनो गुणैः ॥ ४ ॥

चेटः। इमं तं उज्जाणं, ता जाव उवसप्पामि। [उपसृत्य] अज्ज मित्तेअ! *

विदू। भो! पिअं दे णिवेदेमि; वड्ढमाणओ मंतेदि, (घ) आगदाए वसंतसेणाए होदव्वं। †

---

* इदं तदुद्यानं, तत् यावदुपसर्पामि। आर्य्य मैत्रेय!

† भोः! प्रियं ते निवेदयामि; वर्द्धमानको मन्त्रयति, आगतया वसन्तसेनया भवितव्यम्।

---

करणीय इत्याशयेनाह, स इति।—तावत्—वाक्यालङ्कारे। सः,—सर्व्वलोकप्रसिद्ध इत्यर्थः. साधुः,—विमलचरितः, सज्जनैकशरणः इत्यर्थः. चारुदत्त इति शेषः, अस्मात्—एवम्भूतात्, उत्तरीतुमशक्यादित्यर्थः, व्यसनार्णवात्—रक्षिगणहस्तपतनरूपदुस्तर-विपत्सागरात् इत्यर्थः, उत्थितं—तदीयप्रवहणरूपावलम्बनमादायैव रक्षितमित्यर्थः, मामिति शेषः, [अत्र सापेक्षत्वेऽपि गमकत्वात् समासः] निरीक्ष्य—दृष्ट्वा, निर्वृतिं—सुखं, सन्तोषमित्यर्थः. स्वचेतसि इति शेषः. समुपैति—प्राप्स्यतीत्यर्थः. [अत्र भविष्यत्-सामीप्ये लटः प्रयोगः] दृश्यते हि परदुःखमसहिष्णोः दयावतः चेतसि दुःखसागर-निमग्नस्य नरस्य समुद्धरणजनिता निरतिशया प्रीतिः, अतः तत्प्रीत्यर्थमेव मया अवश्य-मेव असौ दर्शनीय इति तात्पर्य्यार्थः। यदि हि अहमेवम्भूतपरमोपकारकमदृष्ट्वैव गच्छेयं, तदा अकृतज्ञत्वदोषप्रसरः स्यादित्याह, शरीरेत्यादि।—ईदृशीम्—एवम्भूतां, कारावासादिना मोचनीयामित्यर्थः, दशाम्—अवस्थां, गतं—प्राप्तम्, एतत्—इदं हि मया ध्रियमाणं शरीरं—देहः महात्मनः,—उदाराशयस्य, तस्य—चारुदत्तस्येत्यर्थः, गुणैः,—शरणागतवात्सल्यादिगुणैरित्यर्थः, धृतं—रक्षितम्; मृत्युग्रासादिव रक्षिकोपात् परित्रातुः चारुदत्तस्य दर्शनं विना एतत् मे शरीरधारणं विफलं स्यादित्यवश्यमेव मयाऽसौ द्रष्टव्यः, इहैव च गन्तव्यमिति समुदितार्थः। अत्र व्यसनविमुक्तस्य आर्य्यकस्य दर्शनेन चारुदत्तचित्तनिर्वृतिलाभरूपकार्य्यस्य समर्थकतया चारुदत्तगुणैः आर्य्यकशरीर-संरक्षणरूपकारणस्योपादानात् कारणेन कार्य्यस्य समर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। वंशस्थविलं वृत्तम् ॥ ४ ॥

(घ) प्रियं—प्रियवार्त्तामित्यर्थः। ते—तुभ्यम्। मन्त्रयति—जल्पति, भाषते इत्यर्थः, कण्ठस्वरेणैतदनुमीयते यत् वर्द्धमानकः समायात इति समुदितार्थः।

चारु। प्रियं नः प्रियम्।

विदू। दासीए पुत्ता! किं चिरइदो सि? *

चेटः। अज्ज मित्तेअ! मा कुप्प, जाणत्थलके विश्शमलिदेत्ति कदुअ गदागदिं कलेंते चिलइदेम्हि। † (ङ)

चारु। वर्द्धमानक! परिवर्त्तय प्रवहणम्। सखे! मैत्रेय! अवतारय वसन्तसेनाम्।

विदू। किं णिअड़ेण बद्धा से गोड़ा, जेण सअं ण ओदरेदि?। [उत्थाय प्रवहणमुद्घाट्य] भो! ण वसंतसेणा, वसंतसेणा क्खु एसो!! ‡ (च)

---

* दास्याः पुत्र! किं चिरायितोऽसि?

† आर्य्य मैत्रेय! मा कुप्य, यानास्तरणं विस्मृतमिति कृत्वा गतागतिं कुर्वन् चिरायितोऽस्मि।

‡ किं निगड़ेन बद्धावस्याः पादौ, येन स्वयं नावतरति? भोः! न वसन्तसेना, वसन्तसेनः खलु एषः!!

(ङ) मा कुप्य—क्रोधं मा कुरु। इति कृत्वा—इति हेतोः, यानास्तरणस्य विस्मरणादित्यर्थः। गतागतिं—गमनागमनम्; [गतागतिमित्यत्र गतञ्च आगतिश्चेति विग्रहेण केचित् समाहारद्वन्द्वं समर्थयन्ते, तन्न विचारसहं, समाहारद्वन्द्वे क्लीवलिङ्गस्यैव अनुशिष्टतया प्रकृतस्थलस्य कथमपि समर्थयितुमशक्यत्वात्। अतः "गतोत्तरा आगतिः गतागतिः ताम्" इति विग्रहेण मध्यपदलोपात् समर्थनीयोऽयं प्रयोगः इति सुधीभिर्विभाव्यम्]। चिरायितः,—विलम्बितः, [अत्र "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" इत्यव्ययवर्गे अमरोक्तेः चिरायशब्दात् "तत्करोति" इत्यर्थे णिचि "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया॥" इत्यनुशासनेन अस्य धात्वर्थोपसङ्गृहीतकर्म्मकत्वेन अकर्म्मकतया कर्त्तरि निष्ठायां चिरायित इति सिद्धम्; यद्वा —चिराय सञ्जातमस्येति वाक्ये चिरायशब्दात् तारकादित्वादितच्प्रत्ययेन निष्पन्नमिति बोध्यम्]।

(च) वसन्तसेनः,—पुरुषोऽयं, न तु वसन्तसेना इत्यर्थः; शकटस्थस्य पुंस्त्वात् वसन्तसेनाशब्दस्य लिङ्गविपरिणामेन पुंलिङ्गतानिर्द्देशः। [लोकप्रवादमिदम्।

चारु । वयस्य ! अलं परिहासेन, न कालमपेक्षते स्नेहः । (झ) अथवा स्वयमेवावतारयामि । [इति उत्तिष्ठति ] ।

आर्य्यकः । [ दृष्ट्वा ] अये ! अयमेव प्रवहणस्वामी !! न केवलं श्रुतिरमणीयः, दृष्टिरमणीयोऽपि । हन्त ! रक्षितोऽस्मि । (ञ)

चारु । [ प्रवहणमधिरुह्य दृष्ट्वा च ] अये ! तत् कोऽयम् ?—

करिकर-समबाहुः, सिंहपीनोन्नतांसः,

पृथुतर-समवक्षास्ताम्रलोलायताक्षः ।

कथमिदमसमानं प्राप्त एवंविधो यो

वहति निगडमेकं पादलग्नं महात्मा ? ॥ ५ ॥

वसन्तः,—ऋतुविशेषः, सुरभिकाल इत्यर्थः, सेना—बलं यस्येति सः, द्वितीयः कामदेवः खल्वयमित्यपि ध्वन्यते ] ।

( झ ) परिहासेन—उपहासेन, अलं—निष्प्रयोजनम्, उपहासं मा कुरु इत्यर्थः । तत्र हेतुमाह, नेति ।—स्नेहः,—अनुरागः । कालं—यथाकालक्षेपमित्यर्थः । नापेक्षते—न सहते ; प्रणयः प्रणयिनोदर्शने कालविलम्बं न सहते इति समुदितार्थः ; शकटेन कस्यचिदागमनवार्त्तां मैत्रेयमुखात् समुत्कण्ठितेन चारुदत्तेन आर्य्यकागमनाज्ञानात् वसन्तसेना आगतेति निश्चित्य एवमुक्तमिति वेदितव्यम् ।

( ञ ) अये इति हर्षसूचकं विस्मयसूचकं वा अव्ययम् । श्रुतिरमणीयः,—श्रुत्वा—लोकपरम्पराप्रसिद्धगुणाकर्णनेन, रमणीयः,—मनोरमः, श्रुतिकुहरे गुणसुधासिञ्चनेन लोकचित्तरञ्जन इत्यर्थः । दृष्टिरमणीयोऽपि—दृष्ट्वा—दर्शनेनापि, रमणीयः, चित्तहारी इत्यर्थः ; "यत्राकृतिस्तत्र गुणा वसन्ति" इति न्यायात् अस्य गुणाकर्णनेन सौम्यदर्शनत्वं प्राक् यदनुमितं तदिदानीं प्रत्यक्षीकृतम् इति भावः । हन्त—हर्षे, रक्षितोऽस्मि—परित्रातो भवामि ; एवंविधसौम्यदर्शनः पुरुषः कदाऽपि पालकहस्ते मां न समर्पयिष्यति इति भावः ।

महासत्त्वव्यञ्जकातिगम्भीराकृतिम् आर्य्यकं शृङ्खलाबद्धैकपादमालोक्य वितर्कयन्नाह, करीति ।—यः महात्मा—महाशयः, महाप्रभाव इत्यर्थः, करिकरस्य—हस्तिशुण्डस्य, समौ—तुल्यौ, बाहू—भुजौ यस्य तथोक्तः, आजानुलम्बितभुज इत्यर्थः. सिंहस्येव—केशरिण इव, पीनौ—स्थूलौ, मांसलावित्यर्थः, उन्नतौ—उन्नतिं गतौ, अंसौ—स्कन्धौ यस्य तादृशः, पृथुतरम्—अतिविशालं, समं—तुल्यम्, आकृत्यनुरूपमिति

ततः को भवान् ?

आर्यकः। शरणागतो गोपालप्रकृतिरार्य्यकोऽस्मि। (भ)

चारु। किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः ?

आर्यकः। अथ किम्।

चारु।—

विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः।

अपि प्राणानहं जह्यां, न तु त्वां शरणागतम्॥ ६॥

यावत्, वक्षः,—उरःस्थलं यस्य तथाभूतः, तथा ताम्रे—रक्ते, लोले—चपले, आयते—दीर्घे च, अक्षिणी—नयने यस्य सः तथोक्तः, आकर्णविसृतारक्तलोललोचनः इत्यर्थः, भवति इति शेषः, स एवंविधः,—करिकरेत्यादिमहापुरुषलक्षणाक्रान्तः सन्नित्यर्थः, कथं—केन हेतुना, असमानम्—असदृशम्, ईदृशवीरत्वव्यञ्जकाकृतेरननुरूपमित्यर्थः, पादलग्नं—चरणसंयुतम्, इदं—दृश्यमानमित्यर्थः, एकम्—एकसङ्ख्यं, निगडं—शृङ्खलं, वहति ?—धारयतीत्यर्थः; अयोग्यमिदं निगडबन्धनं कथं प्राप्तवानेषः ? इति भावः। [ अत्र "निगडयुग्मम्" इति पाठो न युक्तः, "एकचरणलग्ननिगडः" इत्यनेन, "पादाग्रस्थितनिगडैकपाशकर्षी" इत्यनेन च पूर्वोक्तेन विरोधात् "निगडमेकं" "निगडपाशम्" इति वा पाठो युज्यते इति ध्येयम् ]। इह ईदृशमहापुरुषलक्षणसम्पन्नस्य इदं विरुद्धरूपनिगडबन्धनसङ्घटनाद्विषमालङ्कारः। वृषेण सह अंससाम्यस्यैव सर्वत्र दर्शनात् सिंहेन सह अंससाम्यं लोके अप्रसिद्धं, तस्य कटिसाम्याभिधानस्यैव सार्वत्रिकत्वादतोऽत्रोपमाऽलङ्कारगतः प्रसिद्धिविरुद्धत्वं दोषः उन्नेयः। मालिनी वृत्तम्॥ ५॥

( भ ) गोपालः,—गोरक्षकः, प्रकृतिः,—मूलकारणं, जनक इति यावत्, यस्य सः, गोपवंशसम्भूत इत्यर्थः, ("प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः)।

शरणागतरक्षणार्थं प्रतिजानीते चारुदत्तः, विधिनेति।—त्वं—भवान्, विधिना—दैवेन एव, उपनीतः,—उपस्थापितः सन्, चक्षुर्विषयं—नयनगोचरं; ममेति शेषः, आगतः—प्राप्तः, दृष्टोऽसीत्यर्थः, अपि—निश्चये, अहं प्राणान्—जीवनं, जह्यां—त्यजेयं, [ "जह्याम्" इति—"उताप्योः समर्थयोः लिङ्" ( ३।३।१५२ पा० ) इति जहातेः लिङ् ] तथाऽपीति शेषः, शरणागतम्—आत्मत्राणाय रक्षकत्वेन प्राप्तं, त्वां—भवन्तं, न तु, जह्यामिति पूर्वेणान्वयः। पथ्यावक्त्रं वृत्तम्॥ ६॥

आर्य्यकः। [ इर्षं नाटयति ]।

चारु। वर्द्धमानक ! चरणात् निगडमपनय। (ञ)

चेटः। जं अज्जो आणवेदि। [ तथा कृत्वा ] अज्ज ! अवणीदाइं णिगलाइं। *

आर्य्यकः। स्नेहमयानि अन्यानि दृढतराणि (ट) दत्तानि।

विदू। संगच्छेहि णिअलाइं, एसो विमुक्को, संपदं अम्हे वि गमिस्सामो। † (ठ)

चारु। धिक् शान्तम्। (ड)

आर्य्यकः। सखे चारुदत्त ! अहमपि प्रणयेनेदं प्रवहणमारूढः, तत् क्षन्तव्यम्। (ढ)

---

* यदार्य्य आज्ञापयति। आर्य्य ! अपनीतानि निगडानि।

† सङ्गच्छ निगडानि, एषः विमुक्तः, साम्प्रतं वयं व्रजिष्यामः।

---

(ञ) अपनय—उन्मोचय।

(ट) स्नेहमयानि अन्यानि—प्रणयविमप्रणयरूपाणि अपराणि निगडानि। दृढतराणि—अच्छेद्यानि; "बन्धनानि यदि सन्ति बहूनि, प्रेमरज्जुकृतबन्धनमन्यत्" इति प्राचीनोक्तेः इति भावः।

(ठ) सङ्गच्छ—धारय इत्यर्थः, अधुना त्वं स्वकीयचरणे शृङ्खलमिदं बधान इति भावः। श्रुत्वा तु एतद्वृत्तान्तजातं राजा पालकः नियतमेवास्मभ्यं कोपिष्यति, तेन अस्माकं शृङ्खलबन्धनं समापतितप्रायमेवेति मन्ये इति तात्पर्य्यम्। [ "समो गम्यृच्छिभ्याम्" (१।३।२९ पा०) अकर्मकाभ्यामेवेत्युक्तेः अत्र तङभावः ] एषः,—आर्य्यकः विमुक्तः,—शृङ्खलबन्धनान्मुक्तिं प्राप्तः, वयं—सर्वे इत्यर्थः, व्रजिष्यामः—गमिष्यामः, आत्मत्राणाय इति भावः।

(ड) धिक् इति भर्त्सनार्थकमव्ययम्; ("धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः)। शान्तं—तूष्णीम्भव, मा प्रलप इत्यर्थः, शरणागतरक्षणावसरे अस्माकं भाविनीं विपदमाशङ्क्य भवता काऽपि वाक् अत्र न वक्तव्या इत्याशयः।

(ढ) प्रणयेन—विश्वासेन, अस्य साधुस्वामिकतया आत्मीयत्वज्ञानेन इत्यर्थः, "उदारचरितानान्तु वसुधैव कुटुम्बकम्" इत्युक्त्या उदाराशयं भवन्तं बन्धुं मत्वा इति यावत्। तत्—मम अननुमत्यारोहणमित्यर्थः, क्षन्तव्यं—मर्षितव्यं, सोढव्यमित्यर्थः।

चारु। अलङ्कृतोऽस्मि स्वयङ्ग्राहप्रणयेन भवता। (ण)

आर्यकः। अभ्यनुज्ञातो (त) भवता गन्तुमिच्छामि।

चारु। गम्यताम्।

आर्यकः। भवतु, अवतरामि। (थ)

चारु। सखे! न अवतरितव्यम्। प्रत्ययापनीतसंयमनस्य भवतोऽलघुसंचारा गतिः। सुलभपुरुषसञ्चारेऽस्मिन् प्रदेशे प्रवहणं विश्वासमुत्पादयति, (द) तत् प्रवहणेनैव गम्यताम्।

आर्यकः। यथाह भवान्।

चारु। क्षेमेण व्रज बान्धवान्,—

आर्यकः। * * * ननु मया लब्धो भवान् बान्धवः,

चारु। स्मर्त्तव्योऽस्मि कथाऽन्तरेषु भवता,—

आर्यकः। * * * स्वात्माऽपि विस्मर्य्यते ?।

---

(ण) स्वयङ्ग्राहप्रणयेन—अप्रार्थितोपनीतेन भवत्कृतप्रेम्णा। भवता—त्वया। अलङ्कृतः,—भूषितः, अनुगृहीत इत्यर्थः। अस्मि—भवामि।

(त) अभ्यनुज्ञातः,—अनुमोदितः, चेद्भवानाज्ञापयतीति भावः।

(थ) अवतरामि—अवरोहामि, शकटादवरुह्य पादविहरणेनैव गच्छामीति यावत्।

(द) प्रत्ययं—नवम्, इदानीमेवेत्यर्थः, अपनीतम्—उन्मोचितं, संयमनं—बन्धनं यस्य तथोक्तस्य, निगडाद्चिरविमुक्तस्य इत्यर्थः। अलघुः,—महान्, संचारः,—संरोधः यस्यां सा, अहर्दिनं यावत् कारावासात् निगडबन्धनाच्च द्रुतगमने अक्षमत्वादिति भावः; अस्मिन् प्रदेशे यदि ते गतेः पुनः पुनः प्रतिरोधः स्यात्, तदा गच्छतां जनानां संशयी भवेत् इति तात्पर्य्यार्थः। ["अलघुसंचारा" इत्यत्र "अतिलघुसञ्चारा" इति पाठे—अतिलघु—अतिमन्दं यथा तथा, सञ्चारः,—पादक्षेपो यस्यां सा]। सुलभ-पुरुषसञ्चारे—सततपुरुषगमनागमने, जनतासमाकुले इत्यर्थः; विश्वासं—प्रत्ययं, "अस्याश्चाहृतत्वात् वधूयानमिदम्" इत्येवंरूपमिति यावत्।

चारु। त्वां रक्षन्तु पथि प्रयान्तममराः,—

आर्य्यक:। * * * संरक्षितोऽहं त्वया,

चारु। स्वैर्भाग्यैः परिरक्षितोऽसि,—

आर्य्यक:। * * * ननु हे! तत्रापि हेतुर्भवान् ॥७॥

इदानीं गमनकाले आर्य्यक-चारुदत्तौ परस्परमुक्ति-प्रत्युक्तिभ्यां शिष्टसम्मतं शुभाशंसनं यथोचितं तदुत्तरञ्च विधत्तः, क्षेमेणेति।—"क्षेमेण" इतः प्रभृति "तत्रापि हेतुर्भवान्" इत्यन्तं यावत् चारुदत्तार्य्यकयोरुक्ति-प्रत्युक्तिभ्यां विरचितम् एकमेव पद्यमित्यवगन्तव्यम्। त्वं क्षेमेण—कुशलेन, कल्याणवान् सन् इत्यर्थः, ["इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति विशेषणे, "प्रकृत्यादिभ्यः" (वा०) इति वा तृतीया] बान्धवान्—आत्मीयान्, स्वजनसमीपमित्यर्थः, व्रज—गच्छ, स्वजनान् प्राप्नुहीति यावत्। आर्य्यकः "बान्धवान्" इत्यन्तचारुदत्तोक्तवाक्यस्य उत्तरमाह, ननु इति।—ननु—भोः! मया—आर्य्यकेणेत्यर्थः, भवान्—त्वं, बान्धवः,—सुहृत्, लब्धः,—प्राप्तः, "राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः" इत्युक्तेः; जगति मे त्वत्सदृशो यथार्थतो बन्धुः कोऽपि नास्तीति त्वल्लाभेनैव मे बन्धुलाभः समुपपन्न एवेति भावः; भवता—त्वया, कथान्तरेषु—सामयिककथाप्रसङ्गेषु, अस्मि—अहम्, [अत्र "दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि! नास्मि दूये" इत्यादिप्रयोगदर्शनात् अस्मिशब्दोऽहमित्यर्थे अव्ययम्] स्मर्त्तव्यः,—स्मरणीयः, ननु यद्यहमपि बान्धवः, तदा बान्धवेषु अहमपि कदाचित् क्वचिच्च गणनीय इति भावः। चारुदत्तस्य अविस्मरणीयत्वे हेतुं प्रदर्शयितुमार्य्यकः आत्मना चारुदत्तस्य साम्यम् अभेदं वा प्रतिपादयन्नाह, स्वात्मेति।—अपि—किम्? स्वस्य—आत्मनः, आत्मा—देहः, विस्मर्य्यते—विस्मरणीयो भवति, [वि+स्मृ+कर्म्मणि लट् "गुणोऽर्त्तिसंयोगाद्योः" (७।४।२९ पा०) इति सूत्रेण यकि गुणः] न विस्मर्य्यते इत्यर्थः; स्वात्मवत् नित्यप्रत्यक्षीभूतस्य तव विस्मरणाशङ्कैव असम्भवी इति भावः। चारुदत्तः सम्प्रति आर्य्यकस्य पथि निर्बाधं गमनमाशंसते, त्वामिति।—अमराः,—देवाः, पथि—अध्वनि, [व्याप्यधिकरणे सप्तमी] प्रयान्तं—गच्छन्तं, त्वां—भवन्तं, रक्षन्तु—अवन्तु। आर्य्यकः "त्वयैवाहं रक्षितः, किममरैः?" इत्याह, समिति।—अहम्—आर्य्यक इत्यर्थः, त्वया—भवता, संरक्षितः,—परित्रातः, शकटप्रेरणानुकूल्येन राजपुरुषहस्तादिति शेषः, तथा रक्षतस्य दैवरक्षणं न किञ्चित् फलोपधायकमिति भावः। [एतेनात्रोपमानमूलकत्

चारु। यत् उद्यते पालके महती रक्षा न वर्त्तते, तत् शीघ्रमपक्रामतु भवान्। (ध)

आर्य्यक:। एवं पुनर्दर्शनाय। [इति निष्क्रान्त:]।

देवादिरूपमेयभूतस्य रक्षकस्य चारुदत्तस्याधिक्यप्रतीते: व्यतिरेकालङ्कार: व्यज्यते]। ननु "हरेश्चक्रं, श्रियो धाम, ब्रह्मणो भू:, सखा रवे:। शिशिरेण हतं पद्मं न केन रक्षितं भवेत्॥" इत्युक्ते: "भाग्यं फलति सर्व्वत्र, न मनुष्यशक्ति:" इत्याह, स्वैरिति।—स्वै:,—आत्मीयै: भाग्यै:,—भागधेयैरेव, [कर्त्तरि तृतीया] परि—सर्व्वत:, रक्षितोऽस्मि,—त्रातोऽस्मि, नास्माभि: इति भाव:। तत्र आर्य्यक: उत्तरयति, ननु इति।—ननु इति निश्चये, ("प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमर:) हे इति—सम्बोधने, तत्रापि—तादृशभाग्योत्पत्तावपि, भवान्—त्वमेव, हेतु:—कारणम्; कारणं विना कार्य्यस्योत्पत्तेरदर्शनात् तत्कारणचिन्तायां भवानेवात्र भवान्तर-कारणानां मूलीभूतं कारणं भवतीति भाव:। अत्र वसन्तसेनाया: आनयनसमुत्थितेन प्रवहणकथांऽशेन भवान्तरकथारूपम् आर्य्यकागमनं सम्बद्धमिति हेतोरयं सन्धिरेव नाटकेतिवृत्तैकभागरूप:, तल्लक्षणं यथा,—"अन्तरैकार्थसम्बन्ध: सन्धिरेकान्वये सति" इति। स चात्र वर्णनीयस्य वसन्तसेनाप्रणयाबद्धचारुदत्तचरितोत्कर्षरूपस्य कारामुक्त-पुरुषाश्रयदानरूपावान्तरार्थान्वितस्य मुख्यफलसञ्चयस्य गर्भसन्ध्यधिकोद्भिन्नत्वात् राज्ञ: पालकस्य क्रोधजनितभयालिङ्गितत्वाच्च विमर्शनामा सन्धिभेद:, तल्लक्षणमप्याह दर्पणकार:,—"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिक:। शापाद्यै: सान्तरायश्च स विमर्श इति स्मृत:॥" इति। शार्दूलविक्रीड़ितं वृत्तं, तल्लक्षणं यथा,—"सूर्य्याश्वै-र्यदि म: स-जौ स-त-त-गा: शार्दूलविक्रीड़ितम्" इति॥ ७॥

(ध) उद्यते—उपक्रान्ते, उद्युक्ते इत्यर्थ:, त्वां धर्त्तुमिति शेष:। पालके—तदाख्ये अस्माकं राजनि। महती—समीचीना। रक्षा—त्राणं, तव सर्व्वांशेन परि-रक्षणमित्यर्थ:। न वर्त्तते—न सम्भवति इत्यर्थ:; पलायमानं त्वां पुन: कारायां निरोद्धुं कृतोद्योगेन पालकेन रक्षिनियोग: कृत:, अत: सम्प्रति उपस्थिते राजविरोधे अस्माभिस्तव निर्बाधा रक्षा न सम्भाव्यते इत्येवार्थतात्पर्य्यम्; ["यत् उद्यते···रक्षा न वर्त्तते" इत्यत्र "यत्रोद्यते········रक्षा वर्त्तते" इति पाठे तु, रक्षा—नगररक्षा इत्यर्थ:; राजा पालक: भवत्पलायनमुपश्रुत्य साव-धानतया नगरसंरक्षणं समादिष्टवान् अत इदानीं रक्षिभि: नगरी साव-हितं संरक्ष्यते; तेषां दृष्टिपथमापतिते भवति पलायनमत्यन्तमसम्भवितं भवेत् अत: तेषामत्रागमनात् प्रागेव भवान् सत्वरमस्मात् स्थानादपक्राम्यतु इति समुदितार्थ:]।

चारु ।—

क्कृत्वैवं मनुजपतेर्महद्व्यलीकं
स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।
मैत्रेय ! क्षिप निगडं पुराणकूपे,
पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥ ८ ॥

[ वामाक्षिस्पन्दनं सूचयित्वा ] । सखे मैत्रेय ! वसन्तसेनादर्शनोत्सुकोऽयं जनः । पश्य —

अपश्यतोऽद्य तां कान्तां वामं स्फुरति लोचनम् ।
अकारण-परित्रस्तं हृदयं व्यथते मम ॥ ९ ॥

यानमुरक्षितमार्य्यकं विसृज्य चारुदत्तः राजकोपात् आत्मानं संरक्षितुं तदानीन्तनं कर्त्तव्यमाह, कृत्वेति ।—हे मैत्रेय ! एवम्—इत्थं, मनुजपतेः—नराधिपस्य पालकस्य, महत्—अत्यन्तमित्यर्थः, व्यलीकम्—अप्रियम, आर्य्यकपलायने साहाय्यरूपमित्यर्थः, ("व्यलीकन्त्वप्रियेऽनृते" इत्यमरः) कृत्वा—विधाय, अस्मिन्—अत्र विपत्सङ्कुले प्रदेशे इत्यर्थः, क्षणमपि—मुहूर्त्तमपि, कियत्कालमपीत्यर्थः, स्थातुं—वर्त्तितुम्, अपेक्षितमित्यर्थः न प्रशस्तं—न युक्तम् ; अतः पुराणकूपे—प्राचीनोदपाने, वर्त्तमानदशायां केनाप्यव्यवहार्य्ये उदपाने इत्यर्थः, निगडं—आर्य्यकस्य पादापनीतं शृङ्खलं, क्षिप—पातय ; हि—यतः, क्षितिपतयः,—राजानः चारदृष्ट्या—चाररूपचक्षुषा [ चरतीति चरः, चर एव चारः, प्रज्ञादित्वात् अण्प्रत्ययः, चार एव दृष्टिश्चारदृष्टिः तया ] पश्येयुः,—अवलोकयेयुः । स्व-परमण्डलकार्य्यावलोकने चारा एव चक्षूंषि नरेन्द्राणां,—"चारैः पश्यन्ति राजानः" इति नीतिशास्त्रात् ; सर्व्वत्र राज्ञां गुप्तचारसत्त्वात्, यदि कश्चित् कदाचिदागत्य अस्माकमवस्थितिस्थाने आर्य्यकस्य चरणमवलितं निगडमालोकयेत्, तदा महत्यापदापत्स्यते इति हृदयम् । अत्र नरपतिव्यलीकानुष्ठानादिनिगडक्षेपणान्तपादत्रयगतकार्य्याणां समर्थकतया क्षितिपतिचारदृष्टिद्वारकदर्शनरूपचतुर्थपादगतकारणस्योपन्यासात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥ ८ ॥

वसन्तसेनाया अदर्शनेन पर्य्युत्सुकः चारुदत्तः दुर्निमित्तोत्पत्तिं सूचयति, अपश्यत इति ।—अद्य—अस्मिन् दिवसे, तां—सुचिरानुभूतां, मदीयामित्यर्थः, कान्तां—प्रियां, वसन्तसेनामिति यावत्, अपश्यतः,—अनवलोकयतः, मम—मे, वामं—दक्षिणेतरं

तदेहि, गच्छाव:। [परिक्रम्य] कथमभिमुखमनाभ्युदयिकं श्रमणकदर्शनम्। (न) [विचार्य्य] प्रविशतु अयमनेन पथा, वयमप्यनेनैव पथा गच्छाम:। [इति निष्क्रान्ता: सर्वे]।

इति आर्य्यकापहरणं नाम सप्तमोऽङ्क: ॥ ७ ॥

लोचनं—नयनं, स्फुरति—स्पन्दते, तथा अकारणपरित्रस्तम्—अहेतुकमुद्विग्नं, हृदयं—चित्तञ्च, व्यथते—पीड़ितं भवति। अङ्गस्पन्दनफलं यथा मत्स्यपुराणे,—"अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥" इति। अत्र इदानीमपि प्रियाया वसन्तसेनाया: विपत्पातस्यानिर्णयात् चारुदत्त-हृदयव्यथारूपकार्य्यस्य अहेतुकस्यैवोदयात् विनाहेतुककार्य्योत्पत्तिरूपविभावनाऽल-ङ्कार: ॥ ६ ॥

(न) अनाभ्युदयिकम्—अशुभजनकम्। श्रमणकस्य—बौद्धसन्न्यासिन: ("श्रमणो यतिभेदे ना निन्द्यजीविनि तु त्रिषु" इति मेदिनी) दर्शनम्—अवलोकनं, साक्षात्कार:, इत्यर्थ:। अत्र श्रमणकरूपाशकुनदर्शनं चारुदत्त-वसन्तसेनयोर्भाविन: अनिष्टस्य सूचकमिति बोद्धव्यं, तद्दर्शनस्य दुर्निमित्तसूचकतया शास्त्रप्रसिद्धत्वादिति भाव:। श्रमणकदर्शनस्याशुभसूचकत्वं यथा वाचस्पत्ये दु:शकुनशब्दे,—"वन्ध्याचर्म्मतुषास्थिसर्प-लवणाङ्गारेन्धनक्लीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिता:" इति, तथा अमङ्गलशब्दे—"कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम्। कुचैलमतिरुग्णाङ्गं नग्नं काषायवासिनम् ॥·········दर्शं दर्शममङ्गलम् ॥" इति च।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना वि ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां सप्तमोऽङ्क: ॥ ७ ॥

# अष्टमोऽङ्कः ।

[ ततः प्रविशति आर्द्रचीवरहस्तो भिक्षुः ] ।

भिक्षुः । **अज्जा ! कलेध धम्मशंचअं,***—
**शंजमध णिअपोटं णिच्चं जग्गेध झाण-पडहेण ।**
**विशमा इंदिअ-चोला हलंति चिल-शंचिदं धम्मं †॥ १ ॥**

---

* अज्ञाः ! कुरुत धर्मसञ्चयम्,—

† संयच्छत निजोदरं नित्यं जाग्रत ध्यानपटहेन ।
विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम् ॥

धर्मार्थिनां संयम एव धर्मोपार्ज्जनोपायः इति वक्तुमाह, संयच्छतेति ।—निजोदरं—निजम्—आत्मीयम्, उदरं—जठरं, संयच्छत—सङ्कोचयत, मिताशिनः भवत इत्यर्थः, केवलं जठरमापूरयितुं समयं मा क्षिपत इति यावत्; जागरितानां हि किमपि वस्तु चौरैर्नापहर्त्तुं शक्यते इति जागरणमुपदिशन्नाह, ध्यानेति ।—ध्यानपटहेन—इष्टचिन्ताप्रवाहरूपढक्कया, नित्यं—सर्व्वदा, जाग्रत—विनिद्राः भवत, परमतत्त्वचिन्तया निद्रामपनीय सदा अवहिताः भवत इत्यर्थः; सततं समाधिं, इष्टचिन्तां वा कुरुत इति यावत्, ( यथा पटहेन निद्रायाः व्याघातः समुपजायते, तथा ध्यानमेव मोहनिद्रायाः अन्तरायो भवति इति निद्राऽपगमकत्वसाम्येन एव ध्याने पटहत्वारोपः ) । नित्यजागरणे प्रयोजनप्रदर्शनाय इन्द्रियाणां धर्महरणपाटवं वर्णयन्नाह, विषमा इति ।—विषमाः,—दुरन्ताः, इन्द्रियचौराः,—इन्द्रियाणि—चक्षुरादीन्येव, चौराः,—तस्कराः, एषामसंयतत्वेन लोभपारवश्यात् विषयासक्तपुरुषधर्मापहारकत्वादिति भावः, चिरसञ्चितं—चिरोपार्जितम्, आ-जन्मनः बहुना क्लेशेन संरक्षितमित्यर्थः, धर्मं—सुकृतं, हरन्ति—मुष्णन्ति; अतः इन्द्रियनिग्रहे यत्नं कुरुत इति भावः । अत्र निरपेक्षवर्योरुपमेयीभूतयोः ध्यानेन्द्रिययोः अभेदेन उपमानीभूतयोः पटहचौरयोरारोपात् रूपकमलङ्कारः । आर्य्या वृत्तम् । ["णिच्चं जग्गेध झाणपडहेण" इत्यत्र "जग्गेध ज्झाणपडहेण" इति पाठान्तरे उपगीतिः वृत्तम् ] ॥ १ ॥

अविग्र, अणिच्चदाए पेक्खिम्र णवलं दाव धम्माणं शल-णम्हि, * (क)—

पंचजण जेण मालिदा, इत्थिम मालिम गाम लक्खिदे।
अबल अ चंडाल मालिदे, अवशं शे णल शग्ग गाहदि † ॥२॥

* अपि च, अनित्यतया प्रेक्ष्य केवलं तावद्धर्माणां शरणमस्मि,—

† पञ्चजना येन मारिताः स्त्रियं मारयित्वा ग्रामो रक्षितः।
अबलश्च चाण्डालो मारितोऽवश्यं स नरः स्वर्गं गाहते॥

(क) अनित्यतयेति।—अनित्यतया—विनश्वरतया। प्रेक्ष्य—दृष्ट्वा, विविच्येत्यर्थः, संसारमिति शेषः। केवलम्—एकम्। धर्म्माणां—प्रज्ञापारमितादिनिर्द्दिष्टबुद्धोपासनाऽनुकूलदर्शनध्यानकीर्त्तनादीनामित्यर्थः, शरणम्—आश्रयः, अस्मि—भवामि ; धर्ममेव शरणं गतोऽस्मीत्यर्थः।

वशीकृतेन्द्रियनिचयस्य धार्मिकस्य जितात्मनः अवश्यमेव स्वर्गभाक्त्वमाह, पञ्चजना इति।—येन—जनेनेत्यर्थः, पञ्चजनाः,—पञ्चेन्द्रियाणि, [ पञ्चभिर्भूतैर्जन्यन्ते इति पञ्चजनाः, यद्यपि पञ्चभूतजन्यानि अन्यान्यपि वर्त्तन्ते, तथाऽप्यत्र पञ्चजनशब्देन प्रकरणवशात् पञ्चेन्द्रियाणि लक्ष्यन्ते इति बोध्यम् ] मारिताः,—विनाशिताः, स्वस्वग्राह्यविषयेभ्यो निवार्य्य वशीकृता इति यावत्, स्त्रियम्—अविद्यामित्यर्थः, अज्ञानमिति यावत्, मारयित्वा—विनाश्य, तत्त्वज्ञानेन तद्बन्धनानि छित्त्वा इत्यर्थः, ग्रामः,—आत्मा, इन्द्रियाणामाधारतया शरीरमिति केचित्, रक्षितः,—निर्विघ्नीकृतः, स्वस्वरूपावस्थां प्रापित इत्यर्थः ; अविद्याद्यावरणपरिहारेण आत्मानं शरीरं वा रक्षित्वा यावदायुः नियतं परमपुरुषो ध्यातः इति निगूढार्थः, तथा अबलः,—सुतरां बलहीनः, बहिरिन्द्रियाणां वशीकरणात् अविद्यादिपाशनाशाच्चेति भावः, चाण्डालः,—चण्डालसधर्म्मा अहङ्कारः, शरीरस्थपापपुरुषः, चण्डालवदपकारकतया अन्तरिन्द्रियनिचयो वा, मारितः,—निहतः, स नरः,—जनः, अवश्यं—निश्चितमेव, स्वर्गं – सुरलोकं, दुःखलेशासम्पृक्तमविच्छिन्नं सुखं वा, गाहते—गच्छति, प्राप्नोतीत्यर्थः। अत्र पञ्चजनस्त्रीग्रामचाण्डालशब्दानां लक्षणया इन्द्रियाविद्यादिरूपाः अर्था बोद्धव्याः। वैतालीयं वृत्तम्,—"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥" इति लक्षणात्॥ २॥

शिल मुंडिदे, तुंड मुंडिदे, चित्त ण मुंडिदे, कीश मुंडिदे?
जाह उण अ चित्त मुंडिदे, शाहु शुट्ठु, शिल ताह मुंडिदे * ॥२॥

गिह्निद-कशाओदए एशे चीवले, जाव एदं लट्टिअशालकाह-केलके उज्जाणे पविशिअ पोक्खलिणीए पक्खालिअ लहुं लहुं अवक्कमिश्शं। † (ख) [परिक्रम्य तथा करोति]।

[नेपथ्ये] चिट्ठ ले दुट्टशमणका! चिट्ठ। ‡

---

* शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किं मुण्डितम्?।
यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम्॥

† गृहीतकषायोदकमेतच्चीवरं, यावदेतत् राष्ट्रियश्यालकस्य उद्याने प्रविश्य पुष्करिण्यां प्रक्षाल्य लघु लघु अपक्रमिष्यामि।

‡ तिष्ठ रे दुष्टश्रमणक! तिष्ठ।

अन्तःशुद्धिरेव तात्त्विकी शुद्धिः, न तु बहिःशुद्धिरिति वर्णयन्नाह, शिर इति।—येस्य—जनस्य, शिरः,—मस्तकं, मुण्डितं—केशशून्यं कृतं, तथा तुण्डं—मुखं, मुण्डितं—श्मश्रुशून्यं कृतं, नापितेनेति शेषः. ["शिल मुंडिदे, तुंड मुंडिदे" इत्यत्र "शिल-मुंडअ! मुंड मुंडिदं" इति क्वचित् पाठः; तत्र "शिरोमुण्डक! मुण्डं मुण्डितम्" इति संस्कृतम्] किन्तु चित्तम्—अन्तःकरणं, न मुण्डितं—न परिष्कृतं, न विधौतकल्मषं कृतमित्यर्थः, तस्य—जनस्य इत्यर्थः, किं मुण्डितम्?—किं परिष्कृतम्? न किमपि इत्यर्थः; यस्य चित्तम्—अन्तःकरणं, पुनः—तु, साधु—सम्यक् यथा तथा, मुण्डितं—विगतकिल्बिषं कृतमित्यर्थः, तस्य शिरः,—मस्तकं, सुष्ठु—शोभनं यथा तथा, मुण्डितं—केशशून्यीकृतं, परिष्कृतमित्यर्थः; अशुद्धचित्तस्य दण्डिनः केशादिवपनं व्यर्थमिति भावः। विशुद्धचित्त एव हि निर्वृतेः भाजनं भवति, न तु अविशुद्धचित्तो मुण्डितमस्तकः इति समुदितार्थः। यतीनां केशश्मश्रुमुण्डनम् उक्तञ्च मनुना,—"क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्। विचरेन्नियतो नित्यं सर्व्वभूतान्यपीडयन्॥" इति। ["शिल मुंडिदे" इत्यत्र "चित्त ण मुंडिदे" इत्यत्र च एकारद्वयं छन्दोऽनुरोधात् लघु पठनीयम्। वैतालीयं छन्दः॥ २॥

(ख) गृहीतेति।—गृहीतं—नीतं, कषायोदकं—रक्तपीतमिश्रितवर्णरञ्जितसलिलं येन तत् कषायरागरक्तम्। चीवरं—भिक्षुवस्त्रखण्डं, कौपीनमित्यर्थः। एतत्—चीवरम्। राष्ट्रियश्यालकस्य—राजश्यालक-संस्थानकस्य। लघु लघु—शीघ्रं शीघ्रम्। अपक्रमिष्यामि—पलायिष्ये।

भिक्षुः। [ दृष्ट्वा सभयम् ] ही अविदमाणहे ! एशे शे लाअशाल-शंठाणे आअदे !! एक्केण भिक्खुणा अवलाहे किदे, अण्णं पि जहिं जहिं भिक्खुं पेक्खदि, तहिं तहिं गोणं विअ णासं विंधिअ ओवाहेदि, ता कहिं अशलणे शलणं गमिश्शं ? अध वा भट्टालके ज्जेव बुद्धे मे शलणे। * (ग)

[ प्रविश्य सखङ्गेन विटेन सह शकारः ] चिट्ठ ले दुट्टशमणका ! चिट्ठ। आवाणअ-मज्झपविट्ठश्श विअ लत्तमूलअश्श शीशं दे मोड़इश्शं। † (घ) [ इति ताड़यति ]।

* भो आश्चर्य्यम् ! एष स राजश्यालसंस्थानक आगतः !! एकेन भिक्षुणा अपराधे कृते, अन्यमपि यत्र यत्र भिक्षुं पश्यति, तत्र तत्र गामिव नासिकां विद्धा अपवाहयति, तत् कुत्र अशरणः शरणं गमिष्यामि ? अथवा भट्टारक एव बुद्धो मे शरणम्।

† तिष्ठ रे दुष्टश्रमणक ! तिष्ठ। आपानकमध्यप्रविष्टस्येव रक्तमूलकस्य शीर्षं ते मोटयिष्यामि।

(ग) अपवाहयति—देशात् देशान्तरं नयति, ताड़यति वा। अशरणः,—रक्षकविहीनः, अनाथ इत्यर्थः। शरणं—रक्षितारम्, आश्रयमिति भावः। गमिष्यामि—आश्रयिष्यामि प्राप्स्यामीत्यर्थः, "सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्च" इत्यनुशासनात्। भट्टारकः,—प्रभुः, देवो वा, ("भर्त्तेः भट्टेति चाधमैः" इति नाट्योक्तेः, "राजा भट्टारको देवः" इत्यमरोक्तेश्च)। शरणं—रक्षिता, ("शरणं गृहरक्षित्रोः" इत्यमरः)।

(घ) आपानकमध्यप्रविष्टस्य—आपानकं— पानगोष्ठी मद्यपायिसमाज इत्यर्थः, [ आपिबन्त्यस्मिन्निति वाक्ये आपिबतेरधिकरणे ल्युट् ] तन्मध्यप्रविष्टस्य—तन्मध्यस्थितस्य इत्यर्थः। रक्तमूलकस्य इव—रक्तवर्णस्वनामख्यातकन्दविशेषस्य इव। शीर्षं—मस्तकम्। मोटयिष्यामि—भञ्ज्यामि। यो हि यादृशस्वभावः यादृगाचारसम्पन्नश्च भवति, तत्कृतसादृश्यप्रकटनादिकमपि तदनुरूपमेव दृश्यते ; शकारो हि दुष्टप्रकृतिर्मद्यपायी चेति प्रतिदिनमापानकगोष्ठ्यां मद्यविक्रसमुखशोधकत्वेन गृहीतेषु वस्तुषु ("चाट्" इति वङ्गभाषा) मूलकं यथा मटत्कारेण मोटयति, तथा अस्यापि शीर्षं-देशमनायासेन मोटयिष्यतीति समुदिततात्पर्य्यम्। अत्र श्रमणकस्य पीतवसनत्वात् श्रमणक-रक्तमूलकयोः अनुरूपवर्णसाम्याभावेऽपि केवलमांशिकवर्णसाम्यमादाय रक्त-

विटः। काणेलीमातः! न युक्तं निर्वेदधृतकषायं भिक्षुं ताड़यितुं, तत्किमनेन? इदं तावत् सुखोपगम्यमुद्यानं (ङ) पश्यतु भवान्,—

अशरण शरण-प्रमोदभूतैर्वनतरुभिः क्रियमाण-चारुकर्म्म।
हृदयमिव दुरात्मनामगुप्तं नवमिव राज्यमनिर्जितोपभोग्यम्॥ ४॥

मूलक-श्रमणकयोरुपमानोपमेयभावः शकारवचनत्वेन सोढव्यः। निर्गुणत्वासारत्वबोधकं रक्तमूलकौपम्यन्तु लोकप्रसिद्धमेवेत्यप्यवधातव्यम्।

(ङ) निर्वेदधृतकषायं—निर्वेदेन—वैराग्येण, धृतम्—अवलम्बितं, परिहित-मित्यर्थः, कषायं—कषायेण रक्तं वस्त्रमिति यावत् येन तम्। ताड़यितुं—प्रहर्त्तुम्। अनेन—भिक्षुणा इत्यर्थः. किं—किं प्रयोजनम्? अस्य भिक्षोस्ताड़नेन किमपि प्रयोजनं नास्त्यस्माकमिति अस्य परित्याग एव युक्त इति भावः। सुखोपगम्यं—सुखेन—अक्लेशेन, उपगम्यम्—उपभोग्यं, सुखसेव्यमित्यर्थः।

उद्यानस्य सुखोपगम्यत्वं प्रतिपादयति, अशरणेति।—अशरणानां—गृहशून्यानां, शरणानि—आश्रयाः, गृहशून्या हि तरुतलमाश्रयन्तीति प्रसिद्धम्; तथा प्रमोद-भूताः,—आनन्दस्वरूपाः, क्लान्तपथिकेभ्यः आश्रयदानेन तेषां निरतिशयशान्तिरान-यनात् इति भावः, तथोक्तैः, वनतरुभिः,—आरण्यपादपैः, क्रियमाणं—विधीयमानं, चारु—मनोहरं, कर्म्म—कार्य्यं, पुष्पफलादिदानात् अतिथ्यानुकूल्यरूपं छायादाना-दाश्रितसन्तर्पणरूपं यत्र तत्, कुत्रचिच्च, दुरात्मनाम्—असंयतचेतसां, पापाशयपूर्ण-हृदयानामित्यर्थः, हृदयमिव—चित्तमिव, अगुप्तम्—अरक्षितं, यथेच्छविहारयोग्य-मित्यर्थः, तथा, नवं—नवाधिकृतं, राज्यमिव—साम्राज्यमिव, अनिर्जितम्—अशिष्टम्, शासनेन अनायत्तीकृतमित्यर्थः, नवप्रतिष्ठापितराज्ये सम्यक्शासननियमस्याभावात् विशृङ्खलतया इति भावः. अथ च, उपभोग्यं—स्वेच्छया सम्भोगार्हम्; दृश्यते हि नवाधिकृतस्य राज्यस्य सुशासकनियोगात् पूर्व्वं विशृङ्खलतयाऽवस्थानमिति, तद्वत् इदमपि उद्यानं तादृशरक्षिविरहेण दुर्जनभूयिष्ठतया च साधारणजनानामयत्नकृतोप-भोगादंशतो विलुप्तरामणीयकमपि स्वभावरमणीयतया सुखेनैवास्माभिरुपभोक्तुं शक्य-मिति भावः। इह शृङ्खलाभाववत्त्वेन नवराज्यसाम्यदर्शनात् आशिकाधिकृतं राज्यं कियत्कालं विशृङ्खलं भविष्यतीति ध्वन्यते। अत्र उद्यानस्य दुरात्महृदयेन नवराज्येन च सार्द्धमेवधर्म्मसाम्यबोधात् स्फुटाविव उपमाऽलङ्कारौ, परस्परनिरपेक्षतया संस्थिते-स्तयोः संसृष्टिः॥ ४॥

भिक्षुः। शाअदं? पशीदटु उवाशके। * (च)

शकारः। भावे! पेक्ख पेक्ख, आक्कोशदि (छ) मं। †

विटः। किं ब्रवीति?

शकारः। उशाशके त्ति मं भणादि। किं हग्गे णाविदे? ‡(ज)

विटः। बुद्धोपासक इति भवन्तं स्तौति।

शकारः। थुणु शमणका! थुण। § (झ)

भिक्षुः। तुमं धण्णे तुमं पुण्णे। ¶ (ञ)

* स्वागतम्? प्रसीदतु उपासकः।

† भाव! (विद्वन्!) पश्य पश्य, आक्रोशति माम्।

‡ उपासक इति मां भणति, किमहं नापितः?

§ शृणु श्रमणक! शृणु।

¶ त्वं धन्यः, त्वं पुण्यः।

(च) उपासकः,—सेवकः। प्रसीदतु—प्रसन्नो भवतु, कोपं मा करोतु इत्यर्थः।

(छ) आक्रोशति - निन्दति, कटुवाक्येन तिरस्करोतीत्यर्थः; एतेनास्य शब्दार्थ-ज्ञानाभावप्रदर्शनात् मदमूर्खताऽभिमानवत्त्वं प्रकटीकृतम्।

(ज) उपासकः,—उपास्ते—सेवते इति ण्वुल्; बुद्धोपासनाकारक इत्यर्थे भिक्षुतात्पर्यम्। स्वस्य मूर्खत्वेन शकारस्तमर्थमनवगत्यैव उपासकशब्दस्य नापितार्थं करोति, नापितो हि अङ्गसेवया सन्तोष्य लोकेभ्योऽर्थमाहरति इति व्यवहारः, एतेनात्र कविना शकारस्य मूर्खताविजृम्भणं प्रदर्शितं वेदितव्यम्।

(झ) "शुणु" इत्यत्र "थुणु" इति पाठन्तु समीचीनतया मन्यामहे; तस्य "स्तुनु" इति संस्कृतम्। स्तौतेरादादिकस्यैव प्रयोगदर्शनात् संस्कृते "स्तुहि" इति रूपमेव साधु, स्वादिगणीयत्वे चास्य "स्तुनु" इति संस्कृते रूपं भवितुमर्हति. परन्तु गणपाठे अस्य स्वादिमध्ये पाठस्यादर्शनान्नैतद्युक्तमिति ध्येयम्।

(ञ) धन्यः,—श्लाघ्यः, प्रशंसनीय इत्यर्थः। पुण्यः,—पुण्यवान्, पुण्यदर्शनो वा, शकारं सन्तोष्य निष्कृतिमधिगन्तुमेव श्रमणकस्येदमयथाभूतं प्रशंसावाक्यमिति बोध्यम्।

शकारः। भावे! धञ्ञे पुञ्ञे त्ति मं भणादि। किं हग्गे शलावके, कोश्ठके, कुंभकले वा। * (ट)

विटः। काणेलीमातः! ननु धन्यस्त्वं पुण्यस्त्वमिति भवन्तं स्तौति।

शकारः। भावे! ता कीश एशे इध आगदे? †

भिक्षुः। इदं चीवलं पक्खालिदुं। ‡

* भाव! (विद्वन्!) धन्यः पुण्य इति मां भणति, किमहं श्रावकः, कोष्ठकः, कुम्भकारो वा?

† भाव! (विद्वन्!) तत् कथमेष इहागतः?

‡ इदं चीवरं प्रक्षालयितुम्।

(ट) श्रावक इत्यादि।—शृणोति पुराणादिकम् इति श्रावकः,—शास्त्रादि-शुश्रूषुः इत्यर्थः, स हि शास्त्रीक्तौ श्रद्धावान्, अतोऽसौ सर्वेभ्यो धन्यवादं लभते, अतः स धन्यः, तस्य च मननशक्तिविरहात् सर्व्वथा शास्त्रतत्त्वमजानतः अन्धविश्वास एव दोषः, अहं किं तथा? इति धन्यशब्दस्य भिक्षुतात्पर्य्यमनवबुध्यैव शकारः उक्तरूपेण श्रावकत्वे धन्यशब्दस्यार्थं प्रकल्प्य भिक्षुवचसो दोषमर्पयति इति बोध्यम्। केचित् तु "शलावके" इत्यस्य "शलावकः" इत्यनुवादं कृत्वा शलावकः,—चार्व्वाकः इत्यर्थं कुर्व्वन्ति, तस्य वेदविरुद्धभाषित्वात् निन्द्यत्वञ्च दर्शयन्ति। कोष्ठः,—उदरमध्यं, तस्यैव पूर्णत्वं करोति यः स कोष्ठकः, [इति कारकार्थे कन्] कोष्ठको हि गृध्नुर्भवति इति तस्य निन्द्यत्वम्; किमहं तथा गृध्नुः? इति शकाराभिप्रायः। यद्वा,—कोष्ठ एव इति कोष्ठकः,—कुशूलः, धान्याद्याधारः, तद्वदतिस्थूलत्वेन निष्पतिभ इत्यर्थः; प्राकृतभाषया पुण्यार्थकस्य "पुञ्ञे" इति शब्दस्य मूर्खशकारः "पूर्णः" इत्यर्थमवगम्य कोष्ठस्यैव पूर्णतासम्भवात् "किमहं कोष्ठकः" इत्युवाच। केचित् तु—यत्र शृगाल-कुक्कुरादयः पानीयं पिबन्ति, इष्टकादिविरचितं तथाविधं स्थानं कोष्ठकः इति मन्यन्ते, "चौवाच्चा" इति भाषा; तथाविधार्थस्तु कोषविरुद्धत्वान्न मनोरमः। कुम्भकारस्य स्वल्पमूल्यकमन्मयपात्रादिना स्वगृहपरिपूरकत्वात् पूर्णपदेन आत्मनः कुम्भकारत्वं विभाव्य शकारः स्वस्य धनिकत्वेनाभिमानसत्त्वात् कुम्भकारशब्दं हेयत्वापादकत्वेनाव-गच्छतीति बोध्यम्। अपरे तु अत्र असम्बद्धप्रलापकस्य शकारस्य वचनं शाब्दबोधा-जनकमेव मन्यन्ते, सर्व्वत्र तस्य मूर्खताविजृम्भणदर्शनात्।

शकारः। अले दुट्टशमणका! एशे मह बहिणीवदिणा शव्वुज्जाणाणं पवले पुप्फ-कलंडुज्जाणे दिस्से, जहिं दाव शुणहका शिआला पाणिअं पिअंति, हग्गे वि पवलपुलिशे मणुश्शके ण ण्हाआमि। तहिं तुमं पुक्खलणीए पुलाण-कुलुत्थ-जूशशवलाइं दुश्शगंधिआइं चीवलाइं पक्खालेशि? ता तुमं एक्कपहालिअं (ठ) कलेमि। *

विटः। काणेलीमातः! तथा तर्कयामि, यथा अनेन अचिर-प्रव्रजितेन (ड) भवितव्यम्।

शकारः। कधं भावे जाणादि? †

विटः। किमत्र ज्ञेयम्; पश्य,—

अद्याप्यस्य तथैव केशविरहाद्गौरी ललाटच्छविः,
कालस्याल्पतया च चीवरकृतः स्कन्धे न जातः किणः।

* अरे दुष्टश्रमणक! एतन्मम भगिनीपतिना सर्वोद्यानानां प्रवरं पुष्प-करण्डोद्यानं दत्तं, यत्र तावत् शुनकाः शृगालाः पानीयं पिबन्ति; अहमपि प्रवर-पुरुषो मनुष्यको न स्नामि; तत्र त्वं पुष्करिण्यां पुराणकुलत्थयूषशबलानि दूष्यगन्धीनि चीवराणि प्रक्षालयसि? तत् त्वामेकप्रहारिकं करोमि।

† कथं भावः जानाति?

(ठ) कुलत्थः—कलायभेद इत्यर्थः, तस्य यूषेण—क्वाथेन, शबलानि—विचित्राणि. कुलत्थयूषभक्षणात् इतस्ततः पतितैरंशैः तद्रसवन्ति इत्यर्थः। दूष्यगन्धीनि—दुर्गन्धीनि, घ्राणदूषकासौरभगन्धीनीत्यर्थः। ["पुलाणकुलुत्थजूशशवलाइं" इत्यत्र "पुलाणकुलुथजूशशबलाइं" इति पाठान्तरे—पुराणकुलत्थयूषसवर्णानि" इति संस्कृतम्]। एकप्रहारिकम्—एकं प्रहारं प्राप्तुमर्हति यः तम्, एकप्रहारेण हत-मित्यर्थः।

(ड) अचिरप्रव्रजितेन—अचिरम्—अल्पदिनं, प्रव्रजितः,—प्रव्रज्याश्रमं—सन्न्यासं गतः तेन; अथवा,—प्रव्रजितं—प्रव्रज्या, अचिरं प्रव्रजितं यस्य तेन, ["प्रव्रजितम्" इति भावे निष्ठा]।

श्रमणकस्य अल्पदिनप्रव्रज्याश्रमग्रहणविषयकानुमाने हेतून् विवृणोति, अद्येति।—अद्य—इदानीमपीत्यर्थः, अस्य—श्रमणकस्य इत्यर्थः, ["अद्याप्यस्य" इत्यत्र

माभ्यस्ता च कषायवस्त्ररचना दूरं निगूढान्तरं
वस्त्रान्तश्च पटोच्छ्रयात्प्रशिथिलं स्कन्धे न सन्तिष्ठते ॥ ५ ॥

भिक्षुः। उवासके! एव्वं अचिल-पव्वजिदे म्हि। *

शकारः। ता कीश तुमं जातमेत्तकज्जेव (ढ) ण पव्वजिदे? †

[ इति ताड़यति ]।

भिक्षुः। णमो बुद्धस्स। ‡

* उपासक! एवमचिरप्रव्रजितोऽहम्।

† तत् किमर्थं त्वं जातमात्रक एव न प्रव्रजितः?

‡ नमो बुद्धाय।

"अद्यार्थ्यस्य" इति पाठान्तरे,—आर्य्यस्य—मान्यस्य अस्य श्रमणकस्येत्यर्थः] ललाटच्छविः,—भालकान्तिः, केशविरहात्—अचिरकेशमुण्डनादित्यर्थः, तथैव—गार्हस्थ्यावस्थायामिव, गौरी—गौरवर्णा, शुभोज्ज्वला चेत्यर्थः; अचिरमुण्डने हि मस्तकस्य ललाटस्य च कान्तिः समाना न भवति; कालस्य—सन्न्यासग्रहणसमयस्य च, अल्पतया—अचिरतया, अचिरप्रव्रजितत्वेन इत्यर्थः. स्कन्धे—अंसदेशे. चीवरक्षतः,—चीवरेण—सततस्कन्धावसक्तेन भिक्षुवस्त्रविशेषेण, क्षतः—उत्पादितः. किणः,—कलङ्कचिह्नविशेषः, शुष्कव्रणं वा, न जातः,—न उत्पन्नः; कषायवस्त्ररचना च—कषायरञ्जितवसनव्यवहारश्च, वसनकषायीकरणं वा; न अभ्यस्ता—न शीलिता, न अभ्यासं गतेत्यर्थः; अचिरप्रव्रजितत्वेन अनभ्यस्ततया केन रूपेण कषायवस्त्रं व्यवहरति, कषायेण वस्त्राणां रञ्जनं वा कथं करोति, इति न जानाति इति भावः; तथा दूरम्—अत्यर्थं, निगूढम्—आच्छादितम्, अन्तरं—शरीरमध्यदेशः; अचिरप्रव्रजिता एव लज्जया वस्त्रेण शरीरमतिदृढमाच्छादयन्ति इति भावः; तथा वस्त्रान्तश्च—प्रावरणवसनशेषश्च. पटोच्छ्रयात्—वसनदैर्घ्यात्, प्रशिथिलं—श्लथत्वं गतम्, अत एव स्कन्धे—अंसे, न सन्तिष्ठते—न सम्यक् स्थितिं प्राप्नोति इत्यर्थः. अनभ्यासादिति भावः। अत्र केशविरहकालिकगौरललाटच्छव्यादिसाधनात् अचिरप्रव्रजितत्वरूपसाध्यस्य ज्ञानोदयात् अनुमानं नाम अलङ्कारः; तथा क्रमो नाम गर्भाङ्गं प्रदर्शितम्; तल्लक्षणं यथा,—"भावतत्त्वोपलब्धिस्तु क्रमः स्यात्—" इति। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

(ढ) जातमात्रक एव—जन्मनः प्रभृति एव, आ-जन्मन एवेत्यर्थः।

विटः। किमनेन ताड़ितेन तपस्विना ?(ण) मुच्यतां, गच्छतु।

शकारः। अले ! चिट्ठ दाव, जाव शंपधालेमि। * (त)

विटः। केन सार्द्धम् ?

शकारः। अत्तणो हड़क्केण। †

विटः। हन्त !! न गतः !! (थ)

शकारः। पुत्तका हड़क्का ! भट्टके पुत्तके ! एशे श्रमणके अवि णाम किं गच्छदु किं चिट्ठदु ? [स्वगतम्] णावि गच्छदु, णावि चिट्ठदु। [प्रकाशम्] भावे ! शंपधालिदं मए हड़क्केण शह, एशे मह हडक्के भणादि। ‡

विटः। किं ब्रवीति ?

शकारः। मावि गच्छदु, मावि चिट्ठदु, मावि ऊशशदु, मावि णीशशदु इध ज्जेव झत्ति पड़िअ मलेदु। §

---

* अरे ! तिष्ठ तावत् यावत् सम्प्रधारयामि। † आत्मनो हृदयेन।

‡ पुत्रक हृदय ! भट्टारक पुत्रक ! एष श्रमणकः अपि नाम किं गच्छतु, किं तिष्ठतु ? नापि गच्छतु नापि तिष्ठतु। भाव ! (विद्वन् !) सम्प्रधारितं मया हृदयेन सह, एतन्मम हृदयं भणति।

§ माऽपि गच्छतु, माऽपि तिष्ठतु, माऽपि उच्छ्वसितु, माऽपि निश्वसितु, इहैव झटिति पतित्वा म्रियताम्।

---

(ण) तपस्विना—वराकेण, निरपराधेन इत्यर्थः। ताड़ितेन—प्रहृतेन। किम् ?—अलं, तपस्विनमेनं मा ताड़य इत्यर्थः।

(त) सम्प्रधारयामि—अवधारयामि, विवेचयामीत्यर्थः।

(थ) इतः प्रागेव मया "गच्छतु" इत्युक्तं, परन्तु अधुनाऽपि किमसौ न गतः वराकः ? मदीयोपदेशोपेक्षणाच्च अस्य शकारकृतनिर्य्यातनमवश्यम्भावीति वितर्कयन् विटः सखेदमाह, हन्तेति।—न गतः !!—स्थानान्तरं न यातः !! न पलायित इत्यर्थः श्रमणक इति शेषः ; यद्वा,—न गतः !!—केनापि सार्द्धं परामर्शं कर्त्तुं स्थानान्तरं न यातः !! शकार इति शेषः ; शकारश्चेत् केनापि सार्द्धं परामर्शं कर्त्तुं स्थानान्तरं गतः स्यात्, तदा तस्मिन्नेवावसरे श्रमणकोऽपि पलायितुं समर्थः स्यात् इति विटस्याशयः।

भिक्षुः। णमो बुद्धश्श, शलणागदम्हि। *

विटः। गच्छतु।

शकारः। णं शमएण। † (द)

विटः। कीदृशः समयः?

शकारः। तधा कद्दमं फेलदु, जधा पाणिअं पंकाइलं ण होदि; अधवा, पाणिअं पुंजीकदुअ (ध) कद्दमं फेलदु। ‡

विटः। अहो! मूर्खता!!—

विपर्य्यस्त-मनश्चेष्टैः शिलाशकल-वर्ष्मभिः।
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुन्धरा॥ ६॥

---

* नमो बुद्धाय, शरणागतोऽस्मि। † ननु समयेन।

‡ तथा कर्द्दमं क्षिपतु, यथा पानीयं पङ्काविलं न भवति; अथवा, पानीयं पुञ्जीकृत्य कर्द्दमं क्षिपतु।

---

(द) समयेन—नियमेन, शपथं कृत्वा इत्यर्थः।

(ध) पङ्काविलं—पङ्केन—कर्द्दमेन, आविलं—कलुषं, कर्द्दमाक्रान्तमित्यर्थः। पुञ्जीकृत्य—राशीकृत्य, पिण्डीकृत्य इत्यर्थः।

कर्द्दमनिक्षेपेणापि सलिलस्य अनाविलत्वसाधनरूपं तथा पानीयपुञ्जीकरणरूपं शकारस्य युक्तिविरुद्धं वाक्यं निशम्य मूर्खाणां पृथिव्याः भारभूतत्वमाह विटः, विपर्य्यस्तेति। —विपर्य्यस्ता—विपरीता, लोकविरुद्धेत्यर्थः, मनसः—चेतसः, चेष्टा—व्यापारः येषां तैः, अनुचितमनोवृत्तिविशिष्टैरित्यर्थः, शिलाशकलानि—प्रस्तरखण्डानि इव, वर्ष्माणि—शरीराणि येषां तैः, ("शरीरं वर्ष्म विग्रहः" इत्यमरः) अतिनिर्द्दयतया पाषाणवत् कोमलतालेशविरहितैरिति भावः, तथा मांसवृक्षैः,—मांसस्य मांसनिर्म्मिता वा वृक्षाः, —तरवः तैः, मांसमयैः पादपैः, अतिस्थूलपिशितात्मकतया विवेकलेशशून्यैरित्यर्थः, मूर्खैः,—बालिशैः; वसूनि धारयतीति वसुन्धरा—पृथिवी, [रत्नप्रसूरिति ध्वन्यते] भाराक्रान्ता—भारनिपीडिता, सभारा इत्यर्थः; ईदृशाः मूर्खाः केवलं पृथिव्याः भारभूता एवेति भावः; वृथैवैते जीवन्ति तेषां सत्तया काऽप्युपकृतिर्नास्ति, प्रत्युतापकृतिरेवेत्याशयः। अत्रोपमेयभूते मांसपिण्डे वृक्षतादात्म्यारोपात् रूपकालङ्कारः अप्रस्तुतमूर्खसामान्यात् प्रस्तुतस्य मूर्खविशेषस्य शकारस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारेण सङ्कीर्य्यते। पथ्यावक्त्रं वृत्तम्॥ ६॥

भिक्षुः। [ नाट्येन आक्रोशति ( न ) ]।

शकारः। किं भणादि ? *

विटः। स्तौति भवन्तम्।

भिक्षुः। [ तथा कृत्वा ( प ) निष्क्रान्तः ]।

शकारः। शुणु शुणु, पुणो वि शुणु। †

विटः। काणेलीमातः ! पश्योद्यानस्य शोभाम्,—

अमी हि वृक्षाः फलपुष्पशोभिताः,
कठोर-निष्पन्द-लतोपवेष्टिताः।
नृपाज्ञया रक्षिजनेन पालिता
नराः सदारा इव यान्ति निर्वृतिम् ॥ ७ ॥

शकारः। शुट्ठु भावे भणादि। ‡

* किं भणति ? † शृणु शृणु, पुनरपि शृणु। ‡ सुष्ठु भावो भणति।

( न ) आक्रोशति—शपति।

( प ) तथा कृत्वा—अभिशप्य इत्यर्थः।

शकारस्य भिक्षुलग्नं चित्तमन्यतः शृङ्गाररसोद्दीपके वस्तुनि निवेशयितुं वाग्मी विटः उद्यानशोभां विवृणोति, अमी इति।—फलपुष्पशोभिताः,—शस्यकुसुमभूषिताः, [ एतेन तेषामुत्कटयौवनवत्तया उपभोगक्षमत्वं सूच्यते ] तथा कठोरं—दृढं यथा तथा, निष्पन्दाभिः,—निश्चलाभिः, आलिङ्गनोत्कण्ठततया स्थिराभिरित्यर्थः, लताभिः,—व्रततिभिः, उपवेष्टिताः,—आश्रिताः, निर्दयमालिङ्गिता इत्यर्थः, नृपाज्ञया—राजानुमत्या, रक्षिजनेन—उद्यानरक्षकैरित्यर्थः [ अत्र जातावेकवचनम् ] पालिताः,—रक्षिताः, दुर्जनादिकृतोपद्रवादिति शेषः, अमी—एते, पुरतः दृश्यमानाः इत्यर्थः, वृक्षाः,—तरवः, सदाराः,—सस्त्रीकाः, नरा इव—गृहिणः मानवा इव, निर्वृतिं—परमसुखं, यान्ति—लभन्ते ; नरपक्षे,—गृहिणः पुत्रपौत्रादिपरिजनसङ्कुलाः, कठोरं—निर्भरं यथा तथा, निष्पन्दया—अत्यन्तानुरागभरादलसया, लतया—गृहिण्या इति भावः, उपवेष्टिताः,—समालिङ्गिता इत्यर्थः सुखेन कालं नयन्ति इत्यर्थपरत्वेन योजनीयः ; गृहिप्रतीकाशा एते किल उद्यानपादपाः इत्येवात्राध्यवसीयते। अत्र वृक्षाणां नरैः सहावैधर्म्यसाम्यबोधात् उपमाऽलङ्कारः, किञ्च वृक्षे नायकस्य लतायाञ्च नायिकाया व्यवहारसमारोपात् समासोक्तिश्चेत्यनयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः। वंशस्थविलं वृत्तम् ॥ ७ ॥

बहुकुसुम-विचित्तिदा अ भूमी,
कुसुम-भलेण विणामिदा अ लुक्खा।
दुम-शिहल-लदा अ लंबमाणा,
पणशफला विअ वाणला ललंति * ॥ ८ ॥

बहुकुसुमविचित्रिता च भूमिः, कुसुमभरेण विनामिताश्च वृक्षाः।
द्रुमशिखरलताश्च लम्बमानाः, पनसफलानीव वानरा ललन्ति ॥

विटोक्तमनुमोदयन् शकारोऽपि स्वबुद्ध्यनुरूपमुद्यानशोभां वर्णयन्नाह, बह्विति।— भूमिः—उद्यानमध्यगतः भूप्रदेशः, बहुभिः,—नानाप्रकारैः, नानावर्णैर्वा, कुसुमैः,— पुष्पैः, वि—विशेषेण, चित्रिता—भूषिता, चित्रफलकीकृता इवेत्यर्थः, [ चित्रयतिः चौरादिकात् निष्ठा ] कुसुमानां—पुष्पाणां, भरेण—आधिक्येन, विकसितकुसुम-सम्भारयोगादित्यर्थः, वृक्षाः—द्रुमाः, विनामिताः,—अवनीतललग्नीकृताः सन्तः, शोभन्ते इति शेषः तथा, द्रुमशिखरलताः,—द्रुमाणां—वृक्षाणां, शिखरे—अग्रभागे, संसक्ताः या लताः,—प्रतानिन्यः, वृक्षाणामुपरि आरूढलताप्रताना इत्यर्थः, ताः, लम्बमानाः,—अधःप्रसरणशीलाः, सन्तीति शेषः, [ "द्रुमशिखरलताऽवलम्बमानाः" इत्यपि, "दुमशिहल" इत्यादिप्राकृतस्य संस्कृतं साधुतया रोचतेऽस्मभ्यं, द्रुमशिखर-लतासु—वृक्षाग्रसंलग्नवल्लीषु, अवलम्बमानाः,—दोलायमानाः इति तदर्थः, वानरा इत्यस्य विशेषणमेतत्। अत्र यद्यपि "शिरोऽग्रं शिखरं वा ना" इत्यमरोक्तेः शिखर-शब्दस्यैव वृक्षाग्रबोधकता, एवञ्चाधिकस्य द्रुमपदस्योपादानादधिकपदत्वदोषावसरः इति शङ्क्यते, तथापि "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरोक्तेः पर्वताग्रभाग-बोधभ्रमनिरासार्थमेव शाब्दबोधसौकर्याय "द्रुम" इति सिद्धपदोपादानं कृतमिति वेदितव्यम्; तथा चोक्तं—"सान्निध्यतः सिद्धपदस्य वृद्धाः" इति मुक्तावल्याम् ] पनस-फलानीव—कण्टकिफलाख्यफलविशेषाः इव, वानराः,—कपयः, ललन्ति—शोभन्ते, वर्त्तन्ते इत्यर्थः, अत्र इति शेषः। [ ललन्तीत्यपपाठः, ललयन्ति लालयन्तीति वा साधुः, "ललन्ति" इत्यस्य लोलन्ति इति वा संस्कृतं, तथात्वे लोलतेः भौवादिकस्यैतत् रूपम्। अत्र नमतेः णिचि ह्रस्वत्वस्य वैकल्पिकविधानात् "नमयति" "नामयति" च रूपद्वयस्य सिद्धत्वेऽपि, उपसर्गपूर्व्वकत्वे ह्रस्वत्वस्य नित्यविधानात् विपूर्व्वकात् नमयतेः निष्ठायां "विनमिताः" इति रूपस्यैव साधुतया आशङ्कितं च्युतसंस्कारत्वं न विचारसहं तथा हि,—"ज्वलह्वलह्मलनमामनुपसर्गाद्वा" (ग०) इति सूत्रस्य वृत्तौ "अनुपसृष्टे तु

विटः। काणेलीमातः! इदं शिलातलमध्यास्यताम्। (फ)

शकारः। एशेम्हि आशिदे। (ब) [इति विटेन सह उपविशति]

भावे! अज्ज वि तं वशंतशेणिअं शुमलामि; दुज्जणवअणं विअ हडआदो ण ओशलदि। * (भ)

* एषोऽस्मि आसितः। भाव! अद्यापि तां वसन्तसेनां स्मरामि, दुर्जनवचनमिव हृदयान्नापसरति।

नित्यं मित्त्वम्" इति नियम्य स्वयमेव पुनः संशयमुद्भाव्य च सिद्धान्तितं भट्टोजिदीक्षितेन, तथा हि,—"कथं तर्हि प्रज्वालयति, उन्नामयतीति? घटन्तात् तत्करोतीति णौ" इति; एवमत्रापि "विनामाः कृताः इति विनामिताः" इति तत्करोतीत्यर्थे ण्यन्तात् कर्म्मणि क्तप्रत्ययेनास्य साधुत्वसम्भवादिति सुधीभिर्विभाव्यम्]। अत्र कुसुमभरावनतवृक्षेषु परिक्रीडमानानां वानराणां पनसफलत्वेन उत्कटैककोटिकसंशयोदयात् उत्प्रेक्षाऽलङ्कारः। पुष्पिताग्रा वृत्तम्॥ ८॥

(फ) शिलातलमिति "अधिशीङ्स्थासां कर्म्म" (१।४।४६ पा०) इति अधिकरणस्य कर्म्मताऽतिदेशः।

(ब) आसितः इति "गत्यर्थाकर्म्मकश्लिषशीङ्स्थास—" (३।४।७२ पा०) इति आसेः कर्त्तरि निष्ठा।

(भ) ["ओशलदि" इत्यत्र "ओदलदि" इति पाठान्तरे—"अवतरति" इति संस्कृतस्य अपगच्छति इत्यर्थः] दुर्जनवचनमिव—असज्जनवाक्यवत्। हृदयात्—चेतसः। नापसरति--नापगच्छति, वसन्तसेनेति शेषः यथा दुर्ज्जनवचनमतिपरुषतया अरुन्तुदत्वेन असहनीयत्वादीहमानेनापि प्राकृतजनेन आ प्रतिकारात् विस्मृत्या चेतसो नापसार्य्यते, तथा इयमपि वसन्तसेना बलात् मम हृदयराज्यमधिकृत्य नियतमुद्दृजयन्ती मयाऽतिप्रयत्नेनाप्यपसारयितुं न शक्यते इति पर्य्यवसितार्थः। यो हि यज्जातीयः यत्समाजसङ्गतश्च, स हि तदनुरूपमुत्कर्षमपकर्षञ्चाविचार्य्यैव उपमिनोति इति दृश्यते; अतः निकृष्टचरित्रेण शकारेण उपमेयीभूताया उत्कृष्टाया अपि वसन्तसेनायाः अत्यपकृष्टस्य दुर्ज्जनवचसः उपमानत्वेन उपन्यासः कृत इति उपमानगतन्यूनत्वख्यापनरूपानुचितार्थत्वदूषणं शकारवक्तृत्वात् भूषणमेवेति सुधीभिर्विभाव्यम्। अत्यन्तस्पर्शोऽपि नीचजनोक्तयः महतां पाथोनिधिकल्पमगाधं चेतः आविलयितुं न शक्नुवन्ति इति प्रकृतम्, एतद्धि मौर्ख्यातिशय्यात् शकारः विपर्य्ययेणाभ्यधात्; लोकविरुद्ध-

विटः। [स्वगतम्] तथा निरस्तोऽपि (म) स्मरति ताम्।
अथवा,—स्त्रीभिर्विमानितानां कापुरुषाणां विवर्द्धते मदनः।
सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति॥ ६॥

शकारः। भावे! का वि वेला थावलअ-चेडश्श भणिदश्श "पवहणं गेण्हिअ लहुं लहुं आअच्छे" त्ति, अज्ज वि ण आअच्छदि त्ति, चिलम्हि बुभुक्खिदे, मज्झण्हे ण शक्कीअदि पादेहिं गंतुं, (य) ता पेक्ख पेक्ख, *—

* भाव! काऽपि वेला स्थावरकचेटस्य भणितस्य "प्रवहणं गृहीत्वा लघु लघु आगच्छ" इति, अद्यापि न आगच्छतीति, चिरमस्मि बुभुक्षितः, मध्याह्ने न शक्यते पादाभ्यां गन्तुम्; तत् पश्य पश्य,—

---

मेतत्तु शकारवक्तृत्वेन सहनीयम्। अत्र जनप्रसिद्धप्रौक्तार्थस्य प्रमाणभूततया उपन्यस्यते वङ्गीयानामाभाणकः, यथा हिं,—"नीच यदि उच्च भाषे, सुबुद्धि उड़ाय हासे" इति।

(म) तथा—तेन प्रकारेण। निरस्तः,—दूरीकृतः, अवज्ञया परित्यक्त इत्यर्थः। स्त्रीभिर्विमानितयोः सत्पुरुषकापुरुषयोः भेदप्रदर्शनमुखेन शकारस्य कापुरुषतां प्रतिपादयन्नाह, स्त्रीभिरिति।—स्त्रीभिः—नारीभिः, विमानितानाम्—अनादृतानां, तिरस्कृतानामित्यर्थः कापुरुषाणां,—कुपुरुषाणां, निर्वीर्य्याणामित्यर्थः, ["कापुरुषाणाम्" इत्यत्र "कुगतिप्रादयः" (२।२।१८ पा०) इति पुरुषशब्देन कुशब्दस्य नित्यसमासे "विभाषा पुरुषे" (६।३।१०६ पा०) इति पाक्षिकः काऽऽदेशः] मदनः,—कामः, विवर्द्धते—विशेषेण वृद्धिं गच्छति; तु—किन्तु, सत्पुरुषस्य—उत्तमपुरुषस्य, दृढचित्तस्य इत्यर्थः स्त्रीभिर्विमानितस्येति वचनविपरिणत्या पूर्वेण अन्वयः, स एव—मदन एवेत्यर्थः, मृदुः—स्वल्पः दुर्बल इत्यर्थः भवति—जायते; वा—अथवा, नैव भवति—नैव जायते, स्त्रीकृततिरस्कारेण महासत्त्वस्यातिगम्भीरस्य आत्मसम्मानज्ञानशौर्योद्रेकजनितविरक्त्युदयादिति भावः। अत्र अप्रस्तुतकापुरुषसामान्यात् प्रस्तुतस्य कापुरुषविशेषस्य शकारस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। आर्य्या वृत्तम्॥ ९॥

(य) प्रवहणं—शकटम्। गृहीत्वा—आदाय। लघु लघु—अतिसत्वरमित्यर्थः। आगच्छ—एहि। इति भणितस्य—उक्तस्य, मयेति शेषः। स्थावरकचेटस्य—तदाख्यशकटचालकस्य। काऽपि—सुदीर्घा इत्यर्थः। वेला—समयः अतीता इति शेषः। चिरं—दीर्घकालं यावदित्यर्थः। बुभुक्षितः,—भोजनलिप्सुः, क्षुधित इत्यर्थः। पादाभ्यां गन्तुं—क्रमितुमित्यर्थः, पादैकमपि चलितुम् इति यावत्; अयमर्थं बुभु-

णहो-मज्झ-गदे शूले दुप्पेक्खे कुविद-वाणल-शलिच्छे।
भूमी दढ़-शंतत्ता, हदपुत्तशदे व्व गंधाली * ॥ १० ॥

विटः। एवमेतत्,—

छायासु प्रतिमुक्त-शष्पकवलं निद्रायते गोकुलं,
तृष्णार्त्तैश्च निपीयते वनमृगैरुष्णं पयः सारसम्।

* नभोमध्यगतः सूरो दुष्प्रेक्ष्यः कुपितवानरसदृशः।
भूमिर्दृढसन्तप्ता हतपुत्रशतेव गान्धारी॥

स्थितोऽपि मध्याह्नसूर्यकिरणसन्तप्तायां भूमौ पादाभ्यां गृहं गत्वा क्षुधामपनेतुं न शक्नोमीति भावः।

पादचारेण गमनायोग्यत्वं ज्ञापयितुं मध्याह्नं विवृणोति, नभ इति।—कुपित-वानरेण—क्रुद्धकपिना, सदृशः,—समानः, ("वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च—" इत्यमरः) दुष्प्रेक्ष्यः,—दुर्दर्शनः, सूरः,—सूर्यः, ("सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः) नभोमध्यगतः,—गगनमध्य-मारूढः, तथा भूमिः,—पृथिवी, हतं—मृतं, पुत्राणां—सुतानां, शतं—शतसङ्ख्यक-पुत्रा इत्यर्थः, यस्याः तादृशी, गान्धारीव—धृतराष्ट्रपत्नीव, दुर्योधनादिशतपुत्रजननीवेति यावत्, दृढम्—अत्यर्थं, सन्तप्ता—उष्णा, पीड़िता इत्यर्थः। उपमाद्वयम्। कुपितानां हि कपीनां मुखमण्डलं कथञ्चिदरुणाभं भवति, शोकार्त्तानां हि चेतः वियोगनिपीड़िततया सन्तप्तं दृश्यते, ताभ्याञ्च साम्यं सूरस्य भूमेश्च सन्तप्तायाः साम्यकथनात् न दोषः, प्रत्युत गुण एव कुपितवानरपदस्य ग्राम्यत्वेन शकारस्य वक्तुरधमत्वप्रत्यायकत्वात्; तथा हि दर्पणकारः,—"ग्राम्यत्वमधमोक्तिषु" "गुण इत्येव" इति च तदव्याख्या, तथा च वक्तॄणां बोद्धृणाञ्चाधमत्वे प्रतिपादयितव्ये, तद्गृहीतकत्वाच्चैतेषां वचसां सुशोभनत्वमेव वेदितव्यम्। आर्य्या वृत्तम्॥ १०॥

शकारोक्तं मध्याह्नसन्तापवर्णनमनुमोदयन् विटोऽपि मध्याह्नसन्तापक्लिष्टानां जनानां तात्कालिकावस्थोपवर्णनप्रसङ्गेन मध्याह्नं वर्णयति छायास्विति।—गोकुलं—गोवृन्दं, गवां समूहः इत्यर्थः, ("—गोकुलन्तु गोधनं स्यात् गवां व्रजे" इत्यमरः) छायासु—अनातपेषु, प्रतिमुक्ताः,—परित्यक्ताः, शष्पकवलाः,—अर्द्धोपभुक्तनवतृणग्रासाः येन, यत्र वा, तद्यथा तथा, [क्रियाविशेषणं] निद्रायते—अनिद्रावत् निद्रावद्भवतीत्यर्थः; [निद्राशब्दस्य भृशादिगणे पाठात् अर्थे क्यङि लटि रूपम्; यद्यपि निद्राशब्दः धर्म-

सन्तापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते,
तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित् संस्थितम् ॥ ११ ॥

शकारः। भावे !—

शिलशि मम णिलीणे भाव ! शुज्जश्श पादे,
शउणि-खग-विहंगा लुक्खशाहाशु लीणा।

* शिरसि मम निलीनो भाव ! सूर्य्यस्य पादः,
शकुनिखगविहङ्गा वृक्षशाखासु लीनाः।

वचनः तथाऽपि धर्म्मिपरत्वेन अनिद्रावत् निद्रावद्भवतीत्यर्थे शब्दशक्तिबलादेव प्रयुक्ताः, तथा हि मुग्धबोधे टीकायां दुर्गादासः,—"अत्र ये निद्रादयः, ते यद्यपि धर्म्मवचनाः, तथाऽपि शब्दशक्तिस्वभावात् धर्म्मिवचना एव; तेन निद्रायते जनः अनिद्रावान् निद्रावान् भवतीत्यर्थः" । गाव मध्याह्नतापेन अत्यर्थं प्रपीड़िताः सन्तः मुखभंशिभिः अर्द्धावलीढबालतृणैः तरुतलमधिकरन्तः वृक्षच्छाये निषण्णाः निद्रां यान्तीति भावः; वनमृगैः,—उद्यानीयहरिणैः, आरण्यपशुभिर्वा, तृषार्त्तैः,—पिपासाऽऽकुलैः सद्भिः, उष्णं—तप्तम्, आतपसंयोगादिति भावः, सरस इदं सारसं—सरोवरीयं, पयः — जलं, निपीयते—निःशेषेण पीयते; पिपासार्त्ताः मृगाः शीतलजलाभावात् उष्णमपि पयः साग्रहं पिबन्तीत्यर्थः, तथा नरैः,—जनैः, सन्तापात्—औष्ण्यात् अतिशङ्कितैः, —अतिभीतैः सद्भिः, नगरीमार्गः,—नगर्य्याः,—उज्जयिन्या इत्यर्थः. मार्गः.—पन्थाः, न सेव्यते—न आश्रीयते, पथा न गम्यते इत्यर्थः; अवश्यकर्त्तव्यमपि परित्यज्य गृहमेव आश्रित्य तिष्ठन्ति नागरिका इति भावः; अतः मन्ये—सम्भावयामीत्यर्थः, यथा प्रवहणं —शकटं, तप्ताम्—उष्णां, भूमिं—धराभागम्, अपास्य—त्यक्त्वा. क्वचित्—छायाप्रधाने प्रदेशे इति भावः, संस्थितम्—अवस्थितम्। अत्र चतुर्थपादगतस्य किञ्चिद्देशे यान-संस्थितिरूपकार्य्यस्य समर्थकत्वेन पादत्रयगतानां कारणानामुपन्यासात् कारणैः कार्य्य-समर्थनरूपोऽर्थान्तरन्यासालङ्कारः, अपि च यानस्य किञ्चिद्देशसंस्थितत्वेऽपि, मन्ये इति उत्प्रेक्षावाचकपदप्रयोगमहत्तसंस्थितत्वविषयकोत्कटैककोटिकसंशयोदयात् क्रियागतोऽय-मुत्प्रेक्षाऽलङ्कारश्चैतनयोरङ्गाङ्गिभावेन सङ्करः; तौ च गोकुलादीनां स्वस्वक्रियाणां यथायथमुपवर्णनादुदीयमानेन स्वभावोक्त्यलङ्कारेण सङ्कीर्य्येते। शार्दूलविक्रीड़ितं वृत्तम् ॥ ११ ॥

शकारोऽपि प्रोक्तवर्णनेनापरितुष्य पुनः मध्याह्नं वर्णयति, शिरसीति।—हे भाव।

णल-पुलिश-मणुश्शा उण्हदीहं शशंता
घल-शलण णिशण्णा आदवं णिव्वहंति * ॥ १२ ॥

भावे! अज्ज वि शे चेडे णाअच्छदि। अत्तणो विणोदण-णिमित्तं किं पि गाइश्शं। [इति गायति] भावे! भावे! शुदं तुए जं मए गाइदं? *

विटः। किमुच्यते!! गन्धर्वो (र) भवान्।

शकारः। कधं गंधव्वे ण भविश्शं? †—

नर-पुरुष-मनुष्या उष्णदीर्घं श्वसन्तो
गृहशरण-निषण्णा आतपं निर्व्वहन्ति ॥

* भाव! अद्यापि स चेटो न आगच्छति। आत्मनो विनोदननिमित्तं किमपि गास्यामि। भाव! भाव! श्रुतं त्वया यन्मया गीतम्?

† कथं गन्धर्व्वो न भविष्यामि?—

—विद्वन्! सूर्य्यस्य—दिवाकरस्य, पादः,—किरणः, मम—मे, शिरसि—मस्तके, निलीनः,—पतितः, शकुनिखगविहङ्गाः,—पक्षिणः, वृक्षशाखासु—तरुविटपान्तरेषु, लीनाः,—ताभिः सह एकीभूय अवस्थिताः, प्रखररश्मिसन्तापं सोढमशक्नुवन्तः तरु-कोटरेषु विटपान्तरालेषु च निलीनाः निर्भरं सुप्ता वा इत्यर्थः, नरपुरुषमनुष्याः—मानवाः, उष्णं—तप्तं च, तत् दीर्घं—बहुसमयं व्याप्य इत्यर्थः, श्वसन्तः,—श्वासं त्यजन्तः, गृहशरणानि—गृहाः, तत्र निषण्णाः,—उपविष्टाः सन्तः, आतपं—रौद्र-सन्तापं, निर्वहन्ति—अतिवाहयन्ति, आतपं विफलतां नयन्तीत्यर्थः; सर्वे यथा शीतलस्थानमासाद्य आतपजक्लेशमपनयन्ति, तथैवेदानीं वयमपि आतपक्लिष्टचित्त-विनोदनार्थं किमपि समारभामहे इत्यभिप्रायः। अत्र "शकुनिखगविहङ्गाः" "नरपुरुष-मनुष्याः" तथा "गृहशरणानि" इति एकपर्य्यायकबहुशब्दप्रयोगः शकारवचनान्न दोषावह इति। मालिनीच्छन्दः ॥ १२ ॥

(र) गन्धर्व्वः,—नृत्यगीतादिपरायणः देवयोनिविशेषः; गन्धर्व्वाणां देव-गायनत्वात्, नृत्यगीतादिषु नैपुण्याधिक्यमावेदयितुं लोकेऽस्मिन् यः कश्चित् सुगायनो भवति, स गन्धर्वैरुपमीयते इति भावः।

हिंगुज्जले जीलकभद्दमुत्थे वचाह गंठो शगुड़ा श शुंठी।
एशे मए शेविदे गंधजुत्ती कधं ण हग्गे मधुलश्शलेत्ति ? * ॥१३॥

भावे ! पुणो वि दाव गाइश्शं [ तथा करोति ] । भावे ! भावे !
शुदं तुए जं मए गाइदं ? †

विटः। किमुच्यते !! गन्धर्व्वो भवान्।

शकारः। कधं गंधव्वे ण भवामि ? ‡—
हिंगुज्जले दिण्णमलोचचुण्णे वग्घालिदे तेल्लघिएण मिश्शे।
भुत्ते मए पालहुदोअमंशे, कधं ण हग्गे मधुलश्शलेत्ति ? § ॥१४॥

---

* हिङ्गूज्ज्वला जीरकभद्रमुस्ता वचाया ग्रन्थिः सगुडा च शुण्ठी।
एषा मया सेविता गन्धयुक्तिः कथं नाहं मधुरस्वर इति ? ॥

† भाव ! पुनरपि तावत् गास्यामि। भाव ! भाव ! श्रुतं त्वया यन्मया गीतम् ?

‡ कथं गन्धर्वो न भवामि ?—

§ हिङ्गूज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतेन मिश्रम्।
भुक्तं मया परभृतीयमांसं, कथं नाहं मधुरस्वर इति ? ॥

स्वस्य मधुरस्वरत्वे हेतुमाह, हिङ्गिति।—हिङ्गूज्ज्वला – हिङ्गुभिः,—हिङ्गु निर्य्यासैः, उज्ज्वला—सुगन्धिः, प्रभूतहिङ्गुसहिता इत्यर्थः, जीरकभद्रमुस्ता—जीरक इति मुस्त इति च सुकण्ठसम्पादनौषधिद्रव्यविशेषः, भद्रमुस्तं – कैवर्त्तमुस्तकं, "नागरमुता" इति ख्यातः मुस्तकभेदः, तद्वतीत्यर्थः, [ अर्श आदिभ्यः मत्वर्थीये अचि सैत्वं ज्ञेयम् ] ; वचायाः,—तदाख्यस्य औषधिद्रव्यविशेषस्य, ग्रन्थिः,—काण्डस्य अङ्गविशेषः, सगुड़ा—गुड़मिश्रिता, शुण्ठी—प्रक्रियासिद्धः शुष्कार्द्रकः, ( "शुंठ" इति ख्यातः कन्दविशेषः ) मया—शकारेण इत्यर्थः, एषा—पूर्व्वोक्ता इत्यर्थः, गन्धयुक्तिः,—गन्धेन युक्तिः,—योगः यस्याः सा, सुगन्धिद्रव्यविशेषमिश्रिता इति भावः, सेविता—भुक्ता इत्यर्थः, अतः अहं कथं – केन हेतुना, मधुरस्वरः,—श्रवणतर्पणध्वनिः, सुकण्ठ इत्यर्थः, न, भवेयमिति शेषः। उपजातिः वृत्तम् ॥ १३ ॥

सुकण्ठत्वे हेत्वन्तरमाह, हिङ्गिति।—हिङ्गु—तदाख्यनिर्य्यासविशेषः, तेन उज्ज्वलं—वासितं, प्रभूतहिङ्गुसुरभीकृतमित्यर्थः, दत्तं—प्रक्षिप्तं मरिचानां चूर्णं—पिष्टं रजः यत्र तत् ; आघ्रियते अनेन इति आघारः,—घृतं, [ सः अस्मिन्नस्तीत्यर्थे इतचि सिद्धम् ; विशेषेण आघारितं – व्याघारितं – घृतसिक्तं, घृतपक्वमित्यर्थः, यद्वा,—

भावे ! अज्जवि चेडे णागच्छदि । *

विट: । स्वस्थो भवतु भवान्, सम्प्रति एव आगमिष्यति ।

[ तत: प्रविशति प्रवहणाधिरूढ़ा वसन्तसेना चेटश्च ] ।

चेट: । भीदे क्खु हग्गे, मज्झण्हिके शुज्जे, ( ल ) मा दाणिं कुविदे लाअशाल-शंठाणे हुविश्शदि, ता तुलिदं वहामि । जाध गोणा ! जाध । †

वस । हद्धी ! हद्धी ! ण क्खु वड्ढमाणस्स अअं सर-संजोओ !! किं ण्णेदं !! किं क्खु अज्जचारुदत्तेण वाहण-पड़िस्समं परिहरंतेण अण्णो मणुस्सो अण्णं पवहणं पेसिदं भविस्सदि ? फुरदि दाहिणं लोअणं, वेवदि मे हिअअं, सुण्णाओ दिसाओ, सव्वं ज्जेव विसंठुलं ( व ) पेक्खामि । ‡

* भाव ! अद्यापि चेटो नागच्छति ।

† भीत: खलु अहं, माध्याह्निक: सूर्य्य:, मा इदानीं कुपितो राजश्यालसंस्थानको भविष्यति, तत् त्वरितं वहामि । यातं गावौ ! यातम् ।

‡ हा धिक् ! हा धिक् ! न खलु वर्द्धमानकस्यायं स्वरसंयोग: !! किं नु इदम् !! किं खलु आर्य्यचारुदत्तेन वाहनपरिश्रमं परिहरता अन्यो मनुष्य:, अन्यत् प्रवहणं प्रेषितं भविष्यति ? स्फुरति दक्षिणं लोचनं, वेपते मे हृदयं, शून्या दिश:, सर्व्वमेव विसंष्ठुलं पश्यामि ।

व्याङ्पूर्व्वकात् जिघर्त्तेः णिचि निष्ठायां रूपं ] तथा, तैलञ्च घृतञ्च तयो: समाहार: तेन तैलघृतेन मिश्रं—पाकानन्तरं पुनरपि तैलघृतसंयुक्तं परभृतीयं—परभृतस्य इदं, कोकिलसम्बन्धीत्यर्थ:, ("वनप्रिय: परभृत: कोकिल: पिक इत्यपि" इत्यमर: ) मांसम् —आमिषं, मया भुक्तं—सेवितं, स्वस्य सुकण्ठत्वसाधनाय पञ्चमराविणं कोकिलमप्यहं भक्षितवान्, अत: अहं कथं मधुरस्वर:,—सुकण्ठ:, न, भवेयमिति शेष: ; शकार-वक्तृत्वेन नैतेषामयौक्तिकवचसां दूष्यत्वमवगन्तव्यम् । उपजाति: वृत्तम् ॥ १४ ॥

( ल ) भीत:,—शङ्कित:, आगमनविलम्बादिति भाव: । माध्याह्निक:,—मध्यमह: मध्याह्न: [ एकदेशिसमास: ] तम् उपगत:, स्वगतिविशेषेण सूर्य्य: गगन-मध्यमारूढ़ इत्यर्थ: ।

( व ) वाहनयो:,—शकटयोजितयो: गवो:, परिश्रमं—क्लेशं, परिहरता—

शकारः। [नेमिघोषमाकर्ण्य] (श) भावे! भावे! आगदे पवहणे। *

विटः। कथं जानासि ?

शकारः। किं ण पेक्खदि भावे? वुड्ढशूअले विअ घुलघुलाअमाणे (ष) लक्खीअदि। †

विटः। [दृष्ट्वा] साधु लक्षितम्; अयमागतः।

शकारः। पुत्तका थावलआ चेडा! आगदे शि? ‡

चेटः। अधइं। §

शकारः। पवहणे वि आगदे? ¶

चेटः। अधइं। **

शकारः। गोणा वि आगदे? †† (स)

चेटः। अधइं। ‡‡

शकारः। तुमं वि आगदे? §§

* भाव! भाव! आगतं प्रवहणम्।

† किं न पश्यति भावः? वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते।

‡ पुत्रक स्थावरक चेट! आगतोऽसि? § अथकिम्।

¶ प्रवहणमपि आगतम्? ** अथकिम्। †† गावावपि आगतौ?

‡‡ अथकिम्। §§ त्वमपि आगतः?

अपनयता, दूरीकर्त्तुमिच्छता इत्यर्थः। मनुष्यः,—शकटचालक इत्यर्थः। स्फुरति—स्पन्दते; दक्षिणलोचनस्पन्दनं नारीणामशुभसूचकत्वेन प्रसिद्धं. वेपते—कम्पते। विसंष्ठुलं—विपरीतम्।

(श) नेमिघोषं—चक्रप्रान्तघर्षणजनितशब्दविशेषम्।

(ष) घुरघुरायमाणं—"घुरघुर" इति अव्यक्तानुकरणशब्दः. अव्यक्तं शब्दं कुर्वाणमित्यर्थः। [अघुरं घुरं भवन्तमिति वाक्ये, कार्ष्णविषये डाचि द्विर्भावादौ घुरघुरा इति स्वरूपात् क्यङि शानचि सिद्धम्]।

(स) "गावावपि आगतौ" इत्यत्र गोशब्दस्य वृषभवाचकत्वेन पुंसि प्रयोगः, सौरभेयीवाचकत्वे तु स्त्रीत्वमेव, अतोऽस्य पुंसि प्रयोगः साधुतया सङ्गच्छते।

चेटः। [सहासम्] भट्टके! अहं पि आगदे। *

शकारः। ता पवेशेहि पवहणं। †

चेटः। कदलेण (ह) मग्गेण? ‡

शकारः। एदेण ज्जेव पाआल-खंडेण। § (क)

चेटः। भट्टके! गोणा मलेंति, पवहणे वि भज्जेदि, हग्गे वि चेडे मलामि ¶

शकारः। अले! लाअ-शालके हग्गे; गोणा मले, अवलं कीणिश्शं; पवहणे भग्गे, अवलं घड़ाइश्शं; तुमं मले, अण्णे पवहण-वाहके हुविश्शदि। **

चेटः। शव्वं उववण्णं हुविश्शदि, हग्गे अत्तणकेलके ण हुविश्शं। †† (ख)

शकारः। अले! शव्वं पि णश्शदु, पाआलखंडेण पवेशेहि पवहणं। ‡‡

---

* भट्टारक! अहमपि आगतः। † तत् प्रवेशय प्रवहणम्।

‡ कतरेण मार्गेण? § एतेनैव प्राकारखण्डेन।

¶ भट्टारक! गावौ म्रियेते, प्रवहणमपि भज्यते, अहमपि चेटो म्रिये।

** अरे। राजश्यालकोऽहम्; गावौ मृतौ, अपरौ क्रेष्यामि; प्रवहणं भग्नम्, अपरं घटयिष्यामि; त्वं मृतः, अन्यः प्रवहणवाहको भविष्यति।

†† सर्व्वमुपपन्नं भविष्यति, अहमात्मीयो न भविष्यामि।

‡‡ अरे! सर्व्वमपि नश्यतु, प्राकारखण्डेन प्रवेशय प्रवहणम्।

---

(ह) कतरेण—परिहृश्यमानयोः द्वयोः मार्गयोः केन इत्यर्थः।

(क) प्राकारखण्डेन—प्राचीरांशेन, अर्द्धभग्नप्राचीरमध्यगतांशेन इत्यर्थः, भग्नांशस्य अतीव स्वल्पपरिसरत्वात् प्रवहणादिगमनायोग्यत्वेनेति भावः।

(ख) सर्वं—सकलं शकटादिकम्, उपपन्नं—लब्धं, भविष्यति—सम्पत्स्यते, तवोपयोग्यन्यशकटादिकं पुनर्भविष्यतीत्यर्थः। मृते मयि भवानन्यं वाहकं लब्धुं शक्नुयादिति सत्यं, परन्तु मत्सदृशः विश्वस्तः यानवाहकः दुर्लभ इत्याशयः। अहम् आत्मीयः,—आत्मसम्बन्धी, भवदुपकारीत्यर्थः. यद्वा,—आत्मनाम्—स्वाभिन्नजीवनानां स्त्रीपुत्रादीनामित्यर्थः, सम्बन्धी—तैः सह संयोगी इत्यर्थः, न भविष्यामि—न सम्पत्स्ये, आत्मभूतानामभिन्नतयैकत्वाहं न स्थास्यामीत्यर्थः, अहं पुनर्न जीविष्यामीति भावः।

चेटः। विभज्ज ले पवहण! शमं शामिणा विभज्ज। (ग) अण्णे पवहणे भोदु, भट्टके गदुअ णिवेदेमि। [प्रविश्य] कधं ण भग्गे!! (घ) भट्टके! एशे उवत्थिदे पवहणे। *

शकारः। ण छिण्णा गोणा? ण मला लज्ज? (ङ) तुमं पि ण मले? †

चेटः। अध इं। ‡

शकारः। भावे! आअच्छ, पवहणं पेक्खामो। भावे!

* विभङ्ग्धि रे प्रवहण! समं स्वामिना विभङ्ग्धि। अन्यत् प्रवहणं भवतु, भट्टारकं गत्वा निवेदयामि। कथं न भग्नम्!! भट्टारक! एतदुपस्थितं प्रवहणम्।

† न छिन्नौ गावौ? न मृताः रज्जवः? त्वमपि न मृतः?

‡ अथ किम्।

(ग) विभङ्ग्धि—भोटय, भग्नं भव इत्यर्थः, समं—सह, ("साकं सार्द्धं सत्रा समं सह" इत्यमरः) स्वामिना—प्रभुणा, शकारेण इत्यर्थः, आत्मजीवनसंशायक-कार्य्येऽपि अकुण्ठं सेवकं नियोजयन्तं शकारं प्रति चेटस्य ईदृशी उक्तिः अतीव क्रोध-व्यञ्जिका ज्ञेया; अथवा,—स्वामिशब्देनात्र रचकोऽभिप्रेतः, शकटरचकेण—शकट-चालकेन इत्यर्थः, दासानां जीवनेन न कस्यापि किमपि प्रयोजनम् अतः तेषां जीवनेऽपि न कश्चित् लाभः, मरणेऽपि न काचित् चतिः इति बुद्ध्या अनुचिता-देशदायकस्य शकारस्य वाक्येन आत्मनि जातधिक्कारस्य चेटस्य सविषादोक्तिरियं बोध्या; यद्वा,—अत्र स्वामिनेति पदेन शकटारोही एव लक्ष्यते, आरोहिसहितमेव त्वं भग्नं भवेत्यर्थः, वसन्तसेनारोहणमजानतः चेटस्य उक्त्या आरोहिण्याः भाविनी विपत्सम्सूचिता।

(घ) दैवगत्या प्रवहणस्य अभग्नत्वात् विस्मितश्चेट आह,—कथं नेति। प्रवहणस्य चाभग्नत्वप्रतिपादनात् विपन्नायाः तस्याः काऽपि चतिर्न भविष्यतीति प्रतीयते; इति भाविनीं वस्तुस्थितिं कथञ्चिदुद्बोधयितुमेव कविना भग्नप्राकारपथेन यानप्रवेशप्रकारः उपन्यस्तः इति बोध्यम्।

(ङ) "ण छिण्णा लज्ज, ण मला गोणा" इति वक्तव्ये शकारवाक्यत्वात् विपर्य्ययो बोध्यः।

तुमं पि मे गुलु पलमगुलु पेक्खीअशि, शादलके अब्भंतलकेत्ति पुलक्कलणीएत्ति ; (च) तुमं दाव पवहणं अग्गदो अहिलुह। *

विटः। एवं भवतु। [ इति आरोहति ]।

शकारः। अधवा चिट्ठ तुमं; तुह बप्पकेलके (छ) पवहणे? जेण तुमं अग्गदो अहिलुहशि? हग्गे पवहण-शामी, अग्गदो प्रवहणं अहिलुहामि। †

विटः। भवानेवं ब्रवीति।

शकारः। जइ वि हग्गे एव्वं भणामि, तधा वि तुह एशे आदले, "अहिलुह भट्टके" त्ति भणिदुं। ‡ (ज)

विटः। आरोहतु भवान्।

* भाव! आगच्छ, प्रवहणं पश्याव:। भाव! त्वमपि मे गुरु: परमगुरु: प्रेक्ष्यसे, सादरकोऽभ्यन्तरक इति पुरस्करणीय इति ; त्वं तावत् प्रवहणमग्रतोऽधिरोह।

† अथवा तिष्ठ त्वम् ; तव पैतृकं प्रवहणम्? येन त्वमग्रतोऽधिरोहसि? अहं प्रवहणस्वामी, अग्रत: प्रवहणमधिरोहामि।

‡ यद्यपि अहमेवं भणामि, तथाऽपि तवैष आदर:, "अधिरोह भट्टारक!" इति भणितुम्।

---

(च) "गुरु: परमगुरु:" इति सम्भाषणं विटस्य अतिमाननीयत्वव्यञ्जकं बोध्यम्। मे—मया, त्वमपि—भवानपि, गुरु:,—पूज्य इत्यर्थ:. परमगुरु:,—पूज्यश्रेष्ठ:, पूज्यादपि पूज्यतम: इत्यर्थ:, प्रेक्ष्यसे—दृश्यसे, अत: सादरक:—आदरणीय इत्यर्थ:, अभ्यन्तरक:,—हृदयङ्गमतया अन्तरङ्ग:, रहस्यबन्धुश्च इत्यर्थ:, इति—इति हेतो:, पुरस्करणीय:,—पुर:,—अग्रे, करणीय:,—कर्त्तव्य:, मया त्वमिति शेष:।

(छ) पैतृकं—पितु: आगतं, पितृसम्बन्धि इत्यर्थ:, इदं प्रवहणं तव पितु: किम्? इति समुदितार्थ:।

(ज) भट्टारक!—प्रभो! अधिरोह—उत्तिष्ठेत्यर्थ:, त्वमेव अग्रे उत्तिष्ठ. भवत: प्राक् न मम अधिरोहणं युक्तमित्यर्थ:. इति भणितुं—वक्तुम्, एष आदर:,—सम्मानन, कर्त्तुमुचित इति शेष: ; यद्वा —भणितुम् इति अन्तर्भूतण्यर्थ:, तेन, भणयितुं —वाचयितुमित्यर्थ:, त्वामिति शेष: "भट्टारक! त्वमेव अग्रे अधिरोह" इति त्वया वाचयितुं मया तव एष आदर: कृत इत्यर्थ:।

शकारः। एशे शंपदं अहिलुहामि। पुत्तका थावलआ चेड़ा! पलिवत्तावेहि (झ) पवहणं। *

चेटः। [परावर्त्त्य] अहिलुहदु भट्टालके। †

शकारः। [अधिरुह्यावलोक्य च शङ्कां नाटयित्वा त्वरितमवतीर्य्य विटं कण्ठे अवलम्ब्य] भावे! भावे! मलेशि मलेशि. पवहणाधिलूढ़ा लक्खशी, चोले वा पड़िवशदि; ता जइ लक्खशी, तदो उभे वि मूशे; अध चोले, तदो उभे वि खज्जे। ‡ (ञ)

विटः। न भेतव्यम्; कुतोऽत्र वृषभयाने राक्षस्याः सञ्चारः? मा नाम ते मध्याह्नार्क-ताप-च्छिन्नदृष्टेः स्थावरकस्य सकञ्चुकां छायां दृष्ट्वा भ्रान्तिरुत्पन्ना? (ट)

---

* एष साम्प्रतम् अधिरोहामि। पुत्रक स्थावरक चेट! परिवर्त्तय प्रवहणम्।

† अधिरोहतु भट्टारकः।

‡ भाव! भाव! मृतोऽसि मृतोऽसि, प्रवहणाधिरूढ़ा राक्षसी, चौरो वा प्रतिवसति; तत् यदि राक्षसी तदा उभावपि मुषितौ; अथ चौरः, तदा उभावपि खादितौ।

(झ) परिवर्त्तय—भ्रामय, मदभिमुखं स्थापय इत्यर्थः।

(ञ) मुषितौ—हृतधनौ। "मूशे, खज्जे" इति विपर्य्ययोक्तिः शकारवाक्यत्वात् अदुष्टा एव।

(ट) भेतव्यं—त्रसनीयम्। वृषभयाने गोशकटे [अत्र यानमात्रमनुक्त्वा वृषभयाने इति कथनात् गवादीनां पवित्रपदार्थतया अपवित्राणां राक्षस-पिशाचादीनां पवित्रसंसर्गासम्भवः; रथादिवृहदाकारयाने तादृशातिभीषणाकारराक्षसीशरीरसमावेशस्य सम्भवेऽपि तादृशाल्पपरिसरवृषभयाने सुतरामसम्भवो वा सूचितः]। सञ्चारः,—आगमनमित्यर्थः। ["सञ्चारः" इत्यत्र "अवसरः" इति पाठान्तरम्]। मा नामेति।—मध्याह्नार्कस्य—माध्यन्दिनसूर्य्यस्य, तापेन—उष्मेण, छिन्ना—विच्छेदं गता, प्रतिरुद्धा इत्यर्थः, दृष्टिः,—नयनं यस्य तादृशस्य, ते—तव, ["छिन्नदृष्टेः" इत्यत्र "खिन्नदृष्टेः" इति पाठान्तरे—खिन्ना - अवसन्ना, क्लिष्टा दृष्टिर्यस्य इत्यर्थः] स्थावरकस्य सकञ्चुकां—सवस्त्राम्, अङ्गसंसक्तवस्त्रसहितामित्यर्थः ("कञ्चुकी वारवाणे स्यात् निर्मोके कवचेऽपि च। वर्द्धापकगृहीताङ्गस्थितवस्त्रे च चोलके॥" इति मेदिनी) छायां—प्रतिबिम्बं,

शकारः। पुत्तका थावलआ चेड़ा! जीवेशि? *

चेटः। अधइं। †

शकारः। भावे! पवहणाधिलूढा इत्थिआ पडिवशदि, ता अवलोएहि। ‡

विटः। कथं स्त्री?—

अवनतशिरसः प्रयाम शीघ्रं
पथि वृषभा इव वर्षताड़िताक्षाः।
मम हि सदसि गौरवप्रियस्य
कुलजन-दर्शन-कातरं हि चक्षुः॥ १५॥

* पुत्रक स्थावरक चेट! जीवसि? † अथकिम्।

‡ भाव! प्रवहणाधिरूढा स्त्री प्रतिवसति तदवलोकय।

---

दृष्ट्वा—निरीक्ष्य, मा नाम—न तावत्, नाम इति सम्भावनायां, भ्रान्तिः,—भ्रमः, उत्पन्ना? जाता? स्थावरकस्य सकञ्चुकच्छायां दृष्ट्वा ते राक्षसीभ्रान्तिरुदियाय न किम्? इत्यर्थः; अपि तु भ्रान्तिरेव जाता इति सम्भावयामीति भावः।

शकारेण प्रवहणाधिरूढां स्त्रियं द्रष्टुमनुरुद्धोऽपि विटः आत्मसम्मानानुरोधेन स्वस्य परस्त्रीदर्शनमकरणीयमित्याह. अवनतेति।—अवनतं—नम्रं, शिरः,—मस्तकं येषां तादृशाः, स्वगौरवरक्षणाय अधोमुखाः सन्तः इत्यर्थः, "नेक्षेत परकामिनीम्" इति वचनादिति भावः, वयमिति शेषः, पथि—मार्गे, वर्षेण—वृष्ट्या, ताड़ितानि—आहतानि, अक्षीणि—नयनानि येषां तथोक्ताः, वारिविन्दुभिरुद्धनयना इत्यर्थः, वृषभाः,—बलीवर्द्दा इव शीघ्रं—सत्वरं, प्रयामः,—इतः अपगच्छामः, [याधातोर्लटि रूपं, युष्मदस्मदोरविशेषणत्वे विलैकत्वयोः बहुत्वमिति नियमेन बहुवचनान्तता]; हि—यतः, सदसि—सभायां, साधुजनसमाजे इति यावत्, गौरवप्रियस्य—आत्मनि बहुमानाकाङ्क्षिणः, मम—मे, चक्षुः,—नेत्रं, कुलजनस्य—कुलवधूरूपस्य्यक्तेः, कुलस्त्रीणामित्यर्थः, दर्शने—अवलोकने, कातरं—विमुखम्; कुलवधूदर्शनस्य साधुजनविगर्हितत्वादिति भावः। इह वेश्याजनगोष्ठीषु बहुमतस्य विटस्येयं विकल्पना वसन्तसेनायां कुलस्त्रीत्वभ्रमकृतैव, आत्मनः सद्वंशसम्भूतत्वविज्ञापिका चेति वेदितव्या। अत्र वर्षताड़िताक्षवृषभेण विटस्य अवैधर्म्यसाम्यकथनादुपमा नाम अलङ्कारः। शीके इक्षिम् प्रयामः इति विसर्गान्तपदे प्रयोक्तव्ये, निर्विसर्गपदप्रयोगकृतसन्धौ विसर्गलोपः

वस। [ सविस्मयमात्मगतम् ] काधं ! मम णअणाणं आआसअरो ज्जेव राअस्सालओ !! ता संसइदम्हि मंदभाआ। एसो दाणिं मम मंदभाइणीए ऊसरक्खेत्तपड़िदो विअ बीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो। ( ठ ) ता किं एत्थ करइस्सं ? *

शकारः। कादले क्खु एशे वुड्डचेडे पवहणं णावलोएदि। भावे ! आलोएहि पवहणं। † ( ड )

विटः। को दोषः ? भवतु एवं तावत्।

---

* कथम् ! मम नयनयोरायासकर एव राजश्यालकः !! तत् संशयिताऽस्मि मन्दभाग्या। एतदिदानीं मम मन्दभाग्याया ऊषरक्षेत्रपतित इव बीजमुष्टिः निष्फलमिहागमनं संवृत्तम्। तत् किमत्र करिष्यामि ?

† कातरः खलु एष वृद्धचेटः प्रवहणं नावलोकयति। भाव ! आलोकय प्रवहणम्।

---

प्रामादिकत्वदर्शनात्, व्याकरणलक्षणहीनत्वेनास्य च्युतसंस्कारतादोषदुष्टत्वं वेदितव्यम् ; लोटि चास्य प्रयोगस्य साधुत्वेऽपि तस्य विध्याद्यर्थविहितत्वेनात्र तथाविधार्थस्य प्रकृतानुपयोगित्वात् तत्प्रयोगस्य वैयर्थ्यमेवेति ध्येयम्। पुष्पिताग्रा वृत्तम् ॥ १५ ॥

( ठ ) आयासकरः,—खेदजनकः, चक्षुःपीड़ादायक इत्यर्थः। संशयिता—संशयः,—सन्देहः, जीवने इति शेषः, जातः अस्याः तादृशी, जीविष्यामि न वा ? इति संशयाकुलाऽस्मि इत्यर्थः ; [ जातार्थे इतचि स्त्रियामाप् यद्वा,—संपूर्व्वकस्य शीङ् इत्यस्य कर्त्तरि निष्ठा, स्त्रियामाप् ]। मन्दभाग्या—मन्दम्—अल्पं, दुष्टम् इत्यर्थः, भाग्यं—नियतिः यस्याः सा, दुर्भगा। ऊषरक्षेत्रपतिता—ऊषरक्षेत्रे—क्षारभूमौ, पतिता—प्रक्षिप्ता, क्षारप्रधानभूमौ उप्तात् बीजात् यथा नाङ्कुरोत्पत्तिः, ममापि मनोरथः तथा विफलः सञ्जात इति भावः।

( ड ) विटोक्त "कुलजनदर्शनकातरम्" इत्यादिकमाकर्ण्य प्रवहणावलोकने विटस्य अनभिप्रायं विविच्य, चेटं तत्र प्रवर्त्तयितुमिच्छन्नपि परिश्रान्तस्य वार्द्धकेन असमर्थस्य तस्य अयोग्यतां मन्यमानः शकार आह, कातर इति।—कातरः,—अस्मदालापमाकर्ण्य भीतः, वार्द्धकात् विवशो वा, एषः वृद्धचेटः,—स्थविरदासः, प्रवहणं नावलोकयति—न पश्यति, अतः भाव ! प्रवहणम् आलोकय, त्वमेव इति शेषः।

शकारः। कधं! शिआला उड्डेंति!! वाअशा वच्चेंति!! ता जाव भावे अक्खीहिं भक्खीअदि, दंतेहिं पेक्खीअदि, (ढ) दाव हग्गे पलाइश्शं। *

विटः। [वसन्तसेनां दृष्ट्वा सविषादमात्मगतम्] कथमये! मृगी व्याघ्रमनुसरति!! (ण) भोः कष्टम्!—

शरच्चन्द्र-प्रतीकाशं पुलिनान्तर-शायिनम्।
हंसी हंसं परित्यज्य वायसं समुपस्थिता!! ॥ १६ ॥

* कथं! शृगाला उड्डयन्ते!! वायसा व्रजन्ति!! तत् यावत् भावोऽक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदहं पलायिष्ये।

(ढ) "शिआला उड्डेंति" इत्यादिविपरीतोक्तिः शकारवाक्यत्वाददुष्टा ज्ञेया। एवं परत्रापि।

(ण) अये! इति विषादे, ("अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" इति मेदिनी)। मृगी-व्याघ्रयोः परस्परभोज्य-भोजकसम्बन्धसत्त्वेन मृग्याः व्याघ्रानुसरणं यथा अतीव विषादजनकं विपत्तिजनकञ्च, वसन्तसेनाया अपि शकाराभिसरणं तथा इति भावः; वसन्तसेनायाः शकाराभिसरणं स्वेच्छाकृतमिति विजानतः विटस्येयमुक्तिः भ्रान्तिकृता वेदितव्या।

वसन्तसेनायाः शकाराभिसरणस्य सर्वथैवायौक्तिकत्वं हंसी-वायसयोः दृष्टान्तद्वारेण आह, शरच्चन्द्रेति।—हंसी—मराली, [वरवर्णिनीति व्यज्यते] शरच्चन्द्रप्रतीकाशं—शारद-शशिनिभं, [सत्कुलरूपयौवनादिसम्पन्नमिति ध्वन्यते] पुलिनान्तरे—जलोत्थित-शुभ्रकोमलसैकतभूमिमध्ये, शेते यः तं, शुभ्रकोमलवालुकाराशिवासिन-मित्यर्थः. [रम्योपवननिशान्तसुखासीनमिति गम्यते] हंसं—श्वेतच्छदं, [सत्पुरुषमिति ध्वन्यते] परित्यज्य—विसृज्य वायसं काकं, [रमणानर्हं कुपुरुषमिति ध्वन्यते] समुपस्थिता—आगता, सेवितुमिति शेषः। वसन्तसेनायाः शकाराभिसरणं हंस्याः वायसकामना इव अतीव विरुद्धसङ्घटनविषयकतया सतां मनःशल्यजनकमिति भावः। अत्र अप्रस्तुतहंसी-हंस-वायसेभ्यः प्रस्तुतानां वसन्तसेना-चारुदत्त-शकाराणा-मुपस्थितेः अप्रस्तुतप्रशंसाऽलङ्कारः, शरच्चन्द्रेण सदृशार्थबललभ्यसाम्यबोधाय जायमाने-नार्थोपमाऽलङ्कारेणासौ सङ्कीर्यते। पथ्यावक्त्रं वृत्तम्॥ १६ ॥

[ जनान्तिकम् ] वसन्तसेने ! न युक्तमिदं, नापि सदृश-मिदम्, ( त )—

पूर्व्वं मानादवज्ञाय द्रव्यार्थं जननीवशात्।

वस। णा। * [ इति शिरश्चालयति ]।

विटः। अशौण्डीर्य्यस्वभावेन वेश्याभावेन मन्यते ॥ १७ ॥

* न।

( त ) जनान्तिकम्—अङ्गुष्ठमनामिकाञ्च अङ्गुलिं कुञ्चितां विधाय प्रसारिता-पराङ्गुलिवर्गेण तदन्यानपरानाच्छाद्य परस्परकथामन्तरा यत् गुह्यभाषणरूपं नाट्यं तदेवेति वेदितव्यम्; ( तल्लक्षणं यथा दर्पणे,—"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम् ॥" इति। त्रिपताक-लक्षणमपि नाट्यशास्त्रे नवमाध्याये चतुःषष्टिकरलक्षणप्रतिपादनावसरे, यथा,—"प्रसारिताः समाः सर्व्वाः यस्याङ्गुल्यो भवन्ति हि। कुञ्चितश्च तथाऽङ्गुष्ठः स पताक इति स्मृत ॥ पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत्। त्रिपताकः स विज्ञेयः—" इति। मन्दारमरन्दे तु किञ्चिद्विशेषः—"तर्ज्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठकः करः। गच्छगः संहताकारप्रसारिततलाङ्गुलिः॥ पताकः स्यादथ यदि वक्रितानामिका-ङ्गुलिः। स एव शोवगस्तर्हि त्रिपताक इतीर्य्यते ॥" इति )। युक्तम्—उचितं, न्याय्य-मित्यर्थः। सदृशम्—अनुरूपमित्यर्थः, तवेति शेषः; चारुदत्तानुरक्तायाः असामान्य-लावण्यवत्याः ते ईदृशं मनार्य्य स्वेच्छाकृताभिसारः अतीव गर्हणीय इति विटस्याशयः।

इदानीं धनलोभात् शकारसदृशायोग्यपुरुषे अभिसारस्य अयुक्ततायां हेतुमाह, पूर्व्वमिति।—पूर्वं—प्राक्, यदा दशसहस्रसुवर्णमुद्रालभ्यः अलङ्कारः प्रवहणञ्च प्रेषितं, तदा इत्यर्थः, मानात्—गर्वात्, अवज्ञाय—प्रत्याख्याय, शकारमिति शेषः, इदानीम्—अधुना, जननीवशात्—मातुरधीनतया. तदुपदेशादित्यर्थः, द्रव्यार्थं—बहुधन-लाभार्थम्, "इह आगताऽसीति मन्यते अस्माभिः" एतावन्त्येव पदान्यत्र सम्यगन्वय-बोधार्थं पूरणीयानि; पूर्व्वमनभिसार्य्यत्वबुद्ध्या सावहेलमिममभद्रं शकारं विहायाथ-दधुः पुनः स्वयङ्गाढमस्य ग्रहणं रूपाभिमानवत्यास्ते सर्व्वथैवानुचितमिति तात्पर्य्यम्; ( मुग्धैतत् वसन्तसेना, विटोक्तिः भ्रान्तिप्रयुक्ता एवेत्यावेदयितुं "न" इत्युक्त्वा शिरश्चालन-च्छलया विटसम्भावनायाः अयथार्थत्वमेव प्रतिपादितवतीति वेदितव्यम् )। अथवा अशौण्डीर्य्यस्वभावेन—गर्व्वशून्यस्वभावेन, अनुदारस्वभावसम्पादकेन वेत्यर्थः, [ शुण्डा—गर्व्वः अस्त्या अस्तीत्यर्थे शुण्डाशब्दात् ईरचि भावे ष्यञि च शौण्डीर्य्यं, तन्नास्ति यस्मिन्

ननूक्तमेव मया भवतीं प्रति—"सममुपचर भद्रे! सुप्रियञ्चाप्रियञ्च"।

वस। पवहण-विपज्जासेण आगदा, सरणागदम्हि। * (थ)

विटः। न भेतव्यं न भेतव्यम्। भवतु, एनं वञ्चयामि। (द) [शकारमुपगम्य] काणेलीमातः! सत्यं राक्षसी एव अत्र प्रतिवसति।

शकारः। भावे! भावे! जइ लक्खशी पडिवशदि, ता कीश ण तुमं मूशेदि? (ध) अध चोले, ता किं तुमं ण भक्खिदे? †

विटः। किमनेन निरूपितेन? यदि पुनरुद्यानपरम्परया (न) पद्भ्यामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात्?

* प्रवहण-विपर्य्यासेनागता, शरणागताऽस्मि।

† भाव! भाव! यदि राक्षसी प्रतिवसति, तत् कथं न त्वां मुष्णाति? अथ चौरः, तदा किं त्वं न भक्षितः?

सः अशौण्डीर्यः, तथाविधः स्वभावो यस्य तेन] वेशभावेन—वेश्यात्वेन हेतुनेत्यर्थः, मन्यते—विज्ञायते, तवागमनमिति शेषः। प्रागुद्दामयौवनमदेन, चारुदत्तानुरागिणी अहं नीचशकारं कथं भजे इति साहजिकगर्व्वोद्रेकेण वा शकारं प्रत्याख्याय, पुनरिदानीं मातुलाड़मया, अर्थगृध्नुनिरभिमानवेश्यास्वाभाव्येन वा धनलाभार्थमिहागताऽसीति सम्भावयामीति समुदितार्थः। पथ्यावक्त्रं वृत्तम्॥ १७॥

(थ) प्रवहणविपर्य्यासेन—शकटव्यतिक्रमेण, स्वशकटभ्रमात्तान्यशकटारोहणेन इति यावत्; नाहमित स्वेच्छया धनलालसया वाऽभिरमयितुमागता, अपि तु चारुदत्तशकटं विभाव्य भ्रमात् शकारशकटमारुह्य अत्रागताऽस्मीत्याशयः। शरणागता—शरणं—रक्षकभूतं भवन्तम्, आगता—प्राप्ता, भवत आश्रयप्रार्थिनी इत्यर्थः।

(द) एनं—शकारं, वञ्चयामि—वस्तुगतिम् अन्यथाकृत्य भाषणेन प्रतारयामीत्यर्थः।

(ध) मुष्णाति—हरति, चोरयति इत्यर्थः।

(न) अनेन—अस्याः राक्षसीत्वे कथं नाहं मुषितः चौरत्वे वा कथं न भक्षित इति विवर्धेण, निरूपितेन—निर्द्धारितेन; यद्वा—अनेन—राक्षसी वा, चोरी वा

शकारः। एव्वं किदे (प) किं भोदि ? *

विटः। एवं कृते व्यायामः सेवितो धुर्य्याणाञ्च परिश्रमः परिहृतो (फ) भवति।

शकारः। एव्वं भोदु। थावलआ चेड़ा! णेह पवहणं। अधवा, चिट्ठ चिट्ठ, देवदाणं बम्हणाणं च अग्गदो चलणेण गच्छामि ? ण हि ण हि, पवहणं अहिलुहिअ गच्छामि ; जेण दूलदो मं पेक्खिअ भणिश्शंति "एशे शे लट्ठिअशाले भट्टालके गच्छदि।" †

विटः। [स्वगतम्] दुष्करं विषमौषधीकर्त्तुम्। (ब) भवतु

---

* एवं कृते किं भवति ?

† एवं भवतु। स्थावरक चेट ! नय प्रवहणम्। अथवा, तिष्ठ तिष्ठ, देवतानां ब्राह्मणानां चाग्रतः चरणेन गच्छामि ? न हि न हि, प्रवहणमधिरुह्य गच्छामि ; येन दूरतो मां प्रेक्ष्य भणिष्यन्ति, "एष स राष्ट्रियश्यालो भट्टारको गच्छति"।

---

इत्येवंरूपेण, निरूपितेन—निर्णीतेन, प्रत्यक्षीकृतेन इत्यर्थः, किम् ?—किं फलम् ? इत्यर्थः, निरूपणं निष्प्रयोजनमिति भावः। उद्यानपरम्परया—आरामश्रेण्या उपवनमार्गेण इत्यर्थः ; (शकारं वक्ष्यमानेन विटेनेयमुक्तिः वसन्तसेनायाः प्रतिरोधं परिजिहीर्षयै-वोपन्यस्तेति वदितव्यम् ; विटो हि शकारसहायकः सन्नपि वसन्तसेनाया अयथोत्पीड़नं कदाऽपि नानुमोदते. अतः छलेन तत्स्थानात् शकारं स्थानान्तरं नेतुम् एवमुप-दिशतीति बोद्धव्यम्)।

(प) एवं कृते—पद्भ्यामेव गते इत्यर्थः।

(फ) व्यायामः,—अङ्गसञ्चालनजनितशारीरिकपरिश्रमविशेषः। सेवितः,—अनुष्ठितः, आचरित इत्यर्थः। धुर्य्याणां—वृषभाणाम्, ("धूर्वहे धुर्य्यधौरेयधुरीणाः सधुरन्धराः" इत्यमरः)। परिहृतः,—अननुष्ठित इत्यर्थः।

(ब) विषं—गरलम्, औषधीकर्तुम्—औषधरूपेण परिणमयितुं, दुष्करं—दुःसाध्यम् ; यथा प्राणनाशकस्य विषस्य हितकरौषधरूपेण परिणमनम् अतीव कष्ट-साध्यं तद्वत् खलस्वभावः मूर्खशकारः वाक्यान्तरेण विमोह्य ततः प्रत्यावर्त्तयितुं दुष्करः इत्यर्थः। यद्वा,—दुष्करं—दुःसाध्यं, केनाप्युपायेन नाशयितुमशक्यमित्यर्थः, विषं—गरलम्, औषधीकर्त्तुम्—औषधप्रयोगेण दूरीकर्त्तुमित्यर्थः, अशक्यमिति शेषः, असाध्य-

एवं तावत्। [प्रकाशम्] काणेलीमातः! एषा वसन्तसेना भवन्तमभिसारयितुमागता।

वस। संतं पावं! संतं पावं! *

शकारः। [सहर्षम्] भावे! भावे! मं पवलपुलिशं मणुश्शं वाशुदेवअं? † (भ)

विटः। अथकिम्।

शकारः। तेण हि अपुव्वा शिली शमाशादिदा; तश्शिं काले मए लोशाइदा, शंपदं पाएशुं पड़िअ पशादेमि ‡ (म)

---

* शान्तं पापम्! शान्तं पापम्!

† भाव! भाव! मां प्रवरपुरुषं मनुष्यं वासुदेवकम्?

‡ तेन हि अपूर्वा श्रीः समासादिता; तस्मिन् काले मया रोषिता, साम्प्रतं पादयोः पतित्वा प्रसादयामि।

---

विषस्य किमपि औषधं नास्तीति भावः। औषधशब्दस्य रोगप्रशमनोपायभूतद्रव्याद्यर्थकत्वेऽपि अत्र लक्षणया तत्साध्यस्वरूपार्थपरत्वं बोद्धव्यम्. एवञ्चौषधापनीतीकर्त्तुमिति फलितार्थः; अनौषधम् औषध कर्त्तुमिति अभूततद्भावार्थे च्वौ रूपम्, औषधीकर्त्तुं दुष्करम् इति क्रियारूपत्वेन वा दुष्करमिति पदस्यान्वयः; दुष्करशब्दस्य विशेषणविधया अन्वये तु अशक्यमिति क्रियापदान्तरमूहनीयम्; तथा च, वसन्तसेनाधर्षणरूपं शकाराभिप्रेतमस्माभिः केनापि छलेन अपनेतुमशक्यमिति विटस्याभिप्रायः। अत्र अतिदारुणविषे औषधरूपताऽऽपादनस्य अतिदुःसाध्यस्वरूपादप्रस्तुतात् अतिविषम-खल-स्वभावस्य शकारस्य सत्स्वभावत्वापादनमतिदुष्करमिति प्रस्तुतार्थस्य प्रतीतेरप्रस्तुत-प्रशंसाऽलङ्कारः।

(भ) प्रवरपुरुषं—श्रेष्ठमानवम्। वासुदेवकं—वासुदेव एवेति वासुदेवकः तं, वासुदेवाभिन्नमित्यर्थः, [अत्र स्वार्थे कन् प्रत्ययः]।

(म) तेन—मामुद्दिश्य इदानीं वसन्तसेनाया अभिसारेण इत्यर्थः, अपूर्व्वा—कदाचिदपि पूर्व्वमप्राप्ता, नवा इत्यर्थः श्रीः,—शोभा लक्ष्मीर्वा सौभाग्यमित्यर्थः, वरस्त्रियाः स्वयमभिसारितया इति भावः समासादिता—प्राप्ता, मयेति शेषः। पूर्व्वं वसन्तसेनया अहं सावहेलं परित्यक्तः, इदानीं यद्यहं पूर्व्वापेक्षया सौभाग्यवान् न भवेयं, तदा वसन्तसेना कदाऽपि मामभिसर्त्तुमप्रार्थितोपगता न भवेदिति भावः;

विटः। साधु अभिहितम्।

शकारः। एशे पाएशुं पडेमि। [इति वसन्तसेनामुपसृत्य] अत्तिके! अंबिके! शुणु मम विस्सत्तिं,*—

एशे पडेमि चलणेशु विशालणेत्ते!
हत्थंजलिं दशणहे! तव शुद्धदंति!।
जं तं मए अवकिदं मदणातुलेण,
तं खम्मिदाशि वलगत्ति! तव म्हि दाशे †॥ १८॥

* एष पादयोः पतामि। मातः! अम्बिके! शृणु मम विज्ञप्तिम्,—

† एष पतामि चरणयोर्विशालनेत्रे! हस्ताञ्जलिं दशनखे! तव शुद्धदन्ति!।
यत्तन्मया अपकृतं मदनातुरेण तत् क्षमिताऽसि वरगात्रि! तवास्मि दासः॥

यद्वा,—तेन हि—अभिसाराकाङ्क्षयैवागतत्वेन हेतुनेत्यर्थः, अपूर्व्वा—रमणीया, हृदयग्राहिणीत्यर्थः, श्रीः—शोभा, वसनालङ्करणादिना आहार्य्यसुषमेत्यर्थः, समासादिता - स्वीकृता, वसन्तसेनयेति शेषः; अभिसरणोपयोगिनीभिः वेशभूषाभिरियं रम्यदर्शना सञ्जातेति समुदितार्थः। तस्मिन् काले—पूर्व्वं, वसन्तसेनाकृतस्वप्रार्थनाप्रत्याख्यानसमये वसन्तसेनाकृतचारुदत्ताभिसरणसमये वा इत्यर्थः। रोषिता—कोपिता, वसन्तसेना इति शेषः। प्रसादयामि—अनुनयामि, मदनुरागित्वात् इदानीमस्याः प्रसन्नतामुत्पादयामीत्यर्थः।

शकारः वसन्तसेनाऽनुनयप्रकारमाह, एष इति।—विशालनेत्रे!—हे आयतनयने! एषः,—अहमित्यर्थः तव चरणयोः,—पादयोः, पतामि—आत्मानं निक्षिपामीत्यर्थः; दशनखे!—दश नखा यस्यास्तत्सम्बुद्धौ, हे अविकृतदशरजतधवलनखरे! इत्यर्थः, शुद्धदन्ति!—शुद्धाः,—निर्म्मलाः शोभना इति यावत्, दन्ताः यस्यास्तत्सम्बुद्धौ, हे कुन्दावदातदति! इत्यर्थः, तव—तत्सम्बन्धे हस्ताञ्जलिं—प्रहृतयुक्तकरौ इत्यर्थः, करोमि इति शेषः; मदनातुरेण—कामार्त्तेन, कामप्रसरात् विवेकशून्यमनसेति भावः, मया—शकारेणेत्यर्थः, तत्—तदा, यत् अपकृतम्—अनिष्टमाचरितम्, अप्रियमनुष्ठितमित्यर्थः, वरगात्रि!—हे नवनीतकोमलाङ्गि!, तत् क्षमिता—मर्षिता, [क्षमते इत्यकर्म्मकभौवादिकस्य क्षाम्यतेः सकर्म्मकदैवादिकस्य वा णिचि निष्ठायां रूपम्, अमन्तत्वात् ह्रस्वः] असि—भवसि, त्वं दासेन मयेति शेषः; तव—भवतः, दासः,—परिचारकः, अस्मि—भवामि। वसन्ततिलकं वृत्तम्॥ १८॥

वस। [सक्रोधम्] अवेहि, अणज्जं मंतेसि।* (य) [इति पादेन ताडयति]।

शकारः। [सक्रोधम्]—

जे चुंबिदे अंबिका-मादुकेहिं गदे ण देवाण वि जे पणामं।
शे पाडिदे पादतलेण मुंडे वणे शिआलेण जधा मुदंगे ? † ॥१८॥
अले थावलआ चेडा ! कहिं तुए एशा शमाशादिदा ?। ‡

* अपेहि अनार्य्यं मन्त्रयसि।

† यच्चुम्बितमम्बिकामातृकाभिर्गतं न देवानामपि यत् प्रणामम्।
तत् पातितं पादतलेन मुण्डं वने शृगालेन यथा मृताङ्गम् ? ॥

‡ अरे स्थावरकचेट ! कुत्र त्वया एषा समासादिता ?

(य) अनार्य्यम्—आर्य्यजनविगर्हितम्, असमीचीनमित्यर्थः, मन्त्रयसि—कथयसि।

वसन्तसेनायाः पादप्रहारेण क्रुद्धः शकारः आत्मोत्कर्षख्यापनपुरःसरं तावज्जं तस्य तत्कृतनिराकरणमाह, यदिति।—यत् मुण्डं—शिरः, मम इति शेषः, अम्बिकामातृकाभिः,—मातृभिः इति भावः (शकारवाक्यत्वात् पौनरुक्त्यं न दोषायेति बोद्धव्यम्) चुम्बितं—चुम्बनं कृतं वात्सल्यातिरेकादित्यर्थः, तथा यत्, मुण्डमिति शेषः, देवानामपि—सुराणामपि, देवसमीपेऽपि इत्यर्थः, ["देवाण" इत्यस्य निरनुस्वारपाठस्य "देवाणं" इति अनुस्वारान्ततया कुत्रचित् दर्शनात्, अत्र तु प्राकृते क्रूरता प्राकृतनियमवशात् सोढव्या] प्रणामं—नतभावं, न गतं - न प्राप्तं, देवानपि दृष्ट्वा यत् न प्रणतमित्यर्थः, देवेभ्योऽपि स्वस्योत्कर्षाधिक्यख्यापनार्थमिति भावः, स्वापकर्षबोधकव्यापारस्यैव प्रणामपदार्थत्वादित्याशयः; तत्—मुण्डमित्यर्थः, शृगालेन—जम्बुकेन, मृताङ्गं यथा—मृतशरीरमिव, ["मुदंगे" इत्यत्र "मदंगे" "मिदंगे" इति च पाठान्तरद्वयं विभिन्नपुस्तके दृश्यते; तत्र "ऋतोऽत्" इति सूत्रेण ऋकारस्थाने अकारादेशात् "मदंगे" इति पाठः युक्ततम इति ज्ञेयम्]। पादतलेन—चरणेनैवेत्यर्थः, वसन्तसेनया इति शेषः, पातितं—पादप्रहारेण भूतलशायीकृतमित्यर्थः; शृगालो यथा मृताङ्गमशङ्कितमेव पाददलितं करोति, तद्वत् त्वयाऽपि मम ईदृक् उन्नताहृतमस्तकं चरणाघातेन सावज्ञमशङ्कितमेव ताडितम्!! अहो! ते धार्ष्ट्यं इति भावः। उपमाऽलङ्कारः। उपजातिः वृत्तम् ॥१९॥

चेटः। भट्टके! गाम-शअलेहिं लुद्धे लाअमग्गे, तदो चालुदत्तश्श लुक्खवाडिआए पवहणं थाविअ तहिं ओदलिअ, जाव चक्कपलिवट्टिअं कलेमि, दाव एशा पवहण-विपज्जाशेण इह आलूढ़े त्ति तक्केमि। *

शकारः। कधं! पवहण-विवज्जाशेण आगदा? ण मं अहि-शालिदुं? ता ओदल ओदल मम केलकादो पवहणादो। तुमं तं दलिद्द-शत्थवाह-पुत्तअं अहिशालेशि, मम केलकाइं गोणाइं वाहेशि; (२) ता ओदल ओदल गब्भदाशि! ओदल ओदल। †

वस। तं अज्जचारुदत्तं अहिशारेसि त्ति जं सच्चं, अलंकिदम्हि इमिणा वअणेण। संपदं जं भोदु, तं भोदु। ‡

---

* भट्टक! ग्रामशकटैः रुद्धो राजमार्गः, तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा तत्रावतीर्य्य यावच्चक्रपरिवृत्तिं करोमि, तावदेषा प्रवहणविपर्य्यासेने-हारूढ़ा इति तर्कयामि।

† कथम्! प्रवहणविपर्य्यासेनागता? न मामभिसारयितुम्? तदवतर अवतर मदीयात् प्रवहणात्। त्वं तं दरिद्रसार्थवाहपुत्रकमभिसारयसि, मदीयौ गावौ वाहयसि; तदवतर अवतर गर्भदासि! अवतर अवतर।

‡ तमार्य्यचारुदत्तमभिसारयसि इति यत् सत्यम्, अलङ्कृताऽस्मि अमुना वचनेन। साम्प्रतं यद्भवतु, तद्भवतु।

---

(२) प्रवहणविपर्य्यासेन—शकटव्यतिक्रमेण, इदं पक्षद्वारस्थितं शकटम् आर्य्यचारुदत्तस्यैव नान्यदीयमेतत् इति कृत्वा मदीयशकटे चारुदत्तीयत्वभ्रान्त्या इत्यर्थः। अभिसारयितुं—सम्भोगार्थं निर्जनसङ्केतस्थानं प्रापय्य रमणेन प्रीणयितु-मित्यर्थः, [ गत्यर्थक-सृधातोः णिचि रूपमिदं, तेनाणिकर्त्तुः मामित्यस्य कर्म्मत्वम् ] अवतर—अवतीर्णा भव, तूर्णमवरोहेत्यर्थः, [ सत्वरमवतारणार्थम् अतीव क्रोधोद्भव ज्ञापनार्थञ्च अवतर इति क्रियापदस्य असकृत् प्रयोगो बोध्यः ]। वाहयसि—प्रापयसि, चालयसि इत्यर्थः, [ सारथिकर्त्तृकात् वहतेः णिचि प्रयोज्यकर्त्तुः कर्म्मत्वस्य विधानात्, सारथिपदस्य च गवादीनां नियन्तृरूपार्थकत्वात्, अत्र नियन्त्रा अत एव वसन्त-सेनायाः प्रयोजककर्त्तृत्वातिदेशात्, प्रयोज्यकर्त्र्योः गवोरत्र कर्म्मत्वं वेदितव्यम् ]।

शकारः। एदेहिं मे दश-णहुप्पल-मंडलेहिं
हत्थेहि चाडुशद ताडण-लंपडेहिं।
कड्ढामि दे वलतणुं णिअ-आणकादो
केशेशु वालिदइअं वि जहा जडाउ * ॥ २० ॥

* एताभ्यां मे दशनखोत्पलमण्डलाभ्यां हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम्।
कर्षामि ते वरतनुं निजयानकात् केशेषु वालिदयितामिव यथा जटायुः॥

वसन्तसेनायाः शकटारोहणं तदवतरणे कालविलम्बमसहमानः शकारः सक्रोधं स्वानुष्ठेयं तन्निर्यातनप्रकारमाह, एताभ्यामिति।—मे—मम, दश—दशसङ्ख्याकाः, नखाः,—करजाः, उत्पलमण्डलानि—पुण्डरीकसमूहाः इव ययोः ताभ्यां, (दृश्यन्ते हि लोके वीराः करकार्कश्यद्योतनार्थं वज्रौपम्यं प्रदर्शयन्ति, सुन्दरीणां करवर्णनावसरं एव नखानां कमलसाम्यञ्चेति, एतत्तु मौर्ख्यातिशय्यात् शकारः ताडनकर्मणि करयोः कार्कश्यमनुपवर्ण्य विपर्ययेण कोमलत्वमेव वर्णयतीति शकारवक्तृत्वेनैतत् हास्यरसानुकूलत्वात् भूषणमिवेति वेदितव्यम्); तथा चाटुशतानि—प्रियवचनशतानीव, ताडनानि—प्रहाराः, तेषु लम्पटाभ्यां—लुब्धाभ्यां, तत्कुशलाभ्यामित्यर्थः; चाटुप्रियः लोको यथा मिथ्याप्रियवाक्यसमूहाकर्णने सदा साग्रहवान् दृश्यते, मम हस्तोऽपि सर्वदा प्रहारविधौ तथैव साग्रहः इति भावः; (अत्र मृद्वीनां मधुराणाञ्च वाचां कठोरेण क्लेशहेतुभूततया अप्रीतिकरेण च ताडनेन साम्यप्रदर्शनं शकारस्य मौर्ख्यातिशय्यव्यञ्जकम्); एताभ्यां—परिदृश्यमानाभ्यां, हस्ताभ्यां—कराभ्याम्, ["एदेहि" इत्यत्र "हत्थेहि" इत्यत्र च अनुस्वाराभावश्छन्दोऽनुरोधात् सोढव्यः। यत्र तु "एदेहिं" तथा "हत्थेहिं" इति सानुस्वारः पाठः, तत्र हकारद्वयस्य सानुस्वारत्वेन गुरुत्वेऽपि तीव्रप्रयत्नोच्चार्यतया लघुत्वावगमात्, सबिन्दोः पाक्षिकगुरुत्वाच्च न छन्दोभङ्गदोषः; यथाऽऽह कण्ठाभरणे,—"यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः॥" इति] जटायुः—गरुडनन्दनः पक्षिविशेषः, ["जडाउ" इत्यत्र "हणुमाण" इति पाठान्तरम्] यथा—यद्वत् वालिदयितां वानरराजप्रियां ताराम्, अकर्षत्, तथैव इति शेषः, निजयानकात्—स्वकीयात् प्रवहणात्, ते—तव, वरतनं—सुन्दरं गात्रं, केशेषु—कुन्तलेषु, केशावच्छेदेनेत्यर्थः, [अत्र आक्षेपाधिकरणे सप्तमी] गृहीत्वेति शेषः, कर्षामि—आकृष्य अवतारयामीत्यर्थः। इह "यथा इव" शब्दयोः एकतरस्यैव साम्यस्यावबोधात् उभयप्रयोगदर्शनादेकतरस्य वैयर्थ्यमेव,

विटः।—अग्राह्या मूर्द्धजेष्वेताः स्त्रियो गुणसमन्विताः।
न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः॥ २१॥

तदुत्तिष्ठ त्वम्, अहमेनामवतारयामि। वसन्तसेने! अवतीर्य्यताम्।

वस। [अवतीर्य्य एकान्ते (ल) स्थिता]।

शकारः। [स्वगतम्]। जे श्ले मम वअणावमाणेण तदा लोशग्गी शंधुक्खिदे, अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे; (व) तं शंपदं मालेमि णं। भोदु, एव्वं दाव। [प्रकाशम्] भावे! भावे! *—

* यः स मम वचनावमानेन तदा रोषाग्निः सन्धुक्षितः, अद्य एतस्याः पादप्रहारेणानेन प्रज्वलितः; तत् साम्प्रतं मारयाम्येनाम्। भवतु, एवं तावत्। भाव! भाव!—

परस्परविरुद्धाभिधानमूलकमेतदौपम्यं शकारवक्तृत्वेन न दूष्यमिति बोध्यम्। वसन्ततिलकं वृत्तम्॥ २०॥

केशग्रहणद्वारा वसन्तसेनायाः निर्य्यातनोद्यतं शकारं निवारयितुं तादृशकार्य्यस्यायुक्ततामाह, अग्राह्या इति।—गुणसमन्विताः,—गुणवत्यः, एताः,—पुरतः परिदृश्यमानाः, स्त्रियः,—वसन्तसेनासदृश्यः कामिन्यः, [अत्र बहुवचनं वसन्तसेनायाः गौरवव्यञ्जकं बोध्यम्]; यद्वा—स्त्रियः,—नार्य्यः, नारीमात्रमेव इत्यर्थः, मूर्द्धजेषु—केशेषु, केशावच्छेदेनेत्यर्थः, [अत्र औपश्लेषिकाधिकरणे सप्तमी] अग्राह्याः—न ग्रहीतुमर्हाः, तथा हि,—उपवनोद्भवाः,—कृत्रिमे कानने सयत्नं परिवर्द्धिता इत्यर्थः, लताः,—व्रतत्यः, पल्लवच्छेदं—किशलयभङ्गं, न अर्हन्ति—किसलयभङ्गं प्राप्तुं योग्या न भवन्तीत्यर्थः। सयत्नपालितायाः सुकोमलाया उपवनलतायाः पल्लवभङ्गः यथा अनुचितः, तथा अतिकोमलाया गुणवत्या रूपयौवनादिसमन्वितायाः वसन्तसेनाया अपि केशाकर्षणेन निग्रहोऽनुचितः इति सरलार्थः। अत्र स्त्रीकेशग्रहण-लतापल्लवच्छेदरूपधर्म्मयोः साम्यस्य प्रणिधानगम्यत्वात् दृष्टान्तोऽलङ्कारः "दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम्" इति लक्षणात्। पथ्यावक्त्रं वृत्तम्॥ २१॥

(ल) एकान्ते—एकस्मिन् पार्श्वे।

(व) अत्र "यः रोषाग्निः सन्धुक्षितः, अद्य स प्रज्वलितः" इति खण्डान्वयः बोध्यः। वचनावमानेन—वचनानां—मां भजस्व इत्यादिमदीयवाक्यानाम्, अव-

जदिच्छसी लंबदशा-विशालं
पावालअं शुत्तशदेहि जुत्तं।
मंशं च खादुं तह तुट्टि कादुं
चुहू चुहू चुक्कु चुहू चुहुत्ति * ॥ २२ ॥

विटः। ततः किम्?

शकारः। मम पिअं कलेहि। †

विटः। बाढं करोमि, वर्जयित्वा तु अकार्यम्। (श)

---

* यदीच्छसि लम्बदशाविशालं प्रावारकं सूत्रशतैर्युक्तम्।
मांसञ्च खादितुं तथा तुष्टिं कर्तुं चुहू चुहू चुक्कु चुहू चुहू इति॥

† मम प्रियं कुरु।

---

मानेन अनादरणेन, सावज्ञं परिहरणेनेत्यर्थः, तदा—प्राक् चारुदत्ताभिसरणसमये इत्यर्थः, रोषाग्निः,—क्रोधानलः, सन्धुक्षितः,—सन्दीपितः, उत्पत्तिक्षणे ज्वालानां सम्यक्तया विकाशाभावात् तदानीं धूमाच्छन्नतया स्थित इत्यर्थः एतस्याः,—वसन्तसेनायाः इत्यर्थः। प्रज्वलितः,—ज्वालामालासङ्कुलतया पुनरुद्दीपित इत्यर्थः।

वसन्तसेनां निहन्तुं समुचितोपायनदानप्रस्तावेन विटं प्रलोभयन्नाह, यदीति।—यदि—चेत्, लम्बाभिः,—सुदीर्घं प्रलम्बिताभिः, दशाभिः,—वस्त्रान्तैः, लम्बमानवस्त्रप्रान्तस्थसूत्रैरित्यर्थः, ("दशाऽवस्थादीपवर्त्त्योर्वस्त्रान्ते भूम्नि योषिति" इति मेदिनी) विशालं—दीर्घं, तथा सूत्रशतैः—असङ्ख्यसूत्रैरित्यर्थः, ["शुत्तशदेहि" इत्यत्र छन्दोऽनुरोधादनुस्वाराभावः; क्वचित् सानुस्वारोऽपि पाठः दृश्यते, तत्र पूर्वोक्तप्रकारेण छन्दोभङ्गदोषः समाधेयः] युक्तं—समन्वितं, वयनसाधनसूत्रशतानुस्यूतमित्यर्थः, प्रावारकम्—उत्तरीयवसनं, लब्धुमिति शेषः, तथा मांसम्—आमिषं, "चुहू चुहू चुक्कु चुहू चुहू इति"—उक्तरूपाव्यक्तमधुरध्वनिपूर्वकं सुपेयकोमलमांसरसं चूषं चूषञ्चेत्यर्थः, खादितुं—भोक्तुं, तथा तुष्टिं—मम सन्तोषं, कर्तुं—विधातुम्, इच्छसि—अभिलषसि, मत्तः यदि सुदीर्घम् उत्तरीयवसनं लब्धुं मांसभोजनं, तथा मम सन्तोषविधानञ्च कर्तुम् अभिलषसीत्यर्थः, तदा तूर्णं "मम पिअं कलेहि" इति वक्ष्यमाणचूर्णकेनान्वयः, ममाभीष्टं पूरयेत्यर्थः। चुहूप्रभृतीनि तु अव्यक्तानुकरणसङ्केतवचनानीति वेदितव्यम्। उपजातिः वृत्तम्॥ २२॥

(श) बाढं—तथाऽस्तु इत्यर्थः, भवद्वचनमवश्यमेव पालयिष्यामीति प्रतिज्ञाने

शकारः। भावे! अकज्जाह गंधे वि णत्थि, लक्खशी कावि णत्थि। * (प)

विटः। उच्यतां तर्हि।

शकारः। मालेहि वशंतशेणिअं। †

विटः। [कर्णौ पिधाय (स)]।—

बालां स्त्रियञ्च नगरस्य विभूषणञ्च
वेश्यामवेश-सदृश-प्रणयोपचाराम्।
एनामनागसमहं यदि घातयामि
केनोड़ुपेन परलोकनदीं तरिष्ये? ॥ २३ ॥

* भाव! अकार्य्यस्य गन्धोऽपि नास्ति, राक्षसी काऽपि नास्ति।

† मारय वसन्तसेनाम्।

इति यावत्। ("अश्रप्रतिज्ञयोर्बाढ़म्" इत्यमरः)। अकार्य्यम्—अनुचितकार्य्यं, पापं कर्म्म इत्यर्थः, वर्जयित्वा—विहाय, करोमि - विदधामि; गर्हितं कर्म्म विना सर्व्वमेव भवतः कृत्यं साधयितुमहं स्वीकरोमीत्यर्थः।

(प) राक्षसी काऽपि नास्तीति।—अकार्य्यं वर्जयित्वेति विटप्रोक्तवाक्यात्, अकार्य्यं—सज्जनविगर्हितं कर्म्म इति विटाभिप्रेतमर्थमनवबुध्य, अकार्य्यं—कर्त्तु-मशक्यम्, असाध्यमित्येवमर्थमवगत्य, राक्षसी काऽपि नास्तीत्युक्त्या राक्षसीवधो हि दुःसाध्यः, अस्या बधस्तु न तथा, यतः एषा किल वसन्तसेना, अतोऽस्याः न भेतव्य-मिति भावः प्रकटीकृतः। ["लक्खशी काबि" अत्र "लखसिआ वि" इति पठित्वा "रक्षोऽपि" इति केचित्]।

(स) पिधाय अङ्गुलिभ्याम् आच्छाद्य।

प्राणिनां हिंसनमेव नरकफलोत्पादकं, विशेषतस्तु निरपराधस्य, तत्रापि ईदृग्-गुणवत्याः स्त्रियाः अतः ईदृशमकार्य्यं सर्व्वथैव कर्त्तुमनुचितमिति बोधयितुमाह, बालामिति।—यदि—चेत् अहं—विट इत्यर्थः, बालां—तरुणीं, स्त्रियम्—अबलां, नगरस्य—पुरः, उज्जयिन्या इत्यर्थः, विभूषणम्—अलङ्कारस्वरूपां, रत्नभूतामित्यर्थः, वेश्यां—गणिकां, जन्मतः न तु व्यवहारतः इति भावः वेशः,—वेश्याजनाश्रयः, ("वेशो वेश्याजनाश्रयः" इत्यमरः) तत्सदृशः न भवति इति अवेशसदृशः,—वेश्याजनानुपयुक्तः, अकृत्रिमः इत्यर्थः, प्रणयोपचारः,—प्रणयव्यवहारः अस्याः ताम्,

शकारः। अहं ते भेड़कं दइश्शं। अस्सं च,—विवित्ते (ह) उज्जाणे इध मालंतं को तुमं पेक्खिश्शदि ? *

विटः।—

पश्यन्ति मां दशदिशो वनदेवताश्च
चन्द्रश्च दीप्तकिरणश्च दिवाकरोऽयम्।
धर्मानिलौ च गगनश्च तथाऽन्तरात्मा
भूमिस्तथा सुकृत-दुष्कृत-साक्षिभूताः॥ २४॥

* अहं ते, उडुपं दास्यामि। अन्यच्च,—विविक्ते उद्याने इह मारयन्तं कस्त्वां प्रेक्षिष्यते ?

वेश्यात्वे सत्यपि कुलकामिनीमिव पवित्रप्रणयवतीमित्यर्थः, अनागसं—निरपराधाम्, एनां—वसन्तसेनां घातयामि—मारयामि, तदा—तादृशाकार्य्यानुष्ठाने कृते इत्यर्थः, केन उडुपेन—प्लवेन किम्भूतं तरणसाधनमवलम्ब्य इत्यर्थः, ("उडुपन्तु प्लवः कोलः" इत्यमरः) परलोकनदीं—परलोकपथमध्यवर्त्तिनीं सरितं, वैतरणीमित्यर्थः, तरिष्ये—अतिक्रमिष्यामि, ततः उत्तीर्णो भविष्यामि ? न केनापि इत्यर्थः। निरपराधाया अस्याः हनने परलोके नैव मे निस्तारः, तेन अवश्यमेवाहं निरयगामी भविष्यामीति भावः। अत्र बालादिविशेषणानां साभिप्रायकतया परिकरोऽलङ्कारः "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात्। [तरतेः भौवादिकस्य परस्मैपदित्वेनानुशिष्टतया तदनुशासनमुल्लङ्घ्य आत्मनेपदप्रयोगादत्र व्याकरणलक्षणहीनत्वरूपः च्युतसंस्कारतादोषः विज्ञेयः]। वसन्ततिलकं वृत्तम्॥ २३॥

(ह) उडुपं—प्लवम्; "भ्याला" इति वङ्गभाषा। विविक्ते—निर्जने, ("विविक्तौ पूतविजनौ" इत्यमरः)।

कस्त्वां प्रेक्षिष्यते ?" इति शकारवाक्यस्योत्तरं दातुं सर्वेषां जनानां कर्म्मसाक्षिभूततया स्थितान् शास्त्रोक्तान् देवादीन् निर्दिशति, पश्यन्तीति।—सुकृतदुष्कृतसाक्षिभूताः,—पुण्यपापयोः साक्षाद्द्रष्टारः, [विशेषणमेतत् सर्वैरेव कर्त्तृपदैः यथासम्भवं लिङ्गविभक्तिविपरिणामेनान्वेति] दश—दशसङ्ख्याकाः, दिशः,—ककुभः, वनदेवताः,—आरण्यदेव्यश्च, [अत्र सर्वेभ्यः कर्त्तृपदेभ्यश्चकारः दर्शनक्रियायां प्रत्येकप्राधान्यद्योतकः] चन्द्रः,—निशाकरश्च, दीप्तकिरणः—भास्वरांशुः, अयं—परिदृश्यमानः, दिवाकरः,—सूर्य्यश्च, (मध्याह्ने सूर्य्यस्य गगनमध्यदेशे अवस्थानात् हस्तेन निर्देशज्ञापकः

शकारः। तेण हि पडंतोवालिदं (क) कदुअ मालेहि। *

विटः। मूर्ख! अपध्वस्तोऽसि। (ख)

शकारः। अधम्मभीलू एशे बुड्ढकोले। भोदु, थावलअं चेडं अणुणेमि। पुत्तका थावलका चेडा! शोवण्णखडुआइं (ग) दइश्शं। †

* तेन हि पटान्तापवारितां कृत्वा मारय।

† अधर्म्मभीरुरेष वृद्धकोलः। भवतु, स्थावरकं चेटमनुनयामि। पुत्रक स्थावरक चेट! सुवर्णकटकानि दास्यामि।

"अयं" शब्दो बोध्यः) धर्मः,—शास्त्रविहितकर्म्मानुष्ठानजन्यभाविफलसाधनभूतशुभादृष्टम्, अनिलः,—वायुः, एतौ चेत्यर्थः, गगनम्—आकाशञ्च, तथा अन्तरात्मा—मनः, शरीरान्तर्वर्त्ती जीवात्मा वा, तथा भूमिः,—पृथ्वी च, मां—विटमित्यर्थः, पश्यन्ति—अवलोकयन्ति, (एतदुपलक्षणम्; तेन अनल-सलिल-यम-यामिनी-प्रभृतीनामपि कर्मसाक्षित्वं बोद्धव्यम्; तदुक्तं मिताक्षरायाम्,—"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥") पापाचरणं केनापि कदाऽपि गोपायितुं न शक्यते, अद्य अब्दशतान्ते वा अवश्यमेव प्रकाशितं भविष्यतीति भावः। अत्र प्रस्तुतानां सर्वेषामेव दिग्-वनदेवता चन्द्रादीनाम् एकया दर्शनक्रियया अभिसम्बन्धात्तुल्ययोगिता नाम अलङ्कारः। वसन्ततिलकं वृत्तम्॥ २४॥

(क) पटान्तापवारितां—वस्त्रप्रान्तेन आच्छादितां, येन कोऽपि न द्रष्टुं शक्नोतीति भावः।

(ख) अपध्वस्तः,—नीचवंशप्रसूतः, अथवा इहलोकात् परलोकाच्च अधःपतितः, धिक्कृतः इति यावत्।

(ग) अधर्म्मभीरुः,—अधर्म्माचरणाद्भयशीलः इत्यर्थः। वृद्धकोलः,—जीर्णशूकरः, ["वराहः शूकरो घृष्टिः कोलः पोत्री" इत्यमरः। लल्लादीक्षितेन "बुड्ढकोले" इत्यत्र "बुड्ढखोले" इति पठित्वा वृद्धशृगाल इति व्याख्यातम्]। प्राक् यौवनदशायां त्वया बह्वदकार्य्यमनुष्ठितम्, इदानीन्तु वृद्धत्वे धर्म्मकञ्चुकं धृत्वा आत्मानं गोपायसि इत्याशयः; यद्वा,—आत्मापेक्षया वयोवृद्धत्वेन शूकरत्वम् स्वेप्सितसाधने हठलङ्घ्यत्वेन च विटं प्रति "बुड्ढकोले" इति शकारस्य सावज्ञोक्तिरियं बोद्धव्या। सुवर्णकटकानि—स्वर्णवलयान्।

चेटः। अहं पि पलिहिश्शं। *

शकारः। शोवस्स दे पीढ़कं (घ) कालइश्शं। †

चेटः। अहं पि उवविशिश्शं। ‡

शकारः। शव्वं दे उच्छिट्टं (ङ) दइश्शं। §

चेटः। अहं पि खाइश्शं। ¶

शकारः। शव्वचेडाणं महत्तलकं कालइश्शं। ** (च)

चेटः। भट्टके! हुविश्शं। ††

शकारः। ता मस्रेहि (छ) मम वअणं। ‡‡

चेटः। भट्टके! शव्वं कलेमि, वज्जिअ अकज्जं। §§

शकारः। अकज्जाह गंधे वि णत्थि। ¶¶

चेटः। भणादु भट्टके। ***

शकारः। एणं वशंतशेणिअं मालेहि। †††

चेटः। पशीदद्र भट्टके! इअं मए अणज्जेण अज्जा पवहण-पलिवत्तणेण आणीदा। ‡‡‡

* अहमपि परिधास्यामि। † सौवर्णं ते पीठकं कारयिष्यामि।

‡ अहमपि उपवेक्ष्यामि। § सर्वं ते उच्छिष्टं दास्यामि।

¶ अहमपि खादिष्यामि। ** सर्व्वचेटानां महत्तरकं कारयिष्यामि।

†† भट्टक! भविष्यामि। ‡‡ तन्मन्यस्व मम वचनम्।

§§ भट्टक! सर्वं करोमि, वर्ज्जयित्वा अकार्य्यम्। ¶¶ अकार्य्यस्य गन्धोऽपि नास्ति।

*** भणतु भट्टकः। ††† एनां वसन्तसेनां मारय।

‡‡‡ प्रसीदतु भट्टकः। इयं मया अनार्य्येण आर्य्या प्रवहणपरिवर्त्तनेनानीता।

(घ) पीठकम्—आसनम्।

(ङ) उच्छिष्टं-भुक्तावशिष्टं. "प्रसाद" इति बङ्गभाषा; शकारस्य राजश्यालकतया चर्व्यचूष्यादिविविधस्वादुद्रव्याशित्वात् तद्भुक्तावशिष्टभक्षणं भाग्यलभ्यमेवेति तेन चेटस्य लोभप्रदर्शनं सङ्गतमेवेति बोध्यम्।

(च) महत्तरकं—प्रधानम्। कारयिष्यामि, राज्ञा इति शेषः।

(छ) मन्यस्व—स्वीकुरु इत्यर्थः।

शकारः। अले चेड़ा! तवावि ण पहवामि? * (ज)

चेटः। पहवदि भट्टके शलीलाह, ण चालित्ताह, ता पशीददु पशीददु भट्टके। भाआमि क्खु अहं। †

शकारः। तुमं मम चेडे भविअ कश्श भाआशि? ‡

चेटः। भट्टके! पललोअश्श। §

शकारः। के शे पललोए? ¶

चेटः। भट्टके! शुकिद-दुक्किदश्श पलिणामे। ** (झ)

शकारः। केलिशे शुकिदश्श पलिणामे? ††

चेटः। जादिशे भट्टके बहुशोवण्णमंडिदे। ‡‡

शकारः। दुक्किदश्श केलिशे? §§

* अरे चेट! तवापि न प्रभवामि?

† प्रभवति भट्टकः शरीरस्य, न चारित्रस्य; तत् प्रसीदतु प्रसीदतु भट्टकः। बिभेमि खलु अहम्।

‡ त्वं मम चेटो भूत्वा कस्मात् बिभेषि? § भट्टक! परलोकात्।

¶ कः स परलोकः? ** भट्टक! सुकृतदुष्कृतयोः परिणामः।

†† कीदृशः सुकृतस्य परिणामः? ‡‡ यादृशो भट्टको बहुसुवर्णमण्डितः।

§§ दुष्कृतस्य कीदृशः?

(ज) प्रभवामि—प्रभुर्भवामीत्यर्थः, त्वदुपरि अपि किं मम कश्चित् अधिकारो नास्ति? इति समुदिताशयः।

(झ) सुकृतदुष्कृतयोः—पुण्यपापयोः. परिणामः,—परिपाकः, फलरूपेण परिणतिरित्यर्थः; "क्रियाहितो भावः द्रव्यवत् प्रकाशते" इति न्यायात्, परिणम्यमाने सुकृतदुष्कृते इति तु पर्य्यवसितोऽर्थः। तथा हि परः—ऐहिकादन्यः, लोक्यते—सुखदुःखादिरूपेण तत्साधनभूततया वा दृश्यते योऽसौ लोकः, लोकान्तरीयं सुख-दुःखादिरूपोपभुज्यमानं वस्तु, सुखदुःखादिसाधनं वा इति अर्थवशसम्पन्नः व्युत्पत्ति-लभ्योऽर्थः, एवं विबोधयिषया प्रयुज्यमानस्य परलोकशब्दस्य यथाऽभिमतार्थमनधि-गच्छन्तं शकारं पुनः विबोधयितुं भङ्ग्यन्तरेणैतदेव सुकृतदुष्कृतयोः परिणामरूपतयोक्त-मिति वेदितव्यम्।

चेटः। जादिशे हग्गे पलपिंड-भक्खके भूदे; ता अकज्जं (अ) ण कलइश्शं। *

शकारः। अले! ण मालिश्शशि? † [इति बहुविधं ताडयति]।

चेटः। पिट्टदु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शं, ‡—

जेण म्हि गब्भदाशे विणिम्मिदे भाअहेअ-दोशेहिं।
अहिअं च ण कीणिश्शं तेण अकज्जं पलिहलामि § ॥ २५ ॥

वस। भाव! शलणागदम्हि। ¶

विटः। काणेलीमातः! मर्षय, मर्षय। (ट) साधु स्थावरक! साधु,—

* यादृशोऽहं परपिण्डभक्षको भूतः; तदकार्य्यं न करिष्यामि।

† अरे! न मारयिष्यसि?

‡ पिट्टयतु (ताडयतु) भट्टकः, मारयतु भट्टकः, अकार्य्यं न करिष्यामि,—

§ येनास्मि गर्भदासो विनिर्म्मितो भागधेयदोषैः।
अधिकञ्च न क्रेष्यामि तेनाकार्य्यं परिहरामि॥

¶ भाव! शरणागतोऽस्मि।

(अ) परपिण्डभक्षकः,—परेषाम्—अन्येषां, पिण्डम्—आजीवनम्, अन्नग्रासमित्यर्थः, भक्षयति—अश्नाति इति परान्नभोजी इत्यर्थः, परदीयमानान्नोपजीवी इति यावत्। ["पलपिंडभक्खके" इत्यत्र "पलपिंडपुट्ठके जादे" इति पाठे "परपिण्डपुष्टको जातः" इति संस्कृतम्]। अकार्य्यं—गर्हितं कर्म्म, पापफलकं कार्य्यमिति यावत्।

अकार्य्याकरणे हेतुमाह, येनेति।—येन—यस्मात् हेतोरित्यर्थः, भागधेयदोषैः,—पूर्व्वजन्माचरिताकार्य्यफलभूतदुरदृष्टपरिणतिवशादित्यर्थः, गर्भदासः—आजन्मभृत्यः इत्यर्थः, विनिर्म्मितः,—कल्पितः, विधिना इति शेषः, अस्मि—भवामि, तेन—तस्मात् हेतोरित्यर्थः, अकार्य्यं—निन्दितं कर्म्म, परिहरामि—त्यजामि अधिकम्—एतस्मादपि गर्भदासफलादतिरिक्तं, विषमफलभूतभीषणनरकादिरूपमित्यर्थः, न क्रेष्यामि—आत्मकृतकर्म्मात्मकमूल्यदानेन ग्रहीष्यामि अकार्य्यविनिमयेन गर्भदासत्वादप्यधिकतरं घोरनरकपातादिरूपं दुरदृष्टपरिणामं न सञ्चिनोमि इति भावः। आर्य्या वृत्तम्॥ २५॥

(ट) मर्षय मर्षय—क्षमस्व क्षमस्व, क्रोधं परिहर इत्यर्थः, [वीप्सायां द्विर्भावः]।

अप्येष नाम परिभूतदशो दरिद्रः
प्रेष्यः परत्र फलमिच्छति नास्य भर्त्ता ।
तस्मादमी कथमिवाद्य न यान्ति नाशं
ये वर्द्धयन्त्यसदृशं सदृशं त्यजन्ति ? ॥ २६ ॥

अपि च,—रन्ध्रानुसारी विषमः कृतान्तो
यदस्य दास्यं तव चेश्वरत्वम् ।

स्थावरकस्य साधुचरितमुपवर्णयितुं प्रसङ्गात् असदृशकर्म्मकारिणः जनान् उपालभते, अपीति ।—परिभूता—तिरस्कृता, सर्वैरेवावज्ञातेत्यर्थः, दशा—अवस्था यस्य सः, दुरवस्थ इत्यर्थः, दरिद्रः,—निर्द्धनः स्वोदरस्यापि पोषणाय नियतव्याकुलमना इति भावः प्रेष्यः,—भृत्यः सन् अपि, [ "प्रपूर्व्वकादिच्छतेः इष्यतेर्वा कर्म्मणि ण्यति रूपं, सन्धौ तु प्रस्यावर्णात् परयोः एषैष्ययोः वृद्धेः, एवमेषैष्यमी: परयोः प्रस्यावर्णस्य लोपस्य च विधानात् प्रेष्यः इत्यपि पदान्तरं भवतीति वोपदेवमतम्; दीक्षितस्तु "प्रादूहोढोढ्येषैष्येषु" (वा०) इत्यस्य व्याख्यानावसरे "प्रैष्यः प्रेष्यः" इति पदद्वयं विभिन्नधातुना प्रकारभेदेन निष्पादितवान् इति । "नियोज्यः किङ्करः प्रेष्यः भुजिष्यः परिचारकः" इत्यमरः ] एषः,—चेट इत्यर्थः परत्र—परलोके, फलं—निरवच्छिन्नसुखसन्ततिरूपम्, अथवा सद्गतिरूपमुदर्कमित्यर्थः, नाम—सम्भावनायामव्ययम्, इच्छति—अभिलषति, अस्य—भृत्यस्य चेटस्य इत्यर्थः, भर्त्ता—स्वामी, शकार इत्यर्थः, न, इच्छतीति शेषः ; तस्मात्—भृत्ये धर्म्मभयस्य प्रभौ तद्विपर्य्ययस्य च दर्शनादित्यर्थः, ये—जनाः, असमीक्ष्यकारिणः किम्प्रभव इत्यर्थः, दैवहतका वा, असदृशम्—अयोग्यम्, अपारलौकिककर्म्मकारिणमिति वा, वर्द्धयन्ति—वृद्धिं प्रापयन्ति, ऐश्वर्य्यवन्तं कुर्व्वन्तीत्यर्थः, तथा सदृशं—योग्यं वृद्धिप्राप्त्युपयोगिनं जनमित्यर्थः, त्यजन्ति—जहति, न वर्द्धयन्तीत्यर्थः, दरिद्रं कुर्व्वन्तीति यावत्, ते अमी—जनाः, शकारसदृशाः इति भावः, कर्म्मविपाका वा, अद्य—एतत्क्षणे एव इति यावत्, कथमिव—किमर्थमित्यर्थः, नाशं—क्षयं, न यान्ति ?—न प्राप्नुवन्ति ? पात्रापात्रविचारमकृत्वा आदरमनादरञ्च प्रदर्शयतामसमीक्ष्यकारिणां किम्प्रभूणां कर्म्मविपाकानां वा नाश एव उचितः, तथात्वे च सतां ग्लानिः, असताञ्चाभ्युत्थानं न भवेदिति भावः । अत्र प्रेष्यस्य पारत्रिकफलाकाङ्क्षारूपात् कथितावस्तुनः तादृशस्य अन्यस्य भर्त्तुः तदप्रतीयमानात् परिसङ्ख्याऽलङ्कारः, तथा द्वितीयार्द्धे अप्रस्तुतसामान्यात् प्रस्तुतस्य अकार्य्यकारिशकारमात्ररूपविशेषस्य गम्यत्वादप्रस्तुतप्रशंसाऽलङ्कारश्च । वसन्ततिलकं वृत्तम् ॥ २६ ॥

धार्म्मिकः स्थावरकः एवात्र प्रभुत्वाधिकारस्य सुयोग्यं पात्रं, परमाधार्म्मिकः शकारस्तु दृष्यदासपदस्यैव, अतस्तद्विचारमकृत्वैव केवलं गुणदोषलेशं दृष्ट्वा पुंसः

श्रियं त्वदीयां यदयं न भुङ्क्ते,
यदेतदाज्ञां न भवान् करोति ॥ २७ ॥

सौभाग्यासौभाग्यविधायकं दैवं तिरस्करोति, रन्ध्रेति।—कृतान्तः—दैवं, ("कृतान्तोऽक्षेमकर्मणि सिद्धान्तयमदैवेषु" इति हेमचन्द्रः) रन्ध्रानुसारी—छिद्रानुसन्धायी, दोषमात्रदर्श्यर्थः, न तु गुणपक्षपातीति यावत्, अन्यथा कथमेतमधुना गुणशतालङ्कृतमतिधर्मपरायणमपि पूर्व्वकृतदुष्कृतलेशानुसन्धानतत्परः दुर्गतेः परां कोटिमुपलम्भयन् नियतमधर्मपरायणमपि शकारं तदीयपूर्व्वकृतसुकृतलेशानुसन्धानेन सौभाग्यसीमां लम्भयामासेति भावः. (अथवा,—रन्ध्रानुसारी—दुर्गतानामेव छिद्रानुसन्धानात् तेषु शतनिर्य्यातनपटीयानिति भावः, "छिद्रेष्वनर्था बहुलीभवन्ति" इति दर्शनात्। विपन्नाः एव जनाः अनर्थशतमुपभुञ्जते न तु सम्पन्नाः, तेषां दोषशतसद्भावेऽपि तत्फलभोगस्य सर्व्वथाऽदर्शनात्) अत एव विषमः—विपरीतः, अविचारक इत्यर्थः; (यद्वा—दैवमनन्यमानमार्य्यजनविगर्हिताकार्य्यकारिणं शकारं सदुपदिशन् दैवस्य विषमत्वमुपपादयति।—विषमः,—फलानुमेयतया विपरीतः; धार्मिकस्य बहुलगुणवतोऽपि पूर्वकृतदुष्कृतलेशवशात् क्लेशशतावाप्तिः, अधार्मिकस्याकार्य्यकारिणः पूर्वकृतसुकृतलेशवशादेव प्रभुत्वादिसुखावाप्तिश्च दैवप्रातिकूल्यानुकूल्याभ्यां सम्भवति; एतेनैश्वर्य्यमदमत्तस्य शकारस्य अपकार्य्यकरणे नियतमेव छिद्रान्वेषी कृतान्तः प्रतिकूलो भविष्यति, तेन च सर्वमिदं प्रभुत्वादिकमचिरेणैव कालेन विलयं यास्यति इति व्यज्यते) कृतान्तस्य विषमत्वे हेतुमाह, यदिति।—यत्—यस्मात्, अस्य—चेटस्य, परलोकभीरोः साधोरिति भावः, दास्यं—किङ्करत्वं, परपिण्डोपजीवित्वमिति यावत्, तव च—अकार्य्यकारिणः स्त्रीवधोद्यतस्य शकारस्य इति भावः ईश्वरत्वं—प्रभुत्वं, दैवेन कृतमिति शेषः, यत्—यस्मात् अयं—चेटः त्वदीयां—शकारसम्बन्धिनीं, श्रियम्—ऐश्वर्य्यं, न भुङ्क्ते—नानुभवति, धार्मिकतया प्रभुयोग्योऽयं तव सम्पत्तिं यत् न प्राप्नोति इत्यर्थः प्रभुत्वेनेति भावः, यत्—यस्माच्च भवान्—त्वं शकारः इत्यर्थः, एतदाज्ञाम्—एतस्य—चेटस्य, आज्ञाम्—आदेशं न करोति—न पालयतीत्यर्थः भृत्यभावेनेति भावः; धार्मिकत्वेन प्रभुयोग्योऽपि अयं यत् तव सम्पत्तिं नोपभुङ्क्ते, अधार्मिकत्वेन अस्य दासायोग्योऽपि भवान् यदस्य आदेशं न पालयति तदेतत् दैवस्य न केवलम् अविमृश्यकारित्वम्, अपि तु अविवेककृतः पक्षपातोऽपीति समुदिताशयः। अत्र प्रथमपादगतवाक्यार्थं प्रति अपरपादत्रयवाक्यार्थानां निष्पादकत्वेन हेतुतया काव्यलिङ्गमलङ्कार.। इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिः वृत्तम् ॥ २७ ॥

शकारः। [स्वगतम्] अधम्मभिलुए वुड्ढखोड्डे, पललोअभिलू एशे गब्भदाशे, हग्गे लट्टिअशाले कश्श भाआमि (ठ) वल-पुलिशमणुश्शे ? [प्रकाशम्] अले गब्भदाशे चेडे ! गच्छ तुमं, ओवलके पविशिअ वीशंते एअंते (ड) चिट्ठ। *

चेटः। जं भट्टके आणवेदि। [वसन्तसेनामुपसृत्य] अज्जए ! एत्तिके मे विहवे (ढ)। † [इति निष्क्रान्तः]।

शकारः। [परिकरं (ण) बध्नन्] चिट्ठ वशंतशेणिए ! चिट्ठ, मालइश्शं। ‡

विटः। आः ! ममाग्रतो व्यापादयिष्यसि ? (त) [इति गले गृह्णाति]।

---

* अधर्मभीरुको वृद्धशृगालः परलोकभीरुरेष गर्भदासः, अहं राष्ट्रियश्यालः कस्मात् बिभेमि वरपुरुषमनुष्यः ? अरे गर्भदास चेट ! गच्छ त्वम्, अपवारके प्रविश्य विश्रान्त एकान्ते तिष्ठ।

† यत् भट्टक आज्ञापयति। आर्य्ये ! एतावान् मे विभवः।

‡ तिष्ठ वसन्तसेने ! तिष्ठ मारयिष्यामि।

---

(ठ) अधर्मभीरुकः,—अधर्माचरणाद्भयशील इत्यर्थः। कस्माद्बिभेमि ?—कस्मात् ? न कस्मादपि मे त्रासहेतुरस्ति इत्यर्थः।

(ड) अपवारके—गृहविशेषे, (जवनिकामध्ये इति केचित्; "अन्तर्द्धिरपवारणम्" "आच्छादने सन्निधानमपवारणमित्युभे" इत्युभयत्रैवामरे अपवारणशब्दस्याच्छादनार्थे प्रयोगदर्शनात्, अपवृणोति य इत्यर्थे कर्त्तरि ण्वुलि अपवारकशब्दस्यापि आच्छादकार्थकत्वमनुसन्धेयम्)। एकान्ते—एकस्मिन् पार्श्वे, निर्जने इत्यर्थः, अकर्मण्य-त्वादिति भावः।

(ढ) विभवः—ऐश्वर्य्यं, सामर्थ्यमित्यर्थः।

(ण) परिकरं—गात्रबन्धविशेषं, कटिबन्धमित्यर्थः, ("अथ परिकरः पर्य्यङ्क-परिवारयोः। प्रगाढ़े गात्रिकाबन्धे" इति हेमचन्द्रः)।

(त) ममाग्रतः,—मम पुरतः, मम समक्षमेवेत्यर्थः। व्यापादयिष्यसि ?—मारयिष्यसि ?

शकारः। [भूमौ पतति] भावे भट्टकं मालेदि !! *(थ)

[इति मोहं नाटयति। चेतनां लब्ध्वा]।

शव्वकालं मए पुट्ठे मंशेण अ घिएण अ।

अज्ज कज्जे शमुप्पण्णे जादे मे वैलिए कधं ? †।२८॥

[विचिन्त्य स्वगतम्] भोदु, लद्धे मए उवाए। दिण्णा वुड्ढ-खोड्डेण शिरश्चालणशण्णा, ता एदं पेशिअ वशंतशेणिअं माल-इश्शं। एव्वं दाव। (द) [प्रकाशम्] भावे ! जं तुमं मए भणिदे,

---

* भावो भट्टकं मारयति !!—

† सर्वकालं मया पुष्टो मांसेन च घृतेन च।
अद्य कार्य्ये समुत्पन्ने जातो मे वैरिकः कथम् ? ॥

‡ भवतु, लब्धो मया उपायः। दत्ता वृद्धशृगालेन शिरश्चालनसंज्ञा ; तदेतं प्रेष्य

---

(थ) भट्टकं - भट्टारकं, प्रभुमित्यर्थः, मामिति शेषः। "भावे भट्टकं मालेदि" इत्यत्र "भावे ! भट्टके मालीअदि" इति पाठे—"भाव ! भट्टकः मार्य्यते" इति संस्कृतम्। एतन्मते "भाव" इति सम्बोधनान्तं, "भट्टकः" इति उक्ते कर्मणि प्रथमा। मार्य्यते इति कर्मणि लट्]।

विटकृतां निर्भर्त्सनामधिगत्य शकारः विटस्याकृतवेदित्वं दर्शयन्नाह, सर्वकाल-मिति।—सर्वकालं—सकलं समयमभिव्याप्य, अनुदिनमित्यर्थः, मया—शकारे-णेत्यर्थः, मांसेन—सुस्वादुना आमिषेण तथा घृतेन—सर्पिषा च, पुष्टः,—वृद्धिं नीतः, परिपोषित इत्यर्थः, विट इति शेषः, अद्य—इदानीम्, अस्मिन् क्षणे इत्यर्थः, कार्य्ये—प्रयोजने, समुत्पन्ने—उपस्थिते सति इत्यर्थः कथं—किमर्थं, मे मम, वैरिकः,—शत्रुः, [वैरिरेव इति वैरिकः इति वैरिशब्दात् स्वार्थे कन्] जातः ?—भूतः ? नियतं मद्दत्तमुभोज्यपरिवर्द्धितशरीरस्य ते, मदीयकार्य्यकाले एवंविधमप्रियानुष्ठानमकृतज्ञता-परिचायकतया अतीवानुचितमिति तात्पर्य्यम्। पथ्यावक्त्रं वृत्तम्॥ २८॥

(द) शिरश्चालनसंज्ञा—शिरसः,—मम मस्तकस्य, चालनेन—करेण गलदेशं धृत्वा आलोडनेनेत्यर्थः, शिरसः अधोनमनेन उन्नमनेन चेति यावत्, संज्ञा—ज्ञानं, बुद्धिस्फूर्तिरित्यर्थः, दत्ता—मह्यमर्पितेत्यर्थः, विटेनेति शेषः मम गलदेशधारणेन शिरः अभीक्ष्णं सञ्चाल्य विटः इदानीं मह्यम् एकां नवीनामुद्भावनीं शक्तिं दत्तवानिति तात्पर्य्यार्थः ; शकारवक्तृत्वेनैतत् हास्यरसोद्दीपकं वचनं प्रोक्तरीत्या तद्रसानुकूलत्वेन

तं कधं क्खगे एव्वं वड्डकेहिं गल्लकप्पमाणेहिं (ध) कुलेहिं जादे अकज्जं कलेमि? एव्वं एदं अंगीकलावेदुं मए भणिदं। ❀

विटः।—

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ २९॥

वसन्तसेनां मारयिष्यामि। एवं तावत्। भाव! यत् त्वं मया भणितः, तत् कथमहमेवं बृहत्तरैः गल्लकप्रमाणैः कुलैर्जातोऽकार्य्यं करोमि? एवमेतदङ्गीकारयितुं मया भणितम्।

व्याख्यातं, नो चेदेवं, तदा विटस्य प्राक् शिरश्चालनादर्शनात् यथाश्रुतव्याख्या न समीचीनतया संलगतीति बोद्धव्यम्। [केचित्तु "पेशिक्ष" इति प्राकृतस्य "पिष्ट" इति संस्कृतम् इत्याहुः]। एवं तावत्—एवमेव भवतु, एतदेव समीचीनमिति वा।

(ध) गल्लकप्रमाणैः,—गल्लकः,—चषकसमानार्थकपानपात्रविशेषः, पत्रपुटी वा, तस्य प्रमाणमिव—परिमाणमिव प्रमाणं येषां तैः, तत्सदृशैः अतिसङ्कीर्णैरित्यर्थः, [क्वचित् "गल्लक" इत्यत्र "मल्लक" इति पाठः, तस्य मल्लक इति संस्कृतम्; "मल्लिका पत्रपुटिका, तया कुलस्य महत्त्वं मौर्ख्यादुपमिनोति" इति पृथ्वीधरधृता प्राचीनटीका, वयन्तु—नारिकेलशस्यसाराधारभूतायाः कठिनायाः त्वचः समुद्गक एवात्र मल्लक-शब्दार्थः सरक्तया आभातीति मन्यामहे। कुलैरित्यत्र विवक्षावशात् सप्तमीस्थाने तृतीया, एकत्वे बहुत्वञ्च बोद्धव्यं, कुले इत्यर्थः]। अत्र "कुलैः समुद्रप्रमाणैः" इति वक्तव्ये, यत् "गल्लकप्रमाणैः" इत्युक्तं, तत् "अपार्थमक्रमं व्यर्थम्" इत्याद्युक्तशकार-वचनलक्षणात् सोढव्यम्।

न हि कुलं लोकानां सद्व्यवहारनियामकं भवति, किन्तु स्वीयः असाधारणः स्वभाव एव इत्यावेदयितुमाह, किमिति।—अत्र—अकार्य्यकरणाकरणविनिर्णय-विषये, कुलेन—वंशेन, उपदिष्टेन—कथितेन, किम्?—किं प्रयोजनम्? अत्र वंशगौरव-कीर्त्तनं साधुत्वानियामकतया अनावश्यकमेव इत्यर्थः, तर्हि किं नियामकमित्या-काङ्क्षायामाह,—शीलं—स्वभावः, ("शीलं स्वभावे सद्वृत्ते" इत्यमरः) एव कारणं—हेतुः, भवति इति शेषः; एतदेव दृष्टान्तेन दृढ़यति, तथा हि, सुक्षेत्रे—उर्व्वरभूमौ, कण्टकिद्रुमाः,—वर्व्वुरादिकण्टकप्रधानवृक्षाः, सुतराम्—अतिशयेनेत्यर्थः, स्फीताः—वर्द्धिता इत्यर्थः, भवन्ति—जायन्ते। उर्व्वरभूमौ यथा कण्टकिवृक्षाणां बाहुल्यं भवति, तथा प्रख्यातसद्वंशेऽपि वंशकलङ्कभूता बह्वी दुष्टप्रकृतयः तनया उत्पद्यन्ते, अतः

शकारः। भावे! एशा तव अग्गदो लज्जाअदि, ण मं अंगीकलेदि। ता गच्छ, थावलअ-चेड़े मए पिट्टिदे गदे, वि एशे पलाइअ गच्छदि, ता तं गेण्हिअ आअच्छदु भावे। * (न)

विटः। [स्वगतम्]।

अस्मत्समक्षं हि वसन्तसेना
शौण्डीर्यभावान्न भजेत मूर्खम्।

* भाव! एषा तवाग्रतो लज्जते, न मामङ्गीकरोति। तद्गच्छ स्थावरक-चेटो मया पिट्टितो (ताड़ितो) गतः, अपि एष पलाय्य गच्छति, तत् तं गृहीत्वा आगच्छतु भावः।

वंशोदाहरणम् अकिञ्चित्करं, सौशील्यमेव अनुचितानाचरणे कारणमिति भावः। अत्र कुलस्य सुचेलेण, शकारस्य च कण्टकिद्रुमैः सार्द्धं साम्यस्य प्रणिधानगम्यत्वात् साधर्म्येण दृष्टान्तो नामालङ्कारः, तथा विशेषेण सामान्यसमर्थनादर्थान्तरन्यासश्च इत्यनयो-र्नैरपेक्ष्यात् संसृष्टिः। पथ्यावक्त्रं वृत्तम्॥ २९॥

(न) तव अग्रतः,—त्वत्समक्षमित्यर्थः। अङ्गीकरोति—स्वीकरोति, रमण-रङ्गेण इति शेषः, महानुभवं भवन्तं पुरतः अवलोक्य रक्ताऽपि सती लज्जया मां न भजते इति भावः। स्थावरकचेटो मया पिट्टितो गतः, अपि एष पलाय्य गच्छति इत्यन्वयः, पलाय्य - पलायनं कृत्वा; [परापूर्व्वकस्यायतेः इत्यस्य ल्यपि रूपं, रस्य च लत्वमभिधानादिति वेदितव्यम्] मदनुमतिमगृहीत्वैवासौ सक्रोधं ममाधि-कारात् पलायते, पुनर्न एष्यति इति सम्भावयामि, अतः भवान् तमानेतुं सत्वरं यातु इति समुदितार्थः। वसन्तसेनाजिघांसुरयं दुष्टशकारः स्वीयकामार्त्तत्वप्रख्यापणव्याजेन एवमुक्त्वा विटं देशान्तरं प्रेरयति इति वेदितव्यम्। अपीति सम्भावनायामव्ययमिति ज्ञेयम्। ["पिट्टिदे गदेवि एशे" इत्यत्र "पिट्टिदे गद्दहे विअ शे" इति पाठस्तु सम्यक् आभाति; तथात्वे, यतः स्थावरकचेटः गर्द्दभ इव ताड़ितः, अत एव स पलाय्य गच्छतीत्यन्वयः]।

एवंविधं शकारभाषितं कुलक्रमेवेत्यनुवगत्यैव ऋजुमतिः विटः, कुलजा इव वसन्तसेना मध्यमव्रीड़िततया मम समक्षं सञ्जातलज्जा अस्मिन् स्वाभिलाषं यथेच्छं न प्रकाशयतीति मन्यमानः तस्मात् स्थानादपसर्त्तुकाम आह, अस्मदिति।—वसन्तसेना शौण्डीर्य्यभावात्—उदारस्वभावसम्पन्नत्वादित्यर्थः, उदारस्वभावा तथा चारुदत्तानु-

तस्मात् करोम्येष विविक्तमस्या
विविक्तविस्रम्भरसो हि कामः ॥ ३० ॥

[प्रकाशम्] एवं भवतु, गच्छामि ।

वस । [पटान्ते (प) गृहीत्वा] णं भणामि सरणागदम्हि । *

विटः । वसन्तसेने ! न भेतव्यं, न भेतव्यम् । काणेली-मातः ! वसन्तसेना तव हस्ते न्यासः । (फ)

शकारः । एव्वं मम हत्थे एशा णाशेण चिट्ठदु । †

* ननु ! भणामि शरणागताऽस्मि ।   † एवं मम हस्ते एषा न्यासेन तिष्ठतु ।

रागिणी भूत्वाऽपि "कथमहम् इदानीम् अर्थलोभेन घृणावधीरितशकारं सतः विटस्य समक्षं भजामि किल" इत्यवबोधयितुमिवेति भावः, अस्मत्समक्षं—मम सन्निधौ, मूर्खं—सदसद्विवेकविरहितम्, अतः तादृशविदग्धरमणीरमणानर्हमित्यर्थः, शकारमिति शेषः, न भजेत—सेवेत तस्मात्—मत्समक्षं भजनास्वीकारात् इत्यर्थः, एषः, अहम्, अस्याः,—वसन्तसेनायाः, विविक्तं—विजनत्वं, करोमि—विदधामि, मदपसरणेनास्याः निर्बाधम् अन्योऽन्यमिलनव्यापारं संसाधयामीत्यर्थः, हि—यतः, कामः,—मदनः, सुरत-सम्भोगः वा, विविक्ते—विजने, यः विस्रम्भः—विश्वाससंवलिततरहस्यव्यापारः, तस्मिन् रसः—अनुरागः यस्य तादृशः, विजनेषु एव कामः प्रसरतीति तात्पर्यम् ; यद्वा—विविक्ते—जनसञ्चाररहिते देशे, यः विस्रम्भः,—अशङ्किततया अवस्थानात् उभयोः यः निर्बाधमुपभोगविश्वास इत्यर्थः, तेन उपभुज्यमान इति शेषः, रसः,—रस्यमानः, स्वादः इत्यर्थः, निरतिशयसुखसन्ततिरूपः यस्य तथाविधः इति विग्रहलभ्योऽर्थः ; असङ्कुचितचेतोभ्यामाभ्यामेव रतिरसः सम्यक्तया अनुभवितुं यथा शक्यते तथा कर्त्तव्यमेव मया, अतोऽधुना इतः अपसर्त्तव्यमिति विटस्याभिप्रायः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । उपजातिः वृत्तम् ॥ ३० ॥

(प) पटान्ते—वस्त्रप्रान्ते, विटस्येति शेषः ।

(फ) न्यासः,—उपनिधिः, निक्षेप इत्यर्थः, पुनर्ग्रहणाय कियत्कालं तव समीपे एतां संस्थाप्य गच्छामीत्यर्थः ; दृश्यते हि लोके न्यासभूतं वस्तु रक्षकैः यथेच्छमुपभोक्तुं न शक्यते इति, अतः मच्छरणागतत्वेन मदीयमेवैतत् वसन्तसेनारूपं वस्तु आ-मत्स-मर्पणात् त्वया सुसंरक्षणीयमिति ज्ञापयितुं न्यासभूतत्वेनास्या उल्लेखः ।

विटः। सत्यम् ?

शकारः। शच्चं। * (ब)

विटः। [किञ्चिद्गत्वा] अथवा मयि गते नृशंसो हन्यादेनाम्; तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितम्। (भ) [इति एकान्ते (म) स्थितः]।

शकारः। भोदु, मालइश्शं; अधवा कवड़-कावड़िके एशे बम्हणे वुड्ढखोड़े कदावि ओवालिद-शलीले गडिअ, शिआले भविअ हुलुभुलिं (य) कलेदि; ता एदश्श वंचणा-णिमित्तं एव्वं दाव कलइश्शं। [कुसुमावचयं कुर्वन्नात्मानं मण्डयति]। वाशू! वाशू! वशंतशेणिए! एहि। †

विटः। अये! कामी संवृत्तः; हन्त!! निर्वृतोऽस्मि, गच्छामि। [इति निष्क्रान्तः]।

* सत्यम्।

† भवतु, मारयिष्यामि; अथवा कपटकापटिक एष ब्राह्मणो वृद्धशृगालः कदाऽपि अपवारितशरीरो गत्वा, शृगालो भूत्वा कपटं करोति; तदेतस्य वञ्चना-निमित्तमेवं तावत् करिष्यामि। वासु! (बाले!) वासु! (बाले!) वसन्तसेने! एहि।

(ब) शाकारभाषायां नाश-न्यासशब्दयोरेकाकारतया प्रयोगदर्शनात्, "णाशेण" इत्यस्य "विनाशेन तिष्ठतु" इत्यर्थमभिप्रेत्यैव शकारेणोक्तमेतत्; अतो नास्य मिथ्या-वादित्वमिति ध्येयम्। कविनाऽप्यत्र वसन्तसेनानिधनसम्पृक्तोदन्तजातमित एव प्रारभ्यते इति सामाजिकेभ्यः विज्ञापयितुमेतत् सैङ्गितमुपन्यस्तमिति वेदितव्यम्।

(भ) नृशंसः,—क्रूरः, घातुक इत्यर्थः, ("नृशंसो घातुकः क्रूरः" इत्यमरः)। एनां—वसन्तसेनाम्। अपवारितशरीरः,—प्रच्छादितदेहः, अन्तराले स्थित्वा व्यवधापित-विग्रहः सन् इत्यर्थः। चिकीर्षितं—कर्त्तुमिष्टम्, अभिलषितं कर्म्म इत्यर्थः।

(म) एकान्ते—निर्जने, एकस्मिन् पार्श्वे इत्यर्थः।

(य) कपटकापटिकः,—अतीव मायावीत्यर्थः; [कपटाचरणं शीलमस्येत्यर्थे कपटशब्दात् "शीलम्" (४।४।६१ पा०) इति सूत्रेण शीलार्थे ठक्] अत्यन्तकपट-व्यवहारी इति यावत्; अत्र कपटशब्दस्य पुनरुक्तत्वेन कथितपदत्वदोषः शकार-वक्तृकत्वात् सोढव्यः।

शकारः। सुवस्सअं देमि, पिअं वदेमि,
पड़ेमि शीशेण शवेट्ठणेण।
तधावि मं णेच्छशि? शुद्दंति!
किं शेवअं कश्टमआ मणुश्शा: *॥ ३१॥

वस। को एत्थ संदेहो! † [अवनतमुखी सचूर्णकं "खलचरित" इत्यादि श्लोकद्वयं पठति]।

* सुवर्णकं ददामि प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन।
तथाऽपि मां नेच्छसि? शुद्धदन्ति! किं सेवकं कष्टमया मनुष्याः

† कोऽत्र सन्देहः।

अपवारितविग्रही भूत्वा विटश्चेत् ममापकार्य्यं पश्येत् तदास्य महान्तं विघ्नमुत्पादयेदिति विभाव्य तं वञ्चयितुमिदानीं वसन्तसेनायां स्वीयं [illegible]तानुरागं प्रदर्शयति, सुवर्णकमिति।- सुवर्णकं—सुवर्णालङ्कारं, सुवर्णमुद्रां वा। [सुवर्णमिव इति सुवर्णकं, सुवर्णशब्दात् स्वार्थे कन्] ददामि—यच्छामि। प्रियं—मधुरवचनमिति यावत्, वदामि—कथयामि, सवेष्टनेन—सोष्णीषेण, किरीटभूषितेनेत्यर्थः, शीर्षेण—मस्तकेन, पतामि—आत्मानं निक्षिपामीति भावः तव पादयोरिति शेषः, पादयोः मस्तकं संस्थाप्य त्वाम् अनुनयामीति फलितार्थः; हे शुद्धदन्ति!—शोभनदशने! तथाऽपि—ईदृशानुनये क्रियमाणेऽपि इत्यर्थः। सेवकं—परिचारकं मां—शकारमित्यर्थः किं—कथं न इच्छसि?—कामयसे? तव छन्दानुवर्त्तनये एवं यथानिर्द्देशमनुतिष्ठति मयि ते निर्द्दयव्यवहारः सर्व्वथा अनुचित एवेति भावः; एवं चाटुशतेनापि वसन्तसेनायाः प्रसादमलभमानः छलिकनिर्वेदं प्रकटयति, कष्टमया इत्यादि।—तथा हि मनुष्याः—मानवाः, कष्टमयाः—क्लेशप्रधानाः, बहुप्रयासेनापि तेषामभिलाषः नैव झटिति पूर्य्यते इति भावः; मया बहुधाऽनुनीताऽपि त्वं मह्यं न दयसे? इत्यहो! परप्रसादाभिलाषुकाणां सेवकानां किमेतस्मादप्यस्त्यधिकं दुःखकरम् इत्याशयः। [केचित्तु "किं शे वअं" इत्यादि चतुर्थचरणधृतपाठं "किमस्या वयं काष्ठमया मनुष्याः" इत्येवमनुवदन्ति। तदर्थस्तु,-- अस्याः समीपे वयं काष्ठमयाः,—काष्ठपुत्तलिकासदृशाः, स्थाणुतमा इत्यर्थः, अचेतना वा, मनुष्याः किम्? काष्ठपुत्तलिकावत् जीवनशून्याः शक्तिहीनाश्च वयं किम्? नैवं विभाव्या वयम् इत्यर्थः। अत्र मनुष्यगतक्लेशबहुलत्वरूपसामान्येनार्थेन बहुधा अनुनये क्रियमाणे

खलचरित ! निकृष्ट ! जातदोषः
कथमिह मां परिलोभसे धनेन ? !
सुचरित-चरितं विशुद्धदेहं
न हि कमलं मधुपाः परित्यजन्ति ॥ ३२ ॥

अत्रापि सेवककामनाऽपरिपूरणरूपस्य तृतीयपादगतविशेषार्थस्य सोपपत्तिकत्वकरणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । उपजातिः वृत्तम् ॥ ३१ ॥

"गुणिषु गुणज्ञो रमते नागुणिषु हि तस्य परितोषः । अलिरेति वनात् कमलं न हि भेकस्त्वेकवासोऽपि ॥" इति न्यायात्, सतां सत्सु एव अनुरागः साहजिकः, न तु निर्गुणेषु, इति असति त्वयि मेऽनुरागः सुतरामस्वाभाविक इति मामधिगन्तुं तवेदं धनलोभप्रदर्शनं विफलमिति भङ्ग्या आह, खलेति ।—रे खलचरित !—खलस्य—दुर्जनस्य, चरितमिव चरितं—स्वभावः यस्य तादृश ! निकृष्ट !—रे नीच ! ( अथवा, —रे खल ! इति पृथगामन्त्रणपदं, तथा, चरितेन—स्वभावेन, पापकर्म्मणा वा, निकृष्ट !—नीच ! ) त्वं जातदोषः,—समुत्पन्नपापः, निरपराधायाः मम जिघांसया इति भावः, निखिलदोषैकभूमिरिति वाऽर्थः ; अथवा जाते—जनने, दोषः,—अपवादः यस्य सः, जारज इत्यर्थः ; तथाभूतः सन्नपि, इह—अस्मिन्, त्वां प्रति प्रणय-प्रदर्शनविषये इत्यर्थः, धनेन—अकिञ्चित्करेण अर्थेन, मां—गुणवदेकसेव्यां वसन्तसेना-मित्यर्थः, कथं—किमथ, परिलोभसे ?—प्रलोभयसे ? तुच्छेन धनेन गुणवद्वल्लभाया मम प्रलोभनं व्यर्थमिति भावः ; एतमेवार्थमप्रस्तुतोपन्यासेन प्रस्तौति, सुचरितेति ।—मधुपाः,—भ्रमराः, प्रकृतार्थापेक्षया भ्रमर्यः वा, [ नायिकाः इति ध्वनिः ; मधुप्यश्च मधुपाश्च इति विग्रहेण "पुमान् स्त्रिया" ( १।२।६७ पा० ) इति सूत्रात् एकशेषे मधुपाः इति पदं सिद्धम् ; तथा चात्र मधुपीतुल्यायाः वसन्तसेनायाः कमलतुल्ये चारुदत्ते, मधुपतुल्यस्य च चारुदत्तस्य कमलतुल्यायां वसन्तसेनायामन्योऽन्यसुदृढानुरागसाम्य-प्रदर्शनमव्याहतमेव, अतोऽत्र साम्यप्रदर्शने लिङ्गविपर्य्यासजनितशङ्का न कार्य्येति ] सुचरितचरितं—सुचरितं—सुष्ठु कृतं, चरितं—जनमनोहरणरूपं कार्य्यं येन तादृशं, [ पुरुषमिति ध्वनिः, तत्पक्षे तु—सु—सयत्नमित्यर्थः, चरितं—कृतं संरक्षितमिति यावत्, चरितं—स्वभावः येन तथोक्तं, दारिद्र्यदशायामप्यचलतस्वभावमित्यर्थः, यद्वा, —सुचरितः,—सज्जनः, तस्य चरितमिव चरितं—स्वभावः यस्य तं, सर्व्वजनहृदया-ह्लादकमित्यर्थः ] विशुद्धदेहं—निर्मलाकारं. ( पुरुषपक्षे तु—अपापमित्यर्थः ) कमलं—पद्मं, न हि—नैव, परित्यजन्ति—त्यजन्ति ; यथा कुसुमपक्षपातिन्यः भ्रमर्यः

यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजन-समाश्रयः कामः ॥ ३२ ॥

मकरन्दसम्भारपरिपूर्णं कमलं विहाय कुसुमान्तरं न गच्छन्ति, तथा गुणानुरक्ता अहमपि विविधसद्गुणगणोदात्तं चारुदत्तमुपेत्य भवादृशमन्यं कुपुरुषं नाश्रयामि इति भावः । [ लुभतेः लुभ्यतेश्च परस्मैपदित्वेन "से" इति आत्मनेपदप्रयोगस्य, तथा तौदादिकत्वेन उपधागुणस्य चाननुशिष्टत्वात्, "परिलोभसे" इति पदं व्याकरणलक्षणहीनतया च्युतसंस्कृतिदोषदुष्टमवधातव्यम् ; "परिलुभसि" "परिलोभयसे" इति वा पदं साधुतया सङ्गच्छते, "आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचित्" इत्यनुशासनानुसारेण कथञ्चित् आत्मनेपदसिद्धावपि तुदादिगणीयत्वेन गुणस्यासम्भवत्वं सुस्थितमेव । "भ्वादेराकृतिगणत्वात् लोभति इत्यप्याहुः" इति दैवादिकधातुपाठविवृतौ दीक्षितेन सिद्धान्तकौमुद्यां केचिदित्यभिधाय मतमुपन्यस्तं, तन्मतानुसरणे नास्य च्युतसंस्कारतादोषदुष्टत्वं वेदितव्यम् ; वयन्तु क्वेष्वपि व्याकरणगणपाठेषु तौदादिक-दैवादिकव्यतिरिक्तस्य लुभतेः परस्मैपदिनः अदर्शनात् अस्य प्रोक्तदोषदुष्टत्वमाकलितमित्यवधातव्यम् । अत्र सामान्यादप्रस्तुतात् मधुपानां कमलपरित्यागाभावरूपात् विशेषस्य प्रस्तुतस्य वसन्तसेनायाः चारुदत्तपरित्यागाभावरूपस्य गम्यत्वादप्रस्तुतप्रशंसाऽलङ्कारः ; तथा खलचरितादिसम्बुद्धिविशेषणपदानां [illegible]काणां प्रकृतार्थपोषणाभिप्रायेण प्रयोगात् परिकरालङ्कारश्चेति, अनयोः तिलतण्डुलवत् अन्योऽन्यनिरपेक्षतया संस्थितेः संसृष्टिरिति बोध्यम् । पुष्पिताग्रा वृत्तम् ॥ ३२ ॥

वारवनितानां हि सत्पुरुषेषु धनलोभविनिर्मुक्ता रतिः सम्यक् चरितार्थतामुपैति, श्लाघनीया च भवतीति तादृशः गुणगणालङ्कृतः पुरुष एव धनलोभविरहितया मया सेवनीय इत्याह, यत्नेनेति ।—कुलशीलवान्—प्रशस्तवंश-सत्स्वभावयुक्तः, सद्वंशोत्पन्नः चरित्रवांश्चेत्यर्थः, पुरुषः,—नरः, दरिद्रोऽपि- निर्धनोऽपि, यत्नेन—आदरेण[illegible], सेवितव्यः,— उपासितव्यः, आश्रयणीय इत्यर्थः, मया इति शेषः ; हि—यतः, पणस्त्रीणां—पणलभ्याः स्त्रियः पणस्त्रियः,—क्रयक्रीता रमण्यः, गणिका इत्यर्थः तासां, सदृशजनः,—योग्यपुरुषः, अनुरूपकान्त इत्यर्थः, समाश्रयः,—सम्यक् आश्रयः, —अवलम्बनं, विषयः इति यावत्] यस्य तादृशः, कामः,—मदनः, सम्भोगेच्छा इति यावत्, शोभा—भूषणम् इत्यर्थः, श्लाघ्य इति यावत् ; वारयोषितस्तावत् प्रायशः प्रार्थयिता योग्यः अयोग्यः वेति अविविच्यैव केवलं धनलोभपारवश्येन तं कृतार्थयन्तीति लोके निन्दास्पदतामुपयन्ति, एवं हीनवृत्तयोऽपि ता यदि धनं तृणाय मन्य-

अविअ, सहआर-पादवं सेविअ पलास-पादवं अंगी-करिस्सं ? * (र)

शकारः। दाशीए धीए! दलिद्दचालुदत्ताके शहआल-पादवे कड़े, हग्गे उण पलाशे भणिदे !! किंशुके वि ण कड़े। एव्वं तुमं मे गालिं देंती (ल) अज्ज वि तं ज्जेव चालुदत्ताकं शुमलेशि ? †

* अपि च, सहकारपादपं सेवित्वा पलाशपादपमङ्गीकरिष्यामि ?

† दास्याः पुत्रि! दरिद्रचारुदत्तकः सहकारपादपः कृतः, अहं पुनः पलाशो भणितः !! किंशुकोऽपि न कृतः। एवं त्वं मह्यं गालिं ददती अद्यापि तमेव चारुदत्तकं स्मरसि ?

---

माना: स्वानुरूपे प्रणयिनि प्रणयिन्यो भवन्ति, तदा तासां दूषणाऽपि हर्त्तिर्भूषणमेव भवतीति भावः। अत्र वारवनितासामान्यस्य अनुरूपपुरुषानुरागजनितशोभावर्णन-रूपसामान्येन वारवनिताविशेषवसन्तसेनायाः कुलशीलवत्त्वेन स्वानुरूपतया दीन-पुरुषचारुदत्तसेवायाः करणीयत्वेन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासोऽलङ्कारः। आर्या वृत्तम् ॥ ३३ ॥

(र) सहकारपादपम्—अतिसौरभादिगुणान्विताम्रतरुम्, ("आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः) पलाशपादपं—किंशुकवृक्षं गन्धशून्यतया निर्गुणमिति भावः। "देखिते पलाशपुष्प अति मनोहर। गन्ध विना केवा तार करे समादर॥" इति वङ्गीयगाथाऽनुसारतः अस्य भावोऽवगन्तव्यः। अङ्गी-करिष्यामि—आश्रयत्वेन अभ्युपगमिष्यामि, प्रणयित्वेन स्वीकरिष्यामीत्यर्थः। अत्र अप्रस्तुताभ्यां सहकार-पलाशाभ्यां प्रस्तुतयोश्चारुदत्त-शकारयोर्बोधनात् अप्रस्तुतप्रशंसेय-मलङ्कृतिः।

(ल) अत्र पलाश किंशुकयोरेकपर्य्यायकत्वेऽपि "पलं मांसमश्नाति" इति पलाशः,—राक्षसः, इत्येवमर्थं बुद्ध्वा शकारेण "एव्वं तुमं मे गालिं देंती" इत्युक्तम्। गालिं ददती—आक्रोशं कुर्व्वती इत्यर्थः, [गालयते इत्यस्मात् चौरादिकात् गलतेर्वा भौवादिकात् गलधातोः इनि कृते गालिशब्दः पुंसि शापे आक्रोशे चार्थे व्युत्पादितः, अतः ईकारान्तविधया "गाली" इति संस्कृते अनुवादः भ्रमकृतः एवेति मन्यामहे]।

वस। हिअअगदो ज्जेव किंत्ति ण सुमरीअदि? * (व)

शकारः। अज्ज वि दे हिअअगदं तुमं च शमं ज्जेव मोड़ेमि। (श) ता दलिद्द-शत्थवाहअ-मणुश्श-कामुकिणि! चिट्ठ चिट्ठ। †

वस। भण भण, पुणो वि भण, सलाहणिआइं एदाइं अक्खराइं। ‡ (ष)

शकारः। पलित्ताअदु दाशीए पुत्ते दलिद्द-चालुदत्ताके तुमं। §

वस। परित्ताअदि, जदि मं पेक्खदि। ¶

* हृदयगत एव किमिति न स्मर्य्यते?

† अद्यापि ते हृदयगतं त्वाञ्च सममेव मोटयामि। तद्दरिद्र-सार्थवाहक-मनुष्य-कामुकि! तिष्ठ तिष्ठ।

‡ भण भण, पुनरपि भण, श्लाघनीयानि एतानि अक्षराणि।

§ परित्रायतां दास्याः पुत्रश्चारुदत्तकस्त्वाम्।

¶ परित्रायते, यदि मां प्रेक्षते।

(व) किमिति न स्मर्य्यते?—कथं विस्मर्य्यते? इत्यर्थः, इदानीमदृष्टस्यापि अहरहः चित्तवर्त्तिनः तस्य विस्मरणासम्भवादिति भावः।

(श) अद्यापि—इदानीमपि इत्यर्थः, मत्कृतानुनयसमकालं यौवनगर्वेण मामनादृत्य मम समक्षं हि तादृशजनस्य अनुध्यानक्षणे एवेति यावत्। हृदयगतं —चित्तान्तर्वर्त्तिनं, चारुदत्तमिति शेषः। त्वाञ्च—भवतीञ्च। सममेव—युगपदेव, समकालमेवेत्यर्थः, मोटयामि—हन्मि, चूर्णयामि इत्यर्थः, [मोटयतीति चौरादिकात् मुटधातोः लटि रूपम्]। स चेत् ते हृदयगतः, तदा त्वयि हतायामेव नूनं तस्यापि नाशः भविष्यति आधारस्य विनाशे आधेयस्यापि नाशदर्शनात् इति मूर्खशकारस्य अभिप्रायः।

(ष) एतानि—दरिद्रसार्थवाहमनुष्यकामुकि! इत्येतत्पदघटकानि इत्यर्थः। अक्षराणि—वर्णानि। श्लाघनीयानि—प्रशंसार्हाणि तस्य दरिद्रत्वेन धनदानासमर्थतया, गुणेष्वेव मम अनुरक्तत्वप्रतीतेः न निन्दाव्यञ्जकानि प्रत्युत गौरवजनकान्येवेति श्रोतव्यत्वेन प्रार्थनीयानि इत्यर्थः।

शकार:। किं शे शक्के वालिपुत्ते महिंदे
लंभापुत्ते कालणेमी शुबंधू ?।
लुद्दे लाआ दोणपुत्ते जडाऊ
चाणक्के वा धुंधुमाले तिशंकू ? * ॥ ३४ ॥
अधवा एदे वि दे ण लक्खंति। † (स)—

* किं स शक्रो वालिपुत्रो महेन्द्रो रम्भापुत्र: कालनेमि: सुबन्धु:।
रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कु: ? ॥

† अथवा एतेऽपि त्वां न रक्षन्ति।—

विपन्नां मामद्रक्ष्यच्चेत् तदा नूनं महासत्त्वोऽसौ मामरक्षिष्यदिति वसन्तसेनाऽभिप्रायमवगत्य, का कथा दुर्बलस्य चारुदत्तस्य, शक्रादयो महावीरा अपि मदीयक्रोधापे: त्वां रक्षितुं न शक्नुवन्ति इत्याह, किमिति।—स:,—चारुदत्त इत्यर्थ:, शक्र:,—इन्द्र:, किम् ? (किमिति सर्वैरेव कर्तृपदैरन्वेति) वालिपुत्र:,—अङ्गद:, अथवा वाली पुत्रो यस्य इति शक्रविशेषणम्। अथवा महेन्द्र:,—देवेन्द्र: (शक्र-महेन्द्रयोरेकपर्य्यायकत्वेऽपि नीचपात्रशकारोक्तत्वात् नासङ्गतोऽयं प्रयोग इति बोध्यम्); यद्वा,—महेन्द्र:,—महैश्वर्य्यशाली, वालिपुत्र: इत्यन्वय:; रम्भापुत्र:,—रम्भानामाप्सरस्तनय:. कालनेमि:,—रावणमातुलो राक्षसविशेष:, हिरण्यकशिपुपुत्र: दैत्यविशेषो वा, (यथा,—"कालनेमिं दुराधर्षं रक्ष: परमदुर्जयम्। चतुरास्यं चतुर्हस्तमष्टनेत्रं भयावहम्॥" इति रामायणम्; तथा "आत्मानमिह सञ्जातं जानन् प्राक् विष्णुना हतम्। महाऽसुरं कालनेमिं यदुभि: स व्यरुध्यत॥" इति श्रीमद्भागवतम्); सुबन्धु:,-तन्नामा दैत्य:, राजविशेषो वा, रुद्र:,—शिव:, राजा—नृपति:, द्रोणपुत्र:,—अश्वत्थामा, जटायु:,—गरुड़ात्मज: पक्षिविशेष:, चाणक्य:,—नन्दवंशोच्छेदक: विष्णुगुप्तापरनामक: पण्डित:, धुन्धुमार:,—वृहदश्वपुत्र: कुवलयाश्वनामक: राजविशेष:, वा—अथवा, त्रिशङ्कु:,—ख्यातनामा: सूर्य्यवंश्य: राजविशेष: ? भवतीति शेष:, किमिति पूर्वेणान्वय:; तत्र यद्यभवारुदत्तश्चेत् उक्तानां प्रसिद्धवीराणामेकतमोऽभविष्यत्, तदा मन्ये, स जिघांसोर्मत्त: त्वामरक्षिष्यदिति, किन्तु तस्यातिदुर्बलस्य एतेषामन्यतमत्वाभावात् मत्तस्संरक्षणं सुतरामसम्भवीति भाव:। शालिनी वृत्तम्; "मात्तौ गौ चेच्छालिनी वेदलोकै:" इति लक्षणात्॥ ३४॥

(स) उक्तवीरेषु कथञ्चित् सम्भावितं स्वहस्तात् वसन्तसेनापरित्राणसामर्थ्यम्

चाणक्केण जधा सीदा मालिदा भालदे जुए।
एव्वं दे मोड़इश्शामि जड़ाऊ विअ दोवदिं * ॥ ३५ ॥

[ इति ताड़यितुमुद्यतः ]।

वस। हा अत्ते! कहिं सि? हा अज्जचारुदत्त! एसो जणो असंपुण्ण-मणोरहो ज्जेव विवज्जदि! ता उद्धं अक्कंदइस्सं; अधवा वसंतसेणा उद्धं अक्कंददि त्ति लज्जणीअं क्खु एदं। (ह) णमो अज्जचारुदत्तस्स। †

---

* चाणक्येन यथा सीता मारिता भारते युगे।
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम्॥

† हा मातः! कुत्रासि? हा आर्य्यचारुदत्त! एष जनोऽसम्पूर्णमनोरथ एव विपद्यते! तदूर्द्धमाक्रन्दिष्यामि; अथवा वसन्तसेना ऊर्द्धमाक्रन्दतीति लज्जनीयं खलु एतत्। नम आर्य्यचारुदत्ताय।

---

इदानीं निराकर्त्तुं पक्षान्तरमाह, अथवेति।—एतेऽपि—पूर्व्वोक्ताः अतिप्रसिद्धाः वीरत्वख्यातिं दधतीत्यर्थः वहन्तः शक्रादयोऽपि, न रक्षन्ति—परित्रातुं न शक्नुवन्ति, मत्तोऽनधिकबलतया प्राक् कथञ्चित् सम्भावितम् एतेषां त्वद्रक्षासामर्थ्यमपि सम्प्रति नास्तीत्येवाहमनुमिनोमीति भावः।

वसन्तसेनाया निर्य्यातविषया शकारः तन्निर्य्यातनप्रकारमाह, चाणक्येनेति।—भारते युगे—महाभारतोक्तकथासंसृष्टकाले, द्वापरान्ते कलिप्रारम्भे चेत्यर्थः, ( पृथ्वीधरस्तु "भारतावच्छिन्न समये" इति व्याचख्यौ ) सीता—जानकी, यथा चाणक्येन—चन्द्रगुप्तसचिवेन विष्णुगुप्तेन, मारिता—विनाशिता, ( विष्णुगुप्तेन नवनन्दानां विनाशकरणात् तन्मूर्खस्येयमुक्तिः ) तथा जटायुः,—पक्षिविशेषः, द्रौपदीं—द्रुपदात्मजामिव, जटायुः यथा द्रौपदीं मारितवान् इत्यर्थः, एवं—तथेत्यर्थः, त्वां—भवतीं, मोटयिष्यामि—चूर्णयिष्यामि, हनिष्यामीत्यर्थः; पौराणिकप्रस्तावविरुद्धम् एतत्सर्वं हतौपम्यं शकारस्य मौर्ख्याधिक्यप्रकटनानुकूलत्वात् भूषणमेव। पथ्यावक्त्रं वृत्तम्॥ ३५॥

( ह ) असम्पूर्णमनोरथः,—अपूर्णाभिलाषः; यदि तव दर्शनात् परमहं म्रियेय, तदा एतादृगत्युग्रोऽपि क्लेशः न मामसह्यपीडं पीड़येदिति भावः। विपद्यते—म्रियते इत्यर्थः। ऊर्द्धम्—उच्चैरित्यर्थः। आक्रन्दिष्यामि—रोदिष्यामि, शब्दायिष्ये वा, मज्जीवनरक्षार्थं विपन्मोचनार्थं वा किञ्चित् शरणमाकारयिष्यामीति यावत्, ( "आरावे रुदिते त्रातर्य्याक्रन्दो दारुणे रणे" इत्यमरः )। लज्जनीयमिति।—प्राक्

शकारः। अज्ज बि गब्भदाशी तश्श ज्जेव पावश्श णामं गेण्हदि ?। [इति कण्ठे पीड़यन्] शुमल गब्भदाशि ! शुमल । *

वस। णमो अज्जचालुदत्तस्स। †

शकारः। मल गब्भदाशि ! मल। ‡ [नाव्येन कण्ठे निपीड़यन् मारयति ]।

वस। [मूर्च्छिता निश्चेष्टा पतति ]

शकारः। [सहर्षम् ]।—

एदं दोशकलंडिअं अविणअश्शावासभूदं खलं
लत्तं तश्श किलागदश्श लमणे कालागदं आअदं।
किं एशे शमुदाहलामि णिअअं बाहूण शूलत्तणं
णीशाशे बिमलेइ अंब शुमला शीदा जधा भालदे § ॥ ३१ ॥

---

* अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति ? स्मर गर्भदासि ! स्मर।

† नम आर्य्यचारुदत्ताय। ‡ म्रियतां गर्भदासि ! म्रियताम्।

§ एतां दोषकरण्डिकामविनयस्यावासभूतां खलां
रक्तां तस्य किलागतस्य रमणे कालागतामागताम्।
किमेष समुदाहरामि निजकं बाह्वोः शूरत्वम् ?
निश्वासेऽपि म्रियते अम्बा, सुमृता सीता यथा भारते ॥

आत्मनैव प्रत्याख्यातस्य नीचस्य शकारस्याग्रतः इदानीं महासत्त्वचारुदत्तानुरागिण्याः अभिमानिन्याः वसन्तसेनायाः अस्मात् भिया प्राणरक्षणार्थमार्त्तवत् उच्चैः क्रन्दनं हृदय-दौर्बल्यप्रकाशकत्वेन अतीव लज्जाकरमिति भावः ; अत्र प्राणत्याग एव वरं, न त्वशरणवदाक्रन्दनमिति तात्पर्य्यम्।

स्त्रीघातपातकी अपि शकारः कापुरुषवत् तस्या वधप्रसूतं स्ववीर्य्यातिशय्यं प्रकट-यितुमाह, एतामिति।—करण्डिका—वंशादिविरचितपात्रभेदः, दोषाणां—दुष्ट-व्यवहाराणां, करण्डिका तां, दोषाकरभूतामित्यर्थः, अविनयस्य—दुर्नीतेः, मादृशेषु पुरुषसिंहेषु अनासक्तिरूपासौजन्यदर्शनादिति भावः आवासभूतां—वासभूमिस्वरूपाम्, अविनयशतयुतामित्यर्थः, खलां—क्रूरस्वभावाम्, आगतस्य—पूर्व्वमुद्यानमुपस्थितस्य, तस्य—चारुदत्तस्य इत्यर्थः, रमणे—रमणार्थमित्यर्थः, चारुदत्तं रमयितुमिति यावत्, आगताम्—उपस्थितां, रक्तां - तत्रानुरागिणीं, किल—सम्भावयामीत्यर्थः, [ "वार्त्ता-

इच्छन्तं मम णेच्छसि त्ति गणिआ लोशेण मे मालिदा,
शुण्णे पुप्फकलंडके त्ति शहशा पाशेण उत्ताशिदा ।
शे का बंचिद-भादुके मम पिदा मादेव शा दोवदी
जे शे पेक्खदि णेद्दिशं ववशिदं पुत्ताह शूलत्तणं * ॥ ३७ ॥

* इच्छन्तं मां नेच्छसीति गणिका रोषेण मे मारिता,
शून्ये पुष्पकरण्डके इति सहसा पाशेन उत्त्रासिता ।

सम्भाव्ययोः किल" इत्यमरः ); कालागतां—कालेन—महाकालेन, मृत्युना वा, आगताम्—आनीताम्, [ अन्तर्भाविणर्थोऽत्र गमधातुः । "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी ], कालप्राप्ताम् इत्यर्थः, अकस्मात् कृतान्तमुखस्य मम हस्ते पतितत्वात्; एतां—वसन्तसेनामित्यर्थः, हत्वेति शेषः, एषः,—अहमित्यर्थः, निजकं—स्वकीयं, बाह्वोः —भुजयोः, शूरत्वं—वीर्यं, पराक्रममिति यावत्, किं समुदाहरामि ?—प्रकटयामि ? प्रकाशयामीत्यर्थः, शूरशिरोमणेर्मम अबलामेतां निहत्य बाहुवीर्यख्यापनम् अनावश्यकमिति भावः । वधस्य अनायासकृतत्वेन वसन्तसेनायाः दुर्बलत्वं प्रकटयन्नाह, निश्वासेऽपीति ।—यतः अम्बा—माता, वसन्तसेना इति भावः, ( गणिकायां पूर्वमुपभोग्यत्वं याच्यमानायां मातृत्वकथनं हास्यरसानुकूलेयं शकारोक्तिः ); यथा भारते—महाभारतीये उपाख्याने सीता —जानकी, सुमृता—सुष्ठु मृता, तथा निश्वासेऽपि—मम निश्वासपातेऽपि, म्रियते —प्राणैः वियुज्यते इत्यर्थः, मम बाहुवीर्यं दूरे तिष्ठतु वसन्तसेना मदीयनिश्वासपातमपि न सहते, ममाधिकबलत्वात् तस्याश्च अतिसौकुमार्यादिति भावः । [ "मलेद्ध अंब शुमला" इत्यत्र "मलि इअंच शुमला" इति पाठान्तरे—"म्रियते इयञ्च सुमृता" इति संस्कृतम् ] । रामादिभिरभीक्ष्णं पराजिते राक्षसकुले, सीतावधवार्तामुपश्रुत्य शोकेन नूनं रामादयः युद्धात् निवर्त्स्यन्ति मरिष्यन्ति वा इति सम्भाव्य प्रकटा इन्द्रजिदादय शाम्बरविद्यया मायामयीं सीतां विरचय्य वानरसैन्यानां समक्षं तां निजघ्नुरिति रामायणी वार्त्ता, एतावदेव मूलमाश्रित्य शकारेण रामायणकथायाः भारतीयत्वेन उपन्यासः कृतः, अतः शकारवक्तृत्वेनायं सन्दर्भः सुमर्ष एवेति । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

स्त्रीवधे प्रकटितस्य स्ववीर्यस्य स्वयमेव विकत्थनं करोति, इच्छन्तमिति ।—

भोदु, संपदं बुड्ढखोड्डे आगमिस्सदि त्ति, ता (क) ओस्स- लिअ चिट्ठामि। * [इति तथा करोति]।

स वा वञ्चित-भ्रातृको मम पिता मातेव सा द्रौपदी
योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥

* भवतु, साम्प्रतं वृद्धशृगाल आगमिष्यतीति, तदपसृत्य तिष्ठामि।

इच्छन्तम्—अभिलषन्तं, रन्तुमिति भावः, मां—शकारमित्यर्थः नेच्छसि—न अभिलषसि त्वमिति शेषः, [ "नेच्छसि" इत्यत्र "नेच्छति" इति पाठः समीचीनः ; न इच्छति इति हेतोरिति तदर्थः ] इति—एवम्, उक्त्वेति शेषः, शून्ये—निर्जने इति यावत्, पुष्पकरण्डके—तदाख्ये राजश्यालमदीयजीर्णोद्याने, उत्त्रासिता—भयं प्रापिता, पूर्वमिति शेषः, गणिका—वेश्याङ्गना, वसन्तसेना इति यावत्, सहसा—हठात्, रोषेण—क्रोधेन हेतुना, पाशेन—रज्जुरूपेण भुजेन इत्यर्थः पीडयित्वा इति शेषः, मे—मया, [ मे इति तृतीयाविभक्त्यन्तप्रतिरूपकमव्ययं, वामनाचार्य्यसम्मतं वा, अन्येषाञ्च आचार्य्याणां मते मे इति आदेशस्य तृतीयायां विभक्तावदर्शनात् इति वेदितव्यम् ] इति—इत्थं कथितप्रकारेणेति यावत्, मारिता—नाशिता। इदानीं पौरुषस्य व्यञ्जनैरहृष्टतया तेषां वञ्चितत्वमुपवर्णयति, स वा इति।—वञ्चित-भ्रातृकः,—वञ्चितः,—प्रतारितः, भ्राता येन तादृशः, सहोदरं वञ्चयमानः यो हि तदीयं सर्व्वमेव आढ्यं धनमात्मसात् कृतवानिति तदर्थः, वञ्चकचूडामणिरिति यावत्, सः,—प्रसिद्धः, मम पिता—जनकः, द्रौपदी—द्रुपदनन्दिनी इव, [ द्रौपद्याः पञ्च पाण्डवाः भर्त्तारः आसन्, तया सार्द्धं साम्यकथनात् मूर्खेण शकारेण स्वमातुः सर्व्वोपभोग्यत्वं स्वेनैव प्रकटीकृतम् ; पञ्चलिङ्गकृतयोनिकानां हि शास्त्रेषु वेश्यात्वेन निर्द्धारितत्वात् ] सा—सर्व्वेष्वेव भुजङ्गेषु प्रसिद्धा, माता वा—जननी च इत्यर्थः ; मम पिता वञ्चकः माता च चरित्रहीना, अहं पुनः तयोरनुरूपः पुत्र इति भावः ; यः असौ—मम पिता तथा द्रौपदीसदृशी माता पुत्रस्य—तनयस्य, ममेति यावत्. व्यवसितम्—अनुष्ठितं, प्रयोगतः प्रकाशितमित्यर्थः, ईदृशं—स्त्रीविनाशरूपम् [ एतेन स्वभ्रातृमातृवञ्चकात् पितुः स्वस्वामिप्रतारणेन कलुषितचरित्राया मातुरपि शकारस्य पौरुषाधिक्यं व्यज्यते ] शूरत्वं—शौर्य्यं, न पश्यति—नावलोकयते, अतस्तौ चक्षुषः फलं नाधिगतौ, द्रष्टव्यस्यादर्शनादिति भावार्थः। शार्द्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

(क) तत्—तस्मात्, अत एवेत्यर्थः।

[ प्रविश्य चेटेन सह विटः ]।

विटः। अनुनीतो (ख) मया स्थावरकचेटः। तत् यावत् काणेलीमातरं पश्यामि। [ परिक्रम्यावलोक्य च ] अये! मार्ग एव पादपो निपतितः!! अनेन च पतता स्त्री व्यापादिता। भोः पाप! किमिदमकार्य्यमनुष्ठितं त्वया? तवापि पापिनः पतनात् स्त्रीवधदर्शनेनातीव पातिता वयम्। अनिमित्तमेतत्, यत् सत्यं वसन्तसेनां प्रति शङ्कितं मे मनः; सर्वथा देवताः स्वस्ति (ग)

(ख) अनुनीतः,—सन्तोषितः, शान्तवाक्यप्रयोगेण असन्तुष्टोऽयं सन्तुष्टः कृतः इत्यर्थः।

(ग) मार्गे—पथि। पादपः,—वृक्षः। अनेन—पादपेन इत्यर्थः। व्यापादिता—मारिता। पाप!—पापाचार! इत्यर्थः, [ पाप इति वृक्षसम्बोधनम्। वृक्षेण वात्याघातेन पतता कस्याश्चित् स्त्रियाः तत्तलमधितिष्ठन्त्याः वधः अनुष्ठितः, विवादे एतद्धि मृतस्त्रीशरीरं पर्य्यालोकयतां राजपुरुषाणां वचनेन वसन्तसेनैव चारुदत्तेन मारिता इति प्राड्विवाकानां निर्णयो भविष्यतीति भाव्यर्थः अनेन संसूचित इति वेदितव्यम् ]। तवापि इति।—अत्र अपिशब्दः वयमित्यनेन सम्बध्यते, तेन वयमपीत्यर्थः। अतीव पातिताः —अतिशयपातित्यं प्रापिताः, निरयं गमिता इत्यर्थः, त्वं केवलमेक एव न पतितः, वयमपि त्वयैव सह अत्र पतिता इति अपिशब्दार्थः; पापाचरणवत् पापानुष्ठानदर्शनस्यापि पातित्यजनकतया शास्त्रसिद्धत्वादिति भावः। [ अत्र हि केवलम् अपमृत्युदर्शनजनितपातित्येन वयमत्र न पतिताः, अपि तु निखिलगुणविभूषितायाः निरपराधायाः वसन्तसेनायाः शकारकृतेनायथाजीवनसंशयकरनिकारेण समधिकमेव विपन्नीकृताः दुर्जनस्यास्य सहचारित्वेन परम्परया सहकारित्वेन च मृत्युसंसृष्टिपातित्यादिदोषदुष्टाः इहलोकात् परलोकाच्च पातिताः अपि इत्यप्यर्थो व्यज्यते ]। अनिमित्तम्—अशुभशकुनमित्यर्थः। यत्—यतः, अनिमित्तदर्शनस्य हि अशुभफलदायकत्वेतोरित्यर्थः, सत्यं—यथार्थमेव, अत्र कोऽपि द्वैधीभावो नास्तीति भावः, मम मनसि यदुदेति तत् नियतमेव भविष्यतीत्यत्र अनिमित्तदर्शनमेव प्रमाणमिति तात्पर्य्यं वेदितव्यम्। वसन्तसेनां प्रति—वसन्तसेनामुद्दिश्य, [ "लक्षण –" ( १।४।९० पा० ) इति प्रतेः कर्म्मप्रवचनीयत्वात् तद्योगे द्वितीया ]। शङ्कितं—संशयितं, वसन्तसेना विपन्ना न वेति सन्देहान्दोलितमित्यर्थः; तस्या

करिष्यन्ति। [शकारमुपसृत्य] काणेलीमातः! एवं मया अनुनीतः स्थावरकचेटः।

शकार:। भावे! शाअदं दे? पुत्तका थावलका चेड़ा! तवावि शाअदं? *

चेटः। अधइं। †

विटः। मदीयं न्यासमुपनय।

शकारः। कीदिशे णाशे? ‡

विटः। वसन्तसेना।

शकारः। गदा। §

विटः। क्व?

शकारः। भावश्श ज्जेव पिट्ठदो। ¶ (घ)

विटः। [सवितर्कम् (ङ)] न गता खलु सा तया दिशा।

शकारः। तुमं कदमाए दिशाए गड़े? **

विटः। पूर्वया दिशा।

शकारः। शा वि दक्खिणाए गड़ा। †† (च)

विटः। अहं दक्षिणया।

* भाव! स्वागतं ते? पुत्रक स्थावरक चेट! तवापि स्वागतम्?

† अथकिम्? ‡ कीदृशो न्यासः? § गता।

¶ भावस्यैव पृष्ठतः। ** त्वं कतमया दिशा गतः?

†† साऽपि दक्षिणया गता।

---

दुर्जनहस्ते न्यासभूतत्वेन संस्थापनात् परत एवाहं नितरां तज्जीवने संशयाकुलोऽस्मीति भावः। सर्व्वथा—सर्व्वतोभावेन। स्वस्ति—मङ्गलम्; [एतेन देवादिकूलादिव संकटकस्य भित्तेः साहाय्येन मृतकल्पाऽप्यसौ पुनः जीविष्यतीति ध्वन्यते]।

(घ) पृष्ठतः,—पश्चादित्यर्थः।

(ङ) सवितर्कं—ससन्देहं, स्वमनसि विचार्य्येत्यर्थः।

(च) अनयोक्त्या तस्या मरणं सूच्यते; यमसदनस्य दक्षिणस्यां दिशि वर्त्तमानत्वात् इति भावः।

शकारः। शा वि उत्तलाए। *

विटः। भ्रांत्याकुलं कथयसि, न शुध्यति मे अन्तरात्मा; (छ) तत् कथय सत्यम्।

शकारः। शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं, ता शंठावेहि (ज) हिअअं; एशा मए मालिदा। †

विटः। [सविषादम्] सत्यं त्वया व्यापादिता?

शकारः। जइ मम वअणे ण पत्तिआअशि, ता पेक्ख पढमं लट्ठिअशालशंठाणाह शूलत्तणं। ‡ (झ) [इति दर्शयति]।

विटः। हा! हतोऽस्मि मन्दभाग्यः। [इति मूर्च्छितः पतति]।

* साऽपि उत्तरया।

† शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्यां, तत्संस्थापय हृदयम्; एषा मया मारिता।

‡ यदि मम वचने न प्रत्येषि, तत्पश्य प्रथमं राष्ट्रियश्यालसंस्थानस्य शूरत्वम्।

(छ) भ्रांत्याकुलम्—असम्बद्धमित्यर्थः, अपराधिन इव पौर्व्वापर्य्यसम्बन्धरहितं यथा तथेति भावः। शुध्यति—विश्वसिति इत्यर्थः, प्रसीदतीति यावत्। अन्तरात्मा—मन इत्यर्थः; पर्य्याकुलभाषणमेवाप्रसन्नतायां हेतुरित्यवधातव्यम्।

(ज) आत्मीयाभ्यां—स्वकीयाभ्यां, पादाभ्यां—चरणाभ्यां, भावस्य—तव इत्यर्थः, शीर्षम्—उत्तमाङ्गं, शपे—प्रतिज्ञां करोमि; तव मस्तकं मत्पादाभ्यां स्पृष्ट्वा शपथं करोमि इत्यर्थः, तुभ्यमिति चतुर्थ्यन्तं पदमूहनीयम्; लोके हस्ताभ्यां पुत्रादिशरीरस्पर्शनेन शपथ-करणं प्रसिद्धम्, इह तु पादाभ्यां शीर्षमिति शकारस्य गर्व्वोक्तिः। [भौवादिकस्य शपधातोरुभयपदित्वात् "शप उपालम्भे" (वा०) इति शपथार्थे आत्मनेपदविधाना-दत्र आत्मनेपदप्रयोगः सर्व्वथा साधुः। स्वाभिप्रायज्ञापनार्थे श्लाघानपदाच्चतुर्थी-विधानात् भावस्य इत्यत्र कथं न चतुर्थी इत्यपि नाशङ्कनीयं, शीर्षमित्यस्य सम्बन्ध-विवक्षणात् भावस्य इत्यत्र षष्ठी; ऊहनीये "तुभ्यम्" इति पदे तु श्लाघानार्थ-सम्प्रदाने चतुर्थीति समाधानात्; यद्वा—अत्र शपधातोः स्वाभिप्रायज्ञापनपूर्व्वक-शपथार्थो न विवक्षितः]। संस्थापय—सम्यक् निवेशय, सुस्थापितं कुरु इत्यर्थः, मा उत्कम्पितो भवेति भावः।

(झ) "शूरत्तणं" इत्यत्र "पलक्कमं" इति पाठान्तरं, "पराक्रमम्" इति संस्कृतम्।

शकारः। ही !! ही !! उवलदे (ञ) भावे। *

चेटः। शमश्शशदु शमश्शशदु भावे। अविचालिअं (ट) पवहणं आणंतेण ज्जेव मए पढमं मालिदा। †

विटः। [समाश्वस्य सकरुणम्] हा वसन्तसेने !—

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रतिः
हा हाऽलङ्कृतभूषणे! सुवदने! क्रीडारसोद्भासिनि!।
हा सौजन्यनदि! प्रहासपुलिने! हा मादृशामाश्रये!
हा हा! नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः॥ ३८॥

---

* ही !! ही !! उपरतो भावः।

+ समाश्वसितु समाश्वसितु भावः। अविचारितं प्रवहणमानयतैव मया प्रथमं मारिता।

---

(ञ) उपरतः—मृतः।

(ट) अविचारितम्—अनवहितं यथा तथा, अनवगतविशेषमित्यर्थः। यतो मया प्राक् प्रवहणं सम्यक् न परीक्ष्य वसन्तसेना अस्य घातकस्य हस्ते निक्षेपिता, अतः अहमेवास्याः वधे निदानमिति चेटस्याशयः।

शकारमुखात् तत्कृतवसन्तसेनावधवृत्तमवगम्य मर्माहतो विटः तद्गुणकीर्त्तनपुरः-सरं विलपन्नाह, दाक्षिण्योदकेति।—चूर्णकश्च सम्बोधनान्तवसन्तसेनापदेनास्यान्वयः इत्यवगन्तव्यम्। सर्वत्र हा इति हेति च समधिकखेदसूचकमव्ययम्। दाक्षिण्यं—सारल्यमेव, औदार्यमेव वा, उदकं—जलं, तस्य वाहिनी—नदी, प्रवाहिणी इत्यर्थः, विगलिता—विशुष्का, विनष्टा इत्यर्थः, तव नाशादिदानीं दाक्षिण्यमिहलोकाद्विलुप्त-मिति भावः; रतिः—कामपत्नी, वसन्तसेनारूपिणी इत्यर्थः, ("रतिः स्त्री स्मर-दारेषु रागे सुरतगुह्ययोः" इति हेमचन्द्रः) स्वदेशं—निजदेशं, स्वर्लोकमिति यावत्, याता—गता, भूलोकात् विनष्टा इत्यर्थः; यद्यपि रतिः द्युलोकवासिनी, तथाऽपि सा एतावन्तमेव कालमत्रैवास्मदिव यमन्यामहि वयं, त्वयि च स्वर्गतायां सा अस्मानस्मान् परित्यज्य स्वावसथमेव प्रयाता इति भावः, भवती रतिरूपैवासीदिति तु फलितमिति वेदितव्यम्। अलङ्कृतभूषणे!—भूषणम्—अलङ्कारः, अलङ्कृतं—भूषितं यया तत्सम्बुद्धौ, [आहिताग्न्यादित्वात् निष्ठान्तस्य पूर्वनिपातः] स्वदेहस्य नैसर्गिक-

सौन्दर्य्येण अलङ्कारालङ्कारस्वरूपे इत्यर्थः; सुवदने!—सुमुखि! क्रीड़ायां—केलौ, यः रसः,—अनुरागः, तस्य उद्भासिनि!—प्रकाशिके! हा सौजन्यनदि!—सुजनतारूप-जलप्रवाहतरङ्गिणि! प्रकृष्टः,—मधुरः, दरविकसिताधरशोभी इत्यर्थः हासः,—हास्यम् एव, पुलिनं—सैकतं, जलवेष्टितजलोत्थितभूभाग इत्यर्थः यस्यास्तादृशि! (हासस्य शुभ्रत्वेन वर्णनस्य कविसमयसिद्धत्वात् जलोत्थित-शुभ्रवालुकामय-पुलिन-प्रदेशस्य च धावल्यात्, तद्गुणसाम्यादेव हि हासस्य मुखमण्डलमध्यवर्त्यधरगतस्य जलपरिवेष्टितजलोत्थितभूभागरूपपुलिनाभेदेनाध्यासः; स च वसन्तसेनायां नदीत्वा-रोपहेतुरिति वेदितव्यम्)। हा मादृशां—मत्सदृशानां, विटजनानामित्यर्थः आश्रये—धनदानादिना पोषणात् आश्रयभूते इत्यर्थः, (मादृशामित्युपलक्षणं, सर्वेषामेव विपन्नानामुज्जयिनीजनानामिति वेदितव्यं) हा—हता इदानीं लोका इति भावः, न केवलं रतिरेका एव गता, तत्प्रियसहचरस्य कामस्य सौभाग्यभोगनिचयं गृहीत्वैव प्रयाता इत्याह, हेति।—हा! हा! मन्मथस्य—कामस्य, सौभाग्यान्येव—हाव-भाव-विलासादिभिः नायिकाऽलङ्कारैः प्रकटितानि सौन्दर्य्याण्येवेत्यर्थः, पण्यानि—विक्रेय-द्रव्याणि, तेषाम् आकरः,—स्थानम्, आधारभूत इत्यर्थः, विपणिः,—पण्यवीथिका, क्रयविक्रयस्थानमित्यर्थः, ("विपणिः पण्यवीथिका" इत्यमरः) नश्यति—नाशं प्राप्नोति। त्वयि गतायां भुवनादस्मात् दाक्षिण्यं, कुसुमलोभनीयाङ्गसन्नद्धम् अनिर्व्वच-नीयलावण्यं, भूषणमयत्वसिद्धं मृद्वीकासुरसं मुखं, रमणीयं निधुवनसङ्गतं, शृङ्गारैकरसं सौजन्यम्, अम्भोरुहसुरभिमुखशोभसमधुरस्मितम्, आश्रितवात्सल्यं, मनसिजमनोहरविपणिः, कामसौभाग्यञ्च सर्व्वमेवैतत् युगपत् विलुप्तमित्यहो! किं कष्ट-करमितोऽस्तीति भावः। करुणोऽत्र रसः, "अलङ्कृतभूषणे" इत्यादिभिः प्रतीयमानः शृङ्गारोऽस्याङ्गम्। यद्यपि "करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः" इत्यनेन विरुद्धरसद्वयस्याङ्गाङ्गिभावो न युज्यते, तथाऽपि "विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा" इत्यादिना तत्परिहारः "अयं स रशनोत्कर्षी पीनस्तनविमर्द्दनः। नाभ्यूरु-जघनस्पर्शी नीवीविस्रंसनः करः॥" इत्यादिवत् स्वीकरणीयः, अतोऽत्र रसवदल-ङ्कारः; तदुक्तं—"रसभावौ तदाभासौ भावस्य प्रशमस्तथा। गुणीभूतत्वमायान्ति यदाऽलङ्कृतयस्तदा। रसवत्-प्रेय-ऊर्ज्जस्वि-समाहितमिति क्रमात्॥" तथा वसन्त-सेनायां वाहिन्यादीनाम् अतिसाम्याद्भेदमनपह्नुत्यैव तादात्म्याध्यासाद्रूपकालङ्कारः; तत्र च तस्यां वाहिनीत्वारोपः दाक्षिण्ये उदकत्वारोपस्य, नदीत्वारोपश्च प्रहासे पुलिनत्वारोपस्य, सौजन्ये आर्यजलत्वारोपस्य च एवं कामविपणित्वारोपः, सौभाग्ये पण्यत्वारोपस्य च निमित्तमिति केवलपरम्परितत्वम्; तथा तस्यां रतित्वालङ्कृत-

[सास्रम्] कष्टं भोः! कष्टम्!—

किं नु नाम भवेत् कार्य्यमिदं येन त्वया कृतम्?।
अपापा पापकल्पेन नगरश्रीर्निपातिता॥ ३९॥

[स्वगतम्] अये! कदाचिदयं पाप इदमकार्य्यं मयि सङ्क्रामयेत्। (ठ) भवतु, इतो गच्छामि। [इति परिक्रामति]।

शकारः। [उपगम्य धारयति]।

---

भूषणत्वयोस्तादात्म्याध्यासात् निरङ्गरूपकम्, इत्येतेषां परस्परनिरपेक्षतया तिलतण्डुलवत् संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्॥ ३८॥

अकारणमस्या वधेन न केवलं स्त्रीवधरूपपापमेवोत्पन्नम्, अपि तु नगरशोभानाशकृतं महदकार्य्यमप्याचरितमित्याह, किमिति।—त्वया—भवता, येन—हेतुना, यत्कार्य्य-मुद्दिश्य इत्यर्थः, इदं—वसन्तसेनाहननरूपं, कार्य्यं—दुष्कर्म्म, कृतम्—अनुष्ठितम्, अत्र तेन इति पदमूहनीयं, तेन कार्य्येण, नाम—सम्भावनायां, किं, फलमिति शेषः, नु—प्रश्ने, भवेत्?—स्यात्? अहेतुकमिदमसामान्यलावण्यायाः स्त्रियाः हननं कदाऽपि कुत्रापि पुरा कैरपि नानुष्ठितम्, अतस्तदुदाहरणं कुत्राप्यदृष्टचरम्; नरकात् लोकाचाराच्चाभीरुणा त्वया यदभिनवहननमाचरितं, तदतीवविस्मयकरम्. अतोऽहमेतत् तर्कयितुमपि न पारयामीत्याशयः; पापकल्पेन—द्वितीयेन मूर्त्तिमता पापेनेत्यर्थः, त्वया इति शेषः, [पापादीषदूनः पापकल्पः इति पापशब्दादीषदूनार्थे "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५। ३। ६७ पा०) इति कल्पप्प्रत्ययः]। अपापा—पापलेशरहिता, निरपराधा इत्यर्थः, नगरश्रीः,—नगरस्य—उज्जयिन्याः, श्रीः,—शोभा, निपातिता—विनाशिता, वसन्तसेनावधे न केवलं स्त्रीवधपापमुदपद्यत, अपि तु नगरस्य श्रीभ्रंशोऽपीति भावः; "कष्टं भोः! कष्टम्" इति प्रागुक्तचूर्णकेनान्वयः, नास्तीतः परं किञ्चित्कष्टकरमस्माक-मिति तु तदर्थः। अत्र निरपह्नुतभेदायामुपमेयभूतायां वसन्तसेनायाम् उपमानभूतायाः नगरश्रियाः तादात्म्येनाध्यासात् रूपकमलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ३९॥

(ठ) अये इति स्मरणार्थकमव्ययम्, ("अये कोपे विषादे च सम्भ्रमे स्मरणेऽपि च" इति मेदिनी) उद्बोधकान्तरवशात् शकारस्य खलचरित्रं स्मृत्वा "अये" इत्युक्तं ज्ञेयम्। पापः—पापाचारी, शकार इत्यर्थः. इदमकार्य्यं—स्त्रीवधरूपं दुष्कर्म्म इत्यर्थः। मयि सङ्क्रामयेत्—मां प्रापयेत्, मयि आरोपयेदित्यर्थः; स्वयं हत्वाऽपि मत्सहचारिणा विटेनैव इयं मारिता, न तु मया इति जनसमीपे कदाचित् आत्मरक्षार्थं दुर्वृत्त एष प्रकाशयेदिति यावत्।

विटः। पाप! मा मां स्प्राक्षीः। अलं त्वया, (ड) गच्छामि अहम्।

शकारः। अले! वशंतशेणिअं शअं ज्जेव मालिअ मं दूशिअ कहिं पलाअशि? शंपदं ईदिशे हग्गे अणाधे पाविदे। * (ढ)

* अरे! वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे? साम्प्रतमीदृशोऽहमनाथः प्राप्तः।

(ड) मा मां स्प्राक्षीः,—न मां स्पृश इत्यर्थः, [ "मा मा स्प्राक्षीः" इति पाठे—अत्यन्तनिषेधे माशब्दस्य द्विर्वचनं, मामिति शेषः। मा स्प्राक्षीरिति स्पृश्धातोः माङ्योगात् "माङि लुङ्" (३।३।१७५ पा०) इति लुङ्, तथा "न माङ्योगे" (६।४।७४ पा०) इति अडागमनिषेधश्च; माङि लुङ्प्रयोगस्य सार्व्वकालिकस्य वैकल्पिकविधानात् पक्षे लोड्लङादयः तात्कालिकप्रत्ययाः स्युरित्याचार्य्याः केचनाहुः; दीक्षितास्तु,—माङ्योगे लुङ् एव, यत्र तु लोड्लङादयः प्रयोगाः मायोगे दृश्यन्ते, तत्र का गतिः? तत्र तु नायं माङ्, अपि तु माशब्दः तत्समानार्थकः एष इति समादधते. वैकल्पिकविधानेनैवोपपत्तौ एतत्समाधानं सूत्रकारमतमनुसृत्यैवोक्तमिति। अत्र काशिका,—"माङ्युपपदधातोर्लुङ्प्रत्ययो भवति। सर्व्वलकाराणामपवादः। मा कार्षीत्, मा हार्षीत्। कथं मा भवतु, तस्य पापं मा भविष्यतीति असाधुरेवायम्। केचिदाहुः अङिद्परो माशब्दो विद्यते, तस्यायं प्रयोगः"; अस्प्राक्षीत्, अस्पृक्षत् चेत्यपि लुङि अयत् द्वयं पदान्तरं भवतीति वेदितव्यम्]। अलं त्वया—त्वया मे न किमपि प्रयोजनमित्यर्थः, त्वत्समीपे न स्थास्यामीति भावः। [त्वयेति वारणार्थकालंशब्दयोगे तृतीया]।

(ढ) ऋजुकमतिना विटेन प्राक् यत् स्वगतमाकलितं तदेवासौ क्रूरमतिः शकारः विटम् आत्मवशं नेतुमशक्नुवन्नवतारयति, "अले" इत्यादि।—मां दूषयित्वा—मयि अपराधं सङ्क्रमय्य इत्यर्थः। [दैवादिकस्य दुष्यतेः णिचि क्त्वाप्रत्यये रूपं. "दोषो णौ" (६।४।९० पा०) इति ऊत्वञ्च, अकर्म्मकत्वादणिकर्त्तुः "माम्" इत्यस्य कर्म्मत्वम्]। साम्प्रतम्—इदानीम् ईदृशः—एवमवस्थः, अत्रावस्थित इत्यर्थः। अनाथः,—असहायः, प्राप्तः,—अधिगतः, दोषमिति शेषः; ममोद्याने मारणात् त्वयि पलायिते हत्याऽपराधोऽयम् अत्रावस्थितमेकाकिनं मामेव अस्पृशति इति

विटः। अपध्वस्तोऽसि। (ण)

शकारः।—

अत्थं शदं देमि शुवण्णअं दे कहावणं देमि शवोड्डिअं दे।

एशे दुश्शद्दाणं फलक्कमे मे शामाण्णए भोदु मणुश्शआणं * ॥ ४० ॥

* अर्थान् शतं ददामि सुवर्णकं ते कार्षापणं ददामि सपोषणं ते।
एष दुःशब्दानां फलक्रमो मे सामान्यको भवतु मनुष्यकाणाम् ॥

समुदितार्थः; अथवा, अनाथः प्रायः,—अशरणः सञ्जातः, पूर्वं सहायभूतः यो हि आसीत्, सोऽपि इदानीं मां विमुच्य गतः, अस्यां विपदि सहायकान्तरं किमपि मे नास्ति, अहोऽशरणोऽस्मि इदानीं संवृत्तः इति तात्पर्य्यम्।

(ण) अपध्वस्तोऽसि - निन्दितोऽसि, अधःपतितोऽसीत्यर्थः, एवं मिथ्याभाषणा-दिति भावः।

वसन्तसेनाहत्यारूपमकार्य्यं गोपायितुम् अन्येष्वपि एतदारोपयितुं वा विटं धन-दानप्रस्तावेन प्रलोभयति, अर्थानिति।—शतं—शतसङ्ख्यकान्, बहूनित्यर्थः, अर्थान्—धनानि, ते—तुभ्यं, ददामि—अर्पयामि, [भविष्यत्सामीप्ये वर्त्तमानता, दास्यामीत्यर्थः] सपोषणं—सभोजनं, भोजनसहितमिति यावत्, सुष्ठु भोजयित्वा इत्यर्थो वा, यद्वा,—पोषणेन—परिजनानां ग्रासाच्छादनादिनिर्वहणेन सह वर्त्तमानं यथा तथा, भवतः परिजनानां यावता अर्थेन ग्रासाच्छादनादिकमनायासेनैव निर्वहति ताव-दर्थम् ["शवोड्डिअं" इति प्राकृतस्य "सवोड्डिय" "सवोड्डिकम्" इति च संस्कृतं कृत्वा "वोड़ी—विंशतिकपर्द्दकः इति गौड़े प्रसिद्धः, तच्चतुष्टयं पणः ते षोड़श कार्षापणः कहावण इत्येके" इति पृथ्वीधरः। "शवोड्डिअ" इत्यत्र "शवेड्डिअं" इति पाठे—"सवेष्टिकम्" इति संस्कृतं, वेष्टिका—वेष्टनम्, उष्णीषं कटिबन्धनं वा, तत्सहितमित्यर्थः] कार्षापणं—षोड़शपणं, ("काहन" इति यस्य भाषा) सुवर्णकं—काञ्चनं [सुवर्ण-परिमाणव्यवहारे हि धान्यं चतुस्तिलपरिमितं, चतुर्भिः धान्यैश्च रक्तिका, दशभिः रक्तिकाभिश्च माषः दशगुञ्जाफलपरिमितः, अष्टाभिश्च माषैः तोलकं, तद्द्विगुणं कर्षश्च इत्यादयः सुवर्णपरिमाणवाचकाः शब्दाः व्यवह्रियन्ते गणनीयद्रव्यसमूहे तु,—गण्डक-वोड़ी-पण-षोड़शपणसम्मितकार्षापणशब्दाः प्रयुज्यन्ते; शकारस्तु वराटिकादिव्यव-हार्य्यकार्षापणमानं भ्रमात् मौर्ख्याद्वा सुवर्णमाने प्रयुक्तवानिति वेदितव्यम्। "कहावणम्" इति प्राकृतस्य "अलङ्कारादिरत्नं किञ्चिदन्यत् वा वस्तु" इति प्राचीन-सम्मता व्याख्या] ते—तुभ्यं, ददामि—प्रयच्छामीत्यर्थः; मे—मम, दुःशब्दानां—

विटः। धिक्, तव एवास्तु। (त)

चेटः। शंतं पावं। *

शकारः। [ हसति ]।

विटः।—

अप्रीतिर्भवतु विमुच्यतां हि हासो
धिक् प्रीतिं परिभवकारिकामनार्य्याम्।

* शान्तं पापम्।

गर्हितवाक्यानां वसन्तसेनायाः ताड़नमारणादिरूपाणां दुर्वचनानामित्यर्थः, दुः,—दुष्टानां, शब्दानां—वसन्तसेनाहत्यारूपाणामित्यर्थो वा सङ्गच्छते ( हत्यायां स्वमुखेनैवोच्चार्य्यमाणायां यदि कश्चित् प्रच्छन्नो भूत्वा शृणोति तदा विशदं तेन हत्येयं शकारेणैव कृतेति सप्रमाणं भवेदिति भिया अतीव वञ्चकः शकारः सङ्केतेनैवैतत् विटायोक्तवानिति वेदितव्यम्; अत दुःशब्दस्तु साङ्केतिकः हत्याऽवबोधनार्थं प्रयुक्तः इति तु सङ्क्षिप्तसारः ) एष फलक्रमः,—फलस्य काराऽवरोधप्राणदण्डादिरूपस्य, क्रमः,—विधिः, मनुष्यकाणाम्—अन्येषां मनुष्याणाम् इत्यर्थः, सामान्यकः,—साधारणः, भवतु—अस्तु; वसन्तसेनावधाभियोगं ममोपरि न पातयित्वा सामान्येन अन्यान् प्रति पातय इति भावः। [ पुस्तकान्तरे "दुश्शद्दाण फलक्कमे" इत्यत "दुश्शद्दाणं पलक्कमे" "शंठाणपुलक्कमे" इति च पाठान्तरद्वयं तत्र "दोषस्थानं पराक्रमः" "संस्थानपराक्रमः" इति च यथाक्रमं संस्कृतम्; तदर्थस्तु,—दोषस्थानं—दोषभूमिः, पराक्रमः—स्त्रीहत्यायां व्यवसायः, अपरत्र च पाठे—संस्थाने—मृत्यौ, हत्यायामित्यर्थः, वसन्तसेनायाः इति भावः, ( "संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" इति मेदिनी ), पराक्रमः,—वीर्य्यप्रदर्शनम्, अतिसाहसिकं कर्म्मेति यावत्, संस्थानस्य—राजश्यालस्य सम्, पराक्रम इति वा ]। उपजातिः वृत्तम् ॥ ४० ॥

( त ) तव एव अस्तु—भवतु इत्यर्थः, एष फलक्रमः तव एव भवतु, नापरेषाम् इत्यर्थः; दण्डः भवानेव दण्डनीयः भवतु, तथा च सतां ग्लानिः पुनर्न भवेदित्याशयः; यद्वा —अर्थादिकं तव एव तिष्ठतु, न तेषु मम किमपि प्रयोजनमिति भावः।

"दुर्जनः परिहर्त्तव्यो विद्ययाऽलङ्कृतोऽपि सन्" इत्यादिदर्शनात् दुर्जनस्य विदुषोऽपि परिहर्त्तव्यतया मूर्खदुर्जनस्यास्य परिहारः सर्व्वथा विधेय इत्याह, अप्रीतिरिति।—अप्रीतिः—अप्रणयः, विरोध इत्यर्थः, भवतु—अस्तु, त्वया सहेति शेषः, हासः—हास्यं, विमुच्यतां—त्यज्यतां, हि—निश्चये, मैव हासीः इत्यर्थः, परिभवकारिकां—

मा भूच्च त्वयि मम सङ्गतं कदाचित्
आच्छिन्नं धनुरिव निर्गुणं त्यजामि ॥ ४१ ॥

शकारः। भावे! पशीद पशीद, एहि, णलिणीए पविशिअ कीलेम्ह। *(थ)

विटः।—

अपतितमपि तावत् सेवमानं भवन्तं
पतितमिव जनोऽयं मन्यते मामनार्यम्।

---

भाव! प्रसीद प्रसीद, एहि, नलिन्यां प्रविश्य क्रीडावः।

निन्दाजननीम्, अनार्याम्—असाध्वीं, प्रीतिं—सौहार्दं, भवादृशेन दुर्जनेन सहेति शेषः, धिक्—निर्भर्त्सनार्थं ग्रामीत्यर्थः; दुर्जनसख्यं सदैव विपज्जनकमयशस्करञ्च इति भावः; त्वयि—भवति, मम—मे सङ्गतं मेलनं, कदाचित्—जातु, अपीति शेषः, मा भूच्च—न भवतु इत्यर्थः, निर्गुणं—गुणाः,—दयादाक्षिण्यादयः तद्रहितं, त्वाम् इति शेषः, पक्षे,—मौर्वीविहीनञ्च, आच्छिन्नं—शत्रुणा निकृत्तं धनुरिव शरासनमिव, त्यजामि—जहामि। अत्र निर्गुणशब्दार्थस्य त्यागे छिन्नमौर्वीकशरासनेन सर्वैधर्म्यसाम्यकथनात्, निर्गुणः इत्यत्र प्रोक्तार्थान्तरस्य च वाच्यत्वाद्‌वायं श्लिष्टोपमाऽलङ्कारः। प्रहर्षिणी वृत्तम् ॥ ४१ ॥

(थ) नलिन्यां—नलिनानि—पद्मानि सन्त्यस्यामिति नलिनशब्दात् अर्श-आदिभ्यः मत्वर्थीये अचि गौरादित्वात् स्त्रियां ङीष्; नलिनी—पद्मयुक्तदेशः तस्यां, पद्मसरसि इत्यर्थः, ("नलिनी पद्मिनी-व्योमगङ्गा-कमलाकरे" इति मेदिनी) [ "णलिणीए" इत्यत्र "णअलीए" इति पाठान्तरे—"नगर्याम्" इति संस्कृतम् ]। प्रविश्य—गत्वा, अवगाह्य वा, क्रीडावः,—तत्र जलक्रीडां कुर्व इत्यर्थः।

दुर्जनसंसर्गस्य विविधानर्थकारितामुल्लिख्य "त्यज दुर्जनसंसर्गं भज साधुसमागमम्" इत्यादिदर्शनात् दुर्जनसंसर्गस्य दोषं दर्शयन्नाह, अपतितमिति।—अयं—नगरवासीत्यर्थः, जनः,—साधारणमानवः इत्यर्थः, अपतितमपि—पापाकारिणमपि, स्वयं स्त्रीवधादिजनितपातित्याभाववन्तमपि इति यावत्, मां—विटमित्यर्थः, भवन्तं—त्वां, स्वयं स्त्रीहत्याकरणात् पतितमिति भावः, सेवमानं—भजमानम्, अनुकूलकार्यसम्पादनेन परिचरन्तमिति यावत्, अत एव पतितमिव—पापकर्माऽननुतिष्ठन्तमपि पापकारिणमिव अनार्यम्—असाधुं, दुर्जनमिति यावत्, मन्यते तावत्—सम्भावयत्येव, "खलः करोति दौर्जन्यं फलं पतति साधुषु" इत्यादिदर्शनात्

कथमहमनुयायां त्वां हतस्त्रीकमेनं
पुनरपि नगरस्त्री-शङ्किताऽर्धाक्षिदृष्टम्? ॥ ४२ ॥

[सकरुणम्] वसन्तसेने!—
अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि!।
चारित्र्यगुणसम्पन्ने! जायेथा विमले कुले ॥ ४३ ॥

---

तत्सहचारित्वेनाहमेवात्र अपराधी इति नूनं सर्वेषां निर्णयो भविष्यतीति मन्ये इति भावः; (अतः) अहं—विटः, गोष्ठ्यां बहुमतः इत्यर्थः हतस्त्रीकं—स्त्रीवधकारिणं, विनाशितवसन्तसेनमित्यर्थः, अत एव नगरस्त्रीभिः,—पुरकामिनीभिः, शङ्कितम्—अस्मानपि अयं कदाचिदेवं घातयिष्यतीति सन्दिग्धं यथा तथा, अर्धाक्षिभिः,—सङ्कुचितनेत्रैः, दृष्टः,—ईक्षितः तं, यद्वा,—नगरस्त्रीणां—पौरयोषितां, शङ्कितैः,—संशयाकुलैः, यतः अयमेव वसन्तसेनाघातुकः, अतः पातकिनः अस्य दर्शनं किमस्माभिः करणीयमिति संशयाकुलतया इत्यर्थः, अर्धैः,—अर्धोन्मीलितैः इत्यर्थः, अक्षिभिः,—नयनैः, दृष्टः,—अवलोकितः तं, स्त्रियः अपि त्वां पथि गच्छन्तं सावहेलं घृणया द्रक्ष्यन्ति, का कथा विवेकिनां जनानामिति स्त्रीपदोपादानात् प्रतीयते; [दृष्टः इति भाविनि भूतवदुपचारः, जीर्णोद्यानस्थस्य शकारस्य तदानीमपि अज्ञातवृत्ताभिः नगरस्त्रीभिरदृष्टत्वात् इति बोध्यम्। "नगरस्त्री" इत्यत्र "नगरश्री" इति पाठे तु—"दृष्टम्" इति भूतकालविहितं पदं सङ्गच्छते, तस्याः नगराधिदेवतायाः स्वमहिम्ना सर्वेषामन्तर्यामित्वात्] एनं—पुरोऽवतिष्ठमानं, त्वां—भवन्तं, पुनरपि—भूयोऽपि, कथं—केन प्रकारेण, अनुयायाम्?—अनुगच्छेयम्? न कथमप्यनुगच्छेयम् इत्यर्थः; ईदृशाकार्यानुष्ठानात् परमपि मे तवानुगमनं कथमपि न युज्यते इति भावः। अत पतितत्वस्य असामर्थ्यत्वबोधस्य स्त्रीहत्यायाश्च विशेषणगत्या अनुगमनाशङ्काहेतुत्वात् काव्यलिङ्गमलङ्कारः। मालिनी वृत्तम् ॥ ४२ ॥

अवेशवासयोग्याया अस्या दैववशेन वेश्याजन्मनैव ईदृशः शोचनीयः परिणामः सङ्घटितः इति विचिन्त्य परजन्मनि तस्याः सत्कुलोत्पत्तिम् आशास्ते, अन्यस्यामिति।—सुन्दरि!—हे सुरूपे! त्वं—भवती, अन्यस्यामपि—अपरस्यामपि, जातौ—जन्मनि, जन्मान्तरे इत्यर्थः, अपरस्मिन् कस्मिन्नपि जन्मनि इति यावत्, [जनी प्रादुर्भावे इति क्तिन्। "जातिः सामान्यजन्मनोः" इत्यमरः] वेश्या—गणिका मा भूः,—न भूयाः, [व्यवहितस्य माङः योगात् अपि भवतेः लुङ् इति ज्ञेयम्] हे चारित्र्यगुणसम्पन्ने!

शकारः। मम केलके पुप्फकलंडक-जिण्णुज्जाणे वशंतशेणिअं मालिअ कहिं पलाअशि? एहि, मम आवुत्तश्श अग्गदो ववहालं देहि। * (द) [इति धारयति]।

विटः। आः! तिष्ठ जाल्म! (ध) [इति खड्गमाकर्षति]

शकारः। [सभयमपसृत्य] किं ले! भीदेशि? ता गच्छ। †

विटः। [स्वगतम्] न युक्तमत्रावस्थातुम्। भवतु, यत्र आर्य्यशर्विलक-चन्दनकप्रभृतयः, तत्र गच्छामि।

[इति निष्क्रान्तः]

* मदीय-पुष्पकरण्डक-जीर्णोद्याने वसन्तसेनां मारयित्वा कुत्र पलायसे? एहि, मम आवुत्तस्याग्रतो व्यवहारं देहि।

† किं रे! भीतोऽसि? तत् गच्छ।

—चारित्रं—शीलत्वं, गुणाः,—दयादाक्षिण्यादयः, तैः सम्पन्ना तस्याः सम्बोधने, सुचरित्रे! गुणशालिनि! चेत्यर्थः; यद्वा,—"चारित्रगुणसम्पन्ने" इति "कुले" इत्यस्य विशेषणम्; तथा च तव गणिकात्वादेवेयं विपत्तिरुपस्थिता, कुलकामिनीत्वे तु न तथा इति विशेषयितुमेवाह, चारित्रेति।—सौशील्यदयादाक्षिण्यादिगुणविशिष्टे इत्यर्थः, विमले—विशुद्धे, कुले - वंशे. (वंशकरस्य तत्तद्गुणवत्त्वादर्शनात् सुतरां वंशस्यापि तच्छालित्वं फलबलादायातमिति वेदितव्यं) जायेथाः.—उत्पद्येथाः; इदानीमिह लोकादपसृतायास्ते अन्यत् किं वयं प्रार्थयामहे इति विटस्याशयः। पथ्यावक्त्रं वृत्तम्॥ ४३॥

(द) आवुत्तस्य—भगिनीपतेः, राज्ञ इति यावत्, [तसप्रत्ययान्ताग्रतः-योगात् "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति "आवुत्तस्य" इति षष्ठी, "भगिनीपतिरावुत्तः" इत्यमरः] अग्रतः.—पुरतः, समक्षमित्यर्थः। व्यवहारं—बधाभियोगं, विवादं विवादविनिर्णयं वेत्यर्थः; देहि—अर्पय, त्वमेव वसन्तसेनाघाती इति अभियोगमहमानयिष्यामीति भावः, त्वयि अभियुक्ते सति अभियोगः त्वयाऽपि दातव्यः स्यादित्यावेदयितुं देहीत्युक्तम्, अथवा वसन्तसेनायाः हत्यासन्देहनिराकरणयोग्यमुत्तरमिति यावत् "विर्नानार्थेऽव सन्देहे हरणं हार उच्यते। नानासन्देहहरणात् व्यवहार इति स्मृतः॥" इति कात्यायनवचनात्।

(ध) जाल्म!—मूर्ख! इत्यर्थः।

शकारः। णिधणं गच्छ। (न) अले थावलका पुत्तका! कीलिशे मए कड़े? *

चेटः। भट्टकें! मइंते अकज्जे कड़े। †

शकारः। अले चेड़े! किं भणाशि? अकज्जे कड़े त्ति? भोदु, एव्वं दाव। [नाना ऽभरणानि अवतार्य्य] गेण्ह एदं अलंकालअं, मए ताव दिस्से, जेत्तिके वेले अलंकलेमि, तेत्तिकं वेलं मम, अस्सं तव। ‡ (प)

चेटः। भट्टके ज्जेव एदे शोहंति, किं मम एदेहिं? § (फ)

* निधनं गच्छ। अरे स्थावरक पुत्रक! कीदृशं मया कृतम्?

† भट्टक! मइदकार्य्यं कृतम्।

‡ अरे चेट! किं भणसि? अकार्य्यं कृतमिति? भवतु एवं तावत्। गृहाणेम-मलङ्कारं, मया तावद्दत्तं, यावत्यां वेलायाम् अलङ्करोमि, तावतीं वेलां मम, अन्यां तव।

§ भट्टके एव एते शोभन्ते, किं मम एतैः?

(न) णिधनं गच्छ—निपातं याहि, म्रियस्वेत्यर्थः।

(प) गृहाण—आदत्स्व। इमं—मदीयमित्यर्थः। अलङ्कारम्—आभरणम्। मया—शकारेणेत्यर्थः। तावत्—साकल्येन, सर्व्वमेवालङ्कारमित्यर्थः। दत्तम्—अर्पितम्। यावत्यां वेलायां—यदा इत्यर्थः। अलङ्करोमि—अहं गात्रं भूषयामि। तावतीं वेलां—तत्परिमितं कालं तदैवेत्यर्थः। [व्याप्त्यर्थे द्वितीया] मम—मदीयम्। अन्यां—मदलङ्करणादतिरिक्तां वेलां व्याप्येत्यर्थः, तव—त्वदीयम्; यदा अहमिमं परिधाय स्थास्यामि, तदा ममायमलङ्कारः, यदा नाहमिमं व्यव-हरिष्यामि, तदा तव एतत्सर्व्वालङ्करणम् इति समुदितार्थः। अहो विचित्रमेतत् दानं चतुरचूड़ामणेः "ठाका काड़ि तोमार, चावि काटीठि आमार" इति वङ्गीयाना-माभाणकानुरूपमेतदिति विभाव्यम्। ["अस्सं तव" इत्यस्य "आज्ञा तव" इति संस्कृतं क्वचित् पुस्तके दृश्यते, इयं तव सम्बन्धे ममाज्ञा इति तु तदर्थः]।

(फ) भट्टके—भर्त्तरि, त्वयि इति शेषः। एते—अलङ्कारा इत्यर्थः। किं मम एतैः?—एतैरलङ्कारैः मम किमपि प्रयोजनं नास्तीत्यर्थः।

शकारः। ता गच्छ, एदाइं गोणाइं गेण्हिअ मम केलकाए पाशाद-बालग्ग-पदोलिकाए (ब) चिट्ठ, जाव हग्गे आअच्छामि। *

चेटः। जं भट्टके आणवेदि। † [ इति निष्क्रान्तः ]

शकारः। अत्तपलित्ताणे भावे गदे अदंशणं, चेड़ं बि पाशाद-बालग्ग-पदोलिकाए णिअलपूलिदं कदुअ थावइश्शं। एव्वं मंते लक्खिदे भोदि। ( भ ) ता गच्छामि; अधवा, पेक्खामि दाव एदं, किं एशा मला? अधवा पुणो बि मालइश्शं? [ अवलोक्य ] कधं शुमला। भोदु, एदिणा पावालएण पच्छादेमि णं; अधवा, णामंकिदे एशे, ता के बि अज्जपुलिशे

---

* तत् गच्छ, एतौ गावौ गृहीत्वा मदीयायां प्रासादबालाग्रप्रतोलिकायां तिष्ठ, यावदहमागच्छामि।

† यद्भट्टक आज्ञापयति।

‡ आत्मपरित्राणे भावो गतोऽदर्शनं, चेटमपि प्रासादबालाग्र प्रतोलिकायां निगड़पूरितं कृत्वा स्थापयिष्यामि। एवं मन्त्रो रक्षितो भवति। तत् गच्छामि; अथवा, पश्यामि तावदेनां, किमेषा मृता? अथवा पुनरपि मारयिष्यामि? कथं सुमृता।

---

( ब ) प्रासादबालाग्रप्रतोलिकायां—प्रासादस्य—वृहदट्टालिकायाः, बालायाम् —अभिनवनिर्म्मितायाम् अग्रप्रतोलिकायां—प्रधानरथ्यायाम्; ("रथ्या प्रतोली विशिखा" इत्यमरः) यद्वा,—प्रासादस्य—राजाट्टालिकावदुन्नताट्टालिकायाः, ("प्रासादो देवभूभुजाम्" इत्यमरः) बालः,—अभिनवनिर्म्मित इत्यर्थः, यः अग्रः,—अग्रभागः, उपरिस्थगृहमिति यावत्, तस्य प्रतोलिका—रथ्या, चूड़ास्थगृहस्योपरि अधिरोहणार्थम् अधिरोहणीत्यपरनामकमार्गविशेष इत्यर्थः, सोपानमिति यावत् तस्याम्। चेटे अत्यादरप्रदर्शनार्थमेतदभिधानमिति वेदितव्यम्।

( भ ) आत्मपरित्राणे—आत्मनः,—स्वस्य, परित्राणे—रक्षणार्थमित्यर्थः। भावः, —पण्डितः, विट इत्यर्थः। अदर्शनं गतः,—चक्षुरविषयतां प्राप्तः, पलायित इत्यर्थः। निगड़पूरितं—शृङ्खलबद्धम्। मन्त्रः,—गुह्यवादः, वसन्तसेनावधरूपगोप्यविषय इति यावत्, ("मन्त्रो वेदविशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमान्" इति मेदिनी)। रक्षितो भवति—गुप्तस्तिष्ठतीत्यर्थः; नो चेदेवं करोमि तदा नूनं चेटः वसन्तसेनावधादिवृत्तान्तजातं सर्व्वसमक्षं प्रकाशयिष्यति इत्याशयः।

पच्चहिजाणेदि। भोदु, एदिणा बादालीपुंजिदेण शुक्खपण्ण-पुडेण (म) पच्छादेमि। [ तथा कृत्वा विचिन्त्य ] भोदु एव्वं दाव, शांपदं अधिअलणं गदुअ ववहालं लिहावेमि, (य) जहा अत्थश्श कालणादो शट्ठवाह-चालुदत्तकेण मम केलकं पुप्फ-कलंडकं जिण्णुज्जाणं पवेशिअ वशंतशेणिआ वावादिदे त्ति। ः—

चालुदत्तविणाशाअ कलेमि कवडं णवं।

णअलीए विशुद्धाए पशुघादं व्व दालुणं * ॥ ४४ ॥

भवतु, एतेन प्रावारकेण प्रच्छादयामि एनाम्; अथवा नामाङ्कित एषः, तम् कोऽपि आर्य्यपुरुषः प्रत्यभिज्ञास्यति। भवतु, एतेन वातालीपुञ्जितेन शुष्कपर्णपुटेन प्रच्छाद-यामि। भवतु एवं तावत्, साम्प्रतमधिकरणं गत्वा व्यवहारं लेखयामि, यथा अर्थस्य कारणात् सार्थवाहचारुदत्तकेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य वसन्त-सेना व्यापादितेति।—

चारुदत्तविनाशाय करोमि कपटं नवम्।

नगर्यां विशुद्धायां पशुघातमिव दारुणम्॥

(म) एनां—वसन्तसेनामित्यर्थः। प्रावारकेण—उत्तरीयवस्त्रेण। प्रच्छादयामि—आपादमस्तकम् आवृणोमि। नामाङ्कितः—मम नामचिह्नित इत्यर्थः। आर्य्य-पुरुषः,—प्रधानपुरुषः, यद्वा—आर्य्याणां—मान्यानां, राजादीनामित्यर्थः, पुरुषः—अधिकृतजनः, रक्षिपुरुषः इत्यर्थः। प्रत्यभिज्ञास्यति—मन्नामाङ्कितमुत्तरीयमालोक्य अहमेव हत्याकारी इति निर्द्धारयिष्यतीत्यर्थः। वातालीपुञ्जितेन—वायुसमूह-सञ्चितेन, वात्यानीतेनेत्यर्थः। शुष्कपर्णपुटेन—विशोषितपत्रपुटकस्तोमेनेत्यर्थः।

(य)* अधिकरणं—विचारालयमित्यर्थः। व्यवहारं—विवादम्। लेखयामि—लिपिं कारयामि, प्राड्विवाकसमीपमुपस्थापयामीति यावत् [ अत्र भविष्यत्सामीप्ये लट्प्रयोगः ]।

अथ वसन्तसेनानिहननेनाप्यपरितुष्टः शकारः तत्प्रियस्यापि निर्य्यातनमभिलषन् चारुदत्तनिपीडनेनात्मानं तोषयितुमभिनवं छलमेकमनुसर्त्तुमिच्छन्नाह, चारुदत्तेति।—विशुद्धायां—पवित्रायाम्, अननुष्ठितावैधपशुहननादिव्यापारायामिति यावत्, नगर्यां—पुर्य्याम्, उज्जयिन्यामित्यर्थः, पशुघातमिव—पशोः,—छागादेः घातः,—हननं तम् इव, दीनानां पशूनां बधं यथा तथेति भावः, चारुदत्तविनाशाय—

भोदु, गच्छामि। [इति निष्क्रम्य दृष्ट्वा सभयम्] अविद-मादिकं! जेण जेण गच्छामि मग्गेण, तेण ज्जेव एशे दुट्टशमणके गहिद कशाओदकं चीवलं गेण्हिअ आअच्छदि, एशे मए णाशिं छिन्दिअ वाहिदे (र) किदवेले कदावि मं पेक्खिअ, "एदेण मालिदे" त्ति पआशइश्शदि; ता कधं गच्छामि? [अवलोक्य] भोदु, एदं अड्ढपडिदं पाआलखंडं उल्लंघिअ (ल) गच्छामि। *—

* भवतु, गच्छामि। अविदमादिकं! येन येन गच्छामि मार्गेण, तेनैव एष दुष्टश्रमणको गृहीतकषायोदकं चीवरं गृहीत्वा आगच्छति, एष मया नासां छित्त्वा वाहितः कृतवैरः कदाऽपि मां प्रेक्ष्य, "एतेन मारिता" इति प्रकाशयिष्यति, तत् कथं गच्छामि? भवतु, एतम् अर्द्धपतितं प्राकारखण्डमुल्लङ्घ्य गच्छामि।—

चारुदत्तस्य निरपराधस्य पशुवन्नाशार्थमित्यर्थः, नवम्—अभिनवं, केनापि प्रागनुद्भावितमिति यावत्, दारुणं—नृशंसं, कपटं—कूटप्रयोगं, करोमि—विदधामि; पवित्रा नगरी यथा निर्द्वन्द्वधातुकानाम् अवैधजीवहिंसादिना दूषिता भवति, तथा जिघांसाविनिवृत्त्यर्थं निष्पापचारुदत्तमपि कूटव्यवहारानयनेन निर्य्यातयिष्यामि इति सरलार्थः। पथ्यावक्त्रं वृत्तम्॥ ४४॥

(र) अविदमादिके—इति विदविस्मयभयद्योतकम् अव्ययम्। गृहीतकषायोदकं—गृहीतं—धृतं, रञ्जनार्थं निहितम् इत्यर्थः, कषायोदकं—रागरञ्जितजलं यत्र तथाविधम्, आरक्तसलिलसिक्तमित्यर्थः, (कषायो रसभेदेऽपि निर्य्यासे च विलेपने। अङ्गरागे च न स्त्री स्यात् सुरभौ लोहिते त्रिषु॥" इति मेदिनी) चीवरं—वस्त्रखण्डम्। एषः,—श्रमणकः। नासां—नासिकाम्। छित्त्वा—विछेद्येत्यर्थः, [अस्यैव अङ्कस्य प्रथमे (३१६ पृ० १६ प०) पुष्पकरण्डकोद्यानप्रविष्टेन भिक्षुवेशिसंवाहकेन तत्र शकारस्य दर्शनमात्रं तस्य भिक्षुनासविधस्वाभाव्यं वर्णितम्; संवाहकस्य तु तथात्वेऽपि नासाविधः कुत्रापि कविना नोक्त इति; इह "मया नासां छित्त्वा वाहितः" इति शकारोक्तेरसङ्गतत्वेऽपि बौद्धसन्न्यासिनां परस्परं केश-श्मश्रुमुण्डन-काषायवासपरिधानादिबहुसाम्यसत्त्वात् अच्छिन्ननासेऽपि अस्मिन् संवाहके छिन्ननासस्य कस्यचित् अन्यस्य भिक्षोर्भ्रमोत्पादादिति कथञ्चिदस्य सङ्गतिः करणीया]। वाहितः,—ताडितः।

(ल) अर्द्धपतितम्—अर्द्धभग्नम्। प्राकारखण्डं—प्राचीरांशम्। उल्लङ्घ्य—उत्प्लुत्य, उत्पतनेन अतिक्रम्य इति यावत्।

एशे म्हि तुलिद-तुलिदे लंका-णअलीए गअणे गच्छंते ।
भूमीए पाआले हणूमशिहले विअ महेंदे * ॥ ४५ ॥

[ इति निष्क्रान्तः ] ।

[ प्रविश्य अपटीक्षेपेण संवाहको भिक्षुः ] पक्खालिदे एशे मए चीवलखंडे ; किं णु हु शाहाए शुक्खावइश्शं ? इध वाणला विलुप्पंति । किं णु हु भूमीए ? धूलीदोशे होदि ; ता कहिं पशालिअ (व) शुक्खावइश्शं ? [ दृष्ट्वा ] भोदु, इध वादालो-

---

* एषोऽहं त्वरित-त्वरितो लङ्कानगर्य्यां गगने गच्छन् ।
भूम्यां पाताले हनूमच्छिखर इव महेन्द्रः ॥

† प्रक्षालितमेतन्मया चीवरखण्डम् ; किं नु खलु शाखायां शोषयिष्यामि ? इह वानरा विलुम्पन्ति । किं नु खलु भूम्याम् ? धूलीदोषो भवति ; तत् कुत्र प्रसार्य्य

उपमानप्रदर्शनद्वारा भग्नप्राकारपथेन कृतं पलायनमुपवर्णयन्नाह, एष इति ।— एषः,—अत्रावस्थितः, अहं—शकार इत्यर्थः. हनूमच्छिखरे—हनूमतः,—पवननन्दनस्य, शिखरे—शृङ्गे, ( "हनूमानिव महेन्द्रशिखरे" इति वक्तव्ये "हनूमच्छिखरे इव महेन्द्रः" इति विपर्य्यस्ता शकारोक्तिः ; तदर्थस्तु,—महेन्द्रशिखरे—महेन्द्राख्यगिरेः शृङ्गे ) पाताले—धरायास्तलस्थे भुवने, गगने—व्योममार्गे. लङ्कानगर्य्यां—लङ्काख्यपुर्य्यां, त्वरितत्वरितः,—त्वरितादपि त्वरितः, अतीव त्वरान्वित इत्यर्थः, गच्छन्—व्रजन्, परितः परिभ्राम्यन्नित्यर्थः, सीताया अनुसन्धानार्थमिति भावः, महेन्द्र इव—तदाख्यपर्व्वत इव, ( हनूमानिवेत्यभिप्रायः ) भूम्यां—भूमितले, यथेच्छं गच्छामीति पूर्वोक्तगद्यांशेनान्वयः ; हनूमत इव प्राचीरमुल्लङ्घ्य त्वरितं गच्छामीति भावः । अत्र हनूमानिति वक्तव्ये हनूमदिति निर्विभक्तिकतः, तथा महेन्द्र इति वक्तव्ये महेन्द्रः इति विभक्तिविपर्य्यासजनितः प्रस्तुतार्थप्रतीतिविघातकरः दोषः शकारभाषितत्वेनोपेक्षणीयः । इह छन्दोऽनुरोधात् "णअलीए" "गअणे" इत्युभयोर्लक्ष्वन्तः पाठः । आर्य्या वृत्तम् ॥ ४५ ॥

(व) शाखायां—विटपे । शोषयिष्यामि—शुष्कं करिष्यामि [ शुष्यतेः कर्म्मणि घञि शोषशब्दात् तत्करोतीत्यर्थे णिचि लृटि रूपम् ; शुष्यतेः केवलं णिचि लृटि वा रूपम् ; शुष्कं करिष्यामि इत्यपि "शुक्खावइश्शं" इति प्राकृतस्य संस्कृतं दृश्यते, अर्थश्चोभयत्र समान एव ] । इह—शाखायामित्यर्थः । विलुम्पन्ति—छिन्दन्ति, इह

पुंजिदे (अ) शुक्खवत्तशंचए पशालइश्शं। [तथा कृत्वा] णमो बुद्धश्श। [इति उपविशति] भोदु, धम्मक्खलाइं (ब) उदाहलामि। ["पंचजण जेण मालिदा" इत्यादि पूर्वोक्तं पठति] अधवा, अलं मम एदेण शग्गेण, जाव ताए वशंतशेणाए बुद्धोवाशिआए पच्चुवआलं ण कलेमि, जाए दशाणं शुवस्सकाणं किदे जूदिअलेहिं णिक्कोदे, (स) तदो पहुदि ताए कोदं विअ अत्ताणअं अवगच्छामि। [दृष्ट्वा] किं णु हु पण्णोदले शमुश्शशदि ? †

---

शोषयिष्यामि ? भवतु, इह वातालीपुञ्जिते शुष्कपत्रसञ्चये प्रसारयिष्यामि। नमो बुद्धाय। भवतु, धर्माक्षराणि उदाहरामि। ["पञ्चजना येन मारिताः"] अथवा, अलं ममैतेन स्वर्गेण, यावत्तस्या वसन्तसेनायाः बुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीतः, ततः प्रभृति तया क्रीतमिवात्मानमवगच्छामि। किं नु खलु पर्णोदरे समुच्छ्वसिति ?

प्लवङ्गाः प्लवन्ते, अतोऽत्र शोषणार्थमस्य स्थापने नूनमेवैते चीवरमेतत् छेत्स्यन्तीति भावः; [छेदनार्थक-तौदादिकलुम्पतेः भविष्यत्सामीप्ये लट्; यद्वा,—"प्रवृत्तोपरतश्चैव वृत्ताविरत एव च। नित्यप्रवृत्तिः सामीप्यो वर्त्तमानश्चतुर्व्विधः॥" इति नियमात् "इह कुमाराः क्रीडन्ति" इतिवत् वृत्ताविरतवर्त्तमाने लड़िति बोध्यम्]। भूम्यां—भूमितले एव विस्तार्य्येत्यर्थः, शोषयिष्यामीत्यन्वयः। धूलीदोषः,—रजोमालिन्यमित्यर्थः। प्रसार्य्य—विस्तार्य्य।

(अ) वातालीपुञ्जिते—समीरणप्रवाहेण राशीकृते।

(ब) धर्म्माक्षराणि—धर्म्मोपदेशभूयिष्ठवचनानि, "पञ्चजना येन मारिताः" इत्यादि श्लोकद्वयमिति यावत्।

(स) एतेन स्वर्गेण—स्वर्गगमनकामनया एतत्पाठेन, लभ्यत्येन वैतेन इत्यर्थः; उपकारप्रत्यर्पणमकृत्वैव लोकान्तरं प्रयातस्य तव शान्तिर्न भवतीति भावः। (अत्र तावदित्यध्याहार्य्यं, तेन तावत् मम एतेन स्वर्गेण अलं, यावदित्यन्वयो बोध्यः। अत्र स्वर्गपदं मोक्षपरं, यतीनां मोक्षस्यैवाकाङ्क्षितत्वात्। तदुक्तं सन्न्यासोपनिषदि,—"किं वा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान्। गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च॥ गुहां प्रवेष्टुमिच्छामि परं पदमनामयम्॥" इत्यादि)। प्रत्युपकारम्—ऋणविमोचनरूपकृतोपकारस्य अनुरूपं हिताचरणमित्यर्थः। यया—वसन्तसेनया

अथवा,—

वादादवेण तत्ता चीवल तोएण तिम्मिदा पत्ता।

एदे विथिस्सपत्ता मस्से पत्ता विअ फुलंति * ॥ ४६ ॥

वस। [संज्ञां लब्ध्वा हस्तं दर्शयति]।

भिक्षुः। हा! हा! शुद्धालंकालभूशिदे इत्थिआहत्थे णिक्कमदि! (ङ) कधं, दुदिए वि हत्थे!! [बहुविधं निर्वर्ण्य] पञ्चभि-

---

* अथवा,—वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि।

एतानि विस्तीर्णपत्राणि मन्ये पत्राणीव स्फुरन्ति॥ ●

† हा! हा! शुद्धालङ्कारभूषितः स्त्रीहस्तो निष्क्रामति! कथं, द्वितीयोऽपि

इत्यर्थः। सुवर्णकानां—षोड़शमाषकमितानां हेम्नाम्। कृते—निमित्तम्। द्यूतकराभ्यां—माथुर-तत्सहचराभ्यामित्यर्थः [अपादाने पञ्चमी]। निष्क्रीतः,—दशसुवर्णविनिमयेन विमोचितः, ऋणमुक्तोऽहमिति शेषः।

पुञ्जितपर्णाभ्यन्तरे निपतिताया वसन्तसेनायाः समुच्छ्वसनेन स्फुरत्पत्राणि दृष्ट्वा किमिदमिति विचारयन्नाह, वातातपेनेति।—वातातपेन—वातेन—वायुना सहितः, आतपः,—रौद्रं तेन, तप्तानि—शोषं गतानि इत्यर्थः, एतानि—दृश्यमानानि, पत्राणि—पर्णानि, चीवरतोयेन—चीवरं—यतीनां वस्त्रखण्डं, तस्य तोयेन—तन्निस्यन्दजलेन, यतीनां वस्त्रनिष्पीड़ननिषेधात् सजलवस्त्रखण्डात् पतितेन जलेनेति भावः, स्तिमितानि—सिक्तानि सन्ति, स्थितानीति शेषः, एतानि—इमानि, पुरतः दृश्यमानानि इत्यर्थः, विस्तीर्णपत्राणि—प्रसारितपर्णानि, पत्राणीव—पक्षिणां पतत्राणि इव, ("पत्रन्तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः" इति मेदिनी) स्फुरन्ति—स्पन्दन्ते, इति मन्ये—सम्भावयामीत्यर्थः; मृदुलमारुतहिल्लोलेन यथा पक्षिणां पक्षाः वेपन्ते, तथैवैतानीति तर्कयामि इति भावः। अत्र तु पृथ्वीधरः,—"वातातपेन तप्तानि चीवरतोयेन स्तिमितत्वमार्द्रत्वं प्राप्तानि, स्तिमितानि इति भावप्रधानो निर्देशः, एतानि विस्तीर्णं प्राप्तं प्रसारितं यत्र तानि, मन्ये पत्राण्येव विजृम्भन्ते" इति। उपमाऽलङ्कारः। आर्या वृत्तम्॥ ४६ ॥

(ङ) शुद्धेति।—शुद्धेन—लोहान्तरसंसर्गराहित्यात् उज्ज्वलेन, श्यामिकाविनिर्मुक्तेन इत्यर्थः, अलङ्कारेण—आभरणेन, भूषितः,—शोभितः। निष्क्रामति—निर्गच्छति।

जाणामि विअ एदं हत्थं। अधवा किं विचालेण, (क) शच्चं शे ज्जेव हत्थे, जेण मे अभअं दिण्णं। भोदु, पेक्खिश्शं। [ नाट्येनोदृश्य दृष्ट्वा प्रत्यभिज्ञाय च ] शा ज्जेव बुद्धोवाशिआ। †

वस। [ पानीयमाकाङ्क्षति ]।

भिक्षुः। कथं! उदअं मग्गेदि? दूले च दिग्घिआ, किं दाणिं एत्थ कलइश्शं? भोदु, एदं चीवलं शे उवलि गालइश्शं। * (ख) [ तथा करोति ]।

वस। [ संज्ञां लब्ध्वा उत्तिष्ठति ]।

भिक्षुः। [ पटान्तेन वीजयति ]।

वस। अज्ज! को तुमं? † (ग)

---

इस्तः!! प्रत्यभिजानामीव एतं हस्तम्। अथवा, किं विचारेण, सत्यं स एव हस्तः, येन मे अभयं दत्तम्। भवतु प्रेक्षिष्ये। सैव बुद्धोपासिका।

* कथम्! उदकं मार्गयति? दूरे च दीर्घिका, किमिदानीमत्र करिष्यामि? भवतु एतच्चीवरम् अस्या उपरि गालयिष्यामि।

† आर्य! कस्त्वम्?

---

(क) प्रत्यभिजानामीव—स्मरामीव, पूर्वं किलैष मया अवलोकित इति संस्कारसहकृतं ज्ञानमत्र प्रत्यभिज्ञापदार्थः इति, प्रागदृष्टस्य संस्कारबलादेव अवगच्छामीवेत्यर्थः। विचारेण—एष हस्तः तस्या एव न वा इति वितर्केण इत्यर्थः।

(ख) मार्गयति—अन्विष्यति, याचते इत्यर्थः। [ वैकल्पिकचौरादिकस्य मार्गयतेः मार्गतेश्च लटि प्रयोगः ]। गालयिष्यामि—सजलवस्त्रं निष्पीड्य जलं दास्यामीत्यर्थः। [ चौरादिकात् चरणार्थकात् सकर्मकत्वादात्मनेपदिनश्च गालयते इत्यस्य लृटि रूपं, "गालयिष्ये" इत्येव पदमत्र साधुतया सङ्गच्छते, भौवादिकस्य गलतेः भक्षणार्थकत्वेन, तस्य णिचि रूपमेतदिति तु नाशङ्कनीयं, तस्य चार्थगतविरोधदर्शनादिति तु विभावनीयम् ]।

(ग) आर्य! कस्त्वमिति—मृत्युग्रासग्रस्ताया मे पुनः जीवनसंरक्षणेन जीवनौषधीभूतः विपन्नशरणश्च भवान् कः इति ज्ञातुमिच्छामि, एतादृश्यां विपदि नास्ति मे किमपि शरणमत्र, अतः अप्रार्थितोपनतः किन्नामधेयो भवानिति जिज्ञासा।

भिक्षुः। किं मं ण सुमलेदि बुद्धोवासिआ दशसुवस्स-णिक्कीदं ? * (घ)

वस। सुमरामि, ण उण जधा अज्जो भणादि, वरं अहं उवरदा ज्जेव। † (ङ)

भिक्षुः। बुद्धोवाशिए ! किं ण्णेदं ? ‡

वस [ सनिर्वेदम् (च) ] जं सरिसं वेसभावस्स। § (छ)

भिक्षुः। उट्ठेउ उट्ठेउ बुद्धोवाशिआ एदं पादवसमीवजादं लदं ओलंबिअ। ¶ (ज) [ इति लतां नामयति ]।

* किं मां न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ?

† स्मरामि ; न पुनर्यथा आर्य्यो भणति, परमहमुपरतैव।

‡ बुद्धोपासिके। किं नु इदम् ? § यत् सदृशं वेशभावस्य

¶ उत्तिष्ठतु उत्तिष्ठतु बुद्धोपासिका एतां पादपसमीपजातां लतामवलम्ब्य।

(घ) किमिति।—दशसुवर्णनिष्क्रीतं—दशभिः,—दशसङ्ख्यकैः, सुवर्णैः,—प्रत्येकं षोड़शमाषकमितैः दीनारैरित्यर्थः, निष्क्रीतं—निष्क्रयः, द्यूतार्थानां द्यूतकरेभ्यः समर्पणेन तत्र विक्रीतस्य बद्धस्य वा पुनः निष्क्रीतिः उद्धारः मोचनं वा यस्य तम्।

(ङ) स्मरामि, न पुनः यथा आर्य्यो भणति—"दशसुवर्णनिष्क्रीतम्" इति यत् कथयति, तन्न स्मरामि, [ अनेन वसन्तसेनाया महदौदार्य्यं सूचितम् ]। संवाहक-कृतप्रशंसावादेन लज्जिता स्वविपत्प्रसङ्गोत्थापनेन प्रस्तुतपरिजिहीर्षया आह, पर-मिति।—परं—किन्तु। उपरता—मृता ; मया त्वं दशसुवर्णनिष्क्रीत इति न स्मरामि, परन्तु मृतप्रायाया मे जीवनदानेन भवता एवाहं निष्क्रीता इत्येव स्मरामीति भावः।

(च) सनिर्वेदं—सानुतापं, सवैराग्यं वा।

(छ) वेशभावस्य—वेश्याजनाश्रयमियतधर्मस्य, गणिकात्ववृत्तेरित्यर्थः। सदृशम्—उचितं, वेश्यानां यादृशी दुर्दशा अवश्यम्भाव्या, तादृशी एव मे भूता इति तु तदर्थः ; दृश्यते हि अनिशमेवंविधविपद्ग्राहगृहीतत्वं गणिकानाम्, अतः एतादृग्विपत्पातो मे न विस्मयकरः इति भावः।

(ज) अवलम्ब्य—आश्रित्य, धृत्वा इत्यर्थः। यतीनामिन्द्रियनिग्रहस्य "अल्पा-हाराभ्यवहारेण रहः स्थानासनेन च। ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत्॥" इत्यादिवचसा श्रेष्ठधर्मत्वेन निर्द्देशात्, कदाचित् वा कामिनीस्पर्शे मन्मथोद्रेकः जायेत,

वस। [ गृहीत्वा उत्तिष्ठति ]।

भिक्षुः। **एदश्शिं विहाले मम धम्मबहिणिआ चिट्ठदि, तहिं समस्सशिदमणा भविअ उवाशिआ गेहं गमिश्शदि ; ता शेणं शेणं (भ) गच्छदु बुद्धोवाशिआ।** [ इति परिक्रामतः। दृष्ट्वा ] **ओशलध अज्जा ! ओशलध, एशा तलुणी इत्थिआ, एशो भिक्खु त्ति शुद्धे मम एशे धम्मे।** *(ञ)—

* एतस्मिन् विहारे मम धर्मभगिनी तिष्ठति, तत्र समाश्वस्तमना भूत्वा उपासिका गेहं गमिष्यति ; तत् शनैः शनैर्गच्छतु बुद्धोपासिका। अपसरत आर्य्याः ! अपसरत, एषा तरुणी स्त्री, एष भिक्षुरिति शुद्धो मम एष धर्म्मः।—

तेन च यतिनियमभङ्गप्रसङ्गः आपद्येत इति विविच्य धर्मस्खलनभिया तामस्पृष्ट्वैव तस्याः लताऽवलम्बनेनोत्थापनाय प्रयत्नः अनुसृतः भिक्षुणेति भावः।

(भ) विहारे—सुगतालये, बौद्धानाम् आश्रमे इत्यर्थः, बुद्धोपासनास्थाने इति यावत्। ("विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी)। धर्मभगिनी—समानधर्मावलम्बितया एकगुरोः शिष्यत्वेन च भगिनीसमा इत्यर्थः ; यद्वा,—धर्मतः,—आचारतः एव, भगिनी—भगिनीभूता, न तु लोकतः, भगिनीवदाचरणशीला इति यावत्। समाश्वस्तमनाः,—समाश्वस्तम्—अनुद्विग्नं, शान्तमित्यर्थः मनः,—अन्तःकरणं यस्याः सा, किञ्चित् स्वस्थीभूयेत्यर्थः। शनैः शनैः —मन्दं मन्दमित्यर्थः।

(ञ) अपसरत—इतोऽपगच्छत इत्यर्थः। अपसरणे हेतुमाह, एषेति।—तरुणी—युवती, गच्छति इति शेषः ; पथि गच्छन्त्याः अस्याः स्त्रियाः निर्बाधगमनं यथा भवति, तथा भवद्भिरार्य्यैः किञ्चिदपसृत्यावतिष्ठमानैः कर्त्तव्यमेवेति भावः ; ननु कथं वयमपसरामः ? यतः त्वं किल अनुसरसि ? इत्याशङ्क्याह, एष इति।—एषः,—अयं जनः, अहमिति यावत्, भिक्षुः,—बौद्धसन्न्यासी इत्यर्थः। ननु विषयविरक्तस्य ते युवत्यनुसरणमयुक्तमित्याशयेनाह, शुद्ध इति।—मम—मे, एषः,—अवश्यकर्त्तव्यत्वेनानुष्ठितोऽयमित्यर्थः, धर्मः,—लोकसंस्थितिहेतुभूततया शास्त्रकारैः उल्लिखितः अवश्यपालनीयः विधिः ; यद्वा —एष धर्मः,—विपन्नसंरक्षणभिक्षादानमिषेण स्वीकृतः एष सन्न्यासाचारः, विपन्नानामुद्धरणार्थमेव भ्रमामीति तात्पर्य्यम् ; [ ध्रियते संरक्ष्यते जगदनेनेति व्युत्पत्त्या धरतेः ध्रियते इत्यस्य वा करणे मनि रूपं, लोकरक्षाहेतुभूतं कर्म इति तु व्युत्पत्तिलभ्योऽर्थः अध्यवसेयः ]। शुद्धः,—पवित्रः कामनागन्धविहीन

हत्थसंजदो मुहसंजदो इंदिअसंजदो शे क्खु माणुशे।
किं कलेदि लाअउले? तश्श पललोओ हत्थे णिच्चले *॥ ४७॥

[ इति निष्क्रान्तौ ]।

इति वसन्तसेनामोटनो नाम अष्टमोऽङ्कः॥ ८॥

* हस्तसंयतो मुखसंयत इन्द्रियसंयतः स खलु मनुष्यः।
किं करोति राजकुलम्? तस्य परलोको हस्ते निश्चलः

इत्यर्थः; नाहं कामुक इवैतामनुसरामि, परन्तु अस्याः प्रत्यपकारार्थमेव अनुव्रजामीति भावः; नाहं धर्मकञ्चुक इति शङ्कनीयमित्येवात्र तात्पर्य्यम्।

युवत्यनुसरणं दृष्ट्वा कश्चिदन्यथाऽऽशङ्की चेत् इत्याकलय्य मुमुक्षूणां तत्सम्भावनाऽपि नास्ति इति दर्शयितुमाह, हस्तसंयत इति।—यो नरः हस्तेन—करेण, संयतः,—नियमितः संयतहस्तः, यः खलु हस्ताभ्यां किमपि अकार्य्यं न करोतीत्यर्थः, मुखसंयतः,—मुखेन—वदनेन, संयतः,—आबद्धः, संयतमुख इत्यर्थः, यो हि मुखेन परपीडाकरं किमपि कटुवाक्यं न कथयति, जिह्वालालसाशून्यश्च भवतीति, अधिकायां वाचि अभिधीयमानायां सत्यां यदि कदाचिदपि भ्रमेण मिथ्याभाषणं प्रयुक्तं स्यादिति शङ्कया यः सदा मौनी सन्नास्ते इति वा तात्पर्य्यार्थः तथा इन्द्रियसंयतः,—संयतेन्द्रियः, यश्च इन्द्रियाणि चक्षुरादीनि विषयेभ्यः निगृहीतवानित्यर्थः, स खलु—स एव मनुष्यः,—मनुष्यत्वेन गण्यः; राजकुलं—राज्ञः,—शासकस्य, कुलं—गृहं, राजगृहावस्थिताः पुरुषा इत्यर्थः, विचारालयो वा, तस्य—हस्तादिभिः संयतस्य इत्यर्थः, जितेन्द्रियस्येति भावः, किं करोति?—किमनिष्टं कर्त्तुं शक्नोतीत्यर्थः; निरन्तरोदात्तकर्म्माचरणात् राजकुले दण्डसम्भावनाऽपि नास्तीति भावः; तस्य हस्ते परलोकः,—स्वर्गः, निश्चलः,—स्थिरः; इह भ्रमात् पक्षपाताद्वा दण्डावाप्तिसत्त्वेऽपि कदाचिदपि स स्वर्गात् न भ्रश्यतीत्यर्थः, परलोके निरवच्छिन्नसुखधाराया एवाकाङ्क्षितत्वात्, ऐहिकन्तु दुःखसम्भिन्नं सुखं मादृशामुपेक्षणीयमेवेति भावः। श्लोकेऽस्मिन् हस्तादिसंयत एव मानुष इत्युक्त्या नान्यः मानुषपदवाच्य इत्यन्यव्यपोहात् परिसङ्ख्या, सा च अर्थलभ्यत्वात् आर्थी, तथा अर्थापत्तिश्च इत्यनयोर्निरपेक्षतया अवस्थानात् संसृष्टिः। गीत्युपगीतिमिश्रं वृत्तम्॥ ४७॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि. ए. उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायाम्
अष्टमोऽङ्कः॥ ८॥

# नवमोऽङ्कः ।

[ ततः प्रविशति शोधनकः ] ।

शोधनकः । आणत्तम्हि अधिअरणभोइएहिं,—"अरे सोहणआ ! ववहारमंडवं (क) गदुअ आसणाइं सज्जीकरेहि" त्ति । ता जाव अधिअरणमंडवं सज्जिदं गच्छामि । [ परिक्रम्य अवलोक्य च ] एदं अधिअरणमंडवं, एस पविसामि । [ प्रविश्य सम्मार्ज्यासनमाधाय ] विवित्तं कारिदं मए अधिअरणमंडवं, विरइदा मए आसणा, ता जाव अधिअरणिआणं (ख) उण णिवेदेमि ।

* आज्ञप्तोऽस्मि अधिकरणभोजकैः—"अरे शोधनक ! व्यवहारमण्डपं गत्वा आसनानि सज्जीकुरु" इति । तत् यावदधिकरणमण्डपं सज्जितं गच्छामि । इदमधिकरणमण्डपम्, एष प्रविशामि । विविक्तं कारितं मयाऽधिकरणमण्डपं, विरचितानि

(क) अधिकरणभोजकैः,—अधिक्रियन्ते निर्णयार्थं विचारोऽस्मिन्निति व्युत्पत्त्या विचारेणाधिक्रियन्ते निर्द्धार्य्यन्ते वा याथार्थ्यम् अस्मिन्निति अधिकरणं—विचारालयः, तस्य भोजकाः,—भोगकारिणः विचारका इत्यर्थः, प्राड्विवाकादय इति यावत् तैः । व्यवहारमण्डपं - व्यवहारः,—विवादः, ("विवादो व्यवहारः स्यात्" इत्यमरः) विचारो वा, तदुक्तं मिताक्षरायां—"विर्नानार्थेऽव सन्देहे हरणं हार उच्यते । नानासन्देहहरणाद्व्यवहार इति स्मृतः ॥" इति, "परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यात् न्यायात् व्यवस्थानं व्यवहार उदाहृतः ॥" इति च । तस्य मण्डपं —गृहं, विचारालयः इत्यर्थः, तत् ।

(ख) विविक्तं—पूतं, विशुद्धमित्यर्थः, सम्यक् मृष्टमिति यावत्, ("विविक्तौ पूतविजनौ" इत्यमरः) । कारितं—विधापितं, परिचारकादिभिः परिचारकादीन् वेति शेषः ; [ अत्र करोतेः णिचि प्रयोज्यकर्त्तुः वैकल्पिककर्म्मत्वविधानात्, तत्र च कर्म्मत्वातिदेशस्थले कर्म्मणि वाच्ये कर्त्तुः यथेष्टमुभयत्रैव मुख्ये गौणे च कर्म्मणि उक्तत्वस्यानुशिष्टत्वादत्र गौणस्य कर्म्मणः अधिकरणमण्डपस्य उक्तत्वं वेदितव्यम् ] । अधिकरणिकानाम्—अधिकरणे—धर्म्माधिकरणे, विचारालये इति यावत् नियुक्तानाम्, आधिकरणिकेभ्यः इत्यर्थः, [ अत्र शेषे षष्ठी ] ।

[ परिक्रम्यावलोक्य च ] ] कधं !! एसो रट्ठिअसालो दुट्ट-दुज्जण-मणुस्सो इदो ज्जेव आअच्छदि !! ता दिट्ठिपधं (ग) परिहरिअ गमिस्सं ।*
[ इति एकान्ते स्थितः ] ।

[ ततः प्रविशति उज्ज्वलवेशधारी शकारः ] ।

शकारः ।—

ण्हादेऽहं शलिलजलेहिं पाणिएहिं
उज्जाणे उववणकाणणे णिशस्से ।
णालीहिं शह जुवदीहिं इत्थिआहिं
गंधव्वे विअ शुहिदेहिं अंगकेहिं * ॥ १ ॥

मयाऽऽसनानि, तत् यावदधिकरणिकानां पुनः निवेदयामि । कथम् !! एष राष्ट्रिय-श्यालो दुष्टदुर्जनमनुष्य इत एव आगच्छति !! तत् दृष्टिपथं परिहृत्य गमिष्यामि ।

स्नातोऽहं सलिलजलैः पानीयैरुद्याने उपवन-कानने निषण्णः ।
नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्व्व इव सुहितैरङ्गकैः ॥

---

(ग) दुष्टदुर्ज्जनमनुष्यः,—सततान्हिताचरणनिरतपुरुषः, अतीव खल इत्यर्थः, अत्र शोधनकस्य नीचपात्रत्वात् "दुष्टमनुष्यः" इत्यनेन गतार्थत्वेऽपि "दुर्ज्जन" इत्यधिक-पदत्वस्य न दूषकत्वं वेदितव्यम् । दृष्टिपथं—चक्षुःसंयुक्तस्थानं, दृष्टिविषयमित्यर्थः, शकारस्येति शेषः । शोधनकस्य शौरसेनीभाषित्वात् तदुक्तौ सर्व्वत्र दन्त्यसकारो बोध्यः ।

अथ स्वसौभाग्यातिशयस्य प्रकाशनेन विकत्थनं कुर्व्वन्नाह. स्नात इति ।—युव-तीभिः,—तरुणीभिः, नारीभिः स्त्रीभिः सह सलिलजलैः पानीयैः,—जलैः, स्नातः,—आप्लुतशरीरः, आदाविति शेषः, उद्याने—राजप्रतिष्ठितसाधारणविहारोपवने, उपवनकानने—कृत्रिमवने अरण्ये च, निषण्णः,—उपविष्टः, पश्चाच्चेति शेषः. [ "सदिरप्रतेः" ( ८ । ३ । ६६ पा० ) इति षत्वं ] प्राक् वराङ्गनाभिः सार्द्धं जलकेलिं कृत्वा ततः अनुसरायमाणाभिः ताभिरेव सह उपवने विश्रामसुखं भुञ्जन् इति भावः ; तथा सुहितैः,—सुविहितैः, सुभूषितैरित्यर्थः, अङ्गकैः,—अङ्गैः, [ प्राशस्त्यार्थे कन्, अङ्गकैरिति च "इत्थम्भूतलक्षणे" ( २ । ३ । २१ पा० ) इति विशेषणे तृतीया ] अङ्गैरुपलक्षित इत्यर्थः, अहं—शकार इति यावत्, गन्धर्व्वः,—देवगायन इव, उज्ज्वलवेशधारी इदानीं संवृत्तोऽस्मि इति शेषः ; गन्धर्व्वाः यथा अप्सरोभिः नित्यं जलक्रीड़ां कुर्व्वन्ति, ताभिश्च सार्द्धं रम्यारामागारे एकासनमध्युष्य नियतमात्मानं

खणेण गंठी खणजूलके मे खणेण मे चंचलकुंतले वा।
खणेण मुक्के खण उड्ढचूड़े चित्ते विचित्ते हगे लाअशाले * ॥२॥

* क्षणेन ग्रन्थिः क्षणजूटको मे क्षणेन मे चञ्चलकुन्तला वा।
क्षणेन मुक्ताः क्षणमूर्द्धचूडाश्चित्रो विचित्रोऽहं राजश्यालः॥

विनोदयन्तस्तिष्ठन्ति, तथैवाहमपि युवतीभिः सह आत्मानं विनोदयन् वर्त्ते इति तु तात्पर्य्यम्। अत्र शकारवक्तृत्वात् "सलिलजलैः पानीयैः" तथा "उद्याने उपवन-कानने" अपि च "नारीभिः स्त्रीभिः" इति पर्य्यायकशब्दप्रयोगकृतपुनरुक्तत्वदोष उपेक्षणीयः। ["गंधव्वे विअ सुहिदेहिं अंगकेहिं" इत्यत्र "गंधव्वेहिं सुविहिदएहिं अंगकेहिं" इति पाठान्तरं दृश्यते, तस्य तु—गन्धर्वैः सुविहितैरङ्गकैः इति संस्कृतम्; तदर्थस्तु,—सुविहितैः,—रत्नखचितभूषणमनोहारिभिः, अङ्गकैः,—रम्यतया कोमल-तया च प्रशस्तैरवयवैरुपलक्षितैरित्यर्थः, गन्धर्वैः—देवयोनिविशेषैः, देवगायकैरिति यावत्, तत्सदृशैरिति भावः, युवतीभिरिति पूर्वेणान्वयः; अत्र अप्सरोभिरिति वक्तव्ये "गन्धर्वैः" इति पुम्भिः साकं युवतीनां साम्यप्रदर्शनकृतलोकविरुद्धार्थाभिधानं हास्य-रसानुकूलतया शकारसदृशानां नीचपात्राणामधमत्वप्रतीतिकरत्वेन च भूषणमित्यव-धातव्यम्। "शलिलजलेहिं" "जुवदीहिं" "शुहिदेहिं" इत्यत्र सानुस्वाराणामपि अन्त्याक्षराणां लाघवं छन्दोऽनुरोधात् स्वीकर्त्तव्यम्]। प्रहर्षिणी वृत्तम्॥ १॥

केशानां नानाविधविन्यासवशात् स्वस्य असाधारणशिरःशोभां प्रकटयितुमाह, खणेणेति।—मे—मम, क्षणेन—क्षणकाले, कदाचिदित्यर्थः, ग्रन्थिः,—केशबन्धः, संयतकेश इत्यर्थः, क्षणजूटकः,—क्षणेन जूटकः,—शिरसः पुरोभागे समानीय एकीकृत्य बद्धः "झुँटी" इति ख्यातः, क्षणेन वा मे चञ्चलकुन्तलाः,—चञ्चलाः केशपाशाः, क्षणेन मुक्ताः,—बन्धनात् भ्रंशिताः, क्षणं वा ऊर्द्धचूडाः,—उपरिस्थिताः शिखाः, राजन्ते इति शेषः; [सर्वत्र कुन्तलपदस्यानुषङ्गेणान्वयः; अत्र कुन्तल-ग्रन्थिकरणादीनां वैचित्र्यरूपफलप्राप्तेः द्योतितत्वेन कालवाचकात् "क्षणेन" इत्यस्मात् "अपवर्गे तृतीया" (२।३।६ पा०) "क्षणेन" "मे" इत्यस्य च पुनरुक्तिकृतो दोषः वक्तुरधमपात्रत्वादेवोपेक्षणीयः]। क्षणेन ग्रन्थेः जूटकादेश्च करणे फलमाह, चित्र इति।—यतोऽहं राजश्यालः,—राज्ञः श्यालकः, अतः चित्रः विचित्रः,—क्षणे क्षणे नानाविधविचित्रवेशसम्पन्न इत्यर्थः; राजश्यालत्वेन मयि सर्वमेव सौभाग्यविलसित-मुपपन्नं भवति इति भावः। ["हगे" इत्यत्र एकारः छन्दोऽनुरोधात् लघुः पठनीयः]। उपजातिः वृत्तम्॥ २॥

अविअ,—बिशगंठि-गब्भ-पविट्टेण विअ कीड़एण अंतलं मग्गमाणेण पाविदं मए महदंतलं, ता कश्श एदं किविण-चेट्टिअं पाड़इश्शं ? (घ) [ स्मृत्वा ] आं ! शुमलिदं मए, दलिद्द-चालुदत्तश्श एदं किविण-चेट्टिअं पाड़इश्शं। अर्ण्णं च, दलिद्दे क्खु शे, तश्श शव्वं शंभावीअदि। भोदु, अधिअलणमंडवं गदुअ अग्गदो ववहालं लिहावइश्शं, जधा "चालुदत्ताकेण वशंत-शेणिआ मोड़िअ (ङ) मालिदा"। ता जाव अधिअलणमंडवं ज्जेव गच्छामि। [ परिक्रम्यावलोक्य च ] एदं तं अधिअलणमंडवं, एत्थ पविशामि। [ प्रविश्यावलोक्य च ] कधं, आशणाइं दिण्णाइं चिट्ठंति ; जाव आअच्छंति अधिअलणभोइआ, दाव एदश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पड़िवालइश्शं। * (च) [ तथा स्थितः ]।

* अपि च —विसग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम् ; तत् कस्येदं कृपणचेष्टितं पातयिष्यामि ? आं ! स्मृतं मया, दरिद्रचारुदत्तस्य इदं कृपणचेष्टितं पातयिष्यामि। अन्यच्च, दरिद्रः खलु सः, तस्य सर्वं सम्भाव्यते। भवतु, अधिकरणमण्डपं गत्वा अग्रतो व्यवहारं लेखयिष्यामि, यथा "चारुदत्तेन वसन्त-

(घ) विसग्रन्थिगर्भप्रविष्टेन—विसस्य—मृणालस्य, ग्रन्थिः,—पर्व, तस्य गर्भः,—अभ्यन्तरं, तत्र प्रविष्टः,—आश्रित इत्यर्थः तेन, कीटकेन—क्षुद्रकीटेन इव, अन्तरम्—अवकाशं, बहिर्निर्गमनमार्गमिति यावत्, वैरनिर्य्यातनावसरञ्च, मार्ग-माणेन—अन्वेषयता इत्यर्थः ; [ मार्गयतेः चौरादिकस्यैवोभयपदित्वं भौवादिकस्य तु परस्मैपदित्वेन मार्गता इत्येव पदं साधु इति मन्यन्ते केचन, अपरे तु भौवादिक-स्यापि मार्गतेरात्मनेपदित्वेन बहुशः प्रयोगदर्शनात् मार्गमाणेनेत्यपि पदं साधु इति वदन्ति ]। इदं—वसन्तसेनावधरूपमित्यर्थः, कृपणचेष्टितं—क्रूरव्यवहारम् ; यद्वा,—कृपणं—दीनं, दुःखजनकतया कर्त्तुमशक्यमित्यर्थः, चेष्टित—कर्म्म, कस्य—जनस्य, उपरीति शेषः, पातयिष्यामि—निक्षेप्स्यामि।

(ङ) आमिति स्मरणार्थकमव्ययं, स्मृतं—ज्ञातमित्यर्थः। सः,—चारुदत्त इत्यर्थः। तस्य —चारुदत्तस्येत्यर्थः, सर्वं—निखिलदुष्कर्म्म। सम्भाव्यते—युज्यते इत्यर्थः, दारिद्र्यादिति भावः। मोटयित्वा—भङ्क्त्वा, ग्रीवादेशमिति शेषः।

शोधनकः। [अन्यतः परिक्रम्य पुरो दृष्ट्वा] **एदे अधिअरणिआ आअच्छंति, ता जाव उवसप्पामि। *** [इत्युपसर्पति]।

[ततः प्रविशति श्रेष्ठिकायस्थादिपरिवृतोऽधिकरणिकः (छ)]।

अधि। **भो भोः! श्रेष्ठिकायस्थौ!**

श्रेष्ठिकायस्थौ। **आणवेदु अज्जो। †**

अधि। **अहो! व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः। (ज)—**

सेना मोटयित्वा मारिता"। तत् यावदधिकरणमण्डपमेव गच्छामि। एतत् तदधिकरणमण्डपम्, अत्र प्रविशामि। कथम्, आसनानि दत्तानि तिष्ठन्ति; यावदागच्छन्ति अधिकरणभोजकाः, तावत् एतस्मिन् दूर्वाचत्वरे मुहूर्त्तमनुपविश्य प्रतिपालयिष्यामि।

* एते अधिकरणिका आगच्छन्ति, तत् यावदुपसर्पामि।

† आज्ञापयतु आर्य्यः।

(च) दत्तानि—सज्जीकृतानि, विन्यस्तानीत्यर्थः। [आगच्छन्ति इत्यत्र, "यावत् पुरा निपातयोर्लट्" (३।३।४ पा०) इति यावच्छब्दयोगे भविष्यति लट्]। दूर्वाचत्वरे—दूर्वादलाच्छादिताङ्गनभूमौ इति यावत्। प्रतिपालयिष्यामि—प्रतीचिष्ये।

(छ) श्रेष्ठी—वणिक्, "शेठ" इति ख्यातः, तस्य द्रव्यादिपरीक्षार्थमधिकरणे नियोगमाह कात्यायनः यथा,—"कुल-शील-वयो-वृत्त-वित्तवद्भिरमत्सरैः। वणिग्भिः स्यात् कतिपयैः कुलभूतैरधिष्ठितम्॥" इति। कायस्थः,—लेखनवृत्तिकः करणाख्यवर्णसङ्करजातिविशेषः, ("शूद्राविशोस्तु करणः" इत्यमरः) "अयं लिखनवृत्तिः कायस्थ इति ख्यातः" इति भरतः; तज्जातिवृत्तिभेदः ब्रह्मवैवर्त्ते जन्मखण्डे ८५ श्लोके उक्तो यथा,—"जन्मैकश्च दुराचारी जन्मैकं करणो भवेत्। विश्वकलिपिकर्त्ता च भक्ष्यदातुर्धनं हरेत्॥" इत्यादि। अधिकरणिकः,—प्राड्विवाकः, विचारकर्त्ता इति यावत्।

(ज) अहो! इति खेदे वितर्के वा। व्यवहारपराधीनतया—व्यवहारे—विचारे विवादनिर्णये इत्यर्थः, या पराधीनता—परेषां—साक्षिप्रभृतीनामित्यर्थः, अधीनता—आयत्तता तया, साक्ष्यादीनां वाक्यं प्रमाणीकृत्य विचारकर्म्मणः निष्पादनीयतया इति यावत्, परचित्तग्रहणं—परेषाम्—अर्थिप्रत्यर्थिप्रभृतीनामित्यर्थः,

छद्मं कार्य्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान् दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयम्।
तैः पक्षापरपक्षवर्द्धितबलैर्दोषैर्नृपः स्पृश्यते
सङ्क्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः॥ ३॥

चित्तग्रहणं—मनोगतभावबोधनं, तेषां वाक्यं श्रुत्वा स्वबुद्धिप्रभावेण मनोगतभावपरिज्ञानमिति भावः। अत्र अहो इति खेदार्थश्चेत् परचित्तग्रहणस्य दुष्करतया कदाचित् विचारविपर्य्यये पापस्पृष्टत्वाशङ्कया खेदो बोध्यः; वितर्कार्थश्चेत् अतीव क्लेशसाध्यमिति तर्कयामीत्यर्थः; परस्परविसंवादि अर्थिप्रत्यर्थिभाषणं श्रुत्वा स्वबुद्ध्या तत्त्वार्थविनिर्णयः अतीव दुष्कर इति तात्पर्य्यम्।

व्यवहारकर्म्मणः सुष्ठु सम्पादनस्य दुष्करत्वे हेतुवर्णनप्रसङ्गेन असम्यग्व्यवहारस्य दोषमाह, छद्ममिति। पुरुषाः,—अभियुक्ताभियोक्तृप्रभृतयः, न्यायेन—नीत्या, युक्त्या वा, दूरीकृतं—निराकृतं, नीतिरहितम् अयुक्तं वा इत्यर्थः, कार्य्यम्—अभियोगविषयीभूतं वस्तु इति यावत्, छद्मं—शाठ्येनाच्छादितं यथा तथा, असत्यं सत्येन, सत्यमसत्येन वा आवृतं कृत्वेति भावः, उपक्षिपन्ति—व्यवहारेण प्रयुञ्जते, आवेदयन्तीत्यर्थः; "यतः ते" इति पदद्वयमत्र ऊहनीयम्; स्वयम्—आत्मना, रागाभिभूताः,—रागेण—विषयासक्त्या, अतीवान्तरङ्गेषु प्रणयेन, विपक्षभूतानामुपरि क्रोधेन वा, अभिभूताः,—आक्रान्ताः, तदुपहतचित्ता इति यावत्, दृश्यन्ते इति शेषः, केचन लोभात् परकीयमपि विषयमात्मसात् कर्त्तुं मिथ्याभूतं व्यवहारमुपन्यस्यन्ति, केऽपि वा अतिप्रणयिषु तेषु साहायकं कर्त्तुमनुसरन्ति, अन्ये वा शत्रुभूतजिघांसया अयथाभूतं वादमुपस्थापयन्तीति तात्पर्य्यम्, अतः अधिकरणे—विचारगृहे, स्वान्—निजान्, दोषान्—अपराधान्, न कथयन्ति—न वदन्ति, न प्रकाशयन्तीत्यर्थः; भवन्तु तावत् त एव रागादिभिरभिभूततया मृषावादेन अन्यायाचरणेन च पापिनः, तेनास्माकं किम्? इति शङ्कायां, स्वेषां राज्ञामविचारकृतदोषसंस्पृष्टत्वमभिधातुमाह, तैरिति।—पक्षापरपक्षवर्द्धितबलैः,—पक्षः,—वादिपक्षीयजनः, अपरपक्षः,—प्रतिवादिपक्षीयजनः ताभ्यां, वादिप्रतिवादिनोः अन्योऽन्यमुपकारकापकारकाभ्यां स्वपक्षविपक्षाभ्यामित्यर्थः, वर्द्धितं—पोषितं, स्वमतं व्यवस्थापयितुमुपन्यस्तमिति यावत्, बलम्—अभियोगस्य समूलकत्वसमर्थनेन अमूलकत्वप्रतिपादनेन वा सप्रमाणीकृतमाधिक्यं न्यूनत्वं राहित्यं वेत्यर्थः येषु तादृशैः, तैः,—अन्यायाचरणादिजनितैरित्यर्थः, दोषैः,—अपराधैः, नृपः,—राजा, स्पृश्यते—आक्रम्यते;

अपि च।—

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान् दोषान् कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम्।

उभयपक्षीयवाग्जालैराच्छन्नमतितया किंकर्त्तव्यताज्ञानविरहेण अधिकरणिकेन कदाचित् असत्यस्य सत्यत्वनिर्णयात्, कदाचिच्च सत्यस्य असत्यत्वनिर्णयादिति भावः, तेन च इह महदयशः परत्र च निरयस्य भाजनं नृपतिः भवतीति फलितम्; यथा,—पक्षाः,—राज्ञः स्वपक्षाः, अमात्यभृत्यादय इत्यर्थः, अपरपक्षाः,—व्यवहारार्थिपक्षाः, "उकील" इति प्रसिद्धा व्यवहाराजीविनः इत्यर्थः ते; तथा हि,—राजपक्षा अमात्यादयः बुद्धिविपर्य्ययात् उत्कोचग्रहणाद्वा कुमन्त्रणाप्रदानेन नृपम् अन्यथा चालयन्तः, तथा व्यवहाराजीविनोऽपि लोभपारवश्यात् सततं वाक्कौशलेन मृषाप्रमाणाद्युपस्थापनेन च अनृतमपि व्यवहारं यथार्थत्वेन वर्णयन्तः दोषमुत्पादयन्ति, तदुद्घाटयितुमशक्य भ्रमाद्वा अदण्ड्यान् दण्डयति राज्ञि तत्पापसंस्पर्शो भवतीति बोध्यम्; अत एव व्यवहारस्य अयथादर्शने अदर्शने च दोषमाह मनुः; यथा,—"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छति॥" इति। भवतु तावत् विचारविपर्य्ययेण नृपस्य पापस्पर्शः, प्राड्विवाकस्य तेन किमित्याशयेनाह, सङ्क्षेपादिति।—अतः सङ्क्षेपात्—सामान्यात्, किमनल्पजल्पनेनेति भावः, द्रष्टुः,—व्यवहारदर्शिनः, विचारकस्येत्यर्थः, अपवाद एव—निन्दा एव, सुलभः,—सुप्रापः, गुणस्तु—प्रशंसालाभस्तु, दूरतः एव—दूरवर्त्ती एव, न सुलभ इत्यर्थः; व्यवहारकर्म्मणः सुष्ठु सम्पादनस्य अतीव दुष्करतया ततः सामान्यमात्रस्खलनेनैव महती निन्दा जायते, प्रशंसालाभस्तु सुदूरपराहत एव इति भावः। [अत्र सुलभ इति खलार्थकस्य कर्त्तुः द्रष्टुः इत्यस्य कथं षष्ठीत्वम्? "न लोकाव्यय—" (२।३।६९ पा०) इति सूत्रेण षष्ठीप्रतिषेधदर्शनात्; अत्र तु दीक्षिताः,—"सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः, शेषे षष्ठी तु स्यादेव" इत्याहुः; तथा च सुलभ इत्यस्य क्रियापदस्य द्रष्टुरेव कर्त्तृत्वेऽपि शेषे षष्ठी इति कृत्वा समाधानं कारणीयमिति; एवञ्च "क्रोधदण्डसमयाणां किमेषामस्ति दुष्करम्" इति "मुक्तानां किं दुरापं महात्मनाम्" एवमादिषु स्थलेषु प्रोक्तनियमस्य व्यभिचारदर्शनात्, सम्बन्धविवक्षया, नञा निर्दिष्टस्यानित्यत्वाद्वेति व्यवस्थया समाधातव्यमिति]। अत्र उत्तरार्द्धवाक्यं प्रति पूर्वार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २॥

उक्तमर्थं पुनर्भङ्ग्यन्तरेणाह, छन्नं दोषमिति।—कुपिताः,—क्रोधपरतन्त्राः, अत एव न्यायेन—नीत्या, दूरीकृताः,—नीतिविच्युताः, (दृश्यते हि लोके क्रुद्धाः प्रायशः

ये पक्षापरपक्षदोषसहिताः पापानि सङ्कुर्वते
सङ्क्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः॥ ४ ॥

यतः अधिकरणिकः (भ) खलु,—

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः।

सदसद्विवेकशून्या भवन्ति इति) ये, पुरुषा इति शेषः, अधिकरणे—विचारालये, छन्नं—कदाचित् सत्यमसत्येन, कदाचिद्वा असत्यं सत्येन आवृतं, दोषं—पापम्, अन्योऽन्यस्येति शेषः, उदाहरन्ति—वर्णयन्ति, तथा सन्तोऽपि—साधवः अपि, ये स्वान्—निजान्, दोषान्—अपराधान्, न कथयन्ति—न प्रकाशयन्तीत्यर्थः, (तें नूनमित्यध्याहार्य्यं यत्तदोर्नित्यसम्बन्धात्) पक्षापरपक्षदोषसहिताः,—पक्षाणाम् अपरपक्षाणां—परस्परविरुद्धपक्षाणामित्यर्थः, दोषैः,—दूषणैः, परस्परं निर्य्यातनेच्छया अयथाऽऽरोपितैः इति भावः, सहिताः,—संयुक्ताः, प्रतिहिंसापरतन्त्रतया उभयपक्षीयारोपितदोषदूषिताः सन्तः, पापानि—किल्विषाणि, सङ्कुर्वते—सम्यक् आचरन्ति, पापिनः भवन्तीति यावत्, (अतः ते) ध्रुवं—निश्चितं, नष्टाः,—नाशं गताः, उभयलोकाभ्यां भ्रष्टा भवन्तीति भावः। अवशिष्टांशानां व्याख्या तु पूर्व्वश्लोकवत् वेदितव्या। अत्र चतुर्थपादगतवाक्यार्थं प्रति पूर्व्वपादत्रयगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्। शार्दूलविक्रीडितं वृत्तम्॥ ४॥

(भ) अधिकरणिकः,—अधिकरणसम्बन्धी, विचारकर्त्ता इत्यर्थः, प्राड्विवाकपदवाच्य इति यावत्। [अधिकरणस्य अयम् अधिकरणशब्दादिदमर्थे इकप्रत्ययः, "अत इनिठनौ" (५।२।११५ पा०) इति ठन् वा]।

इदानीं स्वकर्त्तव्याभिधानप्रसङ्गेन अधिकरणिकलक्षणमाह, शास्त्रज्ञ इति।—

शास्त्रज्ञः,—धर्म्मशास्त्राभिज्ञः, कपटस्य—कूटस्य, अर्थिप्रत्यर्थिप्रयुक्तस्येति भावः, अनुसारे—आविष्करणे, कुशलः,—निपुणः, वक्ता - वचनरचनाचतुरः, मधुरवाग्गिति वा, न च परुषवचनप्रयोगेण व्यवहारार्थिनामप्रीतिपात्रम् इति भावः, न च क्रोधनः, —अतिक्रोधशून्य इत्यर्थः, क्रोधप्रदर्शनस्य शास्त्रविगर्हितत्वात् शास्त्रज्ञ इत्यनेनैव अक्रोधने लब्धे पुनस्तत्कथनं दुष्टेषु कदाचित् क्रोधप्रदर्शनं स्वेषामदृश्यत्वापायशङ्काविनिवृत्त्यर्थमिति वेदितव्यं, स्वल्पोऽपि क्रोधः तेन निरपराधेषु न कर्त्तव्य इति भावः; मित्रपरस्वकेषु—मित्रेषु—सुहृत्सु, परेषु—अनात्मीयेषु, तथा स्वकेषु—स्वजनेषु च, तुल्यः,—समदर्शी, अपक्षपातीत्यर्थः, [अत्र विषयाधिकरणे सप्तमी] चरितम्—

क्लीवान् पालयिता शठान् व्यथयिता धर्म्योऽतिलोभान्वितो
द्वार्भावे परतत्त्व-बद्धहृदयो राज्ञश्च कोपापहः ॥ ५ ॥

आचरणं, विवादविषयीभूतमिति यावत्, अर्थिप्रत्यर्थिनोरिति शेषः, दृष्टैव—विचारेण पुङ्खानुपुङ्खशः ज्ञात्वैवेत्यर्थः, [ स्वायोगव्यवच्छेदकोऽयम् एवकारः, एतेन लज्जाभयादिभिरुत्तरदाने विकल्पः अकर्त्तव्य इति सूचितम् ; "चरितं दृष्टैव" इत्यत्र "चरिते दृष्टे च" इति पाठान्तरे—विचारिते सतीत्यर्थः ] दत्तं—विहितमित्यर्थः, उत्तरं—राज्ञान्तिकं प्रतिवचनं, वादिप्रतिवादिनोः जयपराजयरूपमिति यावत् येन तथाभूतः, क्लीवान्—अविक्रमान्, अक्षमानित्यर्थः, ( "—पापे क्लीवं नपुंसके। षण्डेऽन्यवदविक्रमे—" इति मेदिनी ) पालयिता—दुर्जनेभ्यः स्वभावतः रक्षिता, रक्षणशील इत्यर्थः, शठान्—धूर्त्तान्, दुर्ज्जनान् इत्यर्थः, व्यथयिता—प्रकृत्यैव दण्डयिता, दण्डदानशील इत्यर्थः, [ तृचः प्रयोगे कथं क्रुद्दयोगात् "क्लीवान्, शठान्" इत्युभयत्र कर्म्मणि न षष्ठी, इति तु नाशङ्कनीयं, शीलार्थतृचः योगे षष्ठीप्रतिषेधात् ; अथवा भव्यार्थे लुटः एवायं प्रयोगः, पातेः व्यथयतेश्च लुटि तथैव प्रयोगः भवतीति विज्ञेयम् ] धर्म्य—धर्मादनपेते कर्म्मणि धर्म्माचरणे इत्यर्थः, अतिलोभान्वितः,—अतिलुब्धः, धर्म्मपरायण इत्यर्थः, ( धार्म्मिकस्य पक्षपातीति तु फलितं, विदुषां गुणपक्षपातदर्शनात् ) [ "धर्म्योऽतिलोभान्वितः" इत्यत्र "धर्म्यो न लोभान्वितः" इति पाठान्तरे—धर्म्यः,—धर्म्मादनपेतः, धार्म्मिक इत्यर्थः, न लोभान्वितः,—निर्लोभ इत्यर्थः ] तथा द्वार्भावे—द्वाः,—द्वारम्, अभ्युपाय इत्यर्थः, ( "द्वारं निर्गमनेऽपि स्यादभ्युपाये" इति मेदिनी ) तस्य भावः,—सत्ता तस्मिन् उपाये सतीत्यर्थः, परेषाम्—अर्थिप्रत्यर्थिनां, यत् तत्त्व—याथार्थ्यं तस्मिन्, तन्निर्णये इत्यर्थः, बद्धहृदयः,—व्यासक्तमनाः, परतत्त्वानुसन्धाने समाहितचित्तः इत्यर्थः ; व्यवहारार्थी स्वार्थपरतया यथा स्वविषये बद्धहृदयो भवति, तथा अधिकरणिकोऽपि तद्विषयसम्बन्धाभावात् उपाये सति केवलं तत्त्वानुसन्धानार्थमेव समाहितमना भवेदिति भावः ; यद्वा,—परं—प्रधानं, श्रेष्ठं वा यत् तत्त्व तस्मिन्, किमत्र तत्त्वमिति शङ्कायामेतदेवात्र तत्त्वमिति विनिर्णये. बद्धहृदयः,—व्याकुलचेताः, अभियोक्तव्यविषये स्वप्रतिभया तत्त्वनिर्णयपटुः इति फलितार्थः ; तथा राज्ञः,—नियोजकस्य नृपतेः, कोपापहः —कोपः,—क्रोधः, अयथार्थ्यव्यवहारदर्शनादिति भावः, तम् अपहन्ति—नाशयतीति कोपनाशकश्च, कर्णेजपानामुक्तिवैचित्र्येण विचारकार्य्ये अधिकरणिकस्य असम्यक्त्वं तथा पक्षपातित्वं मत्वा विचारकर्म्माक्षमत्वभ्रमात् क्रुद्धस्य राज्ञः सङ्गतार्थकथनेन

श्रेष्ठिकायस्थौ। अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि ? जइ एव्वं, ता चंदालोए वि अंधआरो त्ति वुच्चदि। *

अधि। भद्र शोधनक ! अधिकरणमण्डपस्य मार्गमादेशय।

शोधनकः। एदु एदु अधिअरणभोइओ एदु। † [ इति परिक्रामन्ति ]।

शोधनकः। एदं अधिअरणमंडवं, ता पविसंतु अधिअरणभोइआ। ‡ [ सर्वे प्रविशन्ति ]।

अधि। भद्र शोधनक ! वहिर्निष्क्रम्य ज्ञायतां, कः कः कार्य्यार्थी (ञ) इति।

शोधनकः। जं अज्जो आणवेदि। [ इति निष्क्रम्य ] अज्जा ! अधिअरणिआ भणंति, को को इध कज्जत्थी त्ति। §

शकारः। [ सहर्षम् ] उवत्थिए अधिअलणिए ? [ साटोपं ( ट ) परिक्रम्य ] हगे वलपुलिशे मणुश्शे वाशुदेवे लट्टिअशाले (ठ) लाअशाले कज्जत्थी। ¶

* आर्य्यस्यापि नाम गुणे दोष इति उच्यते ? यद्येवं, तदा चन्द्रालोकेऽपि अन्धकार इत्युच्यते।

† एतु एतु अधिकरणभोजक एतु।

‡ एतदधिकरणमण्डपं, तत् प्रविशन्तु अधिकरणभोजकाः।

§ यदार्य्य आज्ञापयति। आर्य्याः ! अधिकरणिका भणन्ति, कः क इह कार्य्यार्थीति।

¶ उपस्थिता अधिकरणिकाः ? अहं वरपुरुषो मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्य्यार्थी।

सदुपदेशन च क्रोधप्रशमक इति भावः ; एतेन विचारकाणां न्यायपथादप्रविच्युतानां प्रशंसा असुलभा एव यतो हि जनाः विचारसाधुत्वकथने दुर्म्मना भवन्ति, यद्वतः क्रियमाणमपि एतत् विचारकार्य्यं प्रशंसालाभे दरिद्रमेव, अहो ! कष्टमेतत् इत्याशयः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

( ञ ) कार्य्यार्थी—व्यवहारार्थी इत्यर्थः।

( ट ) साटोपं—सगर्व्वमित्यर्थः।

( ठ ) वरपुरुषः,—श्रेष्ठमनुष्यः ; भगवतो वासुदेवस्य प्रवरपुरुषत्वेन तथात्व-

शोधनकः। [ससम्भ्रमम्] हीमादिके !! पढमं ज्जेव रट्ठिअसालो कज्जत्थी !! भोदु, अज्ज ! मुहुत्तं चिट्ठ दाव, अधिअरणिआणं णिवेदेमि। [उपगम्य] अज्जा ! एसो क्खु रट्ठिअसालो कज्जत्थी बवहारं (ड) उवत्थिदो। *

अधि। कथं !! प्रथममेव राष्ट्रियश्यालः कार्य्यार्थी !! यथा सूर्य्योदये उपरागो महापुरुषनिपातमेव कथयति। शोधनक ! व्याकुलेनाद्य (ढ) व्यवहारेण भवितव्यम्। भद्र ! निष्क्रम्य उच्यतां, "गच्छ, अद्य न दृश्यते तव व्यवहारः" इति।

शोधनकः। जं अज्जो आणवेदि त्ति। [निष्क्रम्य शकारमुपगम्य] अज्ज ! अधिअरणिआ भणंति, "अज्ज गच्छ, ण दीसदि तव बवहारो"। †

* हन्त !! प्रथममेव राजश्यालः कार्य्यार्थी !! भवतु, आर्य्य ! मुहूर्त्तं तिष्ठ तावत्, अधिकरणिकानां निवेदयामि। आर्य्याः ! एष खलु राष्ट्रियश्यालः कार्य्यार्थी व्यवहारम् उपस्थितः।

† यदार्य्य आज्ञापयति। आर्य्य ! अधिकरणिका भणन्ति, "अद्य गच्छ, न दृश्यते तव व्यवहारः"।

बोधनार्थं तदभेदारोपः कृतः, राष्ट्रियश्यालः,—"राजश्यालस्तु राष्ट्रियः" इत्यमरोक्तेः राष्ट्रियशब्देनैव राजश्यालस्य गम्यमानत्वेऽपि "राजश्यालः" इति पदं विशेषबोधनार्थं पद्मखण्ड इत्यादिवत् इति बोध्यम्, अनूढाभ्रातृत्वेन विशेषबोधनार्थं वा. मूर्ख-भाषितत्वाद्वा पौनरुक्त्यमेतत् न दोषायेति वेदितव्यम्।

( ड ) व्यवहारं—विचारार्थमित्यर्थः।

( ढ ) उपरागः,—राहुणा सूर्य्यस्य चन्द्रमसो वा ग्रास इत्यर्थः. ( "उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पुष्णि च" इत्यमरः ) यथा—यद्वत्, महापुरुषनिपातं—साधुजन-विनाशं. कथयति—सूचयतीत्यर्थः, तथा प्रथममेव राष्ट्रियस्य आगमनं महापुरुष-निपातमेव सूचयतीति शेषो बोध्यः ; [ एतेन महापुरुषस्य चारुदत्तस्य विपत् समासन्न-प्राया एवेति सूच्यते ]। व्याकुलेन—विक्षोभितेन, वितस्तेनेत्यर्थः, अव्यवस्थितेनेति यावत् ; [ एतेन च भ्रमात् चारुदत्तस्य निरपराधस्य प्राणदण्डादेशः अधिकरणिकैः

शकारः। [सक्रोधम्] किं! ण दीशदि मम ववहाले? जइ ण दीशदि, तदो आवुत्तं लाआणं पालअं वहिणीवदिं विण्ण-विअ, वहिणिं अत्तिकं च विण्णविअ, एदं अधिअलणिअं दूले फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शं। * (ग) [इति गन्तुमिच्छति]।

शोधनकः। अज्ज रट्ठिअसालअ! मुहुत्तअं चिट्ठ, दाव अधिअरणिआणं णिवेदेमि। [अधिकरणिकमुपगम्य] एसो रट्ठिअ-सालो कुविदो भणादि। † [इति तदुक्तं भणति]

अधि। सर्वमस्य मूर्खस्य सम्भाव्यते। भद्र! (घ) उच्यताम्, "आगच्छ, दृश्यते तव व्यवहारः"।

शोधनकः। [शकारमुपगम्य] अज्ज! अधिअरणिआ भणंति, "आअच्छ, दीसदि तव ववहारो" ता पविसदु अज्जो। ‡

* किम्! न दृश्यते मम व्यवहारः? यदि न दृश्यते, तदा आवुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीम् अत्तिकाञ्च विज्ञाप्य एतमधिकरणिकं दूरीकृत्य अत्र अन्यमधिकरणिकं स्थापयिष्यामि।

† आर्य्य राष्ट्रियश्याल! मुहूर्तकं तिष्ठ, तावदधिकरणिकानां निवेदयामि। एष राष्ट्रियश्यालः कुपितो भणति।

‡ आर्य्य! अधिकरणिका भणन्ति, "आगच्छ, दृश्यते तव व्यवहारः" तत् प्रविशतु आर्य्यः।

प्रदत्तो भविष्यतीति व्यज्यते; "गच्छाय" इत्यादिवचसा च तस्य दैवबलात् प्राणरक्षा भविष्यतीति ध्वन्यते]।

(ग) आवुत्तं—भगिनीपतिं, ("भगिनीपतिरावुत्तः" इत्यमरः)। अत्तिकां—ज्येष्ठां भगिनीम् ["अत्तिका भगिनी ज्येष्ठा" इत्यमरः। अत्र "भगिनीम् अत्तिकाञ्च" इति द्विरुक्तिः शकारवाक्ये न दोषावहा। "अत्तिकम्" इत्यस्य मातरम् इति संस्कृतं क्वचित् दृश्यते, तथात्वे स्वमातरं, राज्ञः पालकस्य श्वश्रूमित्येवार्थः]। दूरीकृत्य—बहिष्कृत्य इत्यर्थः। स्थापयिष्यामि—नियोजयिष्यामि।

(घ) भद्र!—सुजन! कल्याणभाजन! इति वा।

शकारः। पढ़मं भणंति ण दीशदि, शंपदं दीशदि त्ति; ता णाम भीदभीदा अधिअलणभोइआ, जेत्तिअ हग्गे भणिश्शं, तेत्तिअं पत्तिआवइश्शं। (थ) भोदु, पविशामि। [प्रविश्य उपसृत्य] शुशुहं अम्हाणं, तुम्हाणंपि शुहं देमि ण देमि अ। *

अधि। [स्वगतम्] अहो! स्थिरसंस्कारता व्यवहारार्थिनः। (द) [प्रकाशम्] उपविश्यताम्।

शकारः। आं! अत्तणकेलका शे भूमी; ता जहिं मे लोअदि, तहिं उवविश्शामि। [श्रेष्ठिनं प्रति] एश उवविशामि। [शोधनकं प्रति] णं एत्थ उववशामि। [इति अधिकरणिकमस्तके हस्तं दत्त्वा] एश उवविशामि। † [इति भूमौ उपविशति]।

अधि। भवान् कार्य्यार्थी?

शकारः। अधइं। ‡

अधि। तत् कार्य्यं कथय।

* प्रथमं भणन्ति न दृश्यते, साम्प्रतं दृश्यते इति, तत् नाम भीतभीता अधिकरणभोजकाः, यद्यदहं भणिष्यामि, तत्तत् प्रत्याययिष्यामि। भवतु, प्रविशामि। सुसुखमस्माकं, युष्माकमपि सुखं ददामि न ददामि च।

† आं! आत्मीया एषा भूमिः; तत् यत्र मह्यं रोचते, तत्रोपविशामि। एष उपविशामि। ननु अत्रोपविशामि। एष उपविशामि।

‡ अथकिम्।

(थ) नाम—सम्भावनायाम्। भीतभीताः,—अतिशयेन भीता इत्यर्थः, अतिभयवन्त इति सम्भावयामीति यावत्; प्रत्याययिष्यामि—विश्वासयिष्यामि, अधिकरणिकान् इति शेषः, [प्रतिपूर्व्वकस्य एतेः णिचि लृटि रूपम्] अहं यत् यदेव कथयिष्यामि, तत् तदेव विचारकान् विश्वासयिष्यामीति तात्पर्य्यम्।

(द) व्यवहारार्थिनः,—अस्मत्तो विचारप्रार्थिनः, शकारस्य इत्यर्थः। स्थिरसंस्कारता—स्थिरः,—अविचलः, यथा प्राक्, तथा इदानीमपि इत्यर्थः, संस्कारः,—सिद्धान्त इत्यर्थः यस्य तस्य भावः, एकरूपमेव ज्ञानम्, अस्मत्समीपेऽपि न काचित् परिवर्त्तिरिति भावः; यद्वा,—स्थिरः,—मद्वाक्यं विश्वसनीयमेव भविष्यतीति दृढ़तया निश्चितः, संस्कारः,—ज्ञानं यस्य तस्य भावः, कर्त्तव्यार्थे अविचलितमतिः इति भावः।

शकारः। कस्से कज्जं कधइश्शं। एव्वं वड्डके गल्लक-प्पमाणाह (घ) कुड़े हग्गे जादे। *—

लाअश्शशुले मम पिदा लाआ तादश्श होइ जामादा।
लाअशिआले हग्गे ममा वि बहिणीवदी लाआ †॥ ६॥

श्रधि। सर्व्वं ज्ञायते।—

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ ७॥

तदुच्यतां कार्य्यम्।

शकारः। एव्वं भणामि, अवलद्धाह वि ण अ मे किं पि कलइश्शदि। तदो तेण बहिणीवदिणा परितुट्ठेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फकलंडक जिसुज्जाणे दिसे;

---

* कस्यैं कार्य्यं कथयिष्यामि। एवं बहति गल्लकप्रमाणस्य कुले अहं जातः।—

† राजश्वशुरो मम पिता राजा तातस्य भवति जामाता।
राजश्यालोऽहं ममापि भगिनीपती राजा॥

‡ एवं भणामि, अपराद्धस्यापि न च मे किमपि करिष्यति। ततस्तेन भगिनी-पतिना परितुष्टेन मे क्रीड़ितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं

---

(घ) गल्लकः,—सुरापानपात्रम्। "गल्लक" इति प्राकृतस्य "गल्वर्कः" इति वा संस्कृते पूर्व्ववदेवार्थः; "मल्लक" इति पाठस्य "मल्लक" इति संस्कृते नारिकेलशस्या-धारभूता कठिना त्वगेवार्थः, "नारिकेल माला" इति वङ्गभाषा।

स्वस्य महामहिमशालित्वं विज्ञापयितुं राजसम्बन्धित्वं प्रदर्शयति, राजेति। —मम—मे, पिता—जनकः राजश्वशुरः,—राज्ञः,—नृपस्य, श्वशुरः,—पत्न्याः पिता, राजा—भूपतिः, तातस्य—पितुः, जामाता—कन्यायाः भर्त्ता, भवति—अस्ति, अहं—शकार इत्यर्थः, राजश्यालः,—नृपपत्न्याः भ्राता, अनूढा-सोदर इति यावत्, मम—मे, अपि भगिनीपतिः,—स्वसृभर्त्ता, राजा—नृपतिः; "राज-श्वशुरः" इत्येकयैव उक्त्या राजसम्बन्धित्वबोधस्याचतत्वेऽपि पुनः पुनः भङ्ग्या तदर्थस्य-वाभिधानं शकारस्वाभाव्यादिति वेदितव्यम्। आर्य्या वृत्तम्॥ ६॥

किमिति।—व्याख्यातोऽयं प्राक् (३६१ पृष्ठे)॥ ७॥

तहिं अ पेक्खिदुं अणुदिअहं शोशावेदुं, शोधावेदुं, पोश्शावेदुं, लुणावेदुं गच्छामि। देव्वजोएण (न) पेक्खामि, ण पेक्खामि वा, इत्थिआ शलीलं णिवड़िदं। ❋

अधि। अथ ज्ञायते का स्त्री विपन्नेति ? (प)

शकारः। हंहो ! अधिअलणभोइआ ! किं त्ति ण जाणामि तं तादिशिं णअलमंडणं कंचणशदभूशणिअं ? केण वि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुस्सं पुप्फकलंडक जिण्णुज्जाणं

---

दत्तम्; तत्र च प्रेक्षितुम् अनुदिवसं शोषयितुं, शोधयितुं, पोषयितुं, लावयितुं गच्छामि। दैवयोगेन पश्यामि न पश्यामि वा, स्त्रीशरीरं निपतितम्।

❋ हंहो ! अधिकरणभोजकाः ! किमिति न जानामि तां तादृशीं नगरमण्डनं

---

(न) अपराद्धस्यापि—कृतापराधस्यापि। करिष्यति—कर्त्तुं शक्ष्यतीत्यर्थः; यद्यपि भवन्तः धर्म्मस्य संस्थापनाय धर्म्माधिकरणमिदमलङ्कुर्व्वन्ति, तथाऽपि पालकस्य प्रीतिभाजनं मां दण्डयितुं भवतां शक्तिर्नास्तीति भावः; [ एतेन अयमेवापराधी इति स्फुटीकृतं, पालकराज्ये धर्म्माधिकरणिकाः प्रत्युत्पन्नमतयः धार्म्मिकाश्च आसन्, ते तु सदा अपक्षपातविचारं कर्त्तुमीश्वः अपि कदाचित् कथञ्चित् राजानुरोधापेक्षया राजपक्षमाश्रयामासुरिति सूचितम्, अत एतद्राज्यं राजवदभवदिति ध्वन्यते ]। ततः,—राज्ञः प्रीतिभाजनत्वादेवेति भावः यदि राज्ञः त्वयि प्रीतिरस्ति, तर्हि तत्प्रीतिदानं किमस्ति भवतः ? इत्याशङ्कायामाह, तेनेत्यादि।—तेन—प्रसिद्धेनेत्यर्थः। मे—मह्यम्। क्रीड़ितुं—विहर्त्तुम्। प्रवरं—श्रेष्ठम्। जीर्णोद्यानम् इत्यत्र जीर्णेति पदं पुरातनत्वख्यापनार्थम्। तत्र—उद्याने इत्यर्थः। अनुदिवसं—प्रतिदिनम्। प्रेक्षितुं—द्रष्टुम। शोषयितुं—शुष्कं कारयितुं, बीजपर्णादीन् इति शेषः। शोधयितुं—वृक्षच्युतशुष्कपर्णादिदूरीकरणद्वारा परिष्कारं कारयितुमित्यर्थः। पोषयितुं—स्थानान्तरादानीतमृत्तिकादिना निम्नभूमिं पूरयितुमित्यर्थः, दोहददानेन पुष्पाणां फलानां वा परिपुष्टिं साधयितुं वा, यद्वा,—जलसेचनादिना बाल-गुल्मप्रायवृक्षान् वर्द्धयितुम् इत्यर्थः। लावयितुं—लतागुल्मादीनां शोभावर्द्धनार्थं विशृङ्खलभावेन इतस्ततः प्रसारितपल्लवान् छेदयितुमित्यर्थः। दैवयोगेन—सहसा; अत्रान्योऽन्यविरुद्धभाषितं वक्तुरधमत्वेनादूष्यमेव, प्रतिदिवसं गमनस्य, दैवगत्या च दर्शनादर्शनयोः परस्परविरोधात्।

(प) अथ—प्रश्ने। ज्ञायते, भवतेति शेषः। विपन्ना—मृता, मारिता इति यावत्।

पविसिअ बाहुपास-बलक्कालेण (फ) वसंतसेणिआ मालिदा, ण मए। * [ इत्यर्द्धोक्ते मुखमावृणोति ]।

अधि। अहो! नगररक्षिणां प्रमादः! भोः श्रेष्ठिकायस्थौ! "न मया" इति व्यवहारपदं (ब) प्रथममभिलिख्यताम्।

कायस्थः। जं अज्जो आणवेदि। [ तथा कृत्वा ] अज्ज! लिहिदं। *

शकारः। [ स्वगतम् ] ह्हीमादिके! उत्तलाअंतेण विअ पाअस-पिंडालकेण अज्ज मए अत्ता एव्व णिखाशिदे। (भ)

काञ्चनशतभूषणाम्? केनापि कुपुत्रेण अर्थकल्यवर्त्तस्य कारणात् शून्यं पुष्पकरण्डक-जीर्णोद्यानं प्रविश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता, न मया।

* यदार्य्य आज्ञापयति। आर्य्य! लिखितम्।

† ह्हीमादिके! उत्त्वरयतेव पायसपिण्डारकेण अद्य मया आत्मैव निखाशितः।

( फ ) हंहो इति सम्बोधनसूचकमव्ययं, हे इत्यर्थः। किमिति—कथम्। नगरमण्डनं—नगरस्य—उज्जयिन्या इत्यर्थः, मण्डनं—शोभाभूताम्। काञ्चनशतभूषणां—काञ्चनानां—सुवर्णानां, शतं—समूहः, भूषणम्—अलङ्कारः यस्याः तां, बहु-सुवर्णालङ्कारालङ्कृतामित्यर्थः। शून्यं—निर्ज्जनमित्यर्थः। बाहुपाशबलात्कारेण—बलपूर्व्वकं भुजपाशेन तस्या ग्रीवादेशमाहृत्य इत्यर्थः।

( ब ) अहो इति सम्भ्रमे। प्रमादः,—अनवधानता। व्यवहारपदं—व्यवहारे—विवादे, पदं—वाक्यं, ( "पदं वाक्ये च शब्दे च व्यवसायप्रदेशयोः" इति मेदिनी )। एतल्लिखनस्य प्रयोजनन्तु अर्थिप्रत्यर्थिनां वाक्यानुसारतः एव विवादस्य निर्णीतत्वात्, तच्च अनुपदमेव व्यक्तीभविष्यति "द्विविधो व्यवहारः" इत्यादिना, वाक्येन अर्थेन च तस्य द्वैविध्यदर्शनात् इत्यवधातव्यम्; स्वाभाविकभाषणस्यैव व्यवहारिकत्वमुक्तं मनुना; तथा हि,—"स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यवहारिकम्। अतो यदन्यद्-विब्रूयुर्धर्म्मार्थं तदपार्थकम्॥" इति ८ अध्या० ७८ श्लोकः।

( भ ) ह्हीमादिके इति अव्ययं भयविस्मयखेदद्योतकम्। उत्त्वरयता—उत्—अतीव, त्वरयता——शीघ्रं कुर्वता, विलम्बमसहमानेन इत्यर्थः। पायसपिण्डारकेण—पायसपिण्डं—दुग्धपक्वमन्नं, परमान्नमित्यर्थः, तत् ऋच्छति—प्राप्नोतीति [ कर्त्तरि अणि रूपम् ] तेन, पायसान्नलोभिना इत्यर्थः; पायसान्नलोभात् अत्युष्णमेव तत् भुक्त्वा

भोदु एव्वं दाव। [प्रकाशम्] अहो अधिअलणभोइआ! णं भणामि, मए ज्जेव दिट्ठा, किं कोलाहलं (म) कलेध? †
[इति पादेन लिखितं प्रोञ्छति (य)]।

अधि। कथं त्वया ज्ञातं, यथा खलु अर्थनिमित्तं बाहुपाशेन व्यापादिता?

शकारः। हंहो! णूणं शूणशूणाए मोघट्ठाणाए गोवालिआए, णिश्शुवस्सकेहिं आहलणट्ठाणेहिं (र) तक्केमि। *

---

भवतु एवं तावत्। अहो अधिकरणभोजकाः! ननु भणामि, मया एव दृष्टा, किं कोलाहलं कुरुत?

* हंहो! नूनं शूनशूनया मोघस्थानया ग्रीवालिकया, निःसुवर्णकैराभरणस्थानैस्तर्कयामि।

---

यथा रसना दृढीक्रियते, तथा मयाऽपीत्यर्थः, निर्णाशितः,—निश्चयेन नाशं प्रापितः, "त्वया मारिता न वा?" इति केनचित् अपृष्टेऽपि, प्राक् स्वयमेव "न मया" इत्युक्त्या स्वापराधस्वीकारसम्भावनात् इति भावः. ["उपसर्गादसमासेऽपि णोपदेशस्य" (८।४।१४ पा०) इति णत्वम्]। अत्र पायसशब्देन चारुदत्तस्य विनाश एव फलतोऽभिप्रेतः।

(म) कोलाहलं—कलकलम्।

(य) प्रोञ्छति—प्रमार्ष्टि, अक्षरवर्णान् मुष्णाति इत्यर्थः।

(र) शूनशूनया—स्फीतस्फीतया, [श्वयतेः भौवादिकस्य कर्त्तरि निष्ठायां रूपमेतत्] शूनात् शूना तया अतिस्फीतया इत्यर्थः उच्छोथवत्या इति यावत्। [केचित्तु "शुण्णशुण्णाए" इति प्राकृतस्य "शून्यशून्यया" इति संस्कृतं कृत्वा "आभरणशून्यया स्फीतया च" इत्यर्थं कुर्व्वन्ति। "शुण्णशुण्णाए" इत्यत्र "पडिशुण्णाए" इति पाठान्तरे "परिशून्यया" इति संस्कृतं, भूषणशून्यया इत्यर्थश्च] मोघस्थानया—मोघं—विफलं, स्थानं—स्थितिः, सत्ता इत्यर्थः, तादृशालङ्कारविरहादिति भावः यस्याः तया, ग्रैवेयकापहरणात् शून्यालङ्कारस्थानया इति यावत्, ग्रीवालिकया—ग्रीवया; यद्वा,—ग्रीवामलति भूषयति या तया, [अलतेः कर्त्तरि ण्वुलि स्त्रियां टाप्] ग्रैवेयकेनेत्यर्थः, परिशून्ययेत्यनेनान्वयः, मोघस्थानया - मोघं—भूषणशोभारहिततया निरर्थकं स्थानं—शरीरस्थानं यस्याः तया, मृतया स्त्रियेति शेषः; तथा निः,—न सन्ति, सुवर्णकानि—सौवर्णाभरणानि येषु तथाभूतैः, आभरणस्थानैः,—हस्तादिभिरित्यर्थः।

श्रेष्ठिकायस्थौ। जुज्जदि विअ। *

शकारः। [स्वगतम्] दिट्ठिआ पच्चुज्जीविदम्हि। अविद-मादिके! † (ल)

श्रेष्ठिकायस्थौ। भोः! कं एसो ववहारो अवलंवदि? ‡ (व)

अधि। इह हि द्विविधो व्यवहारः।

श्रेष्ठिकायस्थौ। केरिसौ? §

अधि। वाक्यानुसारेण अर्थानुसारेण च। यस्तावत् वाक्यानुसारेण, स खलु अर्थिप्रत्यर्थिभ्यः। (श) यश्च अर्थानु-सारेण, स च अधिकरणिकबुद्धिनिष्पाद्यः।

श्रेष्ठिकायस्थौ। ता वसंतसेणामादरं अवलंवदि ववहारो। ¶

अधि। एवमिदम्। भद्र शोधनक! वसन्तसेनामातर-मनुद्वेजयन्नाह्वय। (ष)

शोधनकः। तधा। [इति निष्क्रम्य गणिकामात्रा सह प्रविश्य] एदु एदु अज्जा। **

---

* युज्यते इव। † दिष्ट्या प्रत्युज्जीवितोऽस्मि। अविदमादिके।

‡ भोः! कमेष व्यवहारोऽवलम्बते? § कीदृशौ?

¶ तस्मात् वसन्तसेनामातरमवलम्बते व्यवहारः।

** तथा। एतु एतु आर्य्या।

---

(ल) दिष्ट्या—भाग्यबलेन। प्रत्युज्जीवितोऽस्मि—पुनर्जीवनं प्राप्तोऽस्मि इत्यर्थः। अविदमादिके इति अव्ययं हर्षसूचकम्।

(व) भोः इति।—कमाश्रित्य एष व्यवहारः तिष्ठति इत्यर्थः; कोऽस्य अर्थी? इति भावः।

(श) वाक्यानुसारेण—उक्तिमनुसृत्य, अर्थिप्रत्यर्थिनां वाक्यं श्रुत्वा इत्यर्थः। अर्थानुसारेण—अर्थिप्रत्यर्थिनां वाक्यार्थमनुसृत्य, बुद्धिप्रभावेण अर्थिप्रत्यर्थिनां वाक्यस्य तात्पर्य्यबोधेनेत्यर्थः। अर्थिप्रत्यर्थिभ्यः, वादिविवादिभ्यः, श्रुतेति शेषः।

(ष) अनुद्वेजयन्—अव्याकुलयन्, "तूर्णमागच्छ, विलम्बं मा कुरु" इत्या-द्युद्वेजकवाक्यमप्रयुञ्जान इत्यर्थः, सौजन्यपुरःसरमिति यावत्।

वृद्धा। गदा मे दारिआ मित्तघरअं अत्तणो जोव्वणं अणु-भविदुं, एसो उण दीहाऊ भणादि, "आअच्छ, अधिअरणिओ सद्दावेदि"; ता मोहपरवसं विअ (ख) अत्ताणअं अवगच्छामि, हिअअं मे थरथरेदि। अज्ज! आदेसेहि मे अधिअरणमंड-वस्स मग्गं। *

शोधनकः। एदु एदु अज्जा। [उभौ परिक्रामतः] एदं अधि-अरणमंडवं, एत्थ पविसदु अज्जा। †

[इत्युभौ प्रविशतः]।

वृद्धा। [उपसृत्य] सुहं तुम्हाणं भोदु भावमिस्साणं। ‡ (ह)

अधि। भद्रे! स्वागतम्? आस्यताम्।

वृद्धा तधा। § [इत्युपविष्टा]।

शकारः। [साक्षेपम् (क)] आगदाशि वुड्ढकुट्टणि! आगदाशि? ¶

अधि। अये! त्वं किल वसन्तसेनाया माता?

* गता मे दारिका मित्रगृहम् आत्मनो यौवनमनुभवितुम्, एष पुनः दीर्घायुर्भणति, "आगच्छ, अधिकरणिकः शब्दायते" (आह्वयति)। तन्मोहपरवश-मिवात्मानमवगच्छामि, हृदयं मे प्रकम्पते। आर्ये! आदिश मे अधिकरणमण्डपस्य मार्गम्।

† एतु एतु आर्या। एषोऽधिकरणमण्डपः, अत्र प्रविशतु आर्या।

‡ सुखं युष्माकं भवतु भावमिश्राणाम्।

§ तथा।

¶ आगताऽसि वृद्धकुट्टनि! आगताऽसि?

(ख) दारिका—बालिका, कन्या इत्यर्थः। मित्रगृहं—सखिभवनं, चारु-दत्तालयमिति यावत्। अनुभवितुं—सम्भोक्तुम्। मोहपरवशम्—अज्ञानोपहतं, मूर्च्छाक्रान्तमिव सर्वतः अन्धकाराच्छन्नम् इति भावः।

(ह) भावमिश्राणां—भावेषु—विद्वत्सु, मिश्राः—श्रेष्ठाः तेषाम्, (उत्तर-पदस्थस्य मिश्रशब्दस्य श्रेष्ठार्थवाचकत्वात्) पण्डितवर्य्याणामित्यर्थः; भावाश्च—विद्वांसश्च, मिश्राश्च—पूज्याश्च तेषां वा।

(क) साक्षेपं—सतिरस्कारम्।

वृद्धा। अधइं। *

अधि। अथेदानीं वसन्तसेना क्व गता ?

वृद्धा। मित्तघरअं। †

अधि। किन्नामधेयं तस्या मित्रम् ?

वृद्धा। [स्वगतम्] हद्धी ! हद्धी ! अदिलज्जणीअं क्खु एदं। [प्रकाशम्] जणस्स पुच्छणीओ अअं अत्थो, ण उण अधिअरणिअस्स। ‡ (ख)

अधि। अलं लज्जया ; (ग) व्यवहारस्त्वां पृच्छति।

श्रेष्ठिकायस्थौ। ववहारो पुच्छदि, णत्थि दोसो ; (घ) कधेहि। §

वृद्धा। कधं !! ववहारो ? जइ एव्वं, ता सुणंतु अज्जमिस्सा ; —सो क्खु सत्थवाहविणअदत्तस्स णत्तिओ, साअरदत्तस्स तणओ, सुगहिदणामहेओ (ङ) अज्ज चालुदत्तो णाम,

---

* अथकिम्। † मित्रगृहम्।

‡ हा धिक् ! हा धिक् ! अतिलज्जनीयं खलु इदम्। जनस्य प्रच्छनीयोऽयमर्थः, न पुनरधिकरणिकस्य।

§ व्यवहारः पृच्छति, नास्ति दोषः, कथय।

¶ कथम् !! व्यवहारः ? यद्येवं, तदा शृण्वन्तु आर्यमिश्राः ;—स खलु सार्थ-

---

(ख) अयम् अर्थः --विषयः, मित्रस्य नामेति यावत्, जनस्य—प्राकृतजनेन इत्यर्थः, प्रच्छनीयः,—प्रष्टव्यः, जिज्ञासितव्य इत्यर्थः. अधिकरणिकस्य पुनः न—न तु अधिकरणिकेन इत्यर्थः, प्रच्छनीय इति शेषः [कृत्यप्रत्यययोगात् कर्त्तरि वैकल्पिकी षष्ठी] ; वेश्यामित्रत्वेन शिष्टानां चारुदत्तमहोदयानां वर्णनं लज्जाकरमेवेति भावः।

(ग) अलं लज्जया—लज्जां मा कुरु, तदभिधाने लज्जा न करणीया इत्यर्थः।

(घ) नास्ति दोषः,—मित्रनामप्रकाशे इति भावः। ["णत्थि दोसो" इत्यत्र "ण एत्थ दोसो" इति पाठान्तरे—"नात्र दोषः" इति संस्कृतम्]।

(ङ) आर्यमिश्राः,—मान्यवरा इत्यर्थः। नप्ता—पौत्रः। सुगृहीतनामधेयः,—प्रातःस्मरणीय इत्यर्थः, "स सुगृहीतनामा स्यात् यः प्रातः स्मर्यते बुधैः" इति।

सेट्ठिचत्तरे पड़िवसदि, तहिं मे दारिआ जोव्वणसुहमणुभवदि। ¶

शकारः। सुदं अज्जेहिं? लिहीअंदु एदे अक्खला, चालुदत्तेण शह मम विवादे। *

श्रेष्ठिकायस्थौ। चालुदत्तो मित्तो त्ति णत्थि दोसो। †

अधि। व्यवहारोऽयं चारुदत्तमवलम्बते। (च)

श्रेष्ठिकायस्थौ। एव्वं विअ। ‡

अधि। धनदत्त! वसन्तसेना आर्य्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः। कथमार्य्यचारुदत्तोऽपि अस्माभिराह्वाययितव्यः? अथवा व्यवहारस्तमाह्वयति। भद्र शोधनक! गच्छ, आर्य्यचारुदत्तं स्वैरमसम्भ्रान्तमनुद्विग्नं सादरमाहूय, प्रस्तावेन (छ) अधिकरणिकस्त्वां द्रष्टुमिच्छतीति।

शोधनकः। जं अज्जो आणवेदि। [ इति निष्क्रान्तः, चारुदत्तेन सह प्रविश्य च ] एदु एदु अज्जो। §

---

चारुविनयदत्तस्य नप्ता, सागरदत्तस्य तनयः, सुगृहीतनामधेयः आर्य्यचारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसति। तत्र मे दारिका यौवनसुखमनुभवति।

* श्रुतमार्य्यैः? लिख्यन्तामेतान्यक्षराणि, चारुदत्तेन सह मम विवादः।

† चारुदत्तो मित्रमिति नास्ति दोषः। ‡ एवमिव।

§ यदार्य्य आज्ञापयति। एतु एतु आर्य्यः।

---

(च) चारुदत्तमवलम्बते, प्रत्यर्थितया इति भावः।

(छ) धनदत्त! इति कायस्थनामसम्बोधनम्। प्रथमः,—आद्यः, पादः,—अंश इत्यर्थः। स्वैरं—मन्दं धीरमित्यर्थः, असम्भ्रान्तम्—अत्वरं यथा त्वराप्रकाशो न भवति तथेत्यर्थः। अनुद्विग्नम्—अव्याकुलम्, एवं वाक्यप्रयोगो त्वया न कर्त्तव्यः, येन तच्चित्ते "कथमहमधिकरणमण्डपे आहूतः किमनिष्टमापतितम्" इत्यादिरूपः उद्वेगः उत्पद्यते तथा इति भावः। सादरं—सबहुमानम्। प्रस्तावेन—केनचित् प्रसङ्गेन, कथाऽन्तरेषु भवत्प्रसङ्गोत्थानादिति यावत्।

चारु। [ विचिन्त्य ]—

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च।
यत् सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥ ८ ॥

[ सवितर्कं स्वगतम् ]—

ज्ञातो नु किं स खलु बन्धनविप्रयुक्तो
मार्गागतः प्रवहणेन मयाऽपनीतः ?।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा ?
येनाहमेवमभियुक्त इव प्रयामि ॥ ९ ॥

इदानीमाह्वानकारणं वितर्कयति, परिज्ञातस्येति।—राज्ञा—नृपेण, पालकेनेति यावत्, राज्ञः प्रतिनिधित्वात् राजस्थानीयेनाधिकरणिकेनेति भावः, शीलेन—चरित्रेण च, कुलेन—प्रशस्तान्वयेन च, परिज्ञातस्य—विदितस्य, अतः सत्स्वभावगता वंशगता च कापि शङ्का न सम्भवतीति भावः, मे—मम, यत् आह्वानम्—आकारणा, ( "हूतिराकारणाऽऽह्वानम्" इत्यमरः ) कृतमिति शेषः, इदम्—आह्वानमित्यर्थः, सत्यं—निश्चितम् अवस्थां—दशां, दारिद्र्यमिति यावत्, अभिशङ्कते—सन्दिग्धि मद्दारिद्र्यम् अभिलक्ष्य कस्मिन्नपि विषये मदीयदोषं तर्कयति, यतः दोषः सहसा दरिद्रमेव आश्रयति, न तु धनिनं, दारिद्र्यस्य सर्व्वदोषैकहेतुत्वादिति भावः। पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

आह्वानकारणानुसन्धाने वितर्कान्तरमाह, ज्ञात इति।—बन्धनात्—कारावासात्, विप्रयुक्तः,—विच्युतः, ततः मार्गागतः,—मार्गवशात् आगतः,—उपस्थितः, पान्थ इत्यर्थः, सः,—आर्य्यकनामा गोपालसुतः, मया—चारुदत्तेनेत्यर्थः, प्रवहणेन—शकटेन, अपनीतः,—अपसारितः, स्थानान्तरं नीत इति यावत्, खलु—निश्चयेन, प्रश्ने वा, किं नु ज्ञातः ?—अपि किं सर्व्वजनैः विदितः ? नु—वितर्के; सर्वे एतद्वृत्तान्तं ज्ञात्वा राजनि प्रकाशितवन्तः किम् ? इति भावः; अथोपायान्तरेण राज्ञः सर्व्वज्ञत्वं व्यक्तीकरोति, चारेक्षणस्य इति।—वा—अथवा, चारेक्षणस्य—चारचक्षुषः, नृपतेः,—राज्ञः, श्रुतिं—श्रवणम्, आगतः ?—प्राप्तः ? चारेण ज्ञातः किम् ? इत्यर्थः, ( राज्ञां हि चारेक्षणत्वं दूतमुखत्वञ्च प्रसिद्धमेव। उक्तञ्च —"चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः" इति )। येन—येन हेतुना इत्यर्थः अहम् एवम्—एवम्प्रकारेण, अभियुक्त इव—कृतापराधतया अभियोगदूषितः पुरुष इवेत्यर्थः, प्रयामि—गच्छामीत्यर्थः। अत्र चारेक्षणस्य इति रूपकं, तथा अभियोगसम्भावनायाः स्फुटत्वादुत्प्रेक्षाऽलङ्कारयेत्यन्ययोः संसृष्टिः। वसन्ततिलकं वृत्तम् ॥ ९ ॥

अथवा किं विचारितेन ? (ञ) अधिकरणमण्डपमेव गच्छामि। [प्रकाशम्] भद्र शोधनक! अधिकरणस्य (झ) मार्गमादिशय।

शोधनकः। एदु एदु अज्जो। * [इति परिक्रामतः]।

चारु। [सशङ्कम्] तत् किमपरम् ?—

रूक्षस्वरं वाशति वायसोऽयममात्यभृत्या मुहुराह्वयन्ति।
सव्यञ्च नेत्रं स्फुरति प्रसह्य ममानिमित्तानि हि खेदयन्ति॥ १०॥

* एतु एतु आर्यः।

(ञ) विचारितेन—विचारेण वितर्केण इति यावत्। किं—निष्प्रयोजनमित्यर्थः।

(झ) अधिकरणस्य—अधिकरणमण्डपस्य इत्यर्थः।

गमनमार्गे दुर्निमित्तानुभवमाह, रूक्षस्वरमिति।—अयं—पुरो वर्त्तमान इत्यर्थः, वायसः,—काकः, रूक्षस्वरं—विकृतशब्दं, कर्कशं यथा तथेति यावत् वाशति—शब्दायते, [दैवादिकस्य वाशधातोरात्मनेपदित्वेऽपि बहुषु पुस्तकेषु भौवादिकतया उभयपदित्वेन चास्य प्रयोगः दृश्यते; यथा,—"दक्षिणपार्श्वेऽनुवाशते यातुः" इति। यदि "वाशत्यस्थिभङ्गाय" इति "वल्लीं वादाय वाशते बन्धः" इति च; यद्वा—वाश्यते इति वाशः, पचाद्यच्, शब्दकारीत्यर्थः, स इव आचरतीति वाक्येन कर्त्तुरुपमानादाचारार्थे "सर्व्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" (वा०) इति पाक्षिकक्विप्प्रत्यये वाश इति नामधातोः लटि वाशतीति सिद्धम्। अस्यातिभयजनकत्वमाह बृहत्संहितायां वराहमिहिरः. यथा,—"दारुणनादस्तरुकोटरोपगो वायसो महाभयदः" इति] अपि च, अमात्यानां—राजनियुक्तानां पुरुषाणां भृत्याः,—परिचारकाः मुहुः—वारंवारम्, आह्वयन्ति—आकारयन्ति, (अधिकरणिकभृत्यादिभिः नीचजनैः महतामाकारणाऽपि अनिमित्तरूपा एवेति. दृश्यते हि महान्तः धर्म्माधिकरणदर्शनात् बिभ्यतीवेति), तथा सव्यं—वामं, नेत्रञ्च—नयनञ्च, प्रसह्य—सहसा, स्फुरति—स्पन्दते, पुंसां वामाङ्गस्फुरणस्य दुर्निमित्तसूचकत्वमाह मत्स्यपुराणम्; यथा—"अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥" इति। (किं बहुना ?) अनिमित्तानि—एतानि दुर्लक्षणानि, हि—निश्चितं, मम—मामित्यर्थः, [ममेति सम्बन्धविवक्षया कर्मणि षष्ठी] खेदयन्ति—

श्रीधनकः। एदु एदु अज्जो सैरं असंभंतं।*

चारु। [परिक्रम्याग्रतोऽवलोक्य च]—

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा।
मयि नोदयते वामं चक्षुर्घोरमसंशयम्॥ ११॥

[पुनरन्यतोऽवलोक्य] अये! कथमयं सर्पः!—

* एतु एतु आर्य्यः स्वैरमसम्भ्रान्तम्।

अवसादयन्ति, क्लेशयन्ति इत्यर्थः; यद्वा,—[मम इति सम्बन्धे षष्ठी, अनिमित्तानीति सम्बन्धिपदेनान्वीयते, मामिति कर्म्मपदान्तरमत्राध्याहर्त्तव्यम्] अहो! न जाने, एतानि दुर्निमित्तानि अद्य किमनभिमतं मां दर्शयिष्यन्तीति भावः। अत्र खेदरूपकार्य्यं प्रति वायसस्य रूक्षवाशनरूपानिमित्तस्य साधकत्वे सत्यपि अमात्यभृत्य-कर्षकाह्वानादीनामपि तत्कार्य्यकरत्वात् समुच्चयालङ्कारः। उपजातिः वृत्तम्॥ १०॥

पूर्वोक्तमेव दुर्निमित्तं भङ्ग्यन्तरेण विशदीकृत्याभिदधाति, शुष्केति।—शुष्कवृक्ष-स्थितः,—नीरसपादपाधिरूढः, तथा—एवम्, आदित्याभिमुखः, अभि—अभिगतं, पुरोवर्त्तीत्यर्थः, मुखं यस्य सः अभिमुखः, आदित्यस्य अभिमुखः इति बहुव्रीह्यनन्तरं षष्ठीसमासः आश्रयणीयः, सूर्य्यमवलोकयन्नित्यर्थः, ध्वाङ्क्षः,—काकः, ("काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः। ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि॥" इत्य-मरः) मयि—मम उपरि इति यावत्, घोरं—भयानकं, वामं—सव्यं, चक्षुः,—नेत्रं, नोदयते—निक्षिपति, इति असंशयं—निःसन्दिग्धमेतदित्यर्थः, सर्व्वमेतत् दुर्नि-मित्तं मामेवाश्रित्योदेति इत्यत्र कश्चिदपि संशयो नास्ति इति तात्पर्य्यम्। दुर्लक्षण-स्यास्यातिभयसूचकत्वमाह वराहमिहिरः; यथा,—"छिन्नाद्येऽङ्गच्छेदः कलहः शुष्क-द्रुमस्थिते ध्वाङ्क्षे। पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः॥ ऐन्द्रादिदिगवलोकी सूर्य्याभिमुखो रुवन् गृहे गृहिणः। राजभय-चौर-बन्धन-कलहाः स्युः पशुभयञ्च॥" इति। न च काकाक्षिगोलकन्यायदर्शनात् काकानाम् एकाक्षिगोलकवत्तया तत्र वामत्वायोगः इति वाच्यं, काकाक्षिगोलकस्य एकत्वेऽपि तेषां द्वयोरेवाक्षिद्वारयोः सत्त्वेन एकस्यापि गोलकस्य शिरोधरां परिचाल्य वामतः नयनेन वामस्य चक्षुषः नोदनं सङ्गच्छते इति वेदितव्यं, दृश्यते हि एतत्, काकादयः स्वभावादेव ग्रीवां वक्रीकृत्य विलोकयन्तीति; अथवा,—वामं—वक्रं यथा स्यात् तथा नोदयतीति क्रियाविशेषणतयाऽपि अस्य सङ्गतिः सम्भाव्यते इति सुधीभिर्विभाव्यम्। पथ्यावक्त्रं वृत्तम्॥ ११॥

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः
स्फुरितविततजिह्वः शुक्लदंष्ट्राचतुष्कः।
अभिपतति सरोषो जिह्मिताध्मातकुक्षिः
भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः॥ १२॥

अपि च इदम्,—

स्खलति चरणं भूमौ न्यस्तं न चार्द्रतमा मही
स्फुरति नयनं वामो बाहुर्मुहुश्च विकम्पते।

अपरमपि दुर्निमित्तमाह द्वाभ्यां, मयीति।—मयि—मम उपरि, मां प्रतीत्यर्थः, विनिहिता—अर्पिता, दृष्टिः,—नेत्रं येन सः, ("लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इत्यमरः) भिन्नं—मर्दितं, घृष्टमित्यर्थः, नीलं—नीलवर्णं, यत् अञ्जनं—कज्जलं, तस्य आभा इव आभा—कान्तिः यस्य तादृशः, कृष्णवर्ण इत्यर्थः, स्फुरिता—स्पन्दिता, वितता—विस्तृता, जिह्वा—रसना यस्य तथाभूतः, लेलिहानरसन इति यावत्, शुक्लं—शुभ्रं, दंष्ट्राणां—दन्तपङ्क्तिद्वयप्रान्तस्थेषद्वक्राकृतिदीर्घदन्तानां, सविषदशनानामिति यावत्, चतुष्कं—चतुष्टयं यस्य सः, जिह्मितः,—वक्रीकृतः, कुण्डलीकृत इति यावत्, आध्मातः,—पवनाशनत्वात् वायुना पूरितः, स्फीत इत्यर्थः; यद्वा,—आध्मातः,—रोषवशात् भूमौ आस्फालनेन शब्दित इति यावत् कुक्षिः,—उदरं यस्य तादृशः, तथा मे—मम, मार्गं—गमनस्य पन्थानम् आक्रम्य—अवरुध्य, सुप्तः—शयितः, ("सुप्तिः स्पर्शाज्ञता-निद्रा-विश्रम्भे शयने स्त्रियाम्" इति मेदिनी); अयं—पुरोवर्त्ती, भुजगपतिः—सर्पराजः, सरोषः,—सक्रोधः सन्, (दंष्टुमिच्छयेत्यध्याहारः) अभिपतति—मदभिमुखमागच्छतीत्यर्थः। अस्य च विशिष्टारिष्टसूचकत्वमुक्तं वृहत्संहितायाम्; यथा,—"फणिनोऽभिमुखागमोऽरिसङ्गं कथयति बन्धवधात्ययञ्च यातुः" इति। वसन्तराजशाकुनेऽपि,—"गोनास-दर्वीकर-राजिलाद्या जात्यैव सर्वे भयदा भुजङ्गाः" इति। अत्र जिह्वां वितत्य क्रोधात् स्वकुक्षिं वायुना पूरयित्वा स्फीतस्य कृष्णसर्पस्य दिदङ्क्षया सरोषमभिमुखमापततस्तथा मार्गमाक्रम्य शयनस्य च स्वभावसिद्धतत्तत्क्रियानुरूपोपवर्णनदर्शनात् स्वभावोक्तिरलङ्कारः। मालिनी वृत्तम्॥ १२॥

स्खलतीति।—हि—यतः, भूमौ—क्षितौ, न्यस्तम्—अर्पितं पातितमित्यर्थः, चरणं—पादः, स्खलति—भ्रश्यति, ("पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः)

शकुनिरपरश्चायं तावद्विरौति हि नैकशः
कथयति महाघोरं मृत्युं न चात्र विचारणा ॥ १३ ॥

सर्व्वथा देवताः स्वस्ति (ञ) करिष्यन्ति ।

शोधनकः । एदु एदु अज्जो, इमं अधिअरणमंडवं पविसदु अज्जो । *

* एतु एतु आर्य्यः, इमम् अधिकरणमण्डपं प्रविशतु आर्य्यः ।

मही च—पृथ्वी तु, आर्द्रतमा—अत्यार्द्रा, न, भवतीति शेषः, अत्यार्द्रायां भूमौ हि चरणस्खलनं सम्भवति इति भावः; नयनं—चक्षुः, वाममिति शेषः, स्फुरति—स्पन्दते, तथा वामः,—दक्षिणेतरः, बाहुः,—भुजः, मुहुः,—वारं वारं, विकम्पते—स्फुरतीत्यर्थः, अयं—पुरःस्थः एषः, अपरः,—अन्यः, शकुनिश्च—दुर्निमित्तसूचकः पक्षी, तावत् नैकशः,—मुहुर्मुहुः, विरौति - विकटं शब्दायते, (अतः एतत् सर्व्वमिति अध्याहार्य्यम्) महाघोरं—शूलादिसाध्यतया अतिदारुणं मृत्युं—मरणं, कथयति—ज्ञापयति, अत्र—अस्मिन् विषये, विचारणा - वितर्कः, संशय इति यावत्, न, अस्ति इति शेषः, एतत् निश्चितमेवेत्यर्थः। अकारणं चरणस्खलनस्य दुर्निमित्ततामाह वसन्तराजशाकुने, यथा,—"स्वपादयानस्खलनं नृपाणां भङ्गः क्वचित् यानपलायनञ्च । द्वाराभिघाताध्वग-शस्त्रपाताः प्रस्थानविघ्नं कथयन्ति यातुः ॥" इति । अपि च, शार्ङ्गधरपद्धतिः विशिष्य वामाक्षिस्फुरणरूपदुर्निमित्तफलमाह; तथा हि,—"वामस्याधः स्फुरणमसकृत् सङ्गरे भङ्गहेतुस्तस्योर्द्ध्वं हरति नितरां मानसं दुःखजालम् । नेत्रोपान्ते हरति च धनं नेत्रकोणे च बन्धं सव्ये चैतत् फलमविकलं व्यत्ययं चापसव्ये॥ दक्षिणमङ्गं पुंसः स्त्रियाश्च वामं शुभावहं स्फुरितम् । नीचोच्चमध्यमावः फलति च गात्रोचितः स्पन्दः॥" इति । अत्र मह्याद्रेः आर्द्रतमत्वाद्यभावेऽपि अहेतुकस्यैव पादस्खलनादेः वर्णनात् हेतुं विनैव तत्तत्कार्य्योत्पत्तिकथनरूपा विभावनाऽलङ्कारः, तथा पादत्रयगतानां वाक्यार्थानां चतुर्थपादगतस्य महाघोरमृत्युसूचनरूपस्य वस्तुनः हेतुतया वाक्यार्थहेतुककाव्यलिङ्गालङ्कारश्च, परस्परञ्च तयोरङ्गाङ्गिभावतया संस्थितेः सङ्करः । अत्र हरिणी वृत्तं,—"न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥ १३ ॥

(ञ) सर्व्वथा—सर्व्वप्रकारेण, सर्व्वतोभावेनेत्यर्थः । स्वस्ति—क्षेमं, मङ्गलमित्यर्थः, ("स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमरः) ।

चारु। [प्रविश्य समन्तादवलोक्य] अहो! अधिकरणमण्डपस्य परा श्रीः। इह हि,—

चिन्तासक्त-निमग्न-मन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
पर्य्यन्तस्थितचार-नक्रमकरं नागाश्व-हिंस्राश्रयम्।
नानावाशक-कङ्कपक्षि-रुचिरं कायस्थ-सर्पास्पदं
नीतिक्षुण्णतटञ्च राजकरणं हिंस्रैः समुद्रायते॥ १४॥

अधिकरणमण्डपं वर्णयन्नाह, चिन्तेति।—चिन्तायां—तत्त्वार्थाविष्करणविषयक-भावनायाम् आसक्ताः—प्रसक्ताः अत एव निमग्नाः,—निविष्टमनसः गाढाभिनिविष्टा इत्यर्थः, मन्त्रिणः,—सचिवाः एव, सलिलानि—जलानि यस्य तत्; (मन्त्रिणाम् अचञ्चलत्वेन गाम्भीर्य्येण शीतलप्रकृतिकत्वेन च सलिलसाम्यम्। इह "चिन्तासक्तनिमग्न—" इत्यत्र आसक्तशब्दस्य विषयान्तरपरिहारेण तदेकतानतया अभिनिविष्टार्थकत्वेन फलतो निमग्नशब्दसमानार्थकतया आपाततः पुनरुक्तवदाभासमानत्वात्, पर्य्यवसाने च आसक्तशब्दस्य सामान्यतः प्रसक्तार्थकत्वसम्भवात् पुनरुक्तवदाभासो नामालङ्कारः भवितुमर्हतीति विभाव्यम्) तथा दूताः—वार्त्तावहाः एव, ऊर्म्मयः,—तरङ्गाः, शङ्खाः,—कम्बवश्च, ऊर्म्मिक्षिप्ताः शङ्खा वा, तैराकुलं—व्याप्तम्; (दूतानामितस्ततः सञ्चरणात् ऊर्म्मिशङ्खैः साम्यम्) तथा पर्य्यन्तेषु—प्रान्तदेशेषु, मध्येषु वा, स्थिताः,—अवस्थिताः, चाराः,—गुप्तचराः, ते एव नक्राः.—कुम्भीराः, मकराः,—स्वनामख्यातजलजन्तुविशेषाश्च यस्य तत्; (चाराणामतिक्लेश-जनकतया गूढ़चारितया च भयावहत्वात् नक्रमकरसाम्यम् अवगन्तव्यम्; तथा हि मनुः,—"तान् विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः। चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्॥" इति) तथा नागाः,—हस्तिनः अश्वाः,—घोटकाश्च, ते एव हिंस्राः,—क्रूरजन्तवः, तेषामाश्रयः,—स्थानं तत्; (नागाश्वानां वध्यघातनार्थं स्थापितत्वात् तेषामपि जलहस्तिभिः सिन्धुघोटकैश्च हिंस्रजलचरैः साम्यमवगन्तव्यम्) तथा नाना—विविधाः, वाशन्ते इति वाशकाः,—शब्दं कुर्व्वाणाः, अन्योऽन्यजिगीषया नानावचनरचनाचतुराः अर्थिप्रत्यर्थिन इति यावत्, ["वासकः" इति दन्त्यमध्यपाठे तु—वसते ये ते इति व्युत्पत्त्या वस इत्यादादिकस्य कर्त्तरि ण्वुल्, गुप्तचरा इति तु तदर्थः; ते हि नानाविधवेशेन स्वरूपं प्रच्छाद्य पौरजानपदाभिप्रायपरिज्ञानार्थं राजनियोगेन परितः भ्राम्यन्तीति बोध्यम्] ते एव कङ्कपक्षिणः,—अम्बितटचरपक्षिविशेषाः, (अत्र पक्षेण शरपुङ्खः क्रियते, "कौङ्क-

बाखी" इति वङ्गभाषा, लोहपृष्ठाख्यसमुद्रतीरसञ्चरत्पक्षिविशेषा वा, "हाड़गिला" इति कश्चित्. अधिकरणमण्डपस्य समन्तात् अवस्थाय अविरतजल्पनाकरणात् आमिषा-परार्ध्यविषयप्रियत्वाच्च तेषां कङ्कसाम्यमवगन्तव्यं, तथा च राजनिघण्टुः,—"कङ्कस्तु लोहपृष्ठः स्यात् सन्दंशवदनः खरः। रणालङ्करणः क्रूरः स च स्यादामिषप्रियः॥" इति ) तैः रुचिरं—मनोहरम्; विविधोज्ज्वलपरिच्छदभूषितत्वादिति भावः; ("रुचिरम्" इत्यत्र "रचितम्" इति पाठे—रचितं—विरचितं, व्याप्तमिति यावत्) तथा कायस्थाः,—करणाख्यवर्णसङ्करजातिविशेषा एव, सर्पाः,—भुजगाः, तेषामास्पदं—स्थानम्; (मसी-जीवित्वाच्च एतेषां धर्म्माधिकरणमेव नियतं वर्त्तनस्थानं भवतीति आस्पदपदोपादानात् प्रतीयते; समुद्रो यथा भीषणैः विषधरैराकुलः, तथैव जिह्मगप्रायैः भीषणैः खलप्रकृतिभिः कायस्थैरेतदनिशमाकुलीक्रियते इति बोद्धव्यम्; तथा हि,—"कायस्थेनोदरस्थेन मातुर्मांसं न भक्षितम्। दया हेतुर्न चैवात्र दन्ताभावो हि कारणम्॥" इत्यादि दर्शनात् तेषां दन्दशूकस्वभावः कविभिर्वर्णितः सुसङ्गत एवेत्याभाति; तेषां वृत्तिमाह पराशरः,—"धनधान्याध्यक्षता च राजसेवा तथैव च। द्विजातेः परिचर्य्या च दुर्गान्तःपुर-रक्षणम्॥" इति ) एवं नीतिरेव—शासनशास्त्रमेव, तुङ्गं—भग्नम्, एकत्र स्रोतसा, अपरत्र कौटिल्येन च भग्नतया अन्तराऽन्तरा उन्नतत्वानतत्वात् दुर्गमर्मिति यावत्, तटं—कूलं यस्य तत्; (नीत्याः अनवरतपर्य्यालोचनयाऽपि अवान्तरसूक्ष्मातिसूक्ष्मा-नेकविषयजटिलतया भ्रमात् कदाचिदसत्यमपि सत्यवत्, कदाचित् सत्यमपि असत्य-वत् क्रियते नीतिविद्भिः इति विचारशैल्याः दुर्गमत्वात् सुखेनावबोधाभावाच्च तस्याः तुङ्गतटसाम्यमवगन्तव्यम्; एतेन, यथा हि बन्धुरतटभूमिषु अध्वगस्य पादस्खलनं नियतमव्यभिचारि, तथैव कुटिलायां दुरवगाहायाञ्च राजनीतौ विचक्षणस्यापि स्खलनं स्वतःसम्भवीति प्रतीयते ); तथा हिंस्रैः,—हिंसाशीलैः एतैरुपलक्षितं, [विशेषणे तृतीया] राजकरणं—राज्ञः अधिकरणम्, एतत् विचारस्थानमित्यर्थः, समुद्रायते—समुद्रवत् आचरति, अधिकरणं सर्व्वथा समुद्रवत् दुर्गममिति भावः। [समुद्रशब्दादाचारार्थे क्यङि समुद्रायेति नामधातोः लटि रूपम्। "राजकरणम्" इत्यत्र "राजभवनम्" इत्यपि पठ्यते]। अत्र "समुद्रायते" इत्यत्र कर्त्तरि विहितेन क्यङा औपम्यप्रतिपादनात्, अस्य च राजकरणस्य दुरवगाहतया सुखविहाराभावा-स्पदत्वरूपसाधारणधर्म्मस्य लोपेन लुप्तेयमार्थी उपमाऽलङ्कृतिः, सा च मन्त्रिषु सलिला-भेदारोपात्, दूतेषु शङ्खाभेदारोपात्, तथा चारेषु नक्राद्यभेदारोपात्, नागेषु श्लिष्ट-जलहस्त्याद्यभेदारोपात्, तथा वाशकेषु कङ्काद्यभेदारोपात्, कायस्थेषु च सर्पाद्यभेदा-रोपात्, तथा नीतिषु तटाभेदारोपात् च जायमानेन निरङ्गेण रूपकालङ्कारेण

भवतु—" [प्रविशन् शिरोघातमभिनीय सवितर्कम्] अहह! इदमपरम्, (ट)—

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा।
पन्थाः सर्पेण रुद्धोऽयं स्वस्ति चास्मासु दैवतः॥ १५॥

"—तावत् प्रविशामि। [इति प्रविशति]।

अधि। अयमसौ चारुदत्तः! य एषः,—

घोणोन्नतं मुखमपाङ्गविशालनेत्रं
नैतद्धि भाजनमकारणदूषणानाम्।

---

सङ्कीर्त्यते; न चैव परस्परितरूपत्वेनाशङ्कनीयः, राजकरणे समुद्राभेदारोपे क्रियमाण एव तदवसरः सम्भवति, इह तु उपमया तद्विघातोऽकारीति वेदितव्यम्। शार्दूलविक्रीडितं वृत्तम्॥ १४॥

(ट) इदं—गृहप्रवेशकाले शिरोघातरूपम्, अपरम्—अन्यत्, दुर्लक्षणमिति शेषः। "द्वाराभिघाताध्वमशस्त्रपाताः" इत्यादिश्लोकः १२ सङ्ख्यकश्लोकव्याख्यानावसरे उद्धृतः इति द्रष्टव्यम्।

इदानीं विशिष्य प्रागुक्तं सर्व्वमेतत् दुर्न्निमित्तं सङ्क्षिप्याभिदधाति, सव्यमिति।— मे—मम, सव्यं—वामं, चक्षुः,—नयनं, स्पन्दते—स्फुरति तथा वायसः,—काकः, विरौति—शब्दायते, अयं—पुरःस्थः, पन्थाः,—मार्गः सर्पेण—अहिना, रुद्धः,— आवृतः, अस्मासु—अस्माकमित्यर्थः, दैवतः,—दैवात्, दैवानुकूल्येन इत्यर्थः, [दैवशब्दात् पञ्चम्यां तसिल्] स्वस्ति—मङ्गलञ्च, भवतु इति शेषः; देवता मम स्वस्ति कुर्व्वन्तु इति भावः; यद्वा,—दैवतम् एव दैवतः स्वार्थे अणि वा साध्यं, तथा च दैवतः,—देवतासमूहः, अस्मासु—विपन्नेषु इत्यर्थः, स्वस्ति—शुभं विदधातु इति शेषः; अशरणानां देवा एव शरणं भवन्तु इत्याशयः। "दैवतानि पुंसि वा" इत्यमरोक्तेः पुंसि अपि व्यवहारः दैवतशब्दस्य दृश्यते, अत्र मम्मटभट्टादिभिस्तु एवंविधशब्दस्य पुंसि प्रयोगस्य कविभिरनादृतत्वात् अप्रयुक्तत्वं दोष एवेत्याशङ्कितम्, अस्माभिस्तु "यथाऽयं दारुणाचारः सर्व्वदैव विभाव्यते। तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥" इत्यादि प्रयोगदर्शनात् प्रोक्तदोषोद्धारशैली व्याख्याऽवसरे प्रदर्शितेति वेदितव्यम्। पथ्यावक्त्रं वृत्तम्॥ १५॥

"यत्राकृतिस्तत्र गुणा वसन्ति" इत्यादि नयेन एवं सुरूपस्य सद्गुणवतश्चास्य ईदृशदूषणत्वं नैव सम्भवतीति बलुमाह, घोणोन्नतमिति।—उन्नता—उद्गता, घोणा—

नागेषु गोषु तुरगेषु तथा नरेषु
न ह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ १६ ॥

चारु। भोः! अधिकृतेभ्यः स्वस्ति। हंहो नियुक्ताः! अपि (ठ) कुशलं भवताम्?

अधि। [ससम्भ्रमम् (ड)] स्वागतमार्य्यस्य? भद्र शोधनक! आर्य्यस्य आसनमुपनय।

नासिका यत्र तादृशं, खगपतिनासिकावत् तिलकुसुमवद्वा विशालनासम्, उन्नतनासिकमित्यर्थः, ("घोणा नासा च नासिका" इत्यमरः), [आहिताग्न्यादित्वात् वा परनिपातः, पक्षे—उन्नतघोणम्] अपाङ्गयोः,—नेत्रान्तयोः, विशाले—आयते, कर्णान्तविशाले इति यावत्, नेत्रे—लोचने यस्य तादृशम्, आकर्णपूरितनेत्रमित्यर्थः, मुखं—वदनं, (य एष इति प्रागुक्तचूर्णकेनान्वयः) बिभर्त्तीति शेषः, एतस्मिन् महासत्त्वे प्रशान्ते मुखवैकृतादिदुष्कार्य्यचिह्नं किमपि नास्तीति भावः; एतत्—अयमसौ चारुदत्त इति चूर्णकोक्तस्यैवाक्षेपः एतत्पदेन क्रियते इति बोद्धव्यम् एष हि चारुदत्त इत्येवार्थः, [विधेयप्राधान्यादस्य क्लीवत्वम्] अकारणदूषणानाम्—अहेतुकदोषाणां, व्यवहारारोपितापराधानामित्यर्थः, भाजन—पात्रम्, आश्रय इत्यर्थः, न हि—नैव, भवतीति शेषः; तथा हि, नागेषु—हस्तिषु, गोषु—सौरभेयेषु, तुरगेषु—अश्वेषु, तथा नरेषु—मानवेषु, नागादिमध्ये इत्यर्थः, आकृतिः,—बहिराकारः, सुसदृशं—स्वानुरूपं बाह्याकृत्यनुयायीत्यर्थः, वृत्तं—चरित्रं, न विजहाति—न त्यजति; आकृतिरेवास्य निर्दोषित्वं प्रमाणयति इति भावः। अत्र प्रस्तुताप्रस्तुतानां नरनागादीनाम् आकृत्यनुरूपस्वभावापरित्यागरूपैकधर्म्माभिसम्बन्धात् दीपकालङ्कारः; अपि च पूर्व्वार्द्धप्रतिपादितविशेषनरस्यैव चारुदत्तस्य परार्द्धगतेन "नरेषु" इति कृत्वा सामान्येन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च इत्यनयोरन्योऽन्यसापेक्षतया सङ्करः। वसन्ततिलकं वृत्तम् ॥ १६ ॥

(ठ) अधिकृतेभ्यः,—विचारकेभ्यः, [स्वस्तियोगाच्चतुर्थी] स्वस्ति—मङ्गलम्, अस्तु इति शेषः। हंहो इति सम्बोधनसूचकमव्ययं, भोः! इत्यर्थः। नियुक्ताः,—राज्ञा विचारकर्मणः सौष्ठवसम्पादने कृतनियोगाः, श्रेष्ठिकायस्थादय इत्यर्थः। अपि—प्रश्ने। [कुशलमिति योगात् "भवताम्" इत्यत्र षष्ठी, सप्तम्यपि भवतीति ज्ञेयम्]।

(ड) ससम्भ्रमं—सादरं सत्वरं वा, ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी) महाकुलीनस्य सर्व्वजनमान्यस्य दानशौण्डस्य चारुदत्तस्य

शोधनकः। [आसनमुपनीय] एदं आसणं, एत्थ उवविसदु अज्जो। *

चारु। [उपविशति]।

शकारः। [सक्रोधम्] आगदेशि ले इत्थिआघादआ! आगदेशि? अहो! णाए ववहाले!! अहो! धम्मे ववहाले!!! जं एदाह इत्थिआघादकाह (ढ) आशणे दीअदि। [सगर्व्वम्] भोदु, णं दीअदु। †

अधिः। आर्य्य चारुदत्त! अस्ति भवतोऽस्या आर्य्याया दुहित्रा सह प्रसक्तिः, प्रणयः, प्रीतिर्वा? (ण)

चारु। कस्याः?

अधि। अस्याः। [इति वसन्तसेनामातरं दर्शयति]।

चारु। [उत्थाय] आर्य्ये! अभिवादये।

* इदमासनम्, अत्रोपविशतु आर्य्यः।

† आगतोऽसि रे स्त्रीघातक! आगतोऽसि? अहो! न्याय्यो व्यवहारः!! अहो! धर्म्यो व्यवहारः!!! यदेतस्मै स्त्रीघातकाय आसनं दीयते। भवतु, ननु दीयताम्।

आगमनेन तत्सवर्द्धनार्थं सदाचारस्य अक्षुण्णतया संरक्षणपरायणानाम् अधिकरणिकानां त्वरा ज्ञातव्या।

(ढ) अहो—इति असूयायाम्। न्याय्यः,—न्यायादनपेतः, नीतिसङ्गत इत्यर्थः। व्यवहारः,—आचरणम्। धर्म्यः,—धर्म्मादनपेतः, धर्म्मशास्त्रानुमोदित इत्यर्थः। [क्वचित् "एदाह इत्थिआघादकाह" इत्यस्य "एतस्य स्त्रीघातकस्य" इति संस्कृतम्] आसनदानेन पातकिनः संसर्गकरणात् संसर्गकृतं पातित्यमाशङ्कितम्, अतः सोल्लुण्ठनोक्तिरेषा ज्ञेया।

(ण) "अस्याः" इति वसन्तसेनायाः मातरं प्रति अङ्गुलिनिर्द्देशो बोध्यः। प्रसक्तिः,—प्रसङ्गः, सम्पर्क इति यावत्, प्रच्छन्नानुराग इति वा। प्रणयः,—प्रेम, सौहार्द्दमिति यावत्; ("प्रणयः प्रश्रये प्रेम्णि याञ्चाविश्रम्भयोरपि" इति मेदिनी) प्रीतिः,—प्रमोदः, सम्भोगादिसाध्यः इत्याशयः, ("प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्" इति मेदिनी)।

वृद्धा । जाद ! चिरं मे जीव । [ स्वगतम् ] अअं सो चारुदत्तो !! एत्थ (त) सुणिक्खित्तं क्खु दारिआए जोव्वणं । *

अधि । आर्य्ये ! गणिका तव मित्रम् ?

चारु । [ लज्जां नाटयति ] ।

शकारः ।—

लज्जाए भीलुदाए वा चालित्तं अलिए ! णिगूहिदुं ।
अअं मालिअ अत्थकालणा दाणिं गूहदि ण तं हि भट्टके †॥ १७॥

---

* जात ! चिरं मे जीव । अयं स चारुदत्तः !! अत्र सुनिक्षिप्तं खलु दारिकाया यौवनम् ।

† लज्जया भीरुतया वा चारित्रमलीक ! निगूहितुम् ।
स्वयं मारयित्वा अर्थकारणादिदानीं गूहति न तद्धि भट्टकः ॥

(त) अत्र—अस्मिन् चारुदत्ते इत्यर्थः ।

गणिकाप्रेम प्रकाशयितुं लज्जमानं चारुदत्तमधिक्षिपति, लज्जयेति ।—अलति—गच्छति अधः, मिथ्याकथनेन इति अलीकः, अलीक !—हे मिथ्यावादिन् ! अर्थकारणात्—धनलालसया, [ निमित्तार्थकात् कारणशब्दात् पञ्चमी, अर्थार्थकशब्दात् तृतीयादयः सर्व्वा एव विभक्तयः स्युरिति वेदितव्यम् ] स्वयम्—आत्मना, मारयित्वा—विनाश्य लज्जया—त्रपया, भीरुतया—भयशीलत्वेन वा, इदानीम्—अधुना, चारित्रं—चरित्रमेव चारित्रं, स्वकृतदुष्कार्य्यरूपमिति यावत् [ प्रज्ञादित्वात् स्वार्थे अण् प्रत्ययः ] निगूहितुं—गोपायितुं, चेष्टसे इति शेषः, भट्टकः,—प्रभुः, मम भगिनीपतिरित्यर्थः, यद्वा.—राजनीतिकुशलः सुपण्डितः अधिकरणिक इत्यर्थः, [ भट्टशब्दात् स्वार्थे कन् ] हि—निश्चितं, तत्—तव एतत् दुश्चरितमित्यर्थः, न गूहति—नैव आवृणोति, नैव गोपायित्वा त्वां मोचयति इत्यर्थः ; प्रमाणग्रहणादिना स्वयमेव तत् सर्वं समुद्घाट्य अवश्यमेव त्वां दण्डयिष्यतीति भावः ; [ "अलीए णिगूहदु" इति पाठे—अलीकः,—मिथ्यावादी, निगूहतु—गोपायतु ] । अथवा,—अलीकः स्वदुश्चरितं निगूहितुं चेष्टतां, यतः स हि तस्य स्वभावः, सत्यवादिनस्तु न तथेति मनसि कृत्वा सत्यवादिनोऽपि चारुदत्तस्य मिथ्यावादित्वप्रकटनाशयाह, स्वयमिति ।—अर्थकारणात् स्वयं हत्वा इदानीं स्वदोषं गूहति, तत्—तस्मात्, भवान् न भट्टकः,—न पण्डितः, स्वदोषनिगूहनादतिनीच एवेत्यर्थः । [ क्वचित् पुस्तके श्लोकोऽयं मदेन

अधिकरणिकः। अज्ज चारुदत्त! भणाहि, अलं लज्जाए, ववहारो क्खु एसो।*

चारु। [सलज्जम्] भो अधिकृताः! मया कथमीदृशं वक्तव्यम्? यथा गणिका मम मित्रमिति; अथवा यौवनमत्रापराध्यति, न चारित्रम्। (ध)

अधि।—

व्यवहारः सविघ्नोऽयं त्यज लज्जां हृदि स्थिताम्।
ब्रूहि सत्यमलं धैर्य्यं छलमत्र न गृह्यते॥ १८॥

अलं लज्जया, व्यवहारस्त्वां पृच्छति।

* आर्य्य चारुदत्त! भण, अलं लज्जया, व्यवहारः खलु एषः।

पठितः, यथा—"लज्जाए आदु भीलुदाए वा चालित्तं अलिअ णिगूहिदुं अअं इत्थिअं भालिअ अत्थकालणाए णिगूहदि ण तं हि भट्टके" इति; अपि च "अलिए" इति प्राकृतस्य "अलीकम्" इति संस्कृतं दृश्यते, तथात्वे, अलीकं—मिथ्याभूतं, चारित्रं—सत्स्वभावत्वमित्येवार्थः करणीय इति। ग्रन्थान्तरे च अन्यपाठे "एसि गूहदि तं ण भट्टके" इति पाठान्तरं दृश्यते, तस्यार्थसङ्गतिः सुधीभिः स्वयं तर्कणीया। "भीलुदाए" इत्यत्र एकारः "अअं" इत्यत्र अंकारश्च छन्दोऽनुरोधात् लघुतया पठनीयः]। अत्र वैतालीयं छन्दः॥ १७॥

(ध) अथवेति।—अत्र—गणिकामित्रत्वे यौवनं—तारुण्यं, नवीनं वयः इत्यर्थः, ममेति शेषः, उद्दामयौवनमेव ईदृशाचरणे मां प्रवर्त्तयामास न चारित्रं—दौःशील्यं लाम्पट्यं वा इत्यर्थः। "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इति भगवन्मनुवचनेन सच्चरित्रा अपि यौवने कदाचिदिन्द्रियनिग्रहाक्षमा भवन्तीति ज्ञायते; तथाच, सतां सकृत् स्खलनं न तेषां चरित्रोत्कर्षं सर्व्वथा अपहन्तीति नायकस्याशयः।

व्यवहारे लज्जाभयादिना सत्यगोपनस्य अनिष्टोदर्कत्वात् तत्परित्यक्तुम् उपदिशन्नाह, व्यवहार इति।—अयं—वर्त्तमानः व्यवहारः,—अभियोगः, सविघ्नः,—सप्रत्यूहः, प्राड्विवाकस्यानिष्टजनक इति भावः, अतः हृदि—अन्तःकरणे, स्थितां—वर्त्तमानां, लज्जां—त्रपां, त्यज—मुञ्च, लज्जया सत्यगोपने तवैव महदनिष्टं भविष्यतीति भावः; सत्यं—यथार्थं, ब्रूहि—कथय, धैर्य्यं—गाम्भीर्य्यम्, अलं—व्यर्थं,

चारु। अधिकृत! केन सह मम व्यवहारः?

शकारः। [साटोपम्] अले! मए शह ववहाले। *

चारु। त्वया सह मम व्यवहारः सुदुःसहः। (द)

शकारः। अले! इत्थिग्राघादआ! तं तादिशिं लअण-शदभूशणिअं वशंतशेणिअं मालिअ, शंपदं कवड़-कावड़िके भविअ णिगूहेशि? † (ध)

* अरे! मया सह व्यवहारः।

† अरे! स्त्रीघातक! तां तादृशीं रत्नशतभूषणां वसन्तसेनां मारयित्वा साम्प्रतं कपटकापटिकी भूत्वा निगूहसि?

विलम्बं मा कुरु इत्यर्थः, एवंविधे जटिले व्यवहारे लज्जया गाम्भीर्य्येण वा यथा-यथोत्तरदाने विलम्बो न कर्त्तव्य इति भावः। अत्र धैर्य्यणालम् इति वक्तव्ये धैर्य्यमलमिति कृतम्। वारणार्थकालंशब्दयोगात् तृतीयैवानुशिष्टा, अत्र तु तददर्शनात् समर्थार्थकत्वेनैवैतत् व्याख्यायते; तथा हि,—धैर्य्यं—धीरतावलम्बनमेवात्र, अलम्—उत्तरदाने समर्थं, धीरतया यथायथमुत्तरं देहि, चापल्यं परित्यजेति भावः, शक्तार्थकालंशब्दस्यात्र योगाभावात् चतुर्थी नाशङ्कनीयेति। मदुक्तस्य छलेन अन्यथा-ग्रहणं मा भूदिति विविच्योत्तरं दास्यामीत्याशङ्कायामाह, छलमिति।—अत्र—धर्म्माधिकरणे, छलं—वचनं, यद्वा,—छलं—"यौवनमत्रापराध्यति, न चारित्राम्" इत्यादिरूपं वाक्छलं, न गृह्यते—प्रमाणत्वेन न स्वीक्रियते इत्यर्थः। अत्र कर्म्मणि विहितलोटा प्रक्रान्तानां क्रियापदानां तृतीयपादे चतुर्थपादे च तेनैव प्रकारेण प्रयोगः कर्त्तुमुचितः आसीत्, अत्र तु तदन्यथा आचरितम्; तथा च येन प्रकारेण प्राक् निर्द्दिष्टं, तेन प्रकारेणानुक्तिनिबन्धनक्रमभङ्गस्य जायमानत्वात् भग्नप्रक्रमतारूपदोषः सम्भवतीति आशङ्क्यते चेत्, तदा उत्तरार्द्धस्य "त्यज धैर्य्येन्नतं ब्रूहि नादत्स्व छलमत्र च" इति परिवर्त्तनेन समाधातुं शक्यते इति ध्येयम्। पथ्यावक्त्रं वृत्तम्॥ १८॥

(द) सुदुःसहः,—अत्यन्तं सोढुमशक्यः, कुलशीलसम्पन्नोऽहं कथमपि नीचेन त्वया सार्द्धमिमं व्यवहारं सोढुं न शक्नोमि इत्यर्थः; "वदसि हससि किञ्चित् तत्र दुःखातिदुःखम्" इत्यादिदर्शनात् उत्तमस्य महाकुलीनस्य नीचेन दुष्कुलजेन सह विवादस्य अतीव लज्जाकरत्वादिति भावः।

(ध) कपटकापटिकः,—अतीव कपटी अत्यर्थं छलनापरायण इत्यर्थः;

चारु। असम्बद्धः (न) खलु असि।

अधि। आर्य्य चारुदत्त! अलमनेन, ब्रूहि सत्यम्। अपि (प) गणिका तव मित्रम्?

चारु। एवमेव।

अधि। आर्य्य! वसन्तसेना क्व?

चारु। गृहं गता!

श्रेष्ठिकायस्थौ। कधं गदा? कदा गदा? गच्छंती वा केण अणुगदा? *

चारु। [स्वगतम्] किं प्रच्छन्नं (फ) गतेति ब्रवीमि?

श्रेष्ठिकायस्थौ। अज्ज! कधेहि। †

चारु। गृहं गता, किमन्यत् ब्रवीमि?

शकारः। मम केलकं पुप्फकलंडक-जिस्णुज्जाणं पवेशिअ अत्थणिमित्तं बाहुपाश-बलक्कालेण मालिदा। अण! शंपदं (ब) भदशि, घलं गदे त्ति? ‡

* कथं गता? कदा गता? गच्छन्ती वा केन अनुगता?

† आर्य्य! कथय।

‡ मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य अर्थनिमित्तं बाहुपाश-बलात्कारेण मारिता। अये! साम्प्रतं वदसि, गृहं गतेति।

धर्म्मकञ्चुक इति न तात्पर्य्यम्। कपटपदस्यात्राधिक्यं शकारभाषितत्वमात्रमेव, कापटिक इत्यनेनैव गतार्थत्वात् इति वेदितव्यम्। निगूहमि—गोपायसि।

(न) असम्बद्धः,—असम्बद्धप्रलापीत्यर्थः, असंयतभाषीति यावत्; असम्बद्ध-प्रलापी इति वक्तुं यत् "असम्बद्धः" इत्येतावदेव असमाप्तवाक्यमुक्तं, तत् पिशुनस्य शकारस्य दुर्वाक्येण अतिगम्भीरस्यापि महासत्त्वस्य चारुदत्तस्य अत्युद्वेजितत्वात् कण्ठाव-रोधवशादेवाभवत् इति विभावनीयम्।

(प) अनेन—शकारेण सह वाक्प्रपञ्चेनेत्यर्थः। अपि प्रश्ने।

(फ) प्रच्छन्नम्—अप्रकाशम्।

(ब) प्रवेश्य—प्रवेश कारयित्वा, वसन्तसेनाम् इति शेषः। साम्प्रतम्—इदानी-मित्यर्थः।

चारु। आः ! असम्बद्धप्रलापिन् !—

अभ्युक्षितोऽसि सलिलैर्न बलाहकानां
चाषाग्रपक्षसदृशं भृशमन्तराले।
मिथ्यैतदाननमिदं भवतस्तथा हि
हैमन्तपद्ममिव निष्प्रभतामुपैति ॥ १८ ॥

अपराधिन इव अस्य आस्यवैवर्ण्येन, सर्वशरीरव्यापिस्वेदोद्गमेन च सापराधत्वं, तेन च उक्ताभियोगस्य मिथ्यात्वं प्रतिपादयितुमाह— अभ्युक्षित इति।—अन्तराले—अन्तरीक्षे, ("अन्तराले" इत्यत्र "अन्तरा ते" इति पाठे,—अन्तरा—मध्यभागे, ते—तव, एतत् मिथ्या इत्यन्वयः] बलाहकानां—वारिवाहकाणां मेघानां, [वारीणां वाहकाः बलाहकाः पृषोदरादित्वात् साधुः] सलिलैः,—जलैः चाषः,—पक्षिविशेषः, ("स्वर्णचातकः" इत्येके, "भृगर्भपतितं वारि चातकानां रुजाकरम्" इति दर्शनात् सलिलपानाशया ते प्रायशः मेघमार्गेषु सञ्चरन्ति इति दृश्यते; "नीलकण्ठः" इत्यन्ये) तस्य अग्रपक्षः,—पक्षाग्रं, तस्य सदृशं—तुल्यं यथा तथा, भृशम्—अत्यर्थं न अभ्युक्षितः,—न सिक्तः, असि—भवसि, केनचित् निमित्तेन कोऽपि चेत् कदाचित् कमपि मृषा अभियुङ्क्ते, तदाऽसौ स्वकृतमिथ्याऽभियोगप्रकाशभिया शङ्कितः स्विन्नकलेवरो जायते इति दृश्यते, तथापि मामेवं राजाधिकरणे अभियुञ्जानस्य मेघसलिलसेकाद्यभावेऽपि सहसा एवं सिक्तकायम् आत्मानं प्रकाशयतः निःसंशयं स्वापराधसूचकः अकस्मात् स्वेदोद्गम एव अभियोगस्यास्य मृषात्वं प्रतिपादयतीति भावः। तथा—एवं भवतः,—तव, इदं—परिदृश्यमानम्, आननम्—मुखं, हि—निश्चितं, हैमन्तपद्ममिव—हेमन्तर्तुसम्भूतकमलमिव तुषारपातमथितपद्ममित्यर्थः, निष्प्रभतां—मालिन्यम्, उपैति—प्राप्नोति; न केवलम् अकारणकः स्वेदोद्गम एव तेऽभियोगस्य मिथ्यात्वं व्यनक्ति, अपि तु मुखवैवर्ण्यमपीति भावः; हैमन्तिकशिशिरसम्पातेन यथा सुविकसितं मनोहरमपि कमलं म्लानं भवति तथा तव प्रफुल्लमपि मुखमण्डलं मिथ्याऽभियोगानयनात् स्वेदसलिलेन म्लानतां गतमिति समुदितार्थः; अतः एतत्—त्वदुक्तं मत्कर्तृकवसन्तसेनाहननरूपमभियोगवाक्यमित्यर्थः, मिथ्या—सम्पूर्णं मृषैव इत्यर्थः; निरपराधे जने दोषान् आरोपयितुर्मुखं मलिनं भवतीति प्रसिद्धम्। यद्वा,—त्वं वञ्चनायां चाषपक्षितुल्योऽपि तद्वत् गगने उड्डीय यातुं न प्रभवसि, अतो भित्तिहीनं मिथ्याप्रपञ्चं विस्तारयतस्तव सत्यप्रकाशशङ्कामलिनं मुखमेव वचसः मिथ्यात्वं प्रकटयति, अतो मृषाभाषिणस्ते व्यवहारः

श्रेष्ठि। [ जनान्तिकम् ]।—

तुलनं चाद्रिराजस्य समुद्रस्य च तारणम्।
ग्रहणं चानिलस्येव चारुदत्तस्य दूषणम्॥ २०॥

[ प्रकाशम् ] आर्य्य-चारुदत्तः खलु असौ कथमिदमकार्य्यं करिष्यति? ( घोषेत्यादि पठति )।

शकारः। किं पक्खवादेण (भ) ववहाले दीशदि? *

---

* किं पक्षपातेन व्यवहारो दृश्यते?

---

नैवाकर्णनीयः, नापि विचारार्ह इति तात्पर्य्यम्। अत्र वदनस्य हेमन्तकालीन-कमलिनावैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः, तथा मुखम्लानतापादकस्य कस्यचित् कारणस्य अनुक्तावपि मुखम्लानिरूपकार्य्योत्पत्तिकथनात् विभावनालङ्कारश्च। न च प्रकरणपर्य्यालोचनाज्ञिमस्य मिथ्याऽभियोगानयनजनितदोषस्यैव निष्प्रभताया हेतुत्व-सम्भवात् कथमत्र हेतुं विना कार्य्योत्पत्तिरिति वाच्यं, सामान्यतः हेतुं विना कार्य्यो-त्पादस्यासम्भवात्, विभावनायामपि प्रसिद्धहेतुभावस्यैव वक्तव्यत्वात्. प्रकृते च निष्प्रभ-तायां कस्यचित् प्रसिद्धकारणस्य रोगशोकादेरभाव एव कारणाभावपदेन विवक्षित इति सुधीभिश्चिन्तनीयम्। वसन्ततिलकं वृत्तम्॥ १९॥

चारुदत्ते आरोपितस्य अभियोगस्य असम्भाव्यत्वेनाविश्वसनीयत्वमुपवर्णयन्नाह, तुलनमिति।—चारुदत्तस्य—तदाख्यस्य अस्य सज्जनस्य, दूषणं—तस्मिन् दोषारोपणं, [ दुष्यतेः णिचि "ल्युट् च" ( ३।३।११५ पा० ) इति ल्युटि रूपम् ] अद्रिराजस्य—हिमालयस्य, तुलनम्—तुलायाः करणमिवेत्यर्थः, तुलायन्त्रेण गुरुत्वनिरूपणमिवेति यावत्, ( न च तोलयतेः तोलतेश्च ल्युटि तोलनमित्येवं पदं भवतीति तुलनमिति पदमसाध्विति वाच्यं, तुलाशब्दात् करोत्यर्थे णिचि तुलि इति नामधातोः ल्युटि कृते तुलनपदस्य साधुत्वसम्भवात् ] समुद्रस्य—सागरस्य, तारणं—सन्तरणेन अपरपारगमनमिव, तथा अनिलस्य—वायोः, ग्रहणमिव—हस्तेन धारणमिव, सदा-गतेः गतिरोध इवेत्यर्थः. असम्भवमिति शेषः; यथा एतत्सर्वं जनानामत्यन्तमसम्भव-नीयं, तथा चारुदत्तस्य दूषणमपि न कदाचित् शक्यसम्भवमिति भावः। अत्र चारु-दत्तदूषणरूपस्य उपमेयस्य अद्रिराजतुलनादिभिर्बहुभिरुपमानैः विरुद्धधर्म्मोक्तिविरहिता-त्यन्तसम्भवत्वरूपसाधर्म्यकथनात् मालोपमाऽलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २०॥

( भ ) पक्षपातेन—पक्षे—अन्याय्यसाहाय्ये, पातः,—अभिनिवेशः, चारुदत्तं प्रति अनुरागवशेन न्यायमुल्लङ्घ्य क्रियमाण इति भावः तेन।

अपि। अपेहि (म) मूर्ख !—

वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता ?
मध्याह्ने वीक्षसेऽर्कं न तव सहसा दृष्टिर्विचलिता ? ।
दीप्ताग्नेः पाणिमन्तः क्षिपसि स च ते दग्धो भवति नो ?
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः ? ॥ २१ ॥

(म) अपेहि—अपगच्छ, दूरीभव इत्यर्थः।

सज्जननिन्दाया अशुभोदर्कत्वेन अकर्त्तव्यत्वं वक्तुमाह, वेदार्थानिति।—त्वं—भवान्, प्रकृष्टमकृतमपकार्य्यं यस्य स प्राकृतः,—नीचः, अधमजातिसमुद्भवः सन्नित्यर्थः, ("विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः" इत्यमरः) वेदार्थान्—श्रुतिप्रतिपादिताभिधेयान्, वदसि—कथयसि वेदवदतिविशुद्धस्य चारुदत्तस्य नामोच्चारणमपि त्वया न करणीयं, का कथा तन्निन्दायाः ? यतस्त्वमेवं कर्त्तुं समुद्यतः अतः असमसाहसिकोऽसि इति भावः, ते—तव, वेदोच्चारणमिव अस्य निन्दावादं कुर्व्वत इति भावः जिह्वा—रसना, न च निपतिता ?—न स्खलिता ? नूनं पतिष्यत्येवेति काका व्यज्यते, इदन्तु खेदातिशय्यव्यञ्जकमित्यवगन्तव्यम्; नीचजातीनां वेदोच्चारणे अनधिकारेण बलादुच्चारिते च जिह्वाच्छेदनस्य शास्त्रीयत्वेन अवैधाचरणादिति भावः; तथा मध्याह्ने—मध्यन्दिने, अर्कं—सूर्य्यं, वीक्षसे—पश्यसि, [ एतेन चारुदत्तस्य तेजस्वित्वं ध्वन्यते ] सहसा—तत्क्षणात्, दर्शनक्षणमेवेत्यर्थः, तव—ते, दृष्टिः,—नेत्रं, दर्शनशक्तिर्वा, न विचलिता ?—न प्रतिहता ? अतीव तेजस्विपदार्थदर्शनेन दृष्ट्युपघातस्य स्वाभाविकत्वात् विश्रुतचरितस्य महीयसस्तया तपनवत् तेजस्विनः चारुदत्तस्य दर्शनमपि त्वया कर्त्तुमशक्यमेव, कुतः तद्विरुद्धाचरणमिति भावः; तथा, दीप्ताग्नेः,—प्रज्वलितानलस्य, अन्तः,—मध्ये, पाणिं—हस्तं, क्षिपसि—ददासीत्यर्थः, ते—तव, स च—चारुदत्तानलनिर्वापणाय तस्य उपरि नियोजितः पाणिरित्यर्थः, नो दग्धः,—न भस्मीभूतः, भवति ?—जायते ? अपि तु अचिरादेव तत्प्रभावात् धक्ष्यते इति काक्वर्थः; तथा चारित्र्यात्—प्रशस्तशीलात्, चारुदत्तं चलयसि—कम्पयसि, भ्रंशयसि इत्यर्थः, [ चलतेः गत्यर्थकतया प्रयोज्यकर्त्तुः चारुदत्तस्य कर्म्मत्वम्; चलतेः भौवादिकस्य "कम्पने चलिः" (ग० ) ३८ इति मित्त्वेन णिचि ह्रस्वत्वं वेदितव्यम्, अत एवाह कविकल्पद्रुमटीकायां दुर्गादासः,—"चलधातुः कम्पने मानुबन्धः स्यादित्यर्थः" इति ] तथा भूः,—पृथ्वी, ते—तव देहं—शरीरं, भारभूतमिति भावः, न हरति ? न मुष्णाति ? एवमक्षतत्त्वमयथैव पर-

आर्य्य-चारुदत्तः कथमकार्य्यं करिष्यति ?—

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यनपेक्षितानि ।

विमर्द्दनपटीयांसं नृशंसं भगवती पृथ्वी किमर्थं वक्षसि वहतीति न जाने इति तात्पर्य्यम् । अत्र चारुदत्तात् चारित्र्याचालनेन सार्द्धं प्राकृतस्य वेदार्थकथनस्य, माध्यन्दिनसूर्य्यवीक्षणस्य, तथा प्रदीप्ताग्नौ पाणिप्रक्षेपस्य च विम्बप्रतिविम्बभावबोधस्य सम्भवद्विधया वर्णनात् सम्भवद्वस्तुसम्बन्धरूपा, अनेकैश्च सह वाक्यार्थं पर्य्यवसाययितुमेवं विम्बप्रतिविम्बताऽऽक्षेपात् मालारूपा निदर्शनाऽलङ्कारः ; एवं जिह्वापतनप्रभृतीन् प्रति वेदार्थसमुच्चारणादेर्हेतुत्वेऽपि तज्जन्यपतनरूपफलाभावदर्शनात् विशेषोक्तिरलङ्कारः, तल्लक्षणन्तु उक्तं दर्पणकारेण,—"सति हेतौ फलाभावः विशेषोक्तिः,—" इत्यादि ; तथाच अनयोः परस्परसापेक्षितया संस्थितेः सङ्करः ; वसन्ततिलकं वृत्तं,—"उक्ता वसन्ततिलका तभजा जगौ गः" इति तल्लक्षणात् ॥ २१ ॥

एवं गुणावलीवर्णनेन धनार्थं महानुभवस्य चारुदत्तस्य ईदृशपापानुष्ठानायोग्यत्वं प्रकटयितुमाह, कृत्वेति ।—येन—चारुदत्तेन इत्यर्थः, समुद्रम्—अर्णवम्, उदकानां—जलानाम्, उच्छ्रयः,—औन्नत्यं, प्राचुर्य्यमित्यर्थः, तन्मात्रं—तदेव, शिष्यते इति शेषः,—अवशिष्टं यस्य तं, जलाधारमात्रमित्यर्थः, कृत्वा—विधाय, तद्गर्भजातरत्नसमुदायाहरणात् इति भावः, अनपेक्षितानि—अविचारितानि, दानशौण्डतया अप्रतीक्षितानि इत्यर्थः, आशातीतानि इति यावत्, धनानि—अर्थाः, दत्तानि—वितरितानि [ यद्वा,—समुद्रम्—अतिगभीरतया जगति प्रसिद्धिं गतमिति यावत्, उदकानां—सलिलानाम्, उच्छ्रय एव उच्छ्रयमात्रं—प्रवृद्धिमात्रं, तदेव शेषः,—अवशेषः, अवशिष्टमित्यर्थः यस्य तं, गाम्भीर्य्यदरिद्रमिति यावत्, कृत्वा – विधाय, ( अत्र समकालिका , "मुखं व्यादाय स्वपिति" "ठनम् कृत्वा पतति" इतिवत् बोध्यम् ) अनपेक्षितानि – अप्रार्थितान्यपि, याचकैरिति शेषः, ( एतेनानिर्वचनीयदानशौण्डत्वं प्रतिपादितम् ) धनानि – स्वधनागारस्थितानि यावन्ति मूल्यवन्ति रत्नानि इत्यर्थः, दत्तानि —याचकेभ्यः न्यस्तानि, कदाऽप्येतेन दानकर्म्मणः पूर्व्वतः परतो वा देयानां दत्तानां वा धनानामनुशोचना न कृता, अपि तु अकातरं दीनेभ्यः धनं विसृज्य धीरतया अचलवदवस्थानेन समुद्रस्य गाम्भीर्य्यम् अपहृत्य तं गाम्भीर्य्यविरहिततया जलमात्रावशेषमेवासौ कृतवानित्यर्थः । एतेनास्य गाम्भीर्य्येण समुद्रादप्युत्कर्षप्रतीतेः व्यतिरेकाल-

स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवैरिजुष्टम् ? ॥ २२ ॥

शकारः। किं !! पक्खवादेण ववहाले दीशदि ? *

वृद्धा। हदास ! जो तदाणिं णासीकिदं सुवण्णभंडअं रत्तिं चोरेहिं अवहिदं त्ति तस्स कारणादो चदुस्समुद्द-सारभूदं रअणावलिं देदि, सो दाणिं अत्थकल्लवत्तस्स कारणादो इमं अकज्जं करेदि ? हा जादे ! एहि (य) मे पुत्ति ! † [इति रोदिति ]।

अधि। आर्य्य-चारुदत्त ! किमसौ पद्भ्यां गता ? उत प्रवहणेनेति ?

---

* किम् !! पक्षपातेन व्यवहारो दृश्यते ?

† हताश ! यस्तदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणात् चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीमर्थकल्यवर्त्तस्य कारणादिदमकार्य्यं करोति ? हा जाते। एहि मे पुत्रि !

---

ङ्कारोऽत्र व्यज्यते ] श्रेयसां—सकलमङ्गलानाम्, [ "द्विवचन—" (५।३।५७ पा०) इति प्रशस्यशब्दादीयसुन् "प्रशस्यस्य श्रः" (५।३।६० पा०) इति श्रादेशश्च ] एकनिधिः,—एकमात्रनिलयः, महात्मा—महाशयः, सः—चारुदत्तः, धनार्थं—धनलाभाय, अवैरिजुष्टं -वैरिणा—शत्रुणाऽपीत्यर्थः, न जुष्टं—न सेवितम्, अतिदुष्कार्य्यत्वेन शत्रुभिरपि आचरितुमशक्यमिति यावत् [ "अवैरिजुष्टम्" इत्यत्र "अवीरजुष्टम्" इति पाठान्तरे—कापुरुषोचितम् इत्यर्थः ] इदं पापं—दुष्कर्म्म, साधारणीं नारीं धनलोभात् निहत्य तदलङ्करणजातापहरणरूपमिति भावः, कथमिव—कस्मादिव करिष्यति ? —आचरिष्यति ? नैव करिष्यतीत्यर्थः ; ईदृग्वदान्यस्य दानवीरस्य अलुब्धस्य पुण्यकर्म्मणः चारुदत्तस्य कापुरुषोचितं स्त्रीहननदोषमारोप्य व्यवहारेण निर्य्यातनप्रयासः काकदशनानुसन्धानवत् विफलमेवेति समुदितार्थः। अत्र प्रथमकल्पे चारुदत्ते समुद्रसम्बन्धिसकलरत्नदातृत्वासम्बन्धेऽपि तत्सम्बन्धाध्यासात् असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २२ ॥

(य) हताश !—निर्दय ! खल ! इति वा ("हताशो निर्दये चाशार्दिते पिशुनेऽपि च" इति मेदिनी)। यः,—चारुदत्त इत्यर्थः। एवंविधनिर्लोभस्य सुजनस्य ईदृशनृशंसाचरणं नैव सम्भवतीति समुदितार्थः। एहि—आगच्छ।

चारु। ननु! मम प्रत्यक्षं न गता, (र) तन्न जाने, किं पञ्चत्वं गता, उत प्रवहणेनेति।

[प्रविश्य सामर्षः (ल)]

वीरकः।—

पादप्पहार-परिभव-विमाणणा-बद्धगरुअ-वेरस्स।
अणुसोअंतस्स इअं कधं पि रत्ती पभादा मे॥ * ॥ २३॥

ता जाव अधिअरणमंडवं उवसप्पामि। [प्रवेष्टकेन (व)] सुहं अज्जमिस्साणं। † (श)

* पाद-प्रहार-परिभव-विमानना-बद्ध-गुरु-वैरस्य।
अनुशोचत इयं कथमपि रात्रिः प्रभाता मे॥

† तद्यावदधिकरणमण्डपमुपसर्पामि। शुभमार्य्यमिश्राणाम्।

(र) ननु!—भोः! इत्यर्थः। प्रत्यक्षं—साक्षात्, ज्ञातसारेणेति यावत्।

(ल) सामर्षः,—सक्रोधः।

अभियोगमुत्थापयितुमागतः स्वाभियोज्यस्य वस्तुनः नितराम् असहनीयतां वर्णयन्नाह, पादेति।—पादप्रहारेण—चरणाघातेन, चन्दनकस्येति शेषः, यः परिभवः,—आक्रमणमित्यर्थः, अनादर इति यावत्, ["परौ भुवोऽवज्ञाने" (३।३।५५ पा०) इति घञो वैकल्पिकत्वात् "ऋदोरप्" (३।३।५७ पा०) इत्यप्। "अनादरः परिभवः" इत्यमरः] तेन या विमानना—अवज्ञा, तया बद्धं—नद्धम्, उत्पादितमित्यर्थः, गुरुकं—महत्, दृढमित्यर्थः, वैरं—शत्रुभावः यस्य तादृशस्य, अनुशोचतः,—सपरितापम् इतिकर्त्तव्यताम् अनुशीलयतः, मे—मम, इयम्—अचिरादेव अतीता, (अत्र रात्रेरवसितत्वेऽपि प्रत्यक्षरूपताबोधकस्य इदम्-शब्दस्य प्रयोगः कृतः, तत् अल्पकालपूर्वं प्रभातत्वेन इति बोध्यम्) रात्रिः,—क्षपा, कथमपि—अतिकष्टेनेत्यर्थः, प्रभाता—अवसिता इत्यर्थः। आर्य्याभेदान्तर्गतं गाथा नाम वृत्तम्॥ २३॥

(व) प्रवेष्टकेन—प्रवेष्ट एव इति प्रवेष्टकः—बाहुः तेन, ("भुजबाहू प्रवेष्टो दोः" इत्यमरः) बाहुमुत्तोल्य इत्यर्थः।

(श) शुभं—मङ्गलं, भवतु इति शेषः, आर्य्यमिश्राः जयन्त्वित्यर्थः।

अधि। अये! नगररक्षाऽधिकृतो (घ) वीरकः!! वीरक! किमागमनप्रयोजनम्?

वीरकः। ही! बंधण-भेअण-संभमे अज्जकं अण्णेसंतो, ओवाडिदं पवहणं वच्चदि त्ति विआरं करंतो अण्णेसंतो "अरे! तुए वि आलोइदे, मए वि आलोइदव्वो" त्ति भणंतो ज्जेव चंदणमहत्तरएण पादेण ताड़िदो म्हि। एदं सुणिअ अज्जमिस्सा पमाणं। * (ङ)

अधि। भद्र! जानीषे, कस्य तत् प्रवहणमिति?

* ही! बन्धनभेदनसम्भ्रमे आर्य्यकमन्विष्यन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्वन् अन्विष्यन्, "अरे! त्वयाऽपि आलोकितं, मयाऽपि आलोकितव्यम्" इति भणन्नेव चन्दनमहत्तरकेण पादेन ताड़ितोऽस्मि। एतत् श्रुत्वा आर्य्यमिश्राः प्रमाणम्।

(घ) नगररक्षाऽधिकृतः,—नगररक्षा—पुरीरक्षणम्, अधिकृता—अध्यक्षत्वेन आयत्तीकृता येन सः, नगररक्षाकर्म्मणि नियुक्तानामध्यक्ष इत्यर्थः; यद्वा,—नगररक्षायां—पुरीरक्षणकर्म्मणि, अधिकृतः,—नियोजितः, प्रधानपुररक्षकः इत्यर्थः।

(ङ) ही इति विषादार्थकमव्ययं, ("ही दुःखे हेतावाख्याती विषादे विस्मयेऽपि च" इति मेदिनी) बन्धनभेदनसम्भ्रमे बन्धनस्य—कारागृहस्य, भेदनं—भङ्गः, तत् भित्त्वा अपगमनमित्यर्थः, आर्य्यकेण इति भावः, तेन यः सम्भ्रमः,—संवेगः, त्वरा इत्यर्थः तस्मिन्, सम्भ्रमे जाते सति इति यावत्। अन्विष्यन्—तमनुसन्दधदित्यर्थः। अपवारितम्—आच्छादितम्। विचारं—वितर्कं, सन्देहमिति यावत्। भणन् एव—कथयन् एव, अहमिति शेषः। चन्दनमहत्तरकेण—अतः महता चन्दनकेन इत्यर्थः; [अयमनयोरतिशयेन महानिति महत्तरः तेन, द्वयोरेकस्योत्कर्षे "द्विवचन—" (५।३।५७ पा० इति तरप्, ततः स्वार्थे कन्, आवयोश्चन्दनक एव महानिति सोत्प्रासोक्तिरियं, चन्दनक एव महत्तरः, तेन इति विग्रहः] यद्वा,—चन्दनमहत्तरकेण—विपुलदेहचन्दनेन, वयोवृद्धचन्दनेन इति वा। [प्रमाणमिति—प्रमीयते अनेनेति व्युत्पत्त्या, प्रपूर्व्वकात् मिमीते इत्यस्मात् मातेर्वा करणे ल्युटि रूपं] प्रमाणीभूता आर्य्यमिश्रा एवेत्यर्थः, एतत् समीचीनमसमीचीनं वेति पूज्या विद्वांस एवात्र विचारयन्त्विति फलितार्थः; विधेयस्य प्राधान्यात् मोद्देश्यगतसमलिङ्गविभक्तिकत्वमिति बोध्यम्।

वीरकः। इमस्स अज्ज-चारुदत्तस्स, वसंतसेणा आरूढ़ा, पुप्फकरंडक-जिण्णुज्जाणं कोलिदुं णीअदि त्ति पवहणवाह-एण कहिदं। *

शकारः। पुणो वि शुदं अज्जेहिं? † (छ)

अपि।—

एष भोः! निर्म्मलज्योत्स्नो राहुणा ग्रस्यते शशी।
जलं कूलावपातेन प्रसन्नं कलुषाय्यते॥ २४॥

* अस्य आर्य्य-चारुदत्तस्य वसन्तसेना आरूढ़ा, पुष्पकरण्डक-जीर्णोद्यानं क्रीडितुं नीयते इति प्रवहणवाहकेन कथितम्।

† पुनरपि श्रुतमार्य्यैः?

(छ) पुनरपि—भूयोऽपीत्यर्थः, श्रुतम्?—आकर्णितम्? मया प्रथमं यदुक्तं, तदिति शेषः वीरकमुखादिति भावः। "वसन्तसेना मूल्यं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य अर्थनिमित्तं मारिता" इति प्रागुक्त-स्ववाक्यस्य प्रमापकत्वेन वीरकवाक्यमुल्लिखितं "पुणो वि" इत्यादिकं शकारेणोक्तमिति बोध्यम्।

वीरकवाक्यस्य शकारोक्त्यनुकूलतया चारुदत्तस्य सदोषत्वावगमात् दण्डनीयत्व-माशङ्क्य विलपन्नाह, एष इति।—भोः! इति अधिकरणस्थानामामन्त्रणम्। निर्म्मला—विशदा, शुभ्रा इत्यर्थः, निखिललोकलोचनानन्दकरीति यावत्, ज्योत्स्ना—कौमुदी यस्य तादृशः, एषः,—पुरतः परिदृश्यमानः, शुभयशोधवलितदिङ्मण्डल-चारुदत्तरूप इत्यर्थः, शशी—चन्द्रः अनाकाशे गलितहरिणः शीतकिरण इति यावत्, राहुणा—सैंहिकेयेन पापग्रहरूपिणा शकारेण इत्यर्थः, ग्रस्यते—कवलीक्रियते: [एतेन पूर्णिमायाः प्रतिपदश्च सन्धौ राहुग्रासात् परं यथा पूर्णस्यैवाच्छतमण्डलस्य शशिनः पुनः सुप्रकाशो दृश्यते तथैवेदानीं प्रक्षीणोऽपि चारुदत्तः राजानुग्रहेण वेणातटस्थकुशावतीराज्यप्राप्त्या वसन्तसेनालाभेन च प्रागिव पूर्णतया विभवशाली भविष्यतीति ध्वन्यते]; तथा च, आपाततः कूलावपातजनितकलुषितस्यापि सलिलस्य पुनरचिरादेव स्वाभाविकस्वच्छतालाभः दृश्यते एवेत्यधस्तात्स्थेन दृष्टान्तेन प्रोक्तार्थस्य साधर्म्यं द्रढयति, जलमिति।—तथा हि, प्रसन्नं—निर्म्मलं, कथमपि मालिन्यस्पर्शेन अकलुषितमित्यर्थः, जलं—सलिलं, कूलावपातेन—तटभङ्गेन, [अलीकव्यवहार-

वीरक! पश्चादिह भवतो न्याय्यं (क) द्रक्ष्यामः। य एषोऽधिकरणद्वारि अश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यताम्, अस्ति तत्र काचिद्विपन्ना स्त्री न वेति।

वीरकः। जं अज्जो आणवेदि। [इति निष्क्रान्तः प्रविश्य च] गदोम्हि तहिं, दिट्ठं अ मए इत्थिआकलेवरं सावदेहिं विलुप्पंतं। * (ख)

श्रेष्ठिकायस्थौ। कधं तुए जाणिदं इत्थिआकलेवरं त्ति? †

* यदार्य्य आज्ञापयति। गतोऽस्मि तत्र, दृष्टञ्च मया स्त्रीकलेवरं श्वापदैर्विलुप्यमानम्।

† कथं त्वया ज्ञातं स्त्रीकलेवरमिति?

समारोपणेनेति गम्यते] कलुषाय्यते—मलिनाय्यते; [अकलुषं कलुषं क्रियते अनेन इति अभूततद्भावेऽर्थे भृशादीनाम् आकृतिगणत्वेन तदन्तर्गतात् कलुषशब्दात् क्यङि कलुषायेति नामधातोः कर्म्मणि लटि एवायं प्रयोगः। "कलुषाय्यते" इत्यत्र "कलुषायते" इति पाठे तु कर्त्तरि प्रयोगे सुकर एव अर्थः]। अत्र एतत्पदवाच्येन चारुदत्तेन उपमेयभूतेन सार्द्धं निर्म्मलज्योत्स्नस्य शशिनः अभेदारोपात् किमयं रूपकालङ्कारः, अपि वा, एतत्पदेन विशेषितस्यैव शशिनः सर्व्वथैव निगीर्णे विषये चारुदत्ते अभेदाध्यवसानात् भेदेऽभेदरूपातिशयोक्तिरित्येतयोः रूपकातिशयोक्त्योः सन्देहसङ्करः ऊहनीयः, एवञ्च विषयस्य शकारस्य निगरणेन विषयिणः राहोः अभेदप्रतिपत्तिरूपात् शकारस्य राहुणा अभेदेनाध्यवसानात् भेदे अभेदरूपातिशयोक्त्यलङ्कारः, तथा पूर्व्वार्द्धगतस्य चारुदत्तरूप-निर्म्मलज्योत्स्नशशिनः राहुकर्त्तृकग्रासरूपस्य विशेषस्य वस्तुनः परार्द्धेन प्रसन्नसलिलस्य कूलपातजनित-कलुषीकरणरूपसदृश विशेषवस्तुना साम्यस्य प्रणिधानगम्यत्वात् दृष्टान्तालङ्कारः, इत्येतेषां परस्परसापेक्षतया संस्थितेः सङ्करः। पथ्यावक्त्रं वृत्तम्॥ १४॥

(क) न्याय्यम्—उचितं, त्वयाऽऽनीताभियोगस्य औचित्यानौचित्यमित्यर्थः।

(ख) श्वापदैः,—हिंस्रपशुभिः, शृगालादिभिरित्यर्थः, [शुनः पदानि इव पदानि येषां तैरिति विग्रहे पृषोदरादित्वात् साधुः] विलुप्यमानं—छिद्यमानं, भक्ष्यमाणं दंष्ट्राविषयीक्रियमाणमित्यर्थः।

वीरकः। सावसेसेहिं केसहत्थ-पाणि-पादेहिं उवलक्खिदं (ग) मए। *

अधि। अहो! धिक् वैषम्यं लोकव्यवहारस्य। (घ)—
यथा यथेदं निपुणं विचार्य्यते तथा तथा सङ्कटमेव दृश्यते।
अहो! सुसन्ना व्यवहारनीतयो मतिस्तु गौः पङ्कगतेव सीदति ॥२५॥

* सावशेषैः केशहस्त-पाणि-पादैरुपलक्षितं मया।

( ग ) सावशेषैः—भुक्तावशिष्टैरित्यर्थः। केशेत्यादि—शिरोरुहजालकरचरणैः, [केशानां हस्ताः समूहाः इति षष्ठीसमासः, ते च पाणी च पादौ च तेषां समाहारः इति द्वन्द्वे, "द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" ( २।४।२ पा० ) इत्यनुशासनबलात् एकत्वप्राप्तौ कथं बहुत्वमिति चेदत्रोच्यते,—केशहस्तसहिताः पाणयः सतसहिताः पादाः तैरिति शाकपार्थिवादित्वात् समासेन कथञ्चित् बहुत्वमुपपादनीयमिति ; व्यासवाक्ये पादादीनां बहुत्वन्तु श्वापदादिकृतखण्डबहुत्वाभिप्रायेणेति बोध्यम्। केशवाचिशब्दात् हस्तशब्दस्य समूहार्थकत्वमाह अमरः यथा,—"पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इति ; कलापः,—समूहः ]। उपलक्षितं—दृष्टम्, अनुमितमित्यर्थः ; यद्यपि शृगालादिभिः तत् कलेवरं प्रायश एव भक्षितं, तथाऽपि मया सुदीर्घेण केशकलापेन सुकोमलपाणिपादेन च एतत् स्त्रिया एव कलेवरमिति विशिष्यैव विज्ञातमिति प्रतिकूलसाक्षिणः वीरकस्याभिमतम्।

( घ ) अहो इति खेदे, विस्मये वा। लोकव्यवहारस्य—लौकिकविचारदर्शनस्य, व्यवहारनीतेरित्यर्थः। वैषम्यं – वैपरीत्यम्। धिक्—निन्दनीयमित्यर्थः ; ज्ञायते सत्यमेव चारुदत्तः निर्दोषः, परन्तु साक्ष्यादिभिर्घटनायाम् अवगतायां सर्व्वमेतद्विरुद्धमिव प्रतिभाति, अतः प्रकृत्या साधावपि असाधुत्वारोपणात् व्यवहारस्य निन्दनीयत्वमिति भावः।

लोकव्यवहारस्य विषमत्वमेव विशदयन्नाह यथेति।—इदं—व्यवहारकं वस्तु, यथा यथा—येन येन प्रकारेण, यत्र यत्र वा निपुणं—सम्यक् सप्रणिधानमित्यर्थः, विचार्य्यते,—निर्णीयते, तादृशवस्तुनः तत्त्वनिर्णयार्थं यत्यते इत्यर्थः, तथा तथा—तेन तेनैव प्रकारेण, तत्र तत्रैव वा, सङ्कटं—सुदारुणं सन्देहबहुलमित्यर्थः, दृश्यते—लक्ष्यते, अस्माभिरिति शेषः. व्यवहारशास्त्रस्य नानाभावजटिलतया सुप्रमाणसापेक्षतया च झटिति तत्त्वनिर्णयस्य दुष्करत्वात् सुविचारेण चारुदत्तस्य निर्दोषत्वप्रतिपादनार्थम् अहं येन मार्गेण गन्तुमभिलषामि, तेनैव दारुणसंशयाकुलो भवामीति तात्पर्य्यार्थः ; व्यवहारस्य—व्यवहाराङ्गभूत-

चारु। [ स्वगतम् ]।—

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति।

एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति॥ २६॥

अधि। आर्य्य-चारुदत्त! सत्यमभिधीयताम्।

चारु।—दुष्टात्मा परगुणमत्सरी मनुष्यो

रागान्धः परमिह हन्तुकामबुद्धिः।

विचारस्य, नीतयः,—नियमपद्धतयः, शास्त्रीयविधानानि इत्यर्थः, अहो इति विषादे, सुसन्नाः,—सुलग्नाः, सम्यक् मिलिता इत्यर्थः, तु—किन्तु, मतिः—मदीया बुद्धिः, पङ्कगता —कर्दमपतिता, गौरिव—सौरभेयीव, सीदति—अवसादं गच्छति, न उत्थातुं शक्नोतीत्यर्थः, अवसन्ना सती तत्त्वार्थविनिर्णये न क्षमा भवतीति यावत्; मद्बुद्धिस्तु चारुदत्तस्य निर्दोषितामेव प्रमापयति घटना तु दण्डनीतिमनुसरति, तदनुसारेण विचार्य्य निरपराधमपि चारुदत्तं निर्म्मोक्तुं न शक्नोमीति भावः। अत्र अधिकरणिकबुद्धेः पङ्कपतितगवा सह अवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारः। वंशस्थविलं वृत्तम्॥ २५॥

विपत्सागरे निमज्जितस्य मम अकस्मादागतेनानेन वीरकेण विपदन्तरं सृष्टमिति "सम्पत् सम्पदमनुबध्नाति, विपच्च विपदम्" इति प्रवादवाक्यस्य याथार्थ्यं प्रतिपादयन्नाह, यथैवेति।—यथा—यद्वत्, मधुपाः,—भ्रमराः, प्रथमे विकाशे एव—प्रथमविकाशसमये एव, विकाशमात्रमेवेत्यर्थः, पुष्पस्येति शेषः, [ प्रथमे विकाशे इत्यनेन अभिनवत्वात् पुष्पस्य मधुपूर्णत्वं व्यज्यते ] समेत्य—सम्भूय, गणशो मिलित्वा आगत्येत्यर्थः, पुष्पं—पुष्पमधु इत्यर्थः, पातुम्—आस्वादितुं, पतन्ति—आगच्छन्ति, पुष्पोपरि उपविशन्तीत्यर्थः, एवं—तथैवेत्यर्थः, मनुष्यस्य—नरस्य, विपत्तिकाले—आपत्समये, छिद्रेषु—रन्ध्रेषु सत्सु, अनर्थाः,—विपदः, बहुलीभवन्ति—अनेकत्वमापद्यन्ते, अविच्छिन्नधारया नानाकारेणाविर्भवन्तीत्यर्थः; अनर्थानां रन्ध्रोपपातित्वेन विपत्काले सर्व्वमेव प्रतिकूलं भवतीति भावः। अत्र विपत्तिकाले मनुष्यस्य अनर्थबाहुल्यरूपादप्रस्तुतात् सामान्यात् चारुदत्तस्य अनर्थबाहुल्यरूपप्रस्तुतस्य विशेषस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, स च रन्ध्रानुसारिणां अनर्थानां कुसुमपातिमधुलुब्धमधुपैः सह अवैधर्म्यसाम्यकथनात् उपमाऽलङ्कारेण संसृज्यते। इह रन्ध्रानुसरणशीलानर्थरूपाणामनुत्कृष्टानां पदार्थानां, मकरन्दलिप्सया रमणीयेषु कुसुमेषु पातुकैर्मधुकररूपैरत्युत्कृष्टपदार्थैः सह साम्यं सर्व्वथा अनौचित्यमेव व्यनक्ति इति उपमागतानुचितार्थत्वदोष उह्यः। उपजातिः वृत्तम्॥ २६॥

दुर्जनानीताभियोगस्य प्रतिहिंसामूलकत्वात् अयाथार्थ्यत्वं प्रतिपादयन् भङ्ग्या स्वनि-

किं यो यत् वदति मृषैव जातिदोषात्
तत् ग्राह्यं भवति ? न तत् विचारणीयम् ? ॥ २७ ॥

अपि च,—

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ? ॥ २८ ॥

आरोपिताभियोगस्य मिथ्यात्वं वक्तुमाह, दुष्टात्मेति।—इह—अस्मिन् संसारे, यः परगुणमत्सरी—परगुणेषु—अन्योत्कर्षेषु, मत्सरः,—द्वेषः, सोऽस्यास्तीति परगुणमत्सरी—परगुणविद्वेषीत्यर्थः. ("मत्सरोऽन्यशुभद्वेषः" इत्यमरः) दुष्टात्मा—दुराशयः, मनुष्यः,—नरः, दुर्जन इत्यर्थः, रागान्धः,—रागेण—वनितादिविषयासक्त्या, क्रोधेन वा, अन्धः,—सदसद्विवेकशून्य इत्यर्थः, तथा परम्—अन्यं, हन्तुं—नाशयितुं, कामः,—अभिलाषः यस्याः तादृशी, बुद्धिः,—मतिः यस्य तादृशः सन् जातिदोषात्—अपकृष्टजातिवशात्, मृषैव—मिथ्या एव, यत्, वाक्यमिति शेषः. वदति—कथयति, अत्र तस्येति पदमध्याहरणीयम्; तत्—मिथ्यावचनं किं ग्राह्यं—सत्यत्वेन स्वीकार्यं, भवति ? तत्—वाक्यं विचारणीयं—सत्यनिर्णययोग्यं, न ?—न भवति किम् ? अवश्यमेव विचार्यमित्यर्थः; शकारवाक्यं सत्यमसत्यं वा इति निपुणमविचार्य मम दण्डविधानान्वेषणं भवादृशामत्यन्तमेवानुचितमिति भावः। यद्वा,—किं ग्राह्यं भवति ? नैवेत्यर्थः; एवञ्च अग्राह्यस्य विचारोऽपि न कर्त्तव्य इत्याह, नेति।—तत्—अग्राह्यवचनं, न विचारणीयं नैव विचारयोग्यम्; मिथ्यात्वेन श्रवणायोग्यस्य वचनस्य प्रमाणग्रहणादिना विचारोऽपि अयुक्त एवेत्यर्थः। अत्र अप्रस्तुतसामान्यात् प्रस्तुतस्य मिथ्यावादिनः शकारस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, तथा परगुणमत्सरिप्रभृतिविशेषणानां शकारवाक्यस्य मिथ्यात्वप्रतिपादनाभिप्रायेण प्रयुक्तत्वात् साभिप्रायत्वेन परिकरस्येयनयोरङ्गाङ्गिभावेन सङ्करः। प्रहर्षिणी वृत्तम् ॥ २७ ॥

स्वस्य निर्दोषित्वं प्रकटयितुमाह, य इति।—यः अहं—चारुदत्त इत्यर्थः, कुसुमितां—सञ्जातकुसुमां, लतामपि—वीरुधमपि, पुष्पहेतोः,—पुष्पार्थम्, आकृष्य—आक्रम्य आकर्षणं कृत्वा इत्यर्थः, कुसुमावचयं—पुष्पचयनं, नैव करोमि—विदधामि, तासां पल्लवच्छेदजनितपीडोत्पादशङ्कयेति भावः; सः अहं, भ्रमरपक्ष-

शकारः। हंहो! अधिअलणभोइआ! किं तुम्हे पक्खवादेण ववहालं पेक्खध? जेण अज्ज वि एशे हदाश-चालुदत्ते आशणे धालीअदि? * (ङ)

अधि। भद्र शोधनक! एवं (च) क्रियताम्। [शोधनकस्तथा करोति (छ)]।

चारु। विचार्य्यतां भो अधिकृताः! विचार्य्यताम्। [इति आसनादवतीर्य्य भूमौ उपविशति]।

शकारः। [सहर्षं नर्त्तित्वा स्वगतम्] ही! अणेण मए कडे पावे अण्णश्श मत्थके णिवाडिदे, ता जहिं चालुदत्ताके उवविशदि, तहिं हग्गे उवविशामि। (ज) [तथा कृत्वा] चालुदत्ता! पेक्ख पेक्ख मं, ता भण भण, "मए मालिदे" त्ति। †

* हंहो! अधिकरणभोजकाः! किं यूयं पक्षपातेन व्यवहारं पश्यत? येनाद्यापि एष हताशचारुदत्त आसने धार्य्यते?

† ही! अनेन मया कृतं पापमन्यस्य मस्तके निपातितम्; तत् यत्र चारुदत्तः उपविशति, तत्राहमुपविशामि। चारुदत्त! पश्य पश्य मां, तत् भण भण "मया मारिता" इति।

कचौ—भृङ्गपक्षवदत्युज्ज्वलनीले इत्यर्थः, सुदीर्घे—सुप्रशस्ते, केशे—कुन्तले, [आधेयाधिकरणे सप्तमी] प्रगृह्य—धृत्वा, रुदतीं—क्रन्दन्तीं, प्रमदां—वरवर्णिनीं, वसन्तसेनामित्यर्थः, कथं—केन प्रकारेण, निहन्मि?—नाशयामि? एतादृशकोमलान्तःकरणस्य मम नैवैतत् कथमपि सम्भवतीति भावः। अत्र कुसुमावचयं प्रति कुसुमितपदार्थस्य हेतुतयोपन्यासात् काव्यलिङ्गमलङ्कारः। वसन्ततिलकं छन्दः॥ २८॥

(ङ) हताशः,—निर्दयः, खल इति वा; यद्वा,—हता—विनष्टा, आशा—जीवनविषयिणीत्यर्थः यस्य सः, प्राणदण्डेन आशु दण्डनीय इति भावः, तादृशश्चारुदत्तः। धार्य्यते—अवलम्ब्यते, उपवेश्यते इत्यर्थः, युष्माभिरिति शेषः; शोक्तवीरकवचनाद्विना स्त्रीहत्याप्रमाणमधिगत्यापि आसनदानेनेदानीमपीमं सत्कुर्व्वते भवन्तः इति प्रत्यक्ष एव पक्षपात इति तात्पर्य्यार्थः।

(च) एवं—शकारोक्तं यथा तथैवेत्यर्थः, निरासनोऽयमिति यावत्।

(छ) तथा करोति—आसनादपसारयति, निरासनीकरोतीत्यर्थः।

(ज) चारुदत्तसमीपे शकारस्योपवेशनं तस्मै स्वप्रभुत्वप्रदर्शनार्थं, परिहास-

चारु। भो अधिकृताः! ["दुष्टात्मा—"इति पूर्वोक्तं पठित्वा सनिश्वासं स्वगतम्]—

मैत्रेय! भोः! किमिदमद्य ममोपघातः?
हा! ब्राह्मणि! द्विजकुले विमले प्रसूता।
हा रोहसेन! न हि पश्यसि मे विपत्तिम्?
मिथ्यैव नन्दसि परव्यसनेन नित्यम्॥ २८॥

वाक्येन पीडनार्थेत्वति बोध्यम्। प्रमापितापराधस्य हि आसनदानेन सत्कारोऽनुचित इति भूमावुपवेशितस्य चारुदत्तस्य समीपं समासने भूमावेव शकारस्यापि उपवेशनं वर्णयता कविना अचिरमेव अस्यापराधिनः दण्डनीयत्वं सूचितमित्यवधेयम्।

सम्प्रति विपत्तौ अनन्यगतिकः स्वजनसम्बोधनपुरःसरं विलपति, मैत्रेय इति।—भो मैत्रेय!—सखे विदूषक! इदम्—एतत्, ममाकस्मिकदुर्घटनमित्यर्थः, किम्?—कथमुपनतमित्यर्थः, इदमिति सामान्येनोक्त्वा तदेव विवृणोति, अद्येति!—अद्य—अस्मिन् दिवसे, मम—मे, सर्वथा निर्दोषस्यापीति भावः, उपघातः,—अनिष्टपातः, विनाशरूप इत्यर्थः, एवंविधे विपत्सागरे निमज्जितो भविष्यामि इति तु प्राक् कदाऽप्यहं न चिन्तितवानिति तात्पर्यं, हा—इति खेदसूचकमव्ययम्; ("हा विषाद-शुगर्त्तिषु" इत्यमरः) ब्राह्मणि!—स्वपत्न्याः सम्बोधनमिदं, विमले—निर्मले, अकलङ्के इत्यर्थः, द्विजकुले—विप्रवंशे, प्रसूता—जाता, असीति शेषः, अकलङ्क-कुलजायाः सत्यास्तव पत्युरीदृशकलङ्कापातेन प्राणदण्डोऽतिदुःसहः त्वया इति भावः, [एतेन सुकुलीनायाः सदाचारपूतायाः अपि ते "अस्याः भर्त्ता अर्थलोभेन स्त्रीहत्याख्यं महापातकं कृत्वा राजदण्डेन प्राणान्तकं दण्डितः" इति जनापवादः यावज्जीवमेव दुरपनेयः, अहो! कष्टम् इति सूचितम्]; हा रोहसेन!—पुत्र-सम्बोधनमिदं, मे—मम, विपत्तिं—प्राणदण्डरूपां विपदं, न हि पश्यसि?—नैव अवलोकयसि? परव्यसनेन—परेण—केवलेन, व्यसनेन—बाल्यसुलभेन क्रीडनेन, नित्यं—सततं, मिथ्यैव—मृषैव, वृथैवेत्यर्थः, नन्दसि—आनन्दमनुभवसि; यद्वा—परं—प्रधानम्, अतीव दुःखजनकतया अतिदारुणमित्यर्थः, व्यसनं—विपत्तिम्, अकाले पितृवियोगरूपमिति भावः, तेन उपलक्षितः सन्, नित्यं—निरन्तरम्, आ-बाल्यादिति यावत्, मिथ्यैव नन्दसि; मिथ्यैवेत्यनेन तवायमानन्दः अचिरमेव विषादे परिणंस्यते इति तात्पर्यार्थो लभ्यते, अतः परम् अतीव दुःखसागरे पतिष्यसीति भावः। प्राणापगमसमये प्राणसमस्य पत्नीपुत्रादेः नामादिग्रहणपुरःसरो विलापः

प्रेषितश्च मया तद्वार्त्ताऽन्वेषणाय मैत्रेयो वसन्तसेना-सकाशं, शकटिकानिमित्तञ्च तस्य (झ) प्रदत्तानि अलङ्करणानि प्रत्यर्पयितुम्। तत् कथं चिरयति ?

[ ततः प्रविशति गृहीताभरणो विदूषकः ]।

विदू। पेसिदोम्हि अज्जचारुदत्तेण वसंतसेणासआसं, तहिं अलंकरणाइं गेण्हिअ, जधा "अज्ज मित्तेअ! वसंतसेणाए वच्छो रोहसेणो अत्तणो अलंकारेण अलंकरिअ जणणीसआसं पेसिदो, इमस्स आहरणं दादव्वं, (ञ) ण उण गेण्हिदव्वं, ता

* प्रेषितोऽस्मि आर्य्य-चारुदत्तेन वसन्तसेनासकाशं, तत्रालङ्करणानि गृहीत्वा, यथा "आर्य्य मैत्रेय! वसन्तसेनया वत्सो रोहसेन आत्मनोऽलङ्कारेणालङ्कृत्य जननी-

कथञ्चिदेव सुखमुत्पादयति इति पुत्रादीन् स्वजनानुद्दिश्य एवं विलापः कृत इति बोध्यम्; [ "परव्यसनेन" इत्यत्र "बत व्यसनेन" इति पाठान्तरे—बत इति खेदसूचकमव्ययम्; हा इति खेदद्योतकाव्यये सत्यपि पुनः बतपदोपादानकृतश्च अयं पाठः न समीचीनतया प्रतिभासते, तथा पाठे स्थिते तु—कथितपदत्वस्य विषादे विस्मये क्रुधि च गणत्वाङ्गीकारात् बत्तुश्चात्र विषादयत्तत्वात् कथञ्चित् समाधातुमपि शक्यते ]। वसन्ततिलकं वृत्तम्॥ २९॥

(झ) तद्वार्त्तान्वेषणाय—तस्याः,—वसन्तसेनायाः, वार्त्ता—"कथं पुष्पकरण्डकजीर्णोद्यानं नागता" इति वृत्तान्तः, तस्या अन्वेषणम्—अनुसन्धानं, परिज्ञानमित्यर्थः तस्मै। तस्य—रोहसेनस्य [ इति शेषे षष्ठी ]। शकटिकानिमित्तं—स्वर्णशकटिकानिर्म्माणाय इत्यर्थः, [ "तस्य" इत्यत्र "तस्याः" इति पाठे—तस्याः,—वसन्तसेनायाः इति सम्बन्धमात्रविवक्षया षष्ठी तया इत्यर्थः, "प्रदत्तानि" इत्यनेनान्वयः; एष एव पाठः सम्यक्तया प्रतिभाति, यतः तस्य इति तच्छब्दवाच्यस्य रोहसेनस्य पूर्व्वमनुपात्तत्वात् वसन्तसेनायाश्च पूर्वं प्रक्रान्तत्वात्, प्रदत्तानि इति क्रियापदस्य कर्तृसाकाङ्क्षतया च वसन्तसेनायाः एवाकाङ्क्षायाः युक्तत्वाच्च ]।

(ञ) अस्याः,—वसन्तसेनाया इत्यर्थः। [ लल्लादीक्षितस्तु "इमस्स" इति प्राकृतस्य "अस्य" इति संस्कृतं पठित्वा रोहसेनस्य इत्यर्थं कृतवान्, स च न मनोरमः। "इमस्स" इत्यत्र "इदं से" इति तु साधुतया गम्यते ]। दातव्यं—प्रत्यर्पयितव्यम्।

समप्पेहि" त्ति। ता जाव वसंतसेणा सआसं ज्जेव गच्छामि। [परिक्रम्यावलोक्य च आकाशे] कधं भावरेभिलो? भो भाव-रेभिल! किं णिमित्तं तुमं उव्विग्गा (ट) उव्विग्गो विअ लक्खी-असि? [आकर्ण्य] किं भणासि?—"पिअवअस्सो चारुदत्तो

सकाशं प्रेषितः, अस्या आभरणं दातव्यं न पुनर्ग्रहीतव्यं, तत् समर्पय" इति। तत् यावत् वसन्तसेनासकाशमेव गच्छामि। कथं भाव-रेभिलः? भो भाव रेभिल! किं निमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे? किं भणसि?—"प्रियवयस्यश्चारुदत्तः

(ट) उद्विग्नः—उद्भ्रान्तः, व्याकुलचित्त इत्यर्थः। चारुदत्तेनैव वसन्तसेना निहतेति अधिकरणिकानां दृढतरप्रत्ययोत्पादनार्थं कविना सालङ्करणस्यैव विदूषक-स्यात्र प्रवेशोऽकारि; तथा च, किमर्थं हि विदूषकेण अलङ्करणजातं प्रत्यर्पयितुमेव गच्छता अगत्वैव तद्गृहम् अधिकरणं प्रविष्टमिति पूर्व्वापरासम्बद्धांशस्य सुसङ्गतिं कर्त्तुं "भाव रेभिल" इति सम्बुद्धिपुरःसरं विदूषकमुखेन "किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्॥" इत्युक्तलक्षणेन आकाशभाषितेन "किं निमित्तम्" इत्यादिवाक्यमुदीरितमिति। एतेनैतदेवात्र प्रतीयते यत् भाव-रेभिलो हि पथि वसन्तसेनार्थे अलङ्करणजातं प्रत्यर्पयितुं गच्छन्तं विदूषकम् अधिकरणे चारुदत्तस्य आह्वानम् अकथयदिति; तत एवासौ प्रिय-सुहृदश्चारुदत्तस्याकस्मिकीमापदमाशङ्क्य व्यग्रमनाः वसन्तसेनागृहमगत्वैव, तदीयाल-ङ्करणकानि गृहे संस्थाप्य अधिकरणे गमने कालक्षेपम् आशङ्कमानः त्वरितपदेन तेनैव सार्द्धं विचारमण्डपं प्रातिष्ठत। यदा त्वधिकरणिकाः गृहस्थं चारुदत्तं विचारालयमाजुहुवुः, ततः किञ्चित् प्रागेव विदूषकः चारुदत्तगृहात् अलङ्करणभाण्डं गृहीत्वा वसन्तसेनासदनाभिमुखं प्रतस्थे। तदानीं वसन्तसेना तु गृहे नासीत्, यतः सा शकारकृतनिकारापनोदनार्थं संवाहकेन भिक्षुणा तद्धर्म्मभगिन्याः मठे संरक्षिता इति तु कविनैवावेदितम्; एतत् सर्व्वमजानती तज्जननी विचारावसरे प्राड्विवाक-समक्षं, वसन्तसेना चारुदत्ताभिसरणार्थमेव गतवतीत्येतावन्मात्रमेवोक्तवती; विचार-कस्तु कुत्रापि कथमपि तस्याः सन्धानमनधिगत्य, पादपपातहतायाः स्त्रियाः कलेवरं, प्रतिकूलसाक्षिणोः वीरकशकारयोः वचसा वसन्तसेनाया एवेति मन्यमानः प्रमाणबल-माश्रित्यैव चारुदत्तं दण्डितुमिच्छुरभवदिति। भावरेभिलस्तु श्रेष्ठिचत्वरवास्तव्यः चारुदत्तादीनामन्तरङ्गः कश्चित् सुगायकः; तस्मात् किल चारुदत्तः सङ्गीतरसमनु-

अधिअरणमंडवे सद्दावीअदि" त्ति? ता ण हु अप्पेण कज्जेण (ठ) होदव्वं। [विचिन्त्य] ता पच्छा (ड) वसंतसेणा-सआसं गमिस्सं, अधिअरणमंडवं दाव गमिस्सं। [परिक्रम्यावलोक्य च]

अधिकरणमण्डपे शब्दायते" (आहूयते) इति? तत् न खलु अल्पेन कार्य्येण भवितव्यम्। तत् पश्चात् वसन्तसेनासकाशं गमिष्यामि, अधिकरणमण्डपं तावत् गमि-

भवितुं कदाचित् तद्भवनमगमत्, एतत्तु तृतीयेऽङ्के रेभिलसङ्गीतश्रवणप्रशंसावसरे विज्ञापितम्; चतुर्थे तु शर्व्विलकः वसन्तसेनीदार्य्येण प्रियतमां मदनिकामधिगत्य, सपदि सिद्धादेशप्रत्ययेन शासिता पालकेन कारागृहे बद्धं प्रियसखमार्य्यकमुपश्रुत्य, तद्विमोचनाय चलचेताः अस्यैव विदुषः रेभिलस्य गृहे चेटेन तां मदनिकां प्रेषित-वान्। ततः प्रभृत्यसौ शर्व्विलकः बद्धमार्य्यकं कारागृहादुन्मोचयितुं राज्ये च प्रतिष्ठापयितुं विविधकूटमन्त्रणायां लिप्तोऽभवदिति तु तत्रैवाङ्के शर्व्विलकमुखेनोप-वर्णितं कविना। आर्य्यकोद्धरणार्थं यावाकाले मदनिकायाः रेभिलगृहे संस्थापन-दर्शनात् रेभिलस्तेषां हितैषी आसीदिति स्फुटतया विज्ञायते। विदूषकाय चारुदत्त-विचारकथाविज्ञापनेन, अस्यां हि घोरायामापदि रेभिल एव चारुदत्तस्य प्रिय-साधनार्थम् अन्तर्विद्रोहकारिभिः शर्व्विलकादिभिर्नियुक्त आसीदित्यवगम्यते; एत-त्सर्वोक्तस्यानुक्तस्य च कथांशस्य सामञ्जस्यं सम्यक्तया संरचितं कविना रेभिलकथामव-तार्य्य विचारप्रस्तावावसरे आकाशभाषितमेतदवतारितमिति सूक्ष्मधीभिरवधेयम्।

(ठ) शब्दायते—आहूय नीयते इत्यर्थः। [शब्दं करोति इत्यर्थे कर्त्तरि एवायं प्रयोगः, न तु कर्म्मणि, तस्मिन् तु यगभावस्य नियतत्वात्; तथा सामाधुरेवायं प्रयोगः, शब्दाय्यते इत्येव साधुः, कर्म्मणि व्यवहारदर्शनात्; शब्दाय्यते इत्यत्र शब्दायते इति लिपिकरप्रमादवशात् आयातमित्यनुमीयते। कुत्रचित् पुस्तके "सद्दावीअदि" इति प्राकृतस्य "आहूयते" "आहूतः" इति संस्कृतानुवादः दृश्यते, तत्र न काचि-दनुपपत्तिरिति ध्येयम्] अल्पेन—सामान्येन इत्यर्थः। कार्य्येण—प्रयोजनेन, हेतुना इति यावत् ("कार्य्यं हेतौ प्रयोजने" इति मेदिनी) तुच्छप्रयोजनसाधनार्थमिति यावत्, सर्व्वजनादृतस्य महामान्यस्य चारुदत्तस्य राजनियुक्तैः पुरुषैः अधिकरणमण्डपे आह्वानस्य कदाऽपि अभूतपूर्व्वतया इदानीमिदमाह्वानं न सामान्यप्रयोजनार्थमिति सम्भावयामीति भावः।

(ड) पश्चात्—अधिकरणमण्डपात् प्रत्यावर्त्तनानन्तरम्;

इदं अधिअरणमंडवं, ता जाव पविसामि। [प्रविश्य] सुहं अधिअरण-भोइआणं। कहिं मम पिअवअस्सो? *

अधि। ननु! एष तिष्ठति। (ढ)

विदू। वअस्स! सोत्थि दे? (ण) *

चारु। भविष्यति। (त)

विदू। अवि क्खेमं दे? †

चारु। एतदपि भविष्यति।

विदू। भो वअस्स! किं णिमित्तं उव्विग्गो उव्विग्गो विअ लक्खीअसि? कुदो वा सद्दाइदो? ‡

चारु। वयस्य!—

मया खलु नृशंसेन परलोकमजानता।
स्त्री रतिर्वाऽविशेषेण शेषमेषोऽभिधास्यति॥ ३०॥

---

ष्यामि। अयमधिकरणमण्डपः, तत् यावत् प्रविशामि। सुखम् अधिकरणभोजका-नाम्। कुत्र मम प्रियवयस्यः?

* वयस्य! स्वस्ति ते? † अपि क्षेमं ते?

‡ भो वयस्य! किं निमित्तम् उद्विग्न उद्विग्न इव लक्ष्यसे? कुतो वा शब्दायितः (आहूतः)?

---

(ढ) ननु—सम्बोधने, प्रत्युक्तौ वा। एषः,—चारुदत्तः। तिष्ठति, अत्र इति शेषः।

(ण) ते-तुभ्यम्; [स्वस्तिशब्दयोगात् "नमः स्वस्ति स्वाहा—" (२।३।१६ पा०) इति चतुर्थी]।

(त) भविष्यति—जनिष्यते, अचिरमेव इति शेषः, वर्त्तमानदशायान्तु न वर्त्तते; दैवदुर्विपाकात् इदानीमेवं विपत्सागरे निमग्नस्य असहायस्य मे कथमपि मङ्गलसम्भावना नासीत्, किन्तु सम्प्रति भवादृशस्याकृत्रिमस्य सुहृदो लाभादचिरादेव मङ्गलसम्भावना जातेति भावः। इदन्तु निर्वहणसन्धेर्ग्रथनं नामाङ्गं वेदितव्यं, भाविनः स्वस्ति-क्षेमप्राप्तिरूपार्थद्वयस्य उपक्षेपपुरःसरं ग्रहणात्; तथा हि,—"उपन्यासस्तु कार्य्याणां ग्रथनम्" इति दर्पणः।

मैत्रेयप्रश्नस्य उत्तरं दातुं लज्जाऽपवादस्य स्वमुखेन सम्पूर्णतया कीर्त्तनाक्षमत्वात्

विदू। किं किं ? *

चारु। [ कर्णे ] एवमिवम्।

विदू। को एव्वं भणादि ? †

चारु। [ संज्ञया शकारं दर्शयति ] ननु एष तपस्वी हेतुभूतः, कृतान्तो मां व्याहरति। (थ)

विदू। [ जनान्तिकम् ] एव्वं कीस ण भणीअदि, गेहं गदे त्ति ? ‡

चारु। उच्यमानमपि अवस्थादोषात् न गृह्यते। (द)

* किम् किम् ? † क एवं भणति ? ‡ एवं कथं न भण्यते, गृहं गतेति ?।

ंशतः कीर्त्तयन्नाह, मयेति।—परलोकं—परः,—श्रेष्ठः, लोकः,—भुवनं, स्वर्गादिकमामुष्मिकं भुवनमिति यावत्, अजानता—अबुध्यमानेन, अगणयता इत्यर्थः, नृशंसेन—निष्ठुरेण, मया—चारुदत्तेनेत्यर्थः, खलु—निश्चितं, स्त्री—योषित्, वा—अथवा, अविशेषेण—अभेदेन, रतिः,—कामपत्नी, रत्या अविशेषा काचित् कामिनीत्यर्थः, [ "रतिर्वा" इत्यनेन वसन्तसेना रूपलावण्याद्यातिशय्यात् कामपत्न्या अन्यूना इति सूच्यते। "स्त्री रतिर्वाऽविशेषेण" इत्यत्र "स्त्री रतिश्चाविशेषेण" इति पाठान्तरे—अविशेषेण स्त्री रतिश्च उभे एवेत्यर्थः ] किं कृता इत्याकाङ्क्षायामनुक्तमर्थमाह, शेषम्—अवशिष्टं दुर्वचनीयमंशमित्यर्थः, "घातिता" इति पदमिति यावत्, एषः, शकार इति शेषः, अभिधास्यति—कथयिष्यति। अत्र "मया नैव घातिता" इति विशेषार्थप्रतिपत्तये "शेषमेषोऽभिधास्यति" इत्यनेन "मया घातिता" इति अभियोगविषयीभूतस्य स्त्रीहननरूपस्य अनिष्टार्थस्य विध्याभासीकरणात् आक्षेपालङ्कारभेदः "अनिष्टस्य तथाऽर्थस्य विध्याभासः परो मतः" इति दर्पणोक्तेः ; किञ्च, वसन्तसेनायाः रत्या सह भेदेऽपि अभेदाध्यवसानात् अतिशयोक्त्यलङ्कारः, तदेतयोः परस्परनैरपेक्ष्यात् संसृष्टिः। पाठान्तरार्थे तु—प्रकृताप्रकृतयोः स्त्रीरत्योः एकत्र समावेशात् दीपकालङ्कारो वेति ज्ञेयम्। पथ्यावक्त्रं वृत्तम्॥ ३०॥

( थ ) तपस्वी—वराकः, निर्दोष इति यावत्। हेतुभूतः,—निमित्तमात्रम्, उपलक्ष्यस्वरूप इति यावत्। कृतान्तः,—यमः, दैवं वा ( "कृतान्तो यमदैवयोः" इति कोषः ) मां—मां लक्ष्यीकृत्य इत्यर्थः। व्यवहरति—अनेनैव वसन्तसेना हतेति कथयति। [ एतेन आततायिनि अपि शकारे प्रतिहिंसाविरहदर्शनात् कृपापरायणस्य चारुदत्तस्य सुमहत् औदार्यं कारुण्यञ्च व्यक्तीकृतमिति बोध्यम् ; अपि च मिथ्याऽभियोगाश्रयणात् प्राणदण्डार्हः अपि शकारः अस्यैव महीयसः गुणगरीयस्तया संरक्षितो भविष्यतीति व्यज्यते ]।

( द ) अवस्थादोषात्—महापापफलभूतदारिद्र्यरूपदशाविपर्ययादित्यर्थः। गृह्यते

विट्। भो भो अज्जा ! जेण दाव पुरट्ठावण-विहारारामदेउल-तड़ाग-कूव-जूवेहिं अलंकिदा णअरी उज्जइणी, सो अणीसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति !! (ध) [सक्रोधम्] अरे रे काणेलीसुदा ! राअस्साल-संठाणआ ! उस्सुंखलआ ! किदजण-दोसभंडआ ! बहुसुवण्ण-मंडिद-मक्कड़आ ! भण भण मम अग्गदो ; जो दाणिं मम पिअवअस्सो कुसुमिद-माधवीलदं पि आकड्ढिअ कुसुमावचअं ण करेदि,

* भो भो आर्य्याः ! येन तावत् पुरस्थापन-विहारारामदेवकुल-तड़ाग-कूप-यूपैरलङ्कृता नगरी उज्जयिनी, सः अनीशः अर्थकल्यवर्त्तकारणात् ईदृशमकार्य्यम् अनुतिष्ठतीति !! अरे रे काणेलीसुत ! राजश्याल-संस्थानक ! उच्छृङ्खलक ! कृतजनदोषभाण्ड ! बहुसुवर्ण-मण्डित-मर्कटक ! भण भण ममाग्रतः ; य इदानीं मम प्रियवयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति,

—सत्यत्वेन स्वीक्रियते, विश्वस्यते इत्यर्थः ; दरिद्राणां सत्यवाक्यमपि मिथ्यात्वेन परिणमतीति भावः।

(ध) पुरेति।—पुराणां—गृहाणां, स्थापनं—प्रतिष्ठाकरणं, पान्थशालानिर्माणमित्यर्थः, विहारः,—बौद्धमठः, आरामः,—उपवनं, देवकुलं—देवानां—हरिहरादिविग्रहाणां, कुलं—भवनं, देवमन्दिरम् इत्यर्थः, तड़ागः,—सरोवरः, पञ्चशतान्यूनधनुर्मितः द्विसहस्रान्यूनहलचैवफलकः पञ्चचत्वारिंशद्धस्तान्यूनदीर्घविस्तारः जलाशय इत्यर्थः, कूपः,—उदपानः, वृत्ताकारस्वल्पपरिसरातिगभीरजलाशयविशेष इत्यर्थः, यूपः,—यज्ञीयपशुबन्धनदारुविशेषः एतैः, ( पृथ्वीधरस्तु कूपयूपेति पदद्वयं लौकिकोक्तिमाह )। अनीशः,—अधमः, इदानीं दरिद्रः भूत्वा इत्यर्थः। अनुतिष्ठति ?—आचरति किम् ? ईदृशमहात्मनः अखिललोकहितार्थमिष्टापूर्त्तादिकर्म्मकारिणः एवंविधनृशंसवदाचरणं सम्भवति किम् ? इत्यभिप्रायः ; नैवैतत् कथमपि सम्भवतीति भावः। कल्ये—प्रभाते, वर्त्तन्ते ये ते कल्यवर्त्ताः—प्रभातकालमात्रस्थायिनः, क्षणस्थायिन इत्यर्थः. [ वर्त्तते इत्यस्य ; पचादित्वात् कर्त्तरि अच् ] तथाभूताः ये अर्थाः विभवाः इति भावः, [ राजदन्तादित्वात् परनिपातः ] तेषां कारणात् अचिरस्थायिधनार्थमिति तात्पर्य्यार्थः ; यो हि पुरा धनानि तृणाय मन्यमानः अर्थिभ्यस्तेभ्यः अजस्रं तानि व्यकिरत्, इदानीं किमसौ तेषु लुब्धः ? इति वक्तुराशयः।

कदा वि आकिट्टिदाए पल्लवच्छेदो भोदि त्ति, सो कधं एरिसं अकज्जं उहअ-लोअविरुद्धं करेदि ? चिट्ठ रे कुट्टणिपुत्ता ! चिट्ठ, जाव एदिणा तव हिअअ-कुड़िलेण (न) दंडकट्ठेण मत्थअं दे सदखंडं करेमि। *

शकारः। [सक्रोधम्] शुणंतु शुणंतु अज्जमिश्शा, चालुदत्तकेण शह मम विवादे ववहाले वा, ता कीश एशे काकपद-शीशमत्थका मम शिले शदखंडे कलेदि ? मा दाव (प) ले दाशीए पुत्ता दुट्टवड़का ! *

कदाऽपि आकृष्टतया पल्लवच्छेदो भवतीति, स कथमीदृशमकार्य्यमुभयलोकविरुद्धं करोति ? तिष्ठ रे कुट्टनीपुत्र ! तिष्ठ, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि।

* शृण्वन्तु शृण्वन्तु आर्य्यमिश्राः, चारुदत्तेन सह मम विवादो व्यवहारो वा, तत् किमर्थमेष काकपदशीर्ष-मस्तकः मम शिरः शतखण्डं करोति ? मा तावत् रे दास्याः पुत्र दुष्टवटुक !

(न) उच्छृङ्खलक !—नियन्त्ररहित ! असंयतचित्त ! असंयतभाषिन् ! इति वाऽर्थः। कृतजनदोषभाण्ड !—कृतम्—आविष्कृतं, जनानां—लोकानां, निष्पापाणामिति भावः, दोषाणां—पापानाम् असञ्जातानामपीति भावः, भाण्डम्—आधारः येन, तस्य सम्बुद्धौ, अयथा दोषकट्टिग्त्यर्थः ; यो हि मक्षिकाप्रायः सदैव लोकानाम् असतोऽपि दोषान् आविष्कुर्व्वन् तिष्ठति तादृश इति तात्पर्य्यार्थः. [केचित्तु "किद-जणदोसभंडआ !" इति प्राकृतस्य "कृतजनदोषभण्ड !" इति संस्कृतं कृत्वा कृत-जनदोषश्चासौ भण्डश्चेति [विशेषणसमासः] कृतजनदोषभण्डः,—परदोषाविष्कर्त्ता अश्लीलभाषी चेत्यर्थः. ("भाँड़" इति लोके) इत्येवं व्याचक्षते ]। कुसुमितार्मिति। —पल्लवच्छेदो भवतीति हेतोः कुसुमावचयं न करोतीत्यर्थः। उभयलोकविरुद्धम्—इहलोकपरलोकभ्रंशकारकम्। हृदयकुटिलेन—हृदयवत्—अन्तःकरणवत्, कुटिलेन —वक्रेण।

(प) काकपदशीर्षमस्तकः, व्याख्यातोऽयं ५६ पृष्ठे ; यद्वा,—काकस्य पदं—पदमानं, काकस्य पदपरिमितदीर्घमिति यावत्, (तत्परिमितदीर्घायाः शिरसि शिखायाः स्थापनस्य श्रुतौ विहितत्वात्। काकपदाकारमिति वा, शीर्षं—शिरो-

विदू। [दण्डकाष्ठमुद्यम्य पूर्व्वोक्तं पठति]।

शकारः। [सक्रोधमुत्थाय ताडयति]।

विदू। [प्रतीपं ताडयति। अन्योऽन्यं ताडयतः। विदूषकस्य कक्षदेशा-दाभरणानि (फ) पतन्ति]।

शकारः। [तानि गृहीत्वा दृष्ट्वा ससाध्वसम् (ब)] पेक्खन्तु पेक्खन्तु अज्जा, एदे क्खु ताए तवश्शिणीए केलका (भ) अलंकाला। [चारुदत्तमुद्दिश्य] इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा, वावादिदा (म) अ। *

---

* पश्यन्तु पश्यन्तु आर्य्याः, एते खलु तस्यास्तपस्विन्या अलङ्काराः। अस्य अर्थकल्यवर्त्तस्य कारणादेषा मारिता, व्यापादिता च।

मध्यस्था शिखा इत्यर्थः, मस्तके यस्य सः, इदन्तु भाषणं विदूषकस्यानादरज्ञापकम्। मा तावत्—न तावत् मामेवं प्रहर्त्तुं शक्नोषि इति मनसाऽपि न तावत् चिन्तय इति भावः।

(फ) प्रतीपं—विपरीतम्। ताडयति—मारयति, प्रतिप्रहरतीत्यर्थः। कक्ष-देशात्—बाहुमूलात्। आभरणानि—वसन्तसेनया रोहसेनाय दत्तानि अलङ्कर-णानि।

(ब) ससाध्वसं—ससम्भ्रमं. ["सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी। अर्थनिमित्तं चारुदत्तेन वसन्तसेना मारिता इति अभियोगस्य सत्यता-प्रमापकस्य तस्यैव अलङ्कारजातस्य चारुदत्तमित्रस्य विदूषकस्यैव सकाशात् अप्रत्या-शितभावेन आविर्भावात् अतिहर्षेणात्र शकारस्य सम्भ्रमो बोध्यः]; यद्वा,—ससाध्वसं —सभयम्; विदूषकात् पुनःप्रहारसम्भावनया, दोषिणां चित्तस्य सदैव उत्कण्ठित-त्वात् अलङ्कारागमवृत्तान्तं चारुदत्तश्चेत् सर्व्वसमक्षं यथायथं प्रकाशयेदिति सत्य-प्रकाशाशङ्कया वा अत्रास्य ससाध्वसत्वमित्यवगन्तव्यम्।

(भ) तपस्विन्याः—अनुकम्पनीयायाः, निरपराधिन्या इति यावत्, ("तपस्वी तापसे चानुकम्प्ये विषु" इति मेदिनी)।

(म) एषा—अभियोगविषयभूता वसन्तसेना इत्यर्थः। मारिता—विनाशिता, अनेन इति शेषः। व्यापादिता इति शकारभाषित्वेन पुनरुक्तमपि न दोषावहम्।

[ अधिक्षताः सर्वे अधोमुखाः स्थिताः ]।

चारु। [ जनान्तिकम् ]—

अयमेवंविधे काले दृष्टो भूषणविस्तरः।
अस्माकं भाग्यवैषम्यात् पतितः पातयिष्यति ॥ ३१ ॥

विदू। भोः ! कीस भूदत्थं (य) ण णिवेदीअदि ? *

चारु। वयस्य !—

दुर्बलं नृपतेश्चक्षुर्नैतत् तत्त्वं निरीक्षते।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥ ३२ ॥

* भोः ! किमर्थं भूतार्थो न निवेद्यते ?

अकस्मात् विदूषकबाहुमूलात् भूषणपतनमालोक्य अभियोगस्य अशुभं परिणामं चिन्तयन्नाह, अयमिति।—एवंविधे—ईदृशे, वसन्तसेनाया हत्यापराधेनाभियुक्तस्य मम निदारुणविपज्जालजटिले इति यावत्, काले—समये, अस्माकं—ममेत्यर्थः, [अत्राविशेषणस्यास्मद एकत्वे "अस्मदो द्वयोश्च" (१।२।५९ पा०) इति अनुशासनेन बहुवचनम्] भाग्यवैषम्यात्—दौर्भाग्यात्, पतितः,—विदूषकस्य कक्षदेशात् प्रभ्रष्ट इत्यर्थः, [पतितपदेन अत्र निर्दोषे मयि मिथ्याहत्याभियोगानयनात् उभयलोक-पतितः महापातकी शकारश्च व्यज्यते] अत एव दृष्टः—अवलोकितः, राजपुरुषै-रिति शेषः अयं—परिदृश्यमान इत्यर्थः, भूषणविस्तरः,—अलङ्कारसमुदायः, पत-नात् भूमौ विस्तृतिं गताः अलङ्कारा इत्यर्थः, ("विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः" इत्यमरोक्तौ विस्तरशब्दस्य वाग्विस्तरार्थे एव उपात्तत्वेऽपि शब्दरत्नाकरादौ साधारणप्रसृत्यर्थेऽपि उपादानान्न कश्चित् दोष इति बोध्यम्) पातयिष्यति—विनाश-यिष्यतीत्यर्थः, मामिति शेषः ; निरपराधस्यापि मे अनेन भूषणेनैव अपराधः सुतरां सप्रमाणः भविष्यति इति समुदिततात्पर्यम्। पथ्यावक्त्रं वृत्तम् ॥ ३१ ॥

(य) भूतः,—सत्यः, अतीतो वा, ("युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः) अर्थः,—विषयः, अभिधेयो वा, ("अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च—" इति मेदिनी) यथार्थविषयः अतीतविषयो वा इत्यर्थः, वसन्त-सेनया रोहसेनाय अलङ्कारप्रदानरूपसत्यघटनारूप इति यावत्।

अवस्थाया एव विश्वासास्पदतया ईदृग्दुरवस्थस्य मे प्रकृतार्थावतारेण स्वस्य निर्दोषत्वप्रमापणप्रयासो व्यर्थ इत्याह, दुर्बलमिति।—नृपतेः,—राज्ञः, चक्षुः,—नेत्रं,

अधि। कष्टं भोः ! कष्टम् !!—

अङ्गारक-विरुद्धस्य प्रक्षीणस्य बृहस्पतेः।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ ३३ ॥

---

दुर्बलं—बलहीनं, चारचक्षुषैव दर्शनात् स्वयं तत्त्वदर्शने अक्षममित्यर्थः, एतत्—राजचक्षुः, तत्त्वं—याथार्थ्यं, प्रकृतघटनामिति यावत्; यद्वा,—एतत्तत्त्वम्—एतस्य—उपस्थितविवादस्य, तत्त्वं—याथार्थ्यं, न निरीक्षते—न पश्यति, नियतपरमुखापेक्षिणः राजानो हि इदमेवात्र तत्त्वमिति स्वयं विनिर्णेतुं न शक्नुवन्ति इति तात्पर्य्यम्; अथ तत्त्वार्थविजिज्ञासारहिते जने अनिच्छया यथाकथञ्चित् प्रकृतार्थकथनेऽपि तस्य तादृशार्थबोधशक्तिविरहात् इष्टार्थप्राप्तिसम्भावना दूरमास्तां, प्रत्युत तद्विरुद्धफलापतनसम्भावनैवेत्याह, केवलमिति।—वदतः,—"न मया मारिता, नापीदमलङ्करणं मयाऽपहृतम्" इति कथयतः, मम—मे, केवलम्—एकमेव, दैन्यं—दीनताभावं, व्यर्थः कातरताप्रकाश एव, न तु काचित् फलोदयसम्भावनेत्यर्थः, तथा अश्लाघ्यं—राजदण्डस्यातिनिन्दितत्वात् अप्रशंसनीयं, सर्व्वजनविगर्हितमित्यर्थः; यद्वा—दैन्यमिति क्रियाविशेषणं, वदतः इत्यस्य कर्म्म वा; तथा च, दैन्यं—कातरताप्रदर्शनपूर्व्वकं यथा तथा वदतः, स्वदीनभावं प्रकाशयतो वा, "वसन्तसेना मया न मारिता" इति सविनयं सत्यं कथयतोऽपि, मम केवलम्—एकम्, अश्लाघ्यं—निन्दनीयं, (मन्योरश्लाघ्यत्वन्तु दुष्कृतकारित्वापवादजन्यत्वात्; परोपकारादिसत्कर्म्मजन्यमरणस्य तु कीर्त्तिजनकत्वमेव, "धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्" इत्यादिस्मरणात्) मरणं—मृत्युः, भवेत्—सम्पद्येत; तत्त्वार्थाविजिज्ञासमाने अविवेचके च जने सत्यकथनं विडम्बनं कातरताप्रकटनमात्रपर्य्यवसायि च भवति, न तु कथमपि प्राणदण्डान्निष्कृतिरिति भावः। पथ्यावक्त्रं वृत्तम् ॥ ३२ ॥

चारुदत्तस्य अकृत्रिमबन्धोर्विदूषकात् अभियोगविषयीभूतानाम् अलङ्काराणामागमदर्शनात् तस्मिन् निरपराधत्वेन पूर्वं जातप्रत्ययतयाऽतिविषण्णोऽधिकरणिकः खिद्यन् आह, अङ्गारकेति।—अङ्गारकेण—मङ्गलेन, पापग्रहेण इत्यर्थः, विरुद्धस्य—विपरीतस्य, कुजदुष्टेः इत्यर्थः; प्राचीनाः ज्योतिषिकाः एव एवमामनन्ति यत्, अङ्गारकः बृहस्पतेः शत्रुरिति; वराहमिहिरादयः नव्यास्तु तयोः एवं विरोधिभावं न स्वीकुर्व्वन्ति; तथा हि बृहज्जातके,—"जीवेन्दूष्णकराः कुजस्य सुहृदः" इति; स्थानविशेषस्थितत्वे तु तात्कालिकशत्रुत्वमस्य स्वीकुर्व्वन्त्येव, तेन च नात्र तन्मतेऽपि विद्याविरुद्धतादोषावसरः, यद्वा,—विरुद्धः अङ्गारकः यस्य तस्य, [आहिताग्न्यादित्वात्

श्रेष्ठि-कायस्थौ। [विलोक्य वसन्तसेनामातरमुद्दिश्य] अवहिदा दाव अज्जा एदं सुवस्सभंडअं अवलोएदु, सो ज्जेव (२) एसो ण वि त्ति ?। * •

• अवहिता तावदार्य्या इदं सुवर्णभाण्डमवलोकयतु, तदेवेदं न वेति ?।

वैकल्पिकः पूर्व्वनिपातः। एतेन मङ्गलग्रहविरोधेन शकारविरोध एव ध्वन्यते ; तथा हि कुजस्य लग्नादिफलं—"प्रथमगृहगः क्षौणीसूनुः करोत्यरिजं भयम्" इति ; "जनयति मरणस्थः शस्त्रधारां धराजो दिशति च नवमस्थः कार्य्यपीड़ामतीव" इत्यादि च] प्रक्षीणस्य—दुर्बलस्य रवेरस्तांशगतत्वेन नीचस्थत्वेन वा स्वशक्तिहीनस्येत्यर्थः ; [प्रक्षीण-पदेन सौभाग्यसूर्य्यास्तगमनेन धनाभावात् व्यवहारे साक्षिणां सहायभूतानां व्यवहारा-जीवानाञ्चाभावः प्रतीयते] वृहस्पतेः,—सुरगुरोः. सात्त्विकब्राह्मणग्रहस्य इति भावः, [एतेन अतिधार्म्मिकः चारुदत्तो ध्वन्यते] यद्वा,—वृहस्पतेः,—वृहस्पतिग्रहात्, प्रक्षीणस्य—वृहस्पतिबलरहितस्येत्यर्थः, कस्यचिदिति शेषः, पार्श्वे—उपान्ते, अयं—परिदृश्यमानः, अपरः,—मङ्गलादन्यः कश्चित् इत्यर्थः, [अमङ्गल इति च ध्वन्यते] ग्रहः,—विरुद्धग्रहः, [एतेन विदूषककक्षच्युतालङ्कारः व्यज्यते] धूमकेतुरिव—उत्पातसूचकग्रहविशेष इव, उत्थितः,—उद्गतः, उपस्थित इत्यर्थः ; धूमकेतोरुदयः हि सर्व्वाधिकमेवोपप्लवं जनयति ; तथा हि कुमारे,—"उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" इति। धूमकेतोर्ल्लोकोप-द्रावकत्वमाह पराशरः —"धूमकेतुर्यदा दृश्येत् (?) तस्य वक्ष्यामि लक्षणम्। स हन्ति शिखया योधान् राजानं मन्त्रिणं जनान्। रेवत्याश्वयुजञ्चैव नक्षत्रं यमदैवतम्। केतवो यत्र दृश्यन्ते यमपुच्छास्त्रयोदश॥ यमपुच्छेषु दृष्टेषु लोकानां सङ्क्षयो ध्रुवम्। चतुर्व्विधानां भूतानां संशयो जायते महान्॥" इति। यदि मङ्गलग्रहः विरुद्धः भवति, वृहस्पतिरपि तुङ्गस्थानास्थिततया दुर्ब्बलः अस्तमितो वा, ("किं कुर्व्वन्ति ग्रहाः सर्वे यस्य तुङ्गी वृहस्पतिः" इत्युक्तेः तुङ्गिनो वृहस्पतेर्बलवत्त्वदर्शनात्) अपरोऽपि दुष्टः ग्रहः उपान्ते स्थितः, तदा एते प्राणान्तकराः भवेयुरिति वक्तुः तात्पर्य्यम्। अत्राप्रस्तुतेनानेन अङ्गारक-विरुद्धवृहस्पतेः पार्श्वे धूमकेतुग्रहसदृशग्रहान्तरोदयवर्णनेन प्रस्तुतस्य शकाराभियुक्त-चारुदत्तस्य वसन्तसेनाऽलङ्कारपातरूपप्रमाणोपस्थितिबोधादप्रस्तुतप्रशंसेयमलङ्कृतिः. सा च धूमकेतुरिवेत्युपमया सङ्कीर्य्यते। पथ्यावक्त्रं वृत्तम्॥ ३३॥

(२) अवहिता - अप्रमत्ता, सावधाना सतीत्यर्थः। तदेव—वसन्तसेनायाः अलङ्कारभाण्डमेवेत्यर्थः।

वृद्धा। [अवलोक्य] सरिसो एसो, ण उण सो। * (ल)

शकारः। भां वुड्ढकुट्टणि! अक्खीहिं मंतिदं, वाआए मूकिदं। † (व)

वृद्धा। हदास! अवेहि। ‡

श्रेष्ठि-कायस्थौ। अप्पमत्तं कधेहि, सो ज्जेव एसो ण वे त्ति? §

वृद्धा। अज्ज! सिप्पिकुसलदाए ओबंधेदि (श) दिट्ठिं, ण उण सो। ¶

अधि। भद्रे! अपि जानासि (ष) एतानि आभरणानि?

---

* सदृशमेतत्, न पुनस्तत्।

† भां वृद्धकुट्टनि! अक्षिभ्यां मन्त्रितं, वाचा मूकितम्।

‡ हताश! अपेहि।

§ अप्रमत्तं कथय, तदेवैतत् न वेति?

¶ आर्य्ये! शिल्पिकुशलतया अवबध्नाति दृष्टिं, न पुनस्तत्।

---

(ल) एतत्—सुवर्णभाण्डं, स्वर्णालङ्कारसमूहम् इत्यर्थः। सदृशं—तस्या एव अलङ्कारसमूहस्यानुरूपम्। तत्—वसन्तसेनायाः अलङ्करणम् इत्यर्थः।

(व) अक्षिभ्यां—चक्षुर्भ्याम्। मन्त्रितं—तदेवेदमिति भाषितम्। किन्तु वाचा—वाक्येन, स्पष्टोक्त्या इति यावत्। मूकितं—मूकया—वाक्शक्तिरहितयेव आचरितं, गोपायितमित्यर्थः; [मूकितमिति मूकाशब्दादाचारार्थे क्विपि निष्ठायां रूपम्] अस्याः चक्षुर्द्वयं दृष्ट्वा एवं प्रतीयते यत्, "तदेवेदम्" इति एषा प्रत्यभिजानात्येव, किन्तु चारुदत्त-पक्षपातेन "तदिदं न" इत्युक्त्वा गोपायतीति भावः।

(श) शिल्पिकुशलतया—शिल्पिनः,—भूषणनिर्म्मातुः, कुशलतया—निर्म्माण-नैपुण्येन सौष्ठवातिशय्यविधायिकयेति शेषः। अवबध्नाति—आकर्षति; अलङ्काराणां मनोरमनिर्म्माणपारिपाट्यं तदीयत्वबोधनेन हृक्षात्स्तरात् चक्षुर्व नयनं बलपूर्व्वक-माकर्षति, न तु तदीयत्वबुद्धिं व्यवस्थापयतीति भावः; यद्वा,—अवबध्नाति—रुणद्धि, अलङ्काराणां छटया दृष्टिप्रतिरोधात् "तदेवेदं न वा" इति संशये एव मां पातयति इति भावः।

(ष) भद्रे!—कल्याणि! वसन्तसेनामातुरामन्त्रणमेतत्। अपि—प्रश्ने। जानासि?—परिचिनोषि? अवबुध्यसे? इत्यर्थः, कस्य एतान्याभरणानीति स्मरसि किम? इत्यर्थः।

वस०। णं भणामि ; ण हु ण हु अणहिण्णादो, अहवा, कदा वि सिप्पिणा घड़िदो (स) भवे। *

अधि०। पश्य श्रेष्ठिन् !—

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥ २४ ॥

---

ननु भणामि ; न हि न हि अनभिज्ञातानि, अथवा, कदाऽपि शिल्पिना घटितानि भवेयुः।

( सं ) ननु—भोः ! भणामि—वदामि, "शिल्पिकुशलतया भवत्प्रीति दृष्टि, न पुनः तत्" इति शेषः। अथवा—पक्षान्तरे। न हि न हि—नैव नैव। अनभिज्ञातानि—अपरिचितानि, सर्व्वथैव अपरिचितानि इत्यपि वक्तुं न शक्नोमीति भावः। कदाऽपि—कस्मिन्नपि समये. शिल्पिना—तेनैव कारुणा अन्येन केनचित् कारुणा वा। घटितानि—तदनुरूपाणि अपराणि अलङ्करणानि निर्म्मितानि तदलङ्करणानुरूपाण्येतान्यन्यान्येवालङ्करणानि निपुणशिल्पिभिः निर्म्मितानीति वसन्तसेनावचनतात्पर्य्यम्। [ "ण हु ण हु अणहिण्णादो" इत्यत्र "ण हु ण हु अण्णादो" इति पाठान्तरे,—"न हि न हि अज्ञातः" इति संस्कृतम् ]।

वसन्तसेनामातोक्तं "कदाऽपि शिल्पिना घटितानि भवेयुः" इति वचनं श्रुत्वा तस्य सम्भवदुक्तिकत्वं मन्यमानः अधिकरणिकः स्वस्य तदनुमोदनमाह, वस्त्वन्तराणीति।—कृत्रिमस्य—क्रियया निर्वृत्तस्य, मानवकृतस्य इत्यर्थः, रूपस्य—आकृतेः, भूषणगुणस्य—अलङ्कारसौष्ठवस्य च, सदृशानि—तुल्यानि, वस्त्वन्तराणि—अन्यानि वस्तूनि, कटककुण्डलादीनि इति यावत्, नूनं—निश्चितं, भवन्ति - जायन्ते, एकेन शिल्पिना निर्म्मितं भूषणादिकं दृष्ट्वा कुशली अपरोऽपि शिल्पी रूपतः गुणतश्च तदनुरूपमेव निर्म्मातुं प्रभवतीति तात्पर्य्यार्थः। एतदेव स्पष्टीकुर्व्वन्नाह, दृष्ट्वेति।—हि—तथा हि, शिल्पिवर्गः—कारुगणः, क्रियां—कार्य्यं, रचनाकौशलमित्यर्थः, दृष्ट्वा - अवलोक्य, प्रथमनिर्म्मितद्रव्याणामाकारादिकं सुनिपुणं पर्य्यालोच्येति यावत्, कृतः,—अभ्यस्तः, हस्तः,—कङ्कणकुण्डलादिनिर्म्माणे हस्तपाटवं यैः, तस्य भावः तया कृतहस्ततया—हस्तकौशलेन, शिल्पशिक्षानैपुण्येनेत्यर्थः, सादृश्यं—तदानुरूप्यमित्यर्थः, अनुकरोत्येव—

श्रेष्ठिकायस्थौ। अज्ज-चारुदत्तस्स केरकाइं एदाइं ? * (ङ)

चारु। न खलु न खलु।

श्रेष्ठिकायस्थौ। ता कस्स ? †

चारु। इह अत्रभवत्या दुहितुः। (क)

श्रेष्ठिकायस्थौ। कधं एदाइं ताए विओअं गदाइं ? ‡ (ख)

चारु। एवं गतानि, आम् इदम्। (ग)

---

* आर्य्यचारुदत्तीयानि एतानि ? † तत् कस्य ?

‡ कथमेतानि तस्या वियोगं गतानि ?

---

तत्सदृशं निर्मातुं शक्नोत्येवेत्यर्थः, इति दृष्टञ्च—भूयस्तया अवलोकितञ्चेत्यर्थः, अस्माभिरिति शेषः; यद्वा,—क्रियां दृष्ट्वा अनुकरोति—सदृशीकरोति, तत्र सादृश्यं दृष्टमेव; अतः भूषणमिदं वसन्तसेनाया एव नान्यस्या इति कथं निर्णीयते ? इति भावः। अलङ्कारसमूहाश्चैते वसन्तसेनाया अलङ्काराणां तुल्याः, न तु त एव इति अधिकरणिकस्याशयः। अत्र पूर्व्वार्द्धगतं कृत्रिमत्वगुणयोगात् वस्तुनः वस्त्वन्तरसदृशीभवनरूपं कार्य्यं पराड्गतेन शिल्पिवर्गाणां कृतहस्ततारूपकारणेन समर्थितमिति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ २४ ॥

(ङ) आर्य्यचारुदत्तीयानि—आर्य्यचारुदत्तसम्बन्धीनि। एतानि—इमानि आभरणानि इत्यर्थः।

(क) इह—अत्र, विद्यमानाया इति शेषः। अत्रभवत्याः,—मान्यायाः, वसन्तसेनामातरमुद्दिश्येयमुक्तिः। दुहितुः,—कन्यायाः, वसन्तसेनाया इत्यर्थः।

(ख) तस्याः,—वसन्तसेनायाः, वसन्तसेनाऽङ्गादित्यर्थः। वियोगं—विच्छेदम्। गतानि—प्राप्तानि, केन प्रकारेण एतान्यलङ्करणानि वसन्तसेनासकाशात् भवदन्तिकमागतानि इति समुदिततात्पर्य्यम्।

(ग) एवम्—इत्थं, गतानि—प्राप्तानि, तस्या विच्छेदमिति शेषः। श्रेष्ठिकायस्थयोः "कथमेतानि" इत्यादिप्रश्नस्य एवमस्फुटोत्तरदाने अयं हेतुरूह्यः, तथा हि—सुवर्णशकटिकार्थं रोरुद्यमानं रोहसेनं सान्त्वयितुं प्रदानरूपं प्रकृतमलङ्करणागमनविवरणमधिकरणिकस्य विश्वास्यं भविष्यति न वेति शङ्कया यथायथमनुपवर्ण्य "आम् इदम्" एतावन्मात्रमुक्त्वैव विरराम; अथवा,—आम् इति अरण्यार्थकमव्ययम्, आकस्मिकदुर्घटनायां चञ्चलचेताः अयं मौनी अभवत्, ततः किञ्चित् कृत्वा स्फुटतया

श्रेष्ठिकायस्थौ। अज्ज चारुदत्त! एत्थ सच्चं वत्तव्वं। पेक्ख पेक्ख,*—

सच्चेण सुहं क्खु लब्भइ सच्चालाविं ण होइ पादई।
सच्चं त्ति दुवेवि अक्खरा मा सच्चं अलिएण गूहेहि † ॥ ३५ ॥

चारु। आभरणानि आभरणानीति न जाने, किन्तु अस्मद्गृहादानीतानीति जाने। (घ)

---

* आर्य्य चारुदत्त! अत्र सत्यं वक्तव्यम्। पश्य पश्य,—

† सत्येन सुखं खलु लभ्यते सत्यालापी न भवति पातकी।
सत्यमिति द्वे अपि अक्षरे, मा सत्यमलीकेन गूहय॥

---

अपरिभाष्य "आम् इदम्" इत्येतावन्मात्रमेवोक्त्वा चलचित्ततया पुनः तूष्णीम्भावमाययाविति वेदितव्यम्।

सत्यवाक्यस्य गुणान् प्रदर्श्य चारुदत्तं सत्यकथने प्रवर्त्तयन्तावाहतुः, सत्येनेति।—सत्येन—तथ्येन सत्यवचसा इति यावत् खलु—निश्चितं, सुखम्—आनन्दः, लभ्यते—प्राप्यते, जनैरिति शेषः, सत्यालापी—सत्यभाषी, पातकी—पापग्रस्तः, न भवति—न सम्पद्यते, सत्यमिति द्वे अपि—उभे एव, अक्षरे—वर्णौ, सत्यमिति द्व्यक्षरमात्रमेव नान्यदित्यर्थः; यद्वा,—सत्यमिति द्वे अपि अक्षरे—द्व्यक्षरमात्रमपि (इति स्वरूपोक्तिः) अलीकेन—असत्येन, सत्यशब्दापेक्षया बह्वक्षरेणापीति भावः, मा—न, गूहय—संवृणु, गोपाय इत्यर्थः; जगति सत्यमेव सारभूतम्, अन्यत् सर्वं व्यर्थमेवेति भवान् जानात्येव, ततश्च सत्यसन्धेन भवता मिथ्या परिभाष्य आत्मनः सत्यव्रत न व्याहन्तव्यम् इति भावः। वैतालीयं छन्दः ॥ ३५ ॥

(घ) आभरणानि—एतानि अलङ्करणानि, कथं हि तस्याः वियोगं गतानीति शेषः, इति—एतद्वृत्तान्तं, न जाने—न सम्यक्तया वेद्मीत्यर्थः, (अत्र वक्तुः विषादग्रस्तत्वात् आभरणानीति पुनरुक्तमपि न कथितपदत्वदोषाधायकमिति बोध्यम्); यद्वा हि एतानि वसन्तसेनायाः अङ्गात् वियुक्तानि सन्ति चारुदत्तपरिजनगतानि आसन्, ततः पूर्व्वमेव चारुदत्तः वर्द्धिकद्यानं प्रतस्थे, अतः तदङ्गवियोगप्रकारं प्रत्यक्षं न दृष्टवान्, परन्तु पश्चात् अश्रौषीत् सुतस्य च विषयस्य व्यवहारायोग्यत्वात् असौ नोपवर्णितवान् इति बोध्यम्; यद्वा,—यादृगेव पृष्टस्तदनुरूपमेवोत्तरं दत्तवान्। ननु "अस्याः एव दुहितुरेतानि अलङ्करणानि" इति प्रागेवोक्तं, कथं तर्हि तस्याः

शकारः। उज्जाणं पवेशिअ पढमं मालेशि, कवड-कावडिअदाए शंपदं णिगूहेशि। * (ङ)

श्रेष्ठि। आर्य्य चारुदत्त! सत्यमभिधीयताम्,—

इदानीं सुकुमारेऽस्मिन् निःशङ्कं कर्कशाः कशाः।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः॥ २६॥

* उद्यानं प्रवेश्य प्रथमं मारयसि, कपटकापटिकतया साम्प्रतं निगूहसि।

सकाशात् विदूषकस्यान्तिकमेतेषामागमः? इत्याशङ्कायामाह, किन्त्वित्यादि।—अस्मद्गृहादेव—मदीयभवनादेव। आनीतानि—उपस्थापितानि, विदूषकेणेति शेषः। इति—एतावन्मात्रमेवेत्यर्थः। जाने—वेद्मि, अहमिति शेषः। कथं हि यथाश्रुतं विवरणम् आमूलादधिकरणिकसमक्षं चारुदत्तेन न वर्णितमिति चेत्, अत्राय-माशयः,—"यदि तदहं यथाश्रुतमेवामूलमेतत् वर्णयेयं, तदा स्वभार्य्यायाः धूतायाः, चेट्याश्च रदनिकायाः आह्वानं धर्म्माधिकरणे अपरिहार्य्यं भवेत्" इत्याशङ्कितं चारु-दत्तेन, तयोरिव तत्र लिप्तत्वात्; तथा च स्वजीवनार्थं कुलीनायाः स्त्रियाः, आत्म-परिजनभूतायाश्चेट्याश्च साक्ष्यदानार्थमाकारणा अतीव लज्जाकरीति विभाव्य आभि-जात्यरक्षार्थमेव श्रुतविषयस्याविष्कारणा न कृता, तथा चास्य यथार्थवादित्वं कथमपि न व्याहतमिति बोध्यम्।

(ङ) प्रवेश्य—प्रापय्येत्यर्थः, वसन्तसेनामिति शेषः। कपटकापटिकतया—अतिकपटाचारतया इत्यर्थः, कपटपदमवाधिकमपि शकारवक्तृकत्वेन न दोषावह-मिति बोध्यम्। निगूहसि—गोपायसि, मिथ्याभाषणेन प्रकृतं संवृणोषीत्यर्थः।

मिथ्याकथनस्य भीषणं परिणामफलमाह, इदानीमिति।—सुकुमारे—सुकोमले, कर्कशकशाघातसहनाक्षमे इत्यर्थः, अस्मिन्—परिलक्ष्यमाणे, तव—ते, गात्रे—शरीरे, इदानीम्—अधुना, अनतिविलम्बेनैवेत्यर्थः, कर्कशाः,—कठिनाः, कशाः—प्रहरणविशेषाः, अश्वताडनसाधनानीति यावत्, अस्माकं मनोरथैः,—अभिलाषैः, तव निर्दोषताप्रमाणानुसन्धानार्थं सततमेव व्याकुलैरिति हृदयं, सह—सार्द्धं, निःशङ्कं—प्राणविनाशो भवेन्न वेति शङ्कारहितं, निर्दयमित्यर्थः, अन्यत्र—निःसंशयं यथा स्यात् तथा, पतिष्यन्ति—तवोपरि निक्षिप्ता भविष्यन्ति; त्वां राजपुरुषाः कशाभिः प्रहरिष्यन्तीत्यर्थः, अन्यत्र—निरालम्बनाः भविष्यन्ति; यथा अस्माकं मनोरथास्तवानिष्ट-निवारणोपायमनुसन्दधतः अपि अनुकूलप्रमाणाभावात् निरवलम्बनाः सन्तः निपति-ष्यन्ति (विफला भविष्यन्ति इत्यर्थः) तथा अविलम्बेनैव तवोपरि घोरो राजदण्ड-

चारु ।—

अपापानां कुले जाते मयि पापं न विद्यते ।
यदि सम्भाव्यते पापमपापेन च किं मया ? ॥ ३७ ॥

[स्वगतम्] न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । (च) [प्रकाशम्] भोः ! किं बहुना ?—

मया किल नृशंसेन लोकद्वयमजानता ।
स्त्री रतिश्च विशेषेण शेषमेषोऽभिधास्यति ॥ ३८ ॥

भविष्यतीति समुदायार्थः । अत्र कर्कशकशानां मनोरथानाञ्च युगपत् पतनासम्भवेऽपि समकालिकत्वसम्बन्धेन तत्पतनसम्बन्धोक्त्या, पतनस्य सम्बन्धिभेदादेव भेदेऽपि अभेदाध्यवसानात् भेदेऽभेदरूपाऽतिशयोक्तिमूला सहोक्तिरलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ ३६ ॥

निर्दोषताख्यापने उपायान्तरादर्शनात् हताशः सन्निदानीं सत्कुलजातस्य आत्मनः ईदृशपापप्रवृत्तेरसम्भवत्वं प्रदर्शयन् विलपति, अपापानामिति ।—अपापानां—पापशून्यानां, पुण्यवतामित्यर्थः, कुले—वंशे, प्रातःस्मरणीये प्रख्यातसद्वंशे इति यावत्, जाते—उत्पन्ने, मयि—चारुदत्ते इत्यर्थः, पापं—कल्मषं. न विद्यते—न वर्त्तते ; स्वयशोधवलीकृतदिङ्मण्डले अन्ववाये जातत्वेन मयि दोषलेशसम्भावनाऽपि नास्तीति भावः ; तथाऽपि यदि—चेत्, पापम्—अघं, सम्भाव्यते—मन्यते, भवद्भिः मयीति शेषः, तदा अपापेन—नास्ति पापः.—पापकर्म्मा इत्यर्थः यस्मात् तेन, [पापं विद्यते अस्य इति पापशब्दादस्त्यर्थे अर्श-आदित्वादच्] ईदृशदुष्कर्म्मानुष्ठानात् अतिपापीयसा इत्यर्थः, मया. मम जीवितेन चेति शेषः, किम् ?—किं प्रयोजनम् ? नास्ति किमपि प्रयोजनमित्यर्थः ; यद्वा,—मया अपापेन—नास्ति पापं यस्य तेन, पापशून्येनेत्यर्थः. किम् ?—केन प्रकारेण, भूयते ? इति शेषः ; यदि भवन्तः विचार्य्य मां पापिनमेव मन्यन्ते, तदा केनोपायेन अहम् आत्मनः निर्दोषत्वं प्रमापयामि ? इति भावः । अत्र चारुदत्ते पापासत्त्वं प्रति प्रथमपादार्थस्य हेतुतया उपन्यासात् काव्यलिङ्गमलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ ३७ ॥

(च) जीवितेन—प्राणैः, [कृत्यमिति अर्थार्थकशब्दयोगात्, "कर्त्तृ—" (२।३।१८ पा०) इति करणे वा अत्र तृतीया] । कृत्यं—कार्य्यं प्रयोजनमित्यर्थः ।

वसन्तसेनावियुक्तस्य जीवनस्य दुर्व्वहतया, तथा इदानीं स्वापराधास्वीकारेऽपि निष्कृतिलाभस्य असम्भवतया येन केनाप्युपायेन प्राणत्याग एव वरम् इति मत्वा-

शकारः। वावादिदा। (छ) अले! तुमं पि भण, "मए वावादिदे"त्ति। *

चारु। त्वया एवोक्तम्। (ज)

* व्यापादिता। अरे! त्वमपि भण, "मया व्यापादिता" इति।

मान: असन्तमप्यपराधं कथञ्चित् स्वीकुर्व्वन्नाह, मयेति।—लोकद्वयम्—इहलोकं परलोकञ्च, इह जगति राजदण्ड-लोकापवादादिकं, परत्र नरकभोगादिकञ्च इत्यर्थः। विशेषेण रतिः—रतिरूपा, एकमेव मे अनुरागपात्रं न हि सामान्या स्त्री, किन्तु रतेर्विशेषा एवैषेति, द्वितीया मूर्त्तिमती रतिरेवेति वा तात्पर्य्यम्। अन्यत् शिष्टं पूर्वं (४५० पृष्ठे) व्याख्यातम्। ["स्त्री रतिश्च" इत्यत्र "स्त्रीरत्नञ्च" इति पाठान्तरम्]। पथ्यावक्त्रं वृत्तम् ॥ ३८ ॥

(छ) ["वावादिदा" इत्यत्र "तहा वि" इति पाठान्तरे,—"तथाऽपि" इति संस्कृते—त्वया वसन्तसेना व्यापादितेति मयि अभिहितवत्यपीत्यर्थः; यद्वा,—तथाऽपि —पुनरपि, एवमसम्पूर्णं वदसि? त्वयैव व्यापादितेति स्पष्टमभिधीयतामित्यर्थः। अरे! त्वमपीति।—अहं किमेकाकी एतत् कथयिष्यामि? त्वमपि कथय यत्, अहमेव वसन्तसेनां मारितवानिति]।

(ज) उक्तं,—कथितं, "मया व्यापादिता इति" इति शेषः आरोपितस्वदोष-क्षालनाय आत्मत्राणाय च उपायान्तरमदृष्ट्वा, तथा वसन्तसेनाविरहितस्य जीवनस्य दुर्व्वहत्वं मत्वा च चारुदत्तेन मिथ्याऽपवादोऽपि आत्मकृतत्वेन स्वीकृत इति बोध्यम्; वस्तुतस्तु परमधार्म्मिकस्य तत्त्वतः स्त्रीहत्यामकुर्व्वतः चारुदत्तस्य अभियोगस्य मिथ्यात्वं ज्ञात्वाऽपि आत्मकृतत्वेन स्त्रीहत्यायाः स्वीकारे मिथ्यावादित्वदोषापातात् सर्वथा-ऽयौक्तिकमेवैतत् प्रतिभाति. अतोऽन्यायमाश्रय उपवर्ण्यते, तथा हि,—उक्तं— स्वमुखेन त्वयैव कथितं मया व्यापादितेति पूर्वोक्तं वचनमिति शेषः, भवान् वसन्तसेनां व्यापादितवानिति तु निश्चितम्. अतः स्वमुखेनैव व्यापादितेति अशङ्किततया त्वया उच्चारितमिति तात्पर्य्यम्। चारुदत्तः "मया व्यापादिता" इति पापं वचनं स्वमुखेन नोच्चार्य्य "शेषः अयमभिधास्यति" इत्युक्तवान्, एवञ्च अस्यां "त्वयैवोक्तम्" इति चारु-दत्तोक्तौ, आक्षिप्ते "मया व्यापादिता" इत्युक्तवाक्ये स्थितम् अस्मत्पदं शकारमेव बोद्धव्यत्वेन लक्ष्योकरोति. न तु चारुदत्तमिति फलतो वक्तुः निरपराधत्वप्रत्यायक-मेतदिति हृदयम्।

शकारः । शुणेध शुणेध भट्टालका ! गदेण मालिदा ! एदेण ज्जेव शंशए छिस्से । एदश्श दलिद्दचालुदत्तश्श शालीले दंडे धालीअदु । * (झ)

अधि । शोधनक ! यथाऽऽह राष्ट्रियः । भो राजपुरुषाः ! गृह्यतामयं चारुदत्तः । [ राजपुरुषा गृह्णन्ति ] ।

वृद्धा । पसीदंतु पसीदंतु अज्जमिस्सा । ("जो तदाणिं णासीकिदं सुवण्णभंडअं रत्तिं चोरेहिं अवहिदं—" इत्यादि पूर्वोक्तं पठति) ता जदि वावादिदा मम दारिआ, वावादिदा ; जीवदु मे दीहाऊ । अण्णं च—अत्थिपच्चत्थिणं ववहारो, अहं अत्थिणी, ता मुंचध एदं । † (ञ)

---

* शृणुत शृणुत भट्टारकाः ! एतेन मारिता । एतेनैव संशयश्छिन्नः । एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्य्यताम् !

† प्रसीदन्तु प्रसीदन्तु आर्य्यमिश्राः । ("यत्तदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतम्" इत्यादि पूर्वोक्तं पठति ) । तत् यदि व्यापादिता मम दारिका, व्यापादिता ; जीवतु मे दीर्घायुः । अन्यच्च—अर्थिप्रत्यर्थिनोर्व्यवहारः, अहमर्थिनी, तत् मुञ्चतैनम् ।

---

( झ ) संशयः,—वसन्तसेना अनेनैव मारिता न वा इति सन्देहः । छिन्नः,—खण्डितः, निरस्त इति यावत्, चारुदत्तेन स्वयमेव स्वापराधस्य स्वीकारादित्याशयः ; अत्र अन्यार्थे चारुदत्तेन प्रयुक्तमपि "त्वयैवोक्तम्" इति वाक्यं दुष्टशकारः स्वाभिप्रायानुकूलं व्याख्याय तस्य सापराधत्वम् अधिकरणिकं विश्वासयामास इति बोद्धव्यम् ! शारीरो दण्डः,—कशाप्रहार-शूलारोपणादिरूपा दैहिकी शास्तिरित्यर्थः । धार्य्यताम्—अवलम्ब्यतां, विधीयतामित्यर्थः ।

( ञ ) दारिका—बालिका, कन्येति यावत् । व्यापादिता—मारिता ; अनेन मम कन्या यदि मारिता, मारिता एव, तेन तज्जनन्या मे न कोऽपि अभियोगः इति भावः । दीर्घायुः,—दीर्घजीवी, अयं चारुदत्त इत्यर्थः, [ दीर्घायुरित्यनेन चारुदत्तं प्रति वसन्तसेनामातुः अतीव स्निग्धभावः सूच्यते ] । ननु कृतापराधेऽस्मिन् दण्डे विधातव्ये का त्वं विरुद्धाचरणे ? इत्यतः आह, अन्यच्चेति ।—अर्थिप्रत्यर्थिनोः,—वादिप्रतिवादिनोः । अर्थिनी—वादिनी ; [ "अहं अत्थिणी" इत्यत्र "ण च अहं

शकारः। अवेहि गब्भदाशि! गच्छ, किं तव एदिणा? * (ट)

अधि। आर्य्ये! गम्यताम्। हे राजपुरुषाः! निष्क्रामयत एनाम्। (ठ)

वृद्धा। हा जाद! हा पुत्तअ! † [इति रुदती निष्क्रान्ता]।

शकारः। [स्वगतम्] कडं मए एदश्श अत्तणो शलिशं, (ड) शंपदं गच्छामि त्ति। ‡ [इति निष्क्रान्तः]।

अधि। आर्य्य-चारुदत्त! निर्णये वयं प्रमाणं, शेषे तु राजा। तथाऽपि शोधनक! विज्ञाप्यतां राजा पालकः, (ढ)—

* अपेहि गर्भदासि! गच्छ, किं तवैतेन?

† हा जात! हा पुत्रक!

‡ कृतं मयैतस्य आत्मनः सदृशं. साम्प्रतं गच्छामीति।

अर्थिणी" इति पाठे—"न चाहमर्थिनी" इति संस्कृतं, तथा च ममैवार्थित्वे सत्यपि नाहमस्य दण्डप्रार्थिनीत्यर्थश्च बोध्यः]। मद्दुहितुः निधनात् मय्येव वादित्वे विद्यमानेऽपि नैवाहमस्य दण्डमर्थये, अपि तु मुक्तिम् इति मनसि कृत्वाऽऽह, ता इति।—एनं—चारुदत्तमित्यर्थः। मुञ्चत—परित्यजत, नास्य दण्डं विधत्त, वादिन्या मया अभियुज्यते चेत्, तदैव विचार्य्यमधिकारिभिर्वेन, न तु कस्यचिदुदासीनस्याभियोगे विचारः कर्त्तव्य इति भावः। एतत्तु स्त्रीस्वभावचापल्यादेवोक्तं, वस्तुतस्तु हत्यापराधे राजा स्वयमेव अर्थी भवतीति नियमो बोध्यः।

(ट) एतेन—चारुदत्तेनेत्यर्थः। किम्?—किं प्रयोजनम्? अनेन सह तव कः सम्बन्धः? किं वा अयं ते साधयिष्यति? येनामुं मोचयितुं त्वया ईदृशी प्रार्थना क्रियते इति भावः; अथवा—एतेन—अनेन, व्यवहारसमालोचनेन इत्यर्थः; यतोऽयं हत्यापराधेनाभियुक्तः, अतः राजपुरुषा नैनं मोक्ष्यन्ति, तत् कथं वृथा प्रलपसि इति तात्पर्य्यम्।

(ठ) राजपुरुषाः!—रक्षिणः! निष्क्रामयत—बहिर्नयत। एनां—वृद्धां, वसन्तसेनामातरमित्यर्थः, [अत्र गत्यर्थकत्वात् "एनाम्" इति प्रयोज्यकर्त्तुः कर्मत्वम्]।

(ड) एतस्य—चारुदत्तस्य सम्बन्धे। आत्मनः—स्वस्य। सदृशम्—अनुरूपम्; अहन्तु यादृक् चतुरः, तथाविधं कौटिल्यं स्वधियैव संसाधितवान् इति भावः।

(ढ) निर्णये—दोषित्वादोषित्वावधारणे। प्रमाणं—हेतुः, अधिकारिण इत्यर्थः,

अयं हि पातकी विप्रो न बध्यो मनुरब्रवीत्।
राष्ट्रादस्मात् तु निर्वास्यो विभवैरक्षतैः सह ॥ ३९ ॥

शोधनकः। जं अज्जो आणवेदि। [ इति निष्क्रम्य पुनः प्रविश्य सास्रम् (ग)] अज्जा! गदम्हि तहिं; राआ पालओ भणादि,—"जेण अत्थ-कल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं ताइं ज्जेव

* यदार्य्य आज्ञापयति। आर्य्याः! गतोऽस्मि तत्र; राजा पालको भणति,—

दोषित्वादोषित्वनिरूपणपर्य्यन्तमेवास्माकमधिकारः इतः अन्यस्मिन्नस्माकं शक्तिर्नास्ति इति भावः। शेषे—अवशिष्टे व्यापारे अपराधिनः विमोचने दण्डविधाने वा इत्यर्थः। राजा—नृपतिः, प्रमाणमिति शेषः; राजा चेदिच्छति, तदा अपराधिनः लघुदण्डविधानं विमोचनं वा कर्त्तुं शक्नोति न तु विचारकाः, ते तु केवलं दण्डनीतिमेव अनुसरन्ति, ततः पदैकमपि गन्तुं न हि प्रभवन्ति इति भावः। तथाऽपि—राज्ञः अभिलाषानुसारेण दण्डदानाधिकारे सत्यपि इत्यर्थः। विज्ञाप्यतां—निवेद्यतां, वक्ष्यमाणं शास्त्रशासनं दण्डनीतिर्वा इति शेषः। [ पालकः इति प्रयोज्यकर्त्तुः कर्म्मणि उक्तत्वं, णिचि कर्म्मणि प्रयोज्यकर्त्तुः प्रायशः तथात्वदर्शनात् ]।

अपराधिनो दण्डविषये स्वमतं विज्ञापयितुं मनूक्तां दण्डनीतिमुल्लिख्य राज्ञि पालके आवेदनीयमाह अयमिति।—अयम्—अभियुक्तः विप्रः,—ब्राह्मणः चारुदत्तः इत्यर्थः, पातकी—स्त्रीजनवधरूपपापकर्म्मा, (तथाऽपि) न हि—नैव, वध्यः—विनाश्यः, प्राणदण्डार्ह इत्यर्थः इति मनुः,—धर्म्मशास्त्रप्रणेता स्वनामप्रसिद्धः ऋषिविशेषः अब्रवीत्—अकथयत् अतः अक्षतैः,—अविनष्टैः समग्रैरिति यावत्, विभवैः,—धनैः, सह—साकम् (अयम्) अस्मात्—भवदधिकृतादित्यर्थः, राष्ट्रात्—राज्यात्, निर्वास्यः,—दूरीकर्त्तव्यः। पातकिनो विप्रस्य प्राणदण्डमकृत्वा निर्व्वासने मनुवचनं यथा,—"न जातु ब्राह्मणं हन्यात् सर्व्वपापेष्वपि स्थितम्। राष्ट्रादेनं वहिष्कुर्य्यात् समग्रधनमक्षतम् ॥" इति, "मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते" इति च। तथा च हत्या-पराधिनः ब्राह्मणस्य तदीयां सकलां सम्पत्तिं तस्मै दत्त्वा राज्यादेवासौ निष्कामनीय इति मानवी दण्डनीतिः, तत्र भवतां किमभिमतमिति पृच्छ्यते इत्याशयः। पथ्यावक्त्रं वृत्तम् ॥ ३९ ॥

(ग) सास्रम्—अस्रेण—नेत्रजलेन सह विद्यमानं, सरोदनमित्यर्थः। ("अस्रु नेत्राम्बु रोदनञ्चास्रमश्रु च" इत्यमरः)।

आहरणाइं गले बंधिअ डिंडिमं ताड़िअ दक्खिणमसाणं णइअ सूले भञ्जेध त्ति। जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि, सो एदिणा सणिआरदंडेण सासीअदि"। * (त)

चारु। अहो! अविमृष्यकारी राजा पालकः (थ)। अथवा,—

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम्॥ ४०॥

"येन अर्थकल्यवर्त्तस्य कारणात् वसन्तसेना व्यापादिता, तं तान्येव आभरणानि गले बद्धा डिण्डिमं ताड़यित्वा दक्षिणश्मशानं नीत्वा शूले भङ्क्त इति। यः कोऽप्यपर ईदृशमकार्य्यमनुतिष्ठति, स एतेन सनिकारदण्डेन शिष्यते"।

(त) तत्र—राज्ञः पालकस्यान्तिके। भणति—आदिशतीत्यर्थः। डिण्डिमं—राजादेशघोषणाकाले वाद्यमानं यन्त्रविशेषम्। ताड़यित्वा—वादयित्वा इत्यर्थः। दक्षिणश्मशानं—दक्षिणदिगवस्थितं शवदाहस्थानं, वधस्थानं वा इत्यर्थः, [श्मशानमिति "श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते" इति वचनात्. श्मानः शवाः शेरते अत्र इति व्युत्पत्त्या शेते इत्यस्मात् धातोरानच्, डिच्च] शूले—शूलस्योपरि, आरोप्येति शेषः। भङ्क्त—मारयत इत्यर्थः, [अनुतिष्ठति इत्यत्र "आशंसायां भूतवच्च" (३।३।१३२ पा०) इति आशंसार्थे भविष्यत्काले लट्प्रयोगो बोध्यः, अनुष्ठास्यतीत्यर्थः]। सनिकारदण्डेन—सापमानदण्डेन। शिष्यते—दण्ड्यते, शासनीयो भविष्यतीत्यर्थः।

(थ) अहो—विस्मये विषादे वा। अविमृष्यकारी—अविवेचकः, असद्विचारक इत्यर्थः, यतोऽयं विशेषतत्त्वानभिज्ञ एव दण्डप्रदायीति भावः। [अविमृष्य—पौर्व्वापर्य्यमदृष्ट्वैव करोति इति कर्त्तरि णिनिः]।

पूर्व्वमविमृष्यकारित्वेन राजानं विनिन्द्य पश्चादपरेण तदविमृष्यकारितायाः कुमन्त्रिबुद्धिपरिचालनामूलकतया कुमन्त्रिदोषेणैव तद्दोषमाह, ईदृश इति।—मन्त्रिभिः,—कुत्सितामात्यैरित्यर्थः ईदृशे—एवम्प्रकारे, अतिदुर्गमे इत्यर्थः, व्यवहाराग्नौ—विचारदर्शनरूपवह्नौ. परिपातिताः,—सर्व्वतोभावेन निक्षिप्ताः, अधोगमिता इत्यर्थः, महीपालाः,—राजानः, कृपणां—दीनां, नरकपातहेतुभूतामिति यावत्, दशाम्—अवस्थां, "दशाम्" इत्यत्र "श्रियम्" इति पाठे—कृपणां—शोच्यां, श्रियं—सम्पदं, मन्त्रिपरतन्त्रस्य स्वयमविमृष्यकारिणः महीपस्य समाश्रयणात् श्रियः

अपि च।—ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः ।
　　अपापानां सहस्राणि हन्यन्ते च हतानि च ॥ ४१ ॥

सखे मैत्रेय ! गच्छ, मद्वचनादम्बामपश्चिमम् अभिवादयस्व, पुत्रञ्च मे रोहसेनं परिपालयस्व । (ट)

विदू । मूले छिण्णे कुदो पादवस्स पालणं ? * (ध)

---

* मूले छिन्ने कुतः पादपस्य पालनम् ?

शोच्यत्वं बीध्यम् ] गच्छन्ति—प्राप्नुवन्ति, इति यत्, तत् स्थाने खलु—युक्तमेव, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) ; मन्त्रिणां दोषनिर्दोषत्वनिर्णयाधिकारित्वात् राज्ञाञ्च तन्मतमवलम्ब्यैव दण्डदातृत्वात् तेषां निर्दोषदण्डविधानजन्यनिरयगामित्वे कुमन्त्रिण एव हेतव इति भावः । अत्र अप्रस्तुतात् महीपालसामान्यात् प्रस्तुतस्य पालकरूपस्य विशेषस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, स च व्यवहाररूपे निरपङ्कवे विषये अभेदादात्म्याध्यासात् रूपकालङ्कारेण संसृज्यते । पथ्यावक्त्रं वृत्तम् ॥ ४० ॥

राज्ञामदण्ड्यदण्डविधानादिरूपेऽविमृश्यकारित्वदोषे कुमन्त्रिणामेव हेतुत्वं दर्शयन्नाह, ईदृशैरिति ।—श्वेतकाकीयैः,—शुभ्रवर्णकाकतुल्यैः, यथा शुभ्रवर्णाः काका हि केवलं वहिः सुदृश्याः, परमतीवानिष्टजनकाः, तथा कुमन्त्रिणः बहिर्दर्शितसाधुभावा अन्तर्दुष्टा इति भावः, ईदृशैः,—एवम्प्रकारैः, वहिःसाधुभिरन्तर्विषैरिति यावत्, राज्ञः,—नृपस्य, शासनदूषकैः,—शासनं - दण्डनीतिं, दूषयन्ति ये तैः तथोक्तैः, अयथाव्यवहारदर्शिभिरित्यर्थः, मन्त्रिभिरिति शेषः, अपापानां—निरपराधानां, सहस्राणि—बहूनि इत्यर्थः, बहुसहस्रसङ्ख्यका निरपराधा जना इति यावत्, हतानि—मारितानि, प्राणिति भावः, हन्यन्ते—मार्य्यन्ते च, इदानीमपीति शेषः । [ शुभ्रवर्णकाकानां भारते अदृश्यत्वेऽपि "अष्ट्रेलिया" इति नाम्ना ख्याते द्वीपान्तरे तादृशाः काकाः सन्ति इति प्राणितत्त्वविद्भिरामननात् न तेषामप्रसिद्धत्वशङ्केति सुधीभिरवधातव्यम् ] अत्रापि पूर्ववदप्रस्तुतप्रशंसाऽलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ ४१ ॥

(ट) मद्वचनात्—मम वचनम् इति उक्त्वा, चारुदत्तः कथयति इति निवेद्य इत्यर्थः, मम वचनमाश्रित्य इति वा, [ ल्यब्लोपे पञ्चमी ] । अम्बां—मातरम् । अपश्चिमं,—नास्ति पश्चिमः - शेषो यस्मात् तत् यथा तथा इत्यर्थः । अभिवादयस्व—मन्नामोच्चारणपूर्व्वकं मम प्रणतिं विज्ञापयेत्यर्थः, अयमेव चारुदत्तस्य चरमः प्रणाम इति मातरं निवेदय इति यावत् । परिपालयस्व—सर्व्वतोभावेन रक्ष ।

(ध) पालनं—रक्षणम् ; वृक्षस्य मूले छिन्ने बहुशः जलसेकादिनाऽपि तस्य

चारु। मा मैवम्, (न)—

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः।
मयि यो वै तव स्नेहो रोहसेने स युज्यताम्॥ ४२॥

विदू। भो वअस्स! अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि? * (प)

* भो वयस्य! अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान् प्राणान् धारयामि?

सञ्जीवतारक्षणं यथा नैव सम्भवति, तथा मूलभूते त्वयि विनष्टे अन्यैः कैरपि पालनादिना त्वत्पुत्रस्य जीवनरक्षणं न सम्भवति इति भावः। अत्र मूलच्छेदानन्तरं पादपस्य रक्षणासम्भवरूपादप्रस्तुतात् चारुदत्तविनाशात् परं तत्पुत्ररक्षणासम्भवरूपस्य प्रस्तुतार्थस्य प्रतीतेरप्रस्तुतप्रशंसा नाम अलङ्कारः।

(न) एवम्—इत्थं, "मूले छिन्ने कुतः पादपस्य पालनम्" इत्येवंरूपमित्यर्थः, वचनमिति शेषः। मा मा—न हि न हि, वादीः इति शेषः, नैव कथय नैव कथय इत्यर्थः।

ममाभावे मत्पुत्रस्य पालने असामर्थ्यज्ञापनरूपगूढार्थकस्य "मूले छिन्ने" इत्यादि वाक्यस्य प्रत्युत्तरं "मा मा" इत्यादिना यदुक्तं तदेव समर्थयितुं पितुः पुत्राभिन्नत्वमाह, नृणामिति।—सुतः,—पुत्रः, लोकान्तरस्थानां—अन्यः लोक इति लोकान्तरं, तत्र स्थितानां, परलोकगतानामित्यर्थः, नृणां -पुरुषाणां, देहस्य—शरीरस्य प्रतिकृतिः,—प्रतिरूपं, पुत्रः पितुर्द्वितीयो देह इति भावः; सुतस्य स्वदेहप्रतिकृतित्वे श्रुतिः प्रमाणं यथा,—"आत्मा वै जायते पुत्रः" इति; स्मृतिरपि यथा,—"अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि स जीव शरदां शतम्॥" इति; अतः मयि—तवाकृतिर्ममिवे चारुदत्ते इत्यर्थः, तव—ते, मैत्रेयस्य इत्यर्थः, यः,—यादृश इत्यर्थः, वै—एव, स्नेहः,—प्रणयः, रोहसेने—तदाख्ये ममात्मजे, सः,—तादृश एव स्नेह इत्यर्थः, युज्यताम्—अर्प्यताम्; पितुर्लोकान्तरगतत्वेऽपि सुतस्य तदङ्गजत्वेन तत्प्रतिकृतिरूपत्वात् पुत्रजीवनरक्षणेनैव पितुः सत्ता सम्भवति, तथा मयि ते यः स्नेहः अस्ति, स चेत् रोहसेने अर्प्यते तदा मय्येव अर्पितो भवति, अतः त्वदुक्तं न समीचीनमिति भावः। अत्र वै इति पादपूरणे अव्ययमिति केचित्। अत्र उत्तरार्द्धं प्रति पूर्वार्द्धगतवाक्यस्य हेतुत्वात् वाक्यार्थहेतुक काव्यलिङ्गमलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ४२॥

(प) तव विनाशे मम विनाशस्यावश्यम्भावात् मया रोहसेनस्य रक्षणमसम्भव-

चारु। रोहसेनमपि तावद्दर्शय। (फ)

विदू। एव्वं, जुज्जदि। * (ब)

अधि। भद्र शोधनक! अपसार्य्यतामयं वटुः। (भ)

शोधनकः। [तथा करोति]।

अधि। कः कोऽत्र भोः! चण्डालानां दीयतामादेशः। (म)

[इति चारुदत्तं विसृज्य निष्क्रान्ताः सर्वे राजपुरुषाः]।

शोधनकः। इदो आअच्छदु अज्जो। †

चारु। [सकरुणम् (य)] "मैत्रेय भोः! किमिदमद्य" [इत्यादि पठति। आकाशे (र)]।—

* एवं, युज्यते। † इत आगच्छतु आर्य्यः।

मित्याह, भोः! इति।—धारयामि?—धर्त्तुमुत्सहे किम्? इत्यर्थः प्रियवयस्येन त्वया विरहितः अहं जीवितुमेव न शक्ष्यामि, ततश्चाहमेव अजीवितः कथं रोहसेनं पालयामि? रक्षामि वा? इति भावः।

(फ) अपिरत्र अनुज्ञायाम्। दर्शय—साक्षात्कारय, मामिति शेषः।

(ब) एवम् इति स्वीकारार्थकमव्ययम्; दर्शयामीत्यर्थः। युज्यते—युक्तियुक्तो भवति, आत्मजदर्शनाभिलाष इति शेषः।

(भ) अपसार्य्यतां—स्थानान्तरं नीयताम्। वटुः,—विप्रबालकः, विदूषकः इत्यर्थः; चारुदत्तविदूषकयोः विलापभूयिष्ठां परस्परोक्तिमुपश्रुत्य खिन्नेनाधिकरणिकेन सतारं सखेदञ्चाभिधीयमानैः विदूषकवचोभिः प्रशान्तस्य धर्म्माधिकरणस्य शान्तिभङ्गमाशङ्क्य तत्स्थानात् विदूषकस्यापसारणार्थमनुमतिरदीयतेति; यद्यपि वटुपदस्य माणवकार्थत्वमभिधाने दृश्यते, तथाऽप्यत्र बालकोचितं विदूषकविप्रलापं श्रुत्वा वटुभिऽपि तस्मिन् अवज्ञया वटुत्वमारोपितमित्यवधातव्यम्। ["वटुः" इत्यत्र "वहिः" इति पुस्तकान्तरसम्मतः पाठः]।

(म) चण्डालानां—घातुकानामित्यर्थः, [अस्य मुख्यसम्प्रदानत्वाभावात् न सम्प्रदाने चतुर्थी, अपि तु शेषे षष्ठी]। आदेशः,—आज्ञा, अपराधिनमेनं दक्षिणश्मशानं नीत्वा शूलम् आरोपयितुमिति शेषः।

(य) सकरुणं—सविषादम्।

(र) आकाशे—गगने, इदानीं हताशः सन् शून्ये दृष्टिं निक्षिप्य अधिकरणिकं राजानं वा उद्दिश्याह इति भावः।

विष-सलिल-तुलाऽग्नि-प्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः॥ ४३॥

अयमागतोऽस्मि। [इति निष्क्रान्ताः सर्वे]।

इति व्यवहारो नाम नवमोऽङ्कः समाप्तः॥ ९॥

निरपराधस्य स्वस्य अविचारेण जीवनदण्डादेशदानात् राजानम् अधिकरणिकं वा आक्रोशन्नाह, विषेति।—विषेण—गरलेन, सलिलेन—जलेन, जलनिमज्जनेनेत्यर्थः, तुलया—तुलायन्त्रस्योपरि आरोपणेनेति यावत्; अग्निना—अनलमध्ये निक्षेपेण वा, प्रार्थितः,—याचितः तस्मिन्, मयेति शेषः, विषादिभिः परीक्ष्य निष्पादनीये इत्यर्थः, मे—मम, विचारे—मय्यारोपितस्य दुरभियोगस्य तत्त्वनिर्णये सति इत्यर्थः; विषादिपरीक्षया मदपराधस्य तत्त्वनिर्णयो भवतु इति सहर्षं मत्प्रार्थिते सतीति यावत्, वीक्ष्य—विशेषेण दृष्ट्वा, प्रोक्तपरीक्षाभिरहं पापी न वेति पूर्वं सम्यक् विचार्य इत्यर्थः, यदि पापं विद्यते, तदा विषभक्षणे सलिलमज्जने वा प्राणवियोगः अपापस्य तु तत्करणेऽपि न तथा; तुलादण्डेन तोलने पापी गुरुर्भवति, तेन च पापिना आधारभूततुलैकभागः अधो याति, अपरभाग ऊर्द्धमुत्थितो भवति, अपापस्येन् तदधिष्ठिततुलाभागः ऊर्द्धमुत्थितो भवति, अपरभागश्च गुरुर्भूत्वा अधो यातीति; अग्निप्रवेशे वा तत्र धारणे पापिनः शरीरस्य वा तदंशस्य दाहः, अपापत्वे तु न तथेति परीक्ष्य इति यावत्, निर्णयविधौ विषादिपरीक्षा च याज्ञवल्क्योक्ता यथा,—"तुलाऽग्न्यापो विषं कोषो दिव्यानीह विशुद्धये। महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥" इति। अद्य—वर्त्तमानदिने इत्यर्थः, इह—अस्मिन्, शरीरे—देहे, क्रकचं—करपत्रं, वृक्षादिविपाटनकरः खरधारः अस्त्रविशेष इत्यर्थः; ("करात" इति वङ्गभाषा) दातव्यं—दातुमुचितम्, अधिकरणिकस्येति शेषः, विषादिप्रयोगेण ममापराधित्वे निःसंशयो भूत्वा अधिकरणिकः यदि अतीव यन्त्रणादायकेन क्रकचेनापि मम प्राणदण्डं विदध्यात्, तदा मे किमपि वक्तव्यं न स्यादिति भावः। इयमस्याक्षेपोक्तिर्बोध्या; वस्तुतस्तु विचारकैः अयतः धर्म्मशास्त्रविरुद्ध एव विचारः कृतः, न्यायश्चैषः—"विवादेऽन्विष्यते पत्रं पत्राभावे तु साक्षिणः। साक्ष्यभावात् ततो दिव्यं प्रवदन्ति मनीषिणः॥" इति।

तथा च प्रोक्तालौकिकप्रमाणरूपस्य दिव्यस्य पूर्वोपात्तयोः पत्रसाक्षिणोरभावे एवानुशिष्टत्वात्, अत्र च साक्षिभिरेव निर्णयस्य निष्पादितत्वात् दिव्यकरणे आग्रहो न कृतोऽधिकरणिकेनेति सुधीभिरवधातव्यम् । तथाऽकरणात् चारुदत्त आह, अथेति । —अथ—यदि, रिपुवचनात्—रिपोः—शत्रोः, शकारस्य इत्यर्थः, वचनात् वा—वाक्यादेव, यद्वा,—वा,—पक्षान्तरे, ("वा स्यात् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इत्यमरः) ब्राह्मणं—विप्रं, मां—चारुदत्तमित्यर्थः, निरपराधमिति यावत्, ब्राह्मणतया निष्पापतया च अवध्यमिति भावः; निहंसि—मारयसि, तदा पुत्रपौत्रैः,—तनय-तत्तनयादिभिः, समेतः,—सहितः, नरकमध्ये—निरयान्तः, पतसि—गच्छसीत्यर्थः, अवश्यं निरयगामी भविष्यसीति यावत् । निरपराधदण्डस्य नरकफलकत्वमाह मनुः,—"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥" इति । अत्र दण्डदातुः पुत्रपौत्रादिभिः सार्द्धं नरकमध्यपतने, रिपुवचनमात्रमाश्रित्य निरपराधब्राह्मणहननस्य निष्पादकहेतुत्वेनोपन्यस्तत्वात् वाक्यार्थहेतुकः काव्यलिङ्गमलङ्कारः । मालिनी वृत्तं, "न-न-म-य-ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ४१ ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां नवमोऽङ्कः ॥ ९ ॥

# दशमोऽङ्कः ।

[ ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः ] ।

उभौ ।—

तक्किं ण कलध कालणं ? णववह-बंधणणअणे णिउणा ।
अचिलेण शीशच्छेअण-शूलालोवेशु कुशल्लम्ह * ॥ १ ॥

ओशलध अज्जा ! ओशलध । एशे अज्जचालुदत्ते, †—

* तत् किं न कलय कारणम् ? नववध-बन्धनयने निपुणौ ।
अचिरेण शीर्षच्छेदन-शूलारोपेषु कुशलौ स्वः ॥

† अपसरत आर्य्याः ! अपसरत । एष आर्य्य-चारुदत्तः,—

---

चारुदत्तं विनाशयितुं दक्षिणश्मशानं नयन्तौ घातकौ तेषां गमनकारणमजानन्तं कञ्चन प्रत्याहतुः, "तक्किं" इति ।—तत्—प्रख्यातं, सर्व्वस्य विदितमित्यर्थः कारणं—हेतुम्, अनेन पथा गमने इति भावः, किं न कलय ?—विन्वास्य ? इत्यर्थः, अस्माकं गमनप्रयोजनं किं त्वं न जानासि ? तत् किमिति विशिष्य आह, नवेत्यादि ।—नवे,—नूतने, वधे—नाशे, तथा बन्धे—बन्धनविषये ; यद्वा,—नवः,—नूतनः, यः वधाय बन्धः,—बन्धनं तत्र यत् नयनं—साधनं तस्मिन्, अभिनववधदण्डाज्ञाप्राप्तस्य बन्धन-सम्पादने इत्यर्थः, [ "साधुनिपुणाभ्यामर्च्चायाम्" ( २।३।४३ पा० ) इति सूत्रेण सप्तमी ] निपुणौ—दक्षौ ( अत्र आवाम् इति कर्तृपदमध्याहरणीयम् ) अचिरेण—शीघ्रमेव, शीर्षः,—शिरसः छेदनेषु—कर्त्तनेषु, तथा शूले—शूलस्योपरि, आरोपेषु—आरोपणेषु, वध्यस्येति शेषः, कुशलौ—अभिज्ञौ, [ "आयुक्तकुशलाभ्याम्" ( २।३।४० पा० ) इति सूत्रेण कुशलशब्दयोगात् सप्तमी ] स्वः,—भवावः ; अस्य वधादिसाधनेन नवबन्ध-वधादिषु नैपुण्य प्रकाशयितुं तथा शिरश्छेदनादिषु कौशलं प्रख्यापयितुमिदानीमावयो-र्गमनमिति भावः । [ "स्वः" इत्यत्र भविष्यत्सामीप्ये लट् ] कालणं इत्यत्र छन्दो-ऽनुरोधादनुस्वाराभावः । उपगीतिः छन्दः ; तल्लक्षणं यथा,—"आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्" इति ॥ १ ॥

दिण्णकलवीलदामे गहिदे अम्हेहि वज्झपुलिशेहिं।
दीवे व्व मंदणेहे थोअं थोअं खअं जादि * ॥ २ ॥

चारु। [सविषादम्]—

नयनसलिलसिक्तं पांशुरूक्षीकृताङ्गं
पितृवनसुमनोभिर्वेष्टितं मे शरीरम्।
विरसमिह रटन्तो रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥ ३ ॥

दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम्।
दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥

चारुदत्तस्य हत्यापराधज्ञापकवेशमुपवर्णयन् वध्यत्वेनास्य स्वत एव क्रमशः क्षयित्वमाह. दत्तेति।—दत्तकरवीरदामा—दत्तम्—अर्पितं, करवीरस्य—प्रतिहासापरपर्य्यायकस्य रक्तवर्णपुष्पविशेषस्य, दाम—माल्यं यस्मै सः, करवीरमाल्यभूषितकण्ठ इत्यर्थः, (रक्तमाल्येन रक्तचन्दनेन च वध्यः अलङ्क्रियते इति प्रसिद्धिः) वध्यपुरुषाभ्यां—वधं—वधविषये साधू इति वध्यौ वधनिपुणौ इत्यर्थः, ["तत्र साधुः" (४।४।९८ पा०) इति सूत्रेण यत्] तौ च तौ पुरुषौ चेति ताभ्यां, घातुकाभ्यामित्यर्थः, आवाभ्यां—चाण्डालद्वयेनेत्यर्थः, गृहीतः,—धृतः, "एष आर्य्यचारुदत्तः" इति पूर्वोक्तगद्यस्थवाक्येनान्वयः; मन्दस्नेहः,—मन्दः,—अल्पः, स्नेहः,—तैलं, पक्षे—प्रेमा, देहस्थधातुरसो वा यस्य तथोक्तः, दीपः,—प्रदीपः इव, स्तोकं स्तोकम्—अल्पमल्पं, शनैः शनैः यथा तथेत्यर्थः, क्षयं—नाशं, याति—गच्छति, प्राप्नोतीत्यर्थः, क्षीणतैलो दीपो यथा शनैः शनैः निर्वाति, तथा रक्तकरवीरादिवध्यचिह्नार्पणेनैव आत्मनः नाशनिश्चयात् अस्य प्रतिक्षणं देहक्षयो जायते इति तात्पर्य्यार्थः, "अशनेः पतने न वेदना पतनज्ञानमतीव दुःसहम्" इतिवत् मरणापेक्षया मरिष्यामि इति ज्ञानस्यैव दुःसहत्वादिति भावः। अत्र श्लिष्टविशेषणेन मन्दस्नेहपदार्थेन विशेषितयोः चारुदत्तदीपयोरवैधर्म्यसाम्यप्रतीतेः श्लेषानुप्राणितोपमालङ्कारः। अम्हेहि इत्यत्रापि पूर्ववच्छन्दोऽनुरोधादेवानुस्वाराभावः। सानुस्वारत्वे तु अगत्या लघुतया पाठ्यम्। आर्य्या वृत्तम् ॥ २ ॥

वध्यवेशपरीतमात्मानमालोक्य खिद्यन्नाह. नयनेति।—इह—अस्मिन् प्रदेशे, विरसं—कर्कशं, श्रुतिपरुषं यथा तथेत्यर्थः, रटन्तः—शब्दायमानाः, वायसाः,—काकाः, नयनसलिलेन—अश्रुणा, सिक्तम्—आर्द्रं, तथा पांशुभिः,—धूलिभिः,

चाण्डालौ। ओशलध अज्जा ! ओशलध * ।—

किं पेक्खध ? छिज्जंतं शप्पुलिशा ! काल-पलशु-धालाहिं।
शुअण-शउणाधिवाशं शज्जण-पुलिशद्दुमं एदं † ॥ ४ ॥

* अपसरत आर्य्याः ! अपसरत ।—

† किं पश्यत ? छिद्यमानं सत्पुरुषाः ! काल-परशु-धाराभ्याम्।
सुजन-शकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥

---

शोकेन भूमितलोपवेशनादितः लग्नैः, वधार्हत्वप्रतिपादनार्थमवज्ञया घातकप्रदत्तैर्वा इति भावः, ("रेणुः द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः" इत्यमरः) रूक्षी-कृतानि—धूसराणि, अङ्गानि—अवयवाः यस्य तत् तथोक्तं तथा पितृवनसुमनोभिः,—पितृवनं—श्मशानं, वधस्थानं वा, ("श्मशानं स्यात् पितृवनम्" इत्यमरः) तस्य सुमनोभिः,—तत्र भवैः, तत्र गमनसूचकैर्वा पुष्पैरित्यर्थः, ("स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम्" इत्यमरः) करवीरपुष्पैरिति यावत् (प्राक् करवीरस्यैवोक्तत्वात्) वेष्टितं—परिवृतं रक्तगन्धेन—रक्तेन—रक्तवर्णेन, गन्धेन—घृष्टचन्दनेन, घृष्टरक्त-चन्दनेन इत्यर्थः, अनुलिप्तं—परिव्याप्तं, म्रक्षितमित्यर्थः, मे—मम, शरीरम्—अङ्गं, बलिमिव—काकादिप्रदेयभूतयज्ञीयद्रव्यमिव, वैश्वदेवाय दीयमानं पूजाद्रव्यमिव वा, तन्नु काका एव भुञ्जते, अत एव तेषां "बलिभुक्, बलिपुष्टः" इति संज्ञाद्वयम्; काकादिभ्यो बलिप्रदानमाह मनुः.—"शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्। वायसानां कृमीणाञ्च शनकैर्निर्वपेद्भुवि ॥" इति। परिभोक्तुं—खादितुं, तर्कयन्ति—उत्प्रेक्षन्ते, अस्माभिरेतत् भक्षणीयमिति विचारयन्तीत्यर्थः। अत्रोपमानभूतेन बलिना सार्द्धं शरीरस्यावैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः। मालिनी वृत्तम् ॥ ३ ॥

सज्जनस्य विनाशदर्शनं साधूनामनुचितमिति तांस्तौ निवर्त्तयन्तावाहतुः, किमिति।—सत्पुरुषाः !—हे साधवः !, चारुदत्तस्य वधं द्रष्टुमागता इति भावः, सुजनाः,—सहृदयमानवाः, एव शकुनाः.—पक्षिणः, तेषाम् अधिवासः.—आश्रयः तं, सज्जनपुरुषः.—साधुपुरुषः एव, द्रुमः.—वृक्षः तं, पक्षिणो यथा वृक्षमाश्रित्य तिष्ठन्ति, तथा बहवः सत्पुरुषाः द्रुमस्वरूपममुमेव साधुं चारुदत्तमाश्रित्य अवर्त्तन्त इति भावः, कालपरशुधाराभ्यां—काल एव—कृतान्त एव, कृतान्तस्वरूपे इत्यर्थः, यद्वा—कालः.—कृतान्त इव, तस्य मारकत्वादिति भावः, परशुः—कुठारः, तस्य धाराभ्यां—तीक्ष्णाग्रभागाभ्यां, [ चाण्डालस्य द्वित्वात् परशुधारायाः द्वित्वमवधेयम् ]

आअच्छ ले चालुदत्ता! आअच्छ। *

चारु। पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः, यदहमीदृशीं दशामनुप्राप्तः। (क)—

सर्व्वगात्रेषु विन्यस्तैः रक्तचन्दनहस्तकैः।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः॥ ५॥

* आगच्छ रे चारुदत्त! आगच्छ।

आवाभ्यां विधृताभ्यामिति शेषः, छिद्यमानं—विपाद्यमानं, विनाश्यमानमिति यावत्, एतं—चारुदत्तमित्यर्थः, किं पश्यत?—किमवलोकयत? न युक्तमीदृशसाधुहननं द्रष्टुम्, अतः अपसरत इति भावः। ["छिज्जंतं सप्पुलिश्आ" इत्यत्र "छिज्जंतं शप्पुलिशं" इति "शप्पुलिशं वज्झंतं" इति च पाठान्तरद्वये "छिद्यमानं सत्पुरुषं" "सत्पुरुषं बध्यमानम्" इति च संस्कृतद्वयम्; तथा "कालपलशुधालाहिं" इत्यत्र "कालपलशुधलएहिं" इति पाठान्तरे "कालपरशुधराभ्याम्" इति संस्कृते आवाभ्यामिति अस्यविशेष्यपदस्य विशेषणतया व्याख्येयम्]। अत्र एतत्पदप्रतिपाद्ये उपमेये चारुदत्ते उपमानभूतस्य द्रुमस्य तादात्म्यारोपात् सुजनेषु शकुनित्वं काले च परशुधारात्वमारोपितमिति साङ्गं रूपकमलङ्कारः। एवं "सज्जनद्रुमम्" इत्यनेनैव अभीष्टार्थसिद्धौ पुनः पुरुषपदप्रयोगात् पुनरुक्ततादोषः; स च "सज्जनसरलद्रुममेतम्" इति पाठपरिवर्त्तनेन समाधातुं शक्यते। आर्य्या वृत्तम्॥ ४॥

(क) पुरुषभाग्यानां—मानवादृष्टानाम्, अचिन्त्याः,—अविभावनीयाः, दुर्ज्ञेया इति यावत्। व्यापाराः,—विषयाः, फलानीति यावत्। "स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः" इति भावः। यत्—येन अचिन्तनीयभाग्येनेत्यर्थः। ईदृशीं—कदाऽप्यचिन्तनीयां प्राणदण्डरूपविक्रियावतीमित्यर्थः। दशाम्—अवस्थाम्। अनुप्राप्तः,—लब्धः।

भाग्यवैषम्यकृतां तात्कालिकीं स्वीयामवस्थां विवृण्वन्नाह, सर्व्वगात्रेष्विति।—पुरुषः,—मानवः, मनुष्यलक्षणाक्रान्त इति भावः, अहं—चारुदत्त इत्यर्थः. सर्व्वगात्रेषु—सर्वाङ्गेषु, विन्यस्तैः,—अर्पितैः, रक्तचन्दनस्य—लोहितानुलेपनस्य, हस्तकैः,—हस्ताकारचिह्नैः उपलक्षित इत्यर्थः, (हस्ता इवेतीवार्थे "संज्ञायाञ्च" (५।३।९७ पा०) इति हस्तशब्दात् कन्। उपलक्षणे तृतीया; तथा पिष्टं—तिलतण्डुलादीनां विकारः, चूर्णं—कुङ्कुमादिगन्धद्रव्याणां रजश्च, ताभ्याम् अवकीर्णः,—अनुलिप्तश्च

[ अग्रतो निरूप्य ] अहो ! तारतम्यं नराणाम्। (ख) [ सकरुणम् ]—

अमी हि दृष्ट्वा मदुपेतमेतन्मर्त्यं धिगस्त्वित्युपजातबाष्पाः।
अशक्नुवन्तः परिरक्षितुं मां स्वर्गं लभस्वेति वदन्ति पौराः ॥ ६ ॥

सन्, पशूकृतः,—देवतोद्देशकच्छेद्यच्छागादिपशुरूपेण परिणतः, देवताप्रीतये छेदनीयः पशुवर्गो यथा रक्तचन्दनादिभिरलङ्क्रियते, तथा अहमपि कृत इत्यर्थः, [ अपशुः पशुः सम्पद्यमानः कृत इति विग्रहे "कृभ्वस्ति—" ( ५।४।५ पा० ) इति कृधातुसम्पदात् पशुशब्दादभूततद्भावे च्विप्रत्ययः ] पुरा हि वध्यस्य शरीरं रक्तचन्दनेन हस्ताकारचिह्नाङ्कितमक्रियतेति व्यवहारोऽनेनानुमीयते। अत्रोपमानभूते पुरुषे पशोस्तादात्म्याध्यासात् निरङ्गं रूपकमलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ ५ ॥

( ख ) अहो इति खेदे, विस्मये वा। नराणां—राजपुरुषदुष्टपुरुषरूपाणा-मित्यर्थः। तारतम्यं—वधसाधन-बाष्पविसर्जनादिकृतः परस्परं भेदः; केऽपि मां निघ्नन्तः प्रयान्ति, केचन वा तदवलोकयन्तः दुःखं प्रकाशयन्तीति भावः।

राजपुरुषाणां नागरिकाणाञ्च परस्परं तारतम्यं दर्शयितुं नागरिकाणां खेदं विवृण्वन्नाह, अमी इति।—अमी—इतस्ततः समवेताः, पौराः,—नागरिकाः, मदुपेतं—मयि—मद्विषये, उपेतम्—उपस्थितम्; अथवा मया उपेतं—दुर्दैववशात् प्राप्तमित्यर्थः, एतत्—उपस्थितम् अकारणवधदण्डरूपम् अवमाननमित्यर्थः; यद्वा,— मया उपेतं—प्राप्तं, धृतमिति यावत्, एतत्—करवीरमाल्यादिरूपं वध्यचिह्नं, [ "एतत्—निरपराधवधादिदुःखम्" इति लल्लादीक्षितः। "मदुपेतम्" इत्यत्र "मम देहमेतम्" इति पाठान्तरे—एतम्—ईदृशं, वध्यचिह्नैश्चिह्नितमित्यर्थः, मम—मे, देहं—शरीरं ] दृष्ट्वा—विलोक्य, मर्त्यं—मानवं, मरणधर्माणमित्यर्थः, पशुवत् व्यवहरन्तमिति यावत्, धिक्—निन्दा, अस्तु—वर्त्ततां, तादृशं जनं निन्दाम इत्यर्थः, इति—इत्थम्, उक्त्वेति शेषः, उपजातबाष्पाः,—दुःखातिशयात् अश्रु-पूर्णनयनाः [ उपजातबाष्पाः" इत्यत्र "उपजातखेदाः" इति पाठान्तरम् ] मां— वध्यभूतं चारुदत्तमित्यर्थः, परिरक्षितुं—घातकहस्तात् परित्रातुम् अशक्नुवन्तः,— अपारयन्तः सन्तः, स्वर्गं—सुरपुरं, लभस्व—प्राप्नुहि, इति वदन्ति—कथयन्ति; एके निरपराधमपि मामपराधिनं निश्चित्य वधार्थं चाण्डालहस्ते समर्पणादिकृतां नरकयातनां ददति, अपरे पुनः मां निर्दोषं मत्वा रक्षिसकाशात् परित्रातुमसमर्थाः शोकावेगादगत्या मम स्वर्गं प्रार्थयन्ते इत्यहो ! मानवानां प्रकृतिवैषम्यम् इति भावः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ ६ ॥

चाण्डालौ। ओसलध अज्जा! ओसलध। किं पेक्खध? *—

इंदे पवाहिअंते गोप्पसवे संकमे च तालाणं।
सुपुलिस-पाणविपत्ती चत्तालि इमे ण दट्ठव्वा † ॥ ७ ॥

एकः। हण्डे आहींता! (ग) पेक्ख पेक्ख, ‡—

* अपसरत आर्य्याः! अपसरत। किं पश्यत?—

† इन्द्रः प्रवाह्यमाणो गोप्रसवः सङ्क्रमश्च ताराणाम्।
सुपुरुषप्राणविपत्तिश्चत्वार इमे न द्रष्टव्याः॥

‡ हण्डे आहीन्त! पश्य पश्य —

साधुभिः सज्जनवधदर्शनस्य अशास्त्रीयत्वेन अयुक्तत्वात् तावतौ निवर्त्तयितुं तौ सज्जनवधस्यादर्शनीयत्वमाहतुः. इन्द्र इति।—इन्द्रः —इन्द्रध्वजः, स्वराज्यवृष्टिशस्यादिवृद्ध्यर्थं राज्ञा क्रियमाणः इन्द्रदैवतः पताकाविशेष इत्यर्थः, [ अत्र इन्द्रशब्देन इन्द्रपूजार्थं निर्म्मितः तदीयध्वज एव लक्ष्यते, तस्यैव विसर्ज्जनकाले प्रवाहत्वदर्शनात्, अन्यथा इहलोके इन्द्रस्य साक्षात् दर्शनासम्भवात् उक्तिरियमसङ्गता स्यादिति विद्वद्भिः विभावनीयम् ] प्रवाह्यमाणः.—विसर्जनार्थं नीयमानः, [ इन्द्रध्वजविसर्जनस्य रहसि कर्त्तव्यतामाह कालिकापुराणं यथा,—"उत्थापयेत्सूर्य्यरवेः सर्व्वलोकस्य वै पुरः। रहो विसर्जयेत् केतुं विशेषोऽयं प्रपूजने॥" इति, "एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः। श्रवणर्क्षयुतायाञ्च द्वादश्यां पार्थिवः स्वयम्॥ अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्ज्जयेत्। सुप्तेषु सर्व्वलोकेषु यथा राजा न पश्यति॥" इति च ] गोः —सौरभेय्याः, प्रसवः —गर्भमोचनं, ताराणां— नक्षत्राणां सङ्क्रमः —चलनम् अधःपतनमित्यर्थः। [ "संकमे च" इत्यत्र "णिवडणं च" इति पाठान्तरं —"निपतनञ्च" इति संस्कृतम् ] सुपुरुषाणां—सज्जनानां. प्राणविपत्तिः,—जीवनविनाशः, इमे—एते, चत्वारः,—विसर्ज्जनाय नीयमानेन्द्रध्वजादिरूपाः चतुर्विधाः पदार्थाः, न द्रष्टव्याः,—नावलोकनीयाः; साधुभिरेतेषां दर्शनं यत्नतः परिवर्ज्जनीयम् अमङ्गलहेतुत्वात्,तथा च कालिकापुराणे "मैथुनञ्च गोप्रसवं केतुपात सतो वधम्। नक्षत्राणाञ्च सञ्चारं शुभार्थी नावलोकयेत्॥"इति इतो यूयमचिरम् अपसरत इति भावः। आर्य्या वृत्तम् ॥७॥

(ग) हण्डे इति नीचसम्बोधनसूचकमव्ययम्; ("हण्डे हञ्जे हलाऽऽह्वानं नीचां चेटीं सखीं प्रति" इति हण्डे इत्यादि शब्दत्रयस्य नीचायाः चेट्याः सख्याश्च सम्बुद्ध्यर्थकत्व-मुक्तममरेण, आलङ्कारिकास्तु "हण्डे इत्यधमैः समाः" इति जात्या कर्म्मणा च समानाम् अधमानां सम्बुद्ध्यर्थकमेतदिति वदन्ति)। आहींता इति द्वितीयचण्डालस्य नाम्ना आमन्त्रणं बोध्यम्।

णअली-पधाणभूदे वज्झीअंते कदंतआणाए।
किं लुअदि अंतलिक्खे? आदु अणब्भे पड़दि वज्जे? * ॥ ८ ॥

द्वितीयः। अले गोहा! (घ)—
ण अ लुअदि अंतलिक्खे णेअ अणब्भे पड़दि वज्जे।
महिला-शमूह-मेहे निवड़दि णअणंबु धाराहिं † ॥ ९ ॥

---

* नगरीप्रधानभूते बध्यमाने कृतान्ताज्ञया।
किं रोदित्यन्तरीक्षम्? अथवा अनभ्रे पतति वज्रम्? ॥

† अरे गोह!—न च रोदित्यन्तरीक्षं नैवानभ्रे पतति वज्रम्।
महिलासमूहमेघान्निपतति नयनाम्बु धाराभिः ॥

---

चारुदत्तस्य वधादेशश्रवणेन शोकार्त्तानां गवाक्षदेशस्थितानां पुरस्त्रीणां रोदनादि-व्यापारं प्रथमचाण्डालस्य वितर्कमाह, नगरीति।—कृतान्तस्य—अलङ्घ्यादेशस्य यम-कल्पस्य राज्ञः पालकस्य, आज्ञया—आदेशेन, नगरीप्रधानभूते—नगर्य्याः,—उज्जयिन्या इत्यर्थः, प्रधानभूते—श्रेष्ठपुरुषरूपे, चारुदत्ते इत्यर्थः, बध्यमाने—हन्तुं बध्यभूमिं नीयमाने सतीत्यर्थः, आवाभ्यामिति शेषः, अन्तरीक्षम्—आकाशं, रोदिति—क्रन्दति किम्? अथवा—किं वा, अनभ्रं—मेघसम्बन्धरहितमित्यर्थः, [ नास्ति अभ्रं मेघो यस्मिन् तदिति विग्रहः ] मेघशून्यादाकाशदेशात् इति यावत्, वज्रम्—अशनिः, पतति—सशब्दं निक्षिप्तं भवति किम्? तादृशसत्पुरुषस्य अकारणप्राणदण्डोद्योगदर्शनेन रोरुद्य-मानानां पुरस्त्रीणां भूमावविरलधारमश्रुपतनात् अन्तरीक्षं रोदिति चतुर्दिक्षु श्रवण-विदारि-हाहाकारशब्दप्रादुर्भावात् वज्रं पततीति चाण्डालस्य वितर्कः। अत्र प्रकृतयोः पुरस्त्रीकर्त्तृकयोरश्रुपातरोदनयोः अप्रकृतान्तरीक्षकर्त्तृकरोदनवज्रपातयोः तादात्म्यारोपस्य किंशब्देन सूचनात् सन्देहरूपतया पर्य्यवसानात् सन्देहो नाम अलङ्कारः। आर्य्या वृत्तम् ॥ ८ ॥

( घ ) गोह इति प्रथमचण्डालस्य नाम्ना आमन्त्रणं बोध्यम्।

प्रथमचाण्डालकृतं वितर्कजालं निरसितुं प्रकृतमुपवर्णयन् तद्वचनस्य प्रत्युत्तर-माह न चेति।—अन्तरीक्षम्—आकाशं, न च—नैव रोदिति—क्रन्दति, तथा अनभ्रं—मेघसम्बन्धरहितं, मेघाभावेऽपीत्यर्थः, [ नास्ति अभ्रं तत्सम्बन्ध इत्यर्थः यस्मिन् तदिति विग्रहः ] वज्रम्—अशनिः, नैव—न हि, पतति—निक्षिप्तं भवति। एवं नो चेत् तर्हि किमेतदित्याशङ्कायां प्रस्तुतमाह, महिलेति।—महिलासमूहः,—

अविश्च ।—

वज्झम्मि णीअमाणे जणस्स शव्वश्श लोदमाणश्श ।

णअण-शलिलेहिं शित्ते लच्छादो ण उस्समइ लेणू * ॥ १० ॥

चारु । [ निरूप्य सकरुणम् ]—

एताः पुनर्हर्म्यगताः स्त्रियो मां

वातायनार्द्धेन विनिःसृतास्याः ।

---

अपि च ।—वध्ये नीयमाने जनस्य सर्व्वस्य रुदतः ।

नयनसलिलैः सिक्ता रथ्यातो न उन्नमति रेणुः ॥

---

नारीनिकर एव मेघः,—जलदः तस्मात्, [ अविरतनेत्रजलवर्षणात् नारीसमूहे मेघत्वारोपो बोध्यः ] नयनाम्बु—नेत्रोदकम्, अश्रु इति यावत्, धाराभिः,—प्रवाहैः, वृष्टिप्रवाहरूपप्रवाहैरित्यर्थः, पतति—स्रवति, पौरयोषितां लोचनेभ्यः अनवरतमश्रुधारा विगलतीत्यर्थः । अत्र निरपङ्कविषये महिलासमूहे मेघतादात्म्याध्यासात् रूपकमलङ्कारः । उपगीतिः वृत्तम् ॥ ९ ॥

नागरिकाणामपि शोकप्रकर्षप्रकारमाह, वध्ये इति ।—वध्ये—मारणीये, चारुदत्ते इत्यर्थः, नीयमाने—प्राप्यमाणे सति, वधाय रथ्याभूमिम् आवाभ्यामिति शेषः, रुदतः,—क्रन्दतः क्रन्दनपरायणस्य इति यावत्, सर्व्वस्य—सकलस्य जनस्य—नगरवासिलोकस्य, रुदतामुज्जयिनीवासिनामित्यर्थः, नयनसलिलैः,—अश्रुधाराभिः, सिक्तः —आर्द्रः पङ्किलतां गत इति यावत्, रेणुः,—धूलिः रथ्यास्थ इति भावः, रथ्यातः —मार्गात्, न उन्नमति—उत्तिष्ठति, उड्डीय परितः प्रसरति इत्यर्थः, अविरतबहुनेत्रजलपतनेन कर्द्दमीभूतत्वादिति भावः । "णअणशलिलेहिं" इत्यत्र हकारस्य सानुस्वारत्वेऽपि छन्दोऽनुरोधात् लघुत्वं बोद्धव्यम् । अत्र रथ्यारेणूनामनुत्पतने रुदज्जनाजननयनसलिलसेकासम्बन्धेऽपि तत्सम्बन्धकथनात् असम्बन्धे सम्बन्धरूपा अतिशयोक्तिरलङ्कारः । आर्य्या वृत्तम् ॥ १० ॥

चाण्डालवचनमाकर्ण्य ऊर्द्धदृष्ट्या पश्यन् पुरस्त्रीणां शोकं विवृण्वन्नाह एता इति ।—हर्म्यगताः,—धनिनाम् इष्टकादिरचितधवलगृहेऽवस्थिताः, ( "हर्म्यादि धनिनां वासः" इत्यमरः ) एताः,—वातायनाभ्यन्तरात् ईषत्परिदृश्यमाना इत्यर्थः, स्त्रियः,—नार्य्यः धनवतां महिला इति यावत्, पुनः, वातायनार्द्धेन—वातस्य—पवनस्य, अयनं—गमनं येन तत् वातायनं—गवाक्षः, तस्य अर्द्धेन—अर्द्धांशेन, अर्द्धोन्मुक्तवातायनपथेनेत्यर्थः, विनिःसृतानि,—विनिर्गतानि, आस्यानि—मुखानि

हा ! चारुदत्तेत्यभिभाषमाणा
वाष्पं प्रणालीभिरिवोत्सृजन्ति ॥ ११ ॥

चाण्डालौ। आअच्छ ले चालुदत्ता ! आअच्छ। इमं घोशण-ट्ठाणं। आहणेध डिंडिमं, घोशेध घोशणं। * (ङ)

उभौ। शुणाध अज्जा ! शुणाध—एशे शत्थवाह-विणअ-दत्तश्श णत्तिके, शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम; एदिणा किल अकज्जकालिणा गणिआ वशंतशेणा अत्थकल्ल-वत्तश्श कालणादो शुण्णं पुप्फकलंडअजिण्णुज्जाणं पवेशिअ

---

* आगच्छ रे चारुदत्त ! आगच्छ। इदं घोषणास्थानम्। आहत डिण्डिमं, घोषयत घोषणाम्।

† शृणुत आर्य्याः ! शृणुत—एष सार्थवाहविनयदत्तस्य नप्ता, सागरदत्तस्य पुत्त्रकः आर्य्य-चारुदत्तो नाम। एतेन किलाकार्य्यकारिणा गणिका वसन्तसेना अर्थकल्यवर्त्तस्य

---

यासां ताः तथाभूताः सत्यः, [ "विनिःसृतास्राः" इत्यत्र "विनिःसृताद्यः" इति पाठान्तरे—विनिःसृतानि अक्षीणि याभिः तथोक्ताः ] माम्, उद्दिश्य इति शेषः, हा इति खेदे चारुदत्त ! इति—चारुदत्तेत्येतावन्मात्रमेव, अभिभाषमाणाः,—कथयन्त्यः, विलपन्त्यः सत्य इत्यर्थः, प्रणालीभिः,—परिवाहविनिर्गतजलधाराभिः, यद्वा,—जलनिःसरणमार्गैः इव, ( "द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः ) वाष्पं—नेत्र-जलम्, उत्सृजन्ति—मुञ्चन्ति ; जलनालीभिरिव पौरयोषितां नेत्रैः प्रबलवेगेन अश्रुधाराः विगलन्तीत्यर्थः। अत्र प्रकृतानां स्त्रियामक्ष्णां पयःप्रणालीत्वेन सम्भावनात् उत्प्रेक्षाऽलङ्कारः। इन्द्रवज्रा वृत्तम् ॥ ११ ॥

( ङ ) घोषणास्थानम्—अपराधप्रख्यापनस्थानमित्यर्थः ; अनुमीयते चैतत् यत् राज्ञां सुचिरप्रचलिता एषा शासनपद्धतिः आसीत् किल, येन हि महापातकिनां प्राणदण्डार्हाणां राजदण्ड्यानां श्रेष्ठिचत्वरेषु, महाजनावासभूमिषु, चतुष्पथेषु, नगर्य्याः प्रधानस्थलेषु, वध्यभूमिषु च प्रख्यापयितुम् अविनीतान् मदोद्धतान् शिक्षयितुमेव दण्डनीयस्यापराधघोषणा विशेषेण घातुकैरक्रियतेति, तेन हि उज्जयिन्याः प्रधानतम-मार्गेषु चारुदत्तस्यापराधघोषणा चाण्डालैः पञ्चकृत्वः कृतेति बोध्यम्। आहत—ताडयत, वादयत इत्यर्थः। डिण्डिमं—राजाज्ञाघोषणार्थं वाद्यमानयन्त्रविशेषम्। घोषयत—उच्चैः प्रख्यापयत इत्यर्थः। घोषणां—राज्ञः आदेशम्।

बाहुपाशबलक्कालेन मालिदे त्ति एशे शलोत्ते गहिदे, शअं अ पड़िवस्से। तदो लस्सा पालएण अम्हे आखत्ता एदं मालेदुं। जदि अवले ईदिशं उभअ-लोअविलुद्धं अकज्जं कलेदि, तं पि लाआ पालअ एव्वं ज्जेव शाशदि। † (च)

चारु। [ सनिर्वेदं (छ) स्वगतम् ]—

मखशत-परिपूतं गोत्रमुद्भासितं मे
सदसि निविड़चैत्य-ब्रह्मघोषैः पुरस्तात्।

---

कारणात् शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति एष सलोप्त्रो गृहीतः, स्वयञ्च प्रतिपन्नः। ततो राज्ञा पालकेन वयमाज्ञप्ताः एतं मारयितुम्। यद्यपर ईदृशमुभयलोकविरुद्धमकार्य्यं करोति, तमपि राजा पालक एवमेव शास्ति।

(च) नप्ता—पौत्रः। एषः,—चारुदत्तः। सलोप्त्रः,—लोप्त्रं—दस्युतस्करादिभिः अपहृतं धनं, प्रकृते तु वसन्तसेनाया भूषणजातं, तेन सहितः, सद्रव्यः, सालङ्कार इत्यर्थः, ("लोप्त्रन्तु तद्धनम्" इत्यमरः, तद्धनं — चौर्य्यधनम् इत्यर्थः)। गृहीतः,—धृतः। स्वयम्—आत्मना, स्वमुखेनेति यावत्। प्रतिपन्नः,—वसन्तसेना मयैव हता इति स्वीकृतवानिति भावः। आज्ञप्ताः,—आदिष्टाः। एतं—चारुदत्तमित्यर्थः। अपरः, —अन्यः, यः कश्चिदिति शेषः। ईदृशम्—एवम्प्रकारं, स्त्रीवधरूपमिति यावत्। उभयलोकविरुद्धम्—इहलोकपरलोकप्रतिकूलम्, ऐहिकपारत्रिकामङ्गलहेतुभूतमित्यर्थः। करोति—करिष्यतीत्यर्थः। एवमेव—ईदृशमेव, चारुदत्तस्य दण्डानुरूपमेवेत्यर्थः। शास्ति – दण्डयिष्यति इत्यर्थः, कश्चिदेवं करिष्यति चेत्, राजा तं दण्डयिष्यतीत्यर्थः, ["करोति" "शास्ति" इत्यत्र "आशंसायां—" (३।३।१३२ पा०) इति आशंसायां भविष्यदर्थे लट्]।

(छ) सनिर्वेदं—सवैराग्यं, सखेदमिति यावत्।

चाण्डालानां घोषणावाक्यमाकर्ण्य पूर्व्वपुरुषाणां कीर्त्त्यादिकं तथा स्वकीयां पूर्वाम् इदानीन्तनीञ्चावस्थां स्मृत्वा सविषादमाह, मखेति।—पुरस्तात्—पूर्वं, मे—मम, मखानां—यज्ञानां, शतैः,—अनेकशतसङ्ख्याभिः, समूहैरित्यर्थः, शतशोऽनुष्ठितयज्ञैरिति भावः, परिपूतं—विशुद्धं, यत् गोत्रं—कुलं, ("सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरः) सदसि—सभायां, यज्ञसंसदि इत्यर्थः, निविड़ानि—निमन्त्रितलोकैराकीर्णानि इत्यर्थः, यानि चैत्यानि—पूजाद्यायतनानि, तेषु ये ब्रह्मघोषाः,

मम मरणदशायां वर्त्तमानस्य पापैः
तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

[ उद्वीक्ष्य कर्णौ पिधाय (ज)] हा प्रिये वसन्तसेने !—

शशिविमल-मयूख-शुभ्रदन्ति !
सुरुचिर-विद्रुम-सन्निभाधरोष्ठि ! ।

—वेदवादाः, तैरुद्भासितं—समुज्ज्वलीकृतम्, आसीदिति शेषः; इदानीं मरणदशायां—निधनावस्थायां, वर्त्तमानस्य—तिष्ठतः, मृत्युकवलगतकल्पस्य इत्यर्थः, मम—मे, तत्—गोत्रं, पापैः,—पापाचारिभिः, असदृशमनुष्यैः,—असदृशाः,—अयोग्याः, अतिनीचा इत्यर्थः, ये मनुष्याः,—लोकाः तैः, चाण्डालादिभिरिति यावत्, घोषणायां—घोषणास्थाने, घुष्यते—उच्चैः कीर्त्त्यते, किमितः परमाक्षेपकरमिति भावः। इह यद्धि कुलं पुरा नियतमेव ब्रह्मवादिनां ब्रह्मघोषैरुद्भासितमासीत्, इदानीं तदेव पापाचारिभिः चाण्डालैः घोषणया घुष्यते इति ब्रह्मघोषणा-हत्याघोषणारूपविरूपयोरैकत्र सङ्घटनात् विषमालङ्कारः, "विरूपयोः सङ्घटना या च तद्विषमं मतम्" इति लक्षणात्; पूर्वार्द्धे प्रस्तुतस्य वर्णनीयविषयस्याङ्गतया महतां चारुदत्तपूर्व्वपुरुषाणां मखशताद्यनुष्ठानपूतस्य चरितस्योपवर्णनात् उदात्तालङ्कारश्च एतयोरन्योऽन्यसापेक्षतया सङ्करः। अत्र "शृणाथ अज्जा ! शृणाथ" इत्यारभ्य "तदसदृशमनुष्यैः घुष्यते घोषणायाम्" इत्यन्तग्रन्थेन वसन्तसेनामारणनिमित्तकचारुदत्तवधप्रख्यापनस्य स्वकुलाभ्युदयानुकूलविशेषपरिचयप्रदानस्य प्रसङ्गात् पित्रादिगुरूणामुत्कीर्त्तनेनात्र विमर्षसन्धेः प्रसङ्गो नामाङ्गविशेषः बोध्यः; तदुक्तं दर्पणे,—"प्रसङ्गो गुरुकीर्त्तनम्" इति। मालिनी वृत्तम् ॥ १२ ॥

(ज) उद्वीक्ष्य—ऊर्द्ध्वं निरीक्ष्य, निहताया वसन्तसेनायाः स्वर्गस्थत्वसम्भावनादत्र सखेदम् ऊर्द्ध्वनिरीक्षणं बोध्यम्; [ "उद्वीक्ष्य" इत्यत्र "उद्वीज्य" इति पाठान्तरे—उद्वेगं कृत्वा इति पृथ्वीधरः, वीजयतेः चौरादिकस्य व्यजनार्थकत्वमेव प्रसिद्धम्, इह तु उपसर्गयोगादेव बलात् उद्वेगार्थकत्वं कल्पितमित्यवधेयम् ] पिधाय—आच्छाद्य; प्रख्यातकुलोद्भूतस्य स्वस्य चण्डालकृतापराधघोषणायां पूतचरितानां पितृपुरुषाणामपि नामकीर्त्तनात् कुलदूषणेन स्वेनैव पुण्यश्लोकानां तेषामपि कलङ्कित्वं सोढुमशक्नुवता, अतिप्रेमास्पदीभूता प्राणसमा वसन्तसेना च स्वेनैव हतेति अत्यन्तदुःश्रवं वाक्यं श्रोतुमशक्नुवता वा अनेन कर्णाच्छादनं कृतमिति बोध्यम्।

बहुशः कर्णरसायनं वसन्तसेनावचनामृतं निपीय परमपरितृप्तिमुपेयुषा श्रवण-

तव वदन-भवामृतं निपीय
कथमवशो ह्ययशोविषं पिबामि ? ॥ १३ ॥

युगलेन घातुकघोषणां श्रोतुमशक्नुवन्नाह, शशीति।—शशिनः,—चन्द्रस्य, ये विमलाः,—उज्ज्वलाः, धवला इत्यर्थः, मयूखाः,—किरणाः, ते इव शुभ्राः,—विशदाः, दन्ताः,—दशनाः यस्यास्तत्सम्बुद्धौ, निर्मलसुधाकरकरावदातदशने इत्यर्थः, तथा सुरुचिरः,—अतिमनोहरः, यः विद्रुमः,—प्रवालः, तत्सन्निभं—तत्सदृशम्, अधरौष्ठम्—अधरः,—निम्नौष्ठश्च, ओष्ठः,—उत्तरौष्ठश्च तयोः समाहारः, [ प्राण्यङ्गत्वात् "द्वन्द्वश्च—" ( २।४।२ पा० ) इति समाहारे एकवद्भावः ] तत् यस्याः तत्सम्बोधने, प्रवालवदति-रुचिररक्तिमाधरौष्ठविशिष्टे इत्यर्थः, ( यद्यपि "ओष्ठाधरौ तु रदनच्छदौ दशन-वाससी" इत्यमरोक्तेः अधरौष्ठौ एकार्थवाचकौ, तथाऽपि केषाञ्चिन्मते ऊर्द्ध्वस्थः ओष्ठः, अधःस्थस्तु अधरः, "अधरोष्ठेऽधरः पुमान्" इति बलशर्म्मोक्तेः अधरोष्ठशब्देन उत्तरा-धरौ रदनच्छदौ बोद्धव्यौ। केचित्तु समाहारद्वन्द्वमुपेक्ष्य "अधरेण सहितः ओष्ठः" इति विग्रहे शाकपार्थिवादित्वात् उत्तरपदलोपिसमासं वदन्ति, तथात्वे तत्सन्निभः अधरौष्ठः यस्याः इति समुदितविग्रहः ] तव—ते, वदनभवामृतं—मुखोत्थपीयूषं, निपीय—आस्वाद्य, ( इदानीम् ) अवशः,—अनायत्तः, पराधीनः सन् इत्यर्थः, कथं—केन प्रकारेण, अयशोविषम्—अयशः,—स्त्रीघातकोऽयमिति अकीर्त्तिरूपमित्यर्थः, विषं—गरलम्, [ इति रूपकम् ] विषमिव अयशः,—दुष्कीर्त्तिमिति वाऽर्थः, [ इत्युपमा ] पिबामि ?—पानं करोमि ? आस्वादयामि ? इत्यर्थः ; पूर्वं बहुशः सर्वोत्कृष्टं प्राणपदं स्वादु सुपेयं नियतं पिबते जनाय पश्चादतिकटु स्वादरहितं हृदयदाहकं पेयं कथमपि न रोचते इति भावः। यशोधनानां हि अयशः विषसम्पृक्तशल्यवत् मर्म्मपीडाकरं भवतीति तात्पर्य्यम्। अत्रामृतपान-विषपानरूपयोः विरुद्धयोः वस्तुनोरेकत्र सङ्घटनादर्शनात् विषमालङ्कारः, तथा शुभ्रशशिमयूखैः सह दन्तानां, विद्रुमेण सहाधरौष्ठस्य अवैधर्म्म्यसाम्यबोधादुपमाद्वयम् ; एवमत्र आपाततः आस्वाद्यमानः शृङ्गाररसः करुणस्याङ्गत्वमधिगत इति तस्य गुणीभूतत्वात् रसवदलङ्कारः इत्येतेषां परस्परसापेक्षतया स्थितेः सङ्करः। ननु अत्र करुण एव रसः इति तद्विरोधिनः शृङ्गारस्य अङ्गभावेनापि इहावतारणमनुचितमेव इति चेदत्रोच्यते,—अत्र वसन्तसेना एवालम्बनविभावः, तस्या विच्छेदादेव रतिः सम्पूर्णतया न आस्वाद्यते, केवलं स्मर्य्य-माणानां तदधरपानादीनां करुणरसस्थायिभावस्य शोकस्योद्दीपकतया करुणस्यानु-कूलत्वमेवेति अङ्गिनः करुणस्याङ्गभूततया तदुपकारकस्य शृङ्गाररसस्योदयात् न

चाण्डालौ। ओशालणं किदं, विवित्तं लाअमग्गं, ता आणेध एदं दिण्णवज्झचिण्हं। * ( भ )

चारु। [ निश्वस्य "मैत्रेय भोः ! किमिदमद्य—" इत्यादि पठति ]।

[ नेपथ्ये ] हा तादं ! हा पिअवअस्स ! †

चारु। [ आकर्ण्य सकरुणम् ] भोः स्वजातिमहत्तर ! इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्त्तुम्। ( ञ )

* अपसारणं कृतं, विविक्तो राजमार्गः, तदानयतैनं दत्तवध्यचिह्नम्।

† हा तात ! हा प्रियवयस्य !

किञ्चित् साहाय्यं प्रार्थये इत्याशङ्कया मद्दर्शनपथं परिहृत्य दूरवर्त्तिस्थानमयन्ते इति भावः ; तथाहि, परोऽपि—उदासीनोऽपि, शत्रुरपि वा, समे - समायामवस्थायाम् इत्यर्थः, सम्पदीति यावत्, संस्थितस्य—वर्त्तमानस्य, विभवशालिनः इति भावः, जनस्य —नरस्य, बन्धुः,—मित्रं, भवति—सम्पद्यते, साहाय्यलाभप्रत्याशया, वैरसाधने असमर्थतया वा बन्धुवदाचरतीति भावः, कश्चित्—कोऽपि जनः, विषमस्थितस्य— विषमे—सङ्कटे, स्थितस्य—वर्त्तमानस्य, विपन्नस्य इत्यर्थः, जनस्य इति शेषः, मित्रं— सुहृत्, न, भवतीति शेषः, उपकारलाभसम्भावनाविरहादिति भावः। अत्र सङ्कटावस्थायां सर्व्वसाधारणस्यैव मित्रत्यागस्वाभाव्यरूपसामान्येन चारुदत्तमित्राणां तद्विपद्दशायामिदानीं परित्यागरूपविशेषार्थस्य समर्थनात् सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासोऽलङ्कारः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम्॥ १६॥

( भ ) अपसारणम्—अपनयनं, विताड़नमिति यावत्, दर्शकानामिति शेषः। विविक्तः,—विजनः, जनशून्य इति यावत्, ( "विविक्तौ पूतविजनौ" इत्यमरः )। तत्—तस्मात्, इदानीं राजमार्गस्य निर्जनत्वात् इत्यर्थः। आनयत—उपस्थापयत, त्वरितं दक्षिणश्मशानमिति शेषः ; अन्यथा चारुदत्तदर्शनार्थं राजमार्गे पुनः जनाकीर्णे सत्वरमस्य वध्यभूमिनयनं व्याहतं भवेदिति भावः। एनं—चारुदत्तम्। दत्तवध्यचिह्नं —दत्तानि—अर्पितानि, परिन्यस्तानीत्यर्थः, वध्यानां—वधदण्डार्हाणां, चिह्नानि— रक्तकरवीरमाल्यादीनि ज्ञापकलक्षणानि यस्य तं, परिधापितरक्तकरवीरमाल्यादिक-मित्यर्थः।

( ञ ) स्वजातिषु—चाण्डालजातिषु इति यावत्, महत्तरः,—अतिमहान्, तत्सम्बोधने ; स्वकार्य्यसाधनाय सदाशयत्वख्यापनाय वा प्रशंसावादोऽयमिति बोध्यम्।

चाण्डालौ। किं ! अम्हाणं हत्यादो पड़िग्गहं कलेशि ? * (ट)

चारु। शान्तं पापम्। न अपरीक्ष्यकारी दुराचारः पालक इव चाण्डालः। तत् परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये। (ठ)

चाण्डालौ। एव्वं (ड) कलीअदु। †

[नेपथ्ये] हा ताद ! हा आवुक ! ‡ (ढ)

चारु। [श्रुत्वा सकरुणम्] "भोः स्वजातिमहत्तर !—" [इत्यादि पठति]।

चाण्डालौ। अले पउला ! खणं अंतलं (ण) देध, एशे अज्ज-

* किम् ! अस्माकं हस्तात् प्रतिग्रहं करोषि ?

† एवं क्रियताम्। ‡ हा तात ! हा आवुक ! (पितः !)

प्रतिग्रहं—स्वीकरणं, दानग्रहणस्वीकारमित्यर्थः। ("प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे॥" इति मेदिनी)।

(ट) अस्माकं—चाण्डालानामित्यर्थः, ब्राह्मणानां चाण्डालप्रतिग्रहस्य पातित्यकरत्वात् सर्वथैव निषिद्धत्वेन ब्राह्मणकुलप्रसूतस्य चारुदत्तस्य तथाविधाभिलाषः अतीव असम्भव इत्याशङ्क्य "अस्माकम्" इत्यस्य प्रयोगो बोध्यः, यद्वा,—हीनदरिद्राणामस्माकं हस्तात् किं प्रतिग्रहं—दानग्रहणं करोषि ? नीचानामस्माकं का शक्तिः, भवन्तं प्रतिग्राहयितुम् ? इति भावः। करोषि—करिष्यसीत्यर्थः [अत्र भविष्यत्सामीप्ये लट्]।

(ठ) पापं—पापसाधकम्, अन्याय्यमित्यर्थः, दुर्वच इति यावत्। शान्तं—निरस्तं, भवतु इति शेषः, यूयं चाण्डालाः इत्यादिरूपं मा वदत इति भावः। कुतः ? इत्याशयेनाह, नेति।—अपरीक्ष्यकारी—परीक्ष्य—सम्यक् विविच्य न करोतीति तथाविधः अविमृष्यकारी इत्यर्थः; यूयं जात्या चाण्डाला अपि दुर्वृत्तः अविवेचकः पालक इव व्यवहारतः चाण्डालाः न, सद्व्यवहारप्रकाशनादित्याशयः, युष्माकं सद्सद्विवेकः अस्ति इति भावः। परलोकार्थं—परलोके पुन्नामनरकात् परित्राणलाभाय इत्यर्थः। अभ्यर्थये—याचे।

(ड) एवम्—इत्थं, पुत्रमुखदर्शनमित्यर्थः।

(ढ)—हा इति विषादद्योतकमव्ययम्। आवुक !—जनक ! ("अथावुको जनकः" इत्यमरः)।

(ण) पौराः !—पुरवासिनः ! अन्तरम्—अवकाशम्, आगमनावसरमिति यावत्।

चालुदत्ते पुत्तमुहं पेक्खदु। [नेपथ्याभिमुखम्] अज्ज! इदो इदो। आअच्छ ले दालआ! (त) आअच्छ। *

[ततः प्रविशति दारकमादाय विदूषकः]।

विदू। तुवरदु तुवरदु भद्दमुहो, पिदा दे मारिदुं णोअदि। † (थ)

दारकः। हा ताद! हा आवुक! ‡

विदू। हा पिअवअस्स! कहिं मए तुमं पेक्खिदव्वो? §

चारु। [पुत्रं मित्रञ्च वीक्ष्य] हा पुत्र! हा मैत्रेय! [सकरुणम्] भोः कष्टम्!—

चिरं खलु भविष्यामि परलोके पिपासितः।
अत्यल्पमिदमस्माकं निवापोदकभोजनम्॥ १७॥

* अरे पौराः! क्षणमन्तरं दत्त, एष आर्यचारुदत्तः पुत्रमुखं पश्यतु। आर्य इत इतः। आगच्छ रे दारक! आगच्छ।

† त्वरतां त्वरतां भद्रमुखः, पिता ते मारयितुं नीयते।

‡ हा तात! हा आवुक! (पितः!)

§ हा प्रियवयस्य! कुत्र मया त्वं द्रष्टव्यः?

(त) आर्य!—मान्य! इदन्तु रोहसेनमादायागच्छतः विदूषकस्यामन्त्रणपदम्। इतः इतः—अस्याम् अस्यां दिशि। दारक!—बालक! इदं रोहसेनसम्बोधनम्।

(थ) त्वरतां त्वरतां—सत्वरो भव सत्वरो भव, अतित्वरितमागच्छेत्यर्थः। भद्रमुखः,—भद्रं—कल्याणं, मुखं—शब्दः, पित्राद्याह्वानज्ञापको रव इति यावत् यस्य सः, सुमधुरभाषी इत्यर्थः. ("मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्॥" इति मेदिनी); यद्वा,—भद्रं—कल्याणकरं, मुखं - वदनं यस्य सः, पुत्रमुखदर्शनेन पितुः पुन्नामनरकपतनाद्यभावदर्शनात् कल्याणाधायकत्वं तस्येति द्रष्टव्यम्। मारयितुं—हन्तुम्। नीयते—वध्यभूमिं प्राप्यते, राजपुरुषैरिति शेषः।

दुग्धपोष्यकस्य विषादपरीतं पुत्रकमालोक्य अनुशोचन्नाह, चिरमिति।—परलोके—लोकान्तरे, स्वर्गलोके इत्यर्थः, चिरं—चिरकालं व्याप्य इत्यर्थः, खलु—निश्चितं पिपासितः, —तृषार्त्तः, पिपासाप्रशमनोपयुक्तस्य उदकस्य अलाभादिति भावः, भविष्यामि—वर्त्तिष्ये,

किं पुत्राय प्रयच्छामि ? [ आत्मानमवलोक्य यज्ञोपवीतं ( द ) दृष्ट्वा ]।
आम् ! ( ध ) इदं तावदस्ति मम च,—

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम्।
देवतानां पितॄणाञ्च भागो येन प्रदीयते ॥ १८ ॥

[ इति यज्ञोपवीतं ददाति ]।

न कदाऽपि मम पिपासा निवर्त्तिष्यते इत्याशयः। ननु जीवता अनेनैव पुत्रेण मृतस्य भवतः पिपासा अपनेष्यते निवापजलदानेन इत्यत्राह, अत्यल्पमिति।—अस्मः अस्माकं—नः, अस्मद्वंशीयानामित्यर्थः, निवापोदकभोजनं—निवापः,—पितॄणां तर्पणं, ("पितृदानं निवापः स्यात्" इत्यमरः) तस्य उदकं—जलं, तस्य भोजनं—पानं यस्मात् तत्, पितृपुरुषेभ्यः जलगण्डूषदायि इत्यर्थः, इदं—रोहसेनरूपम्, अपत्यमित्यर्थः, अत्यल्पम्—अतिसामान्यम्, अतिबाल इति यावत्; अनेन पुत्रकेण चिरपिपासितस्य मे मत्पूर्व्वजानाञ्च निवापोदकेन सम्पूर्णा तृप्तिर्न साधयितुं शक्यते, अतिबालत्वादसहायकत्वात् पालकराज्यवास्तव्यत्वाच्चास्य पुरुषायुषजीवित्वशङ्कायाः सततं मनसि समुदयात् सुचिरमस्माकं सर्वेषां तृषापनोदने किमस्य शक्तिर्भविष्यतीति वक्तुराशयः। अत्र प्रथमार्द्धवाक्यं प्रति परार्द्धवाक्यस्य हेतुत्वेन निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

( द ) यज्ञोपवीतं—यज्ञसूत्रम्।

( ध ) आम् इति स्मरणार्थकमव्ययम्, ("आं ज्ञाननिश्चयस्मृत्योः" इति मेदिनी)।

उत्कृष्टपदार्थस्यैव स्निग्धाय देयतया विजानाञ्च यज्ञोपवीतस्यैव सर्व्वभूषणेषु उत्कृष्टतया तदेव पुत्राय दातुं तस्योत्कर्षं प्रकटयन्नाह, अमौक्तिकमिति।—अत्र गद्यस्थम् "इदम्" इति पदमाकृष्य अन्वयः कार्य्यः; इदं—यज्ञोपवीतं, ब्राह्मणानां—विप्राणाम्, अमौक्तिकं—मौक्तिकभिन्नं, तथा असौवर्णं—सुवर्णालङ्कारभिन्नञ्च, विभूषणम्—अलङ्कारः, सौवर्णमौक्तिकादिभूषणं हि चौरादिभिः अपह्रियते, इदन्तु ऐहिकभोगसुखाद्यसाधकतया चौरादीनामनादरणीयतया न तथा अपह्रियते, तथा सौवर्णमौक्तिकादिभूषणधारिभिरपि यज्ञोपवीतधारी ब्राह्मणः विशेषेणार्हणीयो भवतीति अस्य सर्व्वभूषणेभ्योऽपि उत्कर्षाधिक्यमित्याशयः; तदेव युक्त्या समर्थयमान आह, येनेति।—येन—यज्ञोपवीतेन इत्यर्थः, देवतानां—हरिहरादीनाम्, इन्द्रानलादीनां वा, पितॄणाञ्च—अग्निष्वात्तादीनाञ्च इत्यर्थः, भागः,—पूजाश्राद्धादेरंशः, दीयते—अर्प्यते; देवपैत्रादितृप्तिसम्पादकतया पारत्रिकश्रेयोमूलं यज्ञोपवीतमेव अविनश्वरं महार्घभूषणं, न तु तुच्छसौवर्णमौक्तिकादिकम्;

चाण्डालः। आअच्छ ले चालुदत्ता! आअच्छ। *

द्वितीयः। अले! अज्ज-चालुदत्तं णिलुवप्पदेण णामेण आलवेशि? (न) अले! पेक्ख, †—

अब्भुदए अवशाणे तहेअ लत्तिंदिवं अहदमग्गा।
उद्दामि व्व किशोली णिअदी क्खु पडिच्छिदं जादि ‡॥१८॥

* आगच्छ रे चारुदत्त! आगच्छ।

† अरे! आर्यचारुदत्त निरुपपदेन नाम्ना आलपसि? अरे! पश्य,—

‡ अभ्युदये अवसाने तथैव रात्रिन्दिवमहतमार्गा।
उद्दामेव किशोरी नियतिः खलु प्रतीष्टं याति॥

संस्कृतानां द्विजातीनामिव वेदाधिकारस्य शास्त्रसम्मतत्वात् दैवे पैत्रे च कर्मणि तेषामेवाधिकारः, न तु असंस्कृतानाम्; वेदाधिकारस्य च उपनयनात् परमेव जायमानतया वैदिकसंस्कारविहीनस्य बालस्य तद्योग्यत्वसम्पत्तये स्वीयं यज्ञोपवीतमेव दारकाय प्रदत्तमिति बोध्यम्। अत्र यत्पदवाच्ये उपमेयभूते यज्ञोपवीते उपमानभूतस्य विभूषणस्य तादात्म्याध्यासात् तत्र चोपमानभूते मौक्तिकत्वसौवर्णत्वाभावरूपवैशिष्ट्यावगाहनादधिकारूढवैशिष्ट्यरूपं रूपकमलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ १८॥

(न) निरुपपदेन -उप—समीपे, उच्चरितं पदमित्युपपदं—विशेषणादिकं, नास्ति उपपदं यत्र तेन, आर्येत्यादिसम्मानसूचकोपपदशून्येनेत्यर्थः। आलपसि—कथयसि, आह्वयसि इत्यर्थः।

महासत्त्वं सर्वगुणाधारं नियतिवशेन विषमदशामापन्नं चारुदत्तं प्रति अवज्ञाप्रदर्शनं न युक्तमित्याशयेन नियतेः अलङ्घनीयतां प्रकटयन्नाह, अभ्युदये इति।—अभ्युदये—सम्पदि, तथैव तद्वदेव, अवसाने—अभ्युदयनाशे, दुर्दशायामपीत्यर्थः, रात्रिन्दिवम्—अहर्निशं, सततमित्यर्थः, [रात्रौ च दिवा चेति "अचतुर—" (५।४।७७ पा०) इति समाहारे निपातः] अहतमार्गा—अप्रतिहतप्रसरा, दुर्निवारगतिरिति यावत्, नियतिः—दैवम्, उद्दामा—उच्छृङ्खला, स्वच्छन्दगतिरिति यावत्, पक्षे उन्मुक्तबन्धना इत्यर्थः, किशोरीव—बाला घोटकीव, करभीव वा, अभिनवतारुण्यवती पञ्चदशवर्षदेशीया रमणीव वा, ("किशोरोऽश्वस्य शावके। तैलपर्ण्योषधौ च स्यात् तरुणावस्थसूर्ययोः॥" इति मेदिनी) प्रतीष्टं—इष्टं—प्रियं स्थानं, पक्षे—प्रियं पुरुषं, यथाऽभिलषितमित्यर्थः. प्रति याति—गच्छति; किशोरी यथा स्थैर्यगाम्भीर्यादिगुणयोगाभावादेकत्र सुचिरं स्थातुं न शक्नोति, तथैव नियतिरपि, अतः

अन्यं च,—

सुक्खा ववदेसा से किं ? पणमिअ मत्थए ण काअव्वं ? ।
लाहुगहिदे वि चंदे ण बंदणीए जणपदस्स ? * ॥ २० ॥

* अन्यच्च,—शुष्का व्यपदेशा: अस्य किम् ? प्रणम्य मस्तके न कर्त्तव्यम् ?
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ? ॥

दुर्दैववशेन महानुभवश्चारुदत्त इदानीमीदृगवस्थोऽपि अनुकूलदैववशेन पुनरपि अचिरादेव पूर्व्वामवस्थां प्राप्तुं शक्नोति अतो नास्य अवमाननमुचितमिति तात्पर्य्यम्! अत्र एकस्मिन्नेव वाक्ये नियतै: उद्दामकिशोर्य्या सह वैधर्म्योक्तिरन्यसाधर्म्यकथनादुपमा-नामालङ्कार:। आर्य्या वृत्तम् ॥ १९ ॥

उक्तमेवार्थं प्रकारान्तरेणाह, शुष्का इति।—अस्य—चारुदत्तस्य, व्यपदेशा:,—कुलनामादय:, [ व्यपदिश्यते परिचीयते पुरुष: एभिरिति व्यपदिश्यते: करणे घञ् ] शुष्का: ?—लुप्ता: किम् ? अपि तु न लुप्ता इति काकुलभ्योऽर्थ: ; प्रणम्य—नत्वा, ससम्भ्रमम् इति भाव:, मस्तके—शिरसि. न कर्त्तव्यम् ?—न करणीयम् ? न स्थापनीयं किम् ? इत्यर्थ:, अस्माभि: अस्य चारुदत्तस्य व्यपदेशादिकमिति शेष:, अपि तु सर्व्वमेव चारुदत्तसङ्गतं गुणादिकं प्रणत्या शिरसि धार्य्यमित्यर्थ: ; दुरदृष्टेन परिभूय-मानतया मिथ्याऽपवाददूषितस्य माननीयस्यास्य नाम गुर्व्वादिनामवत् आर्य्यादि-विशेषितं कृत्वैव उच्चार्य्यमिति हृदयम्। [ "काअव्वं" इत्यत्र "काअव्वा" इति पाठे—"पणमिअमत्थएण" इति समस्ततया पठनीयम् ; "कर्त्तव्या." "प्रणमितमस्तकेन" इति च यथाक्रमं संस्कृतम् ; प्रणमितं—प्रकर्षेण अवनमितं, मस्तकं—शीर्षं येन तथोक्तेन, भृत्यजनेनेत्यर्थ:, भृत्यभूतै: अस्माभिरिति यावत्, यद्वा,—प्रणमितम्—अवनमितं, यत् मस्तकं तेन [ इति कर्म्मधारय: ] अस्माभिरवनमितेन शिरसा इत्यर्थ:, अस्य—सर्व्व-जनमाननीयस्य गुणनिधे: चारुदत्तस्येत्यर्थ:, व्यपदेशा:,—कुलनामादय:, किं शुष्का:,—उपपदराहित्येन नीरसतया श्रवणानर्हा इति यावत्, कर्त्तव्या: ?—विधातव्या: ? अपि तु नैवेत्यर्थ: ]। इममेवार्थं दृष्टान्तेन द्रढयति, राहुगृहीत इति।—चन्द्र:,—निशाकर:, राहुगृहीत:,—राहुणा—सिंहिकासुतेन, गृहीत:,—आक्रान्तोऽपि, राहुकवलितोऽपीत्यर्थ:. जनपदस्य—जना: पद्यन्ते—गच्छन्ति यत्र असाविति जन-पद:,—देश: तस्य, [ जनोपपदात् पद्यते इत्यस्मात् अधिकरणे घप्रत्यये रूपम् ], देशवासिनामित्यर्थ:, [ "कृत्यानां कर्त्तरि वा" ( २।३।७१ पा० ) इति सूत्रेण कर्त्तरि वैकल्पिकी षष्ठी ] ; यद्वा,—जनपदस्य—जनस्य, जनानामित्यर्थ:, ( "भवेज्जनपदो

बालकः। अरे रे चाण्डाला! कहिं मे आवुकं णेध? *

चारु। वत्स!—

अंसेन बिभ्रत् करवीरमालां स्कन्धेन शूलं हृदयेन शोकम्।

आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः॥ २१॥

चाण्डालः। दालआ! †—

* अरे रे चाण्डालाः! कुत्र मम आवुकं (पितरं) नयत?

† दारक!—

जानपदोऽपि जनदेशयोः" इति मेदिनी) न वन्दनीयः?—न स्तवनीयः, न प्रणम्यो वा, किम्? इति शेषः; अपि तु प्रणम्य एवेत्यर्थः; चन्द्रः राहुग्रस्तोऽपि यथा पूर्ववत् सर्वेषां नमस्यः, तथा अयम् अलीकापवादेन विपद्ग्रस्तोऽपि अस्माभिर्नावज्ञेय इति भावः। राहुग्रस्तोऽपि चन्द्रः यथा लोकैरभिवन्द्यते, तथा अपवादग्रस्तोऽपि चारुदत्तः अस्माभिः सवर्द्धनीय इति चारुदत्तस्य चन्द्रेण सह साम्यस्य प्रणिधानतः गम्यमानत्वात् दृष्टान्तालङ्कारः। आर्या वृत्तम्॥ २०॥

चाण्डालान् "कहिं मे" इत्यादि पृच्छते रोहसेनाय स्वयमेवोत्तरं प्रयच्छन्नाह, अंसेनेति।—अद्य—अस्मिन् दिने, अहम् अंसेन—स्कन्धेन, गलदेशेन इति यावत्, करवीरमालां—करवीरस्य—तदाख्यरक्तवर्णपुष्पविशेषस्येत्यर्थः, मालां - वध्यस्रजमित्यर्थः, तथा, स्कन्धेन—भुजाशिरसा, शूलं—हत्यापराधिनां बधसाधनं सुतीक्ष्णाग्रं लौहफालमित्यर्थः, तथा, हृदयेन—चेतसा, शोकं—मृषाऽपवादजनितं दुःखमित्यर्थः, बिभ्रत्—धारयन् सन्, [अभ्यस्तत्वान्नुमागमप्रतिषेधः] अध्वरे—यज्ञे, आलब्धुं—हन्तुम्, [आङ्पूर्व्वकस्य लभधातोर्मारणार्थकत्वं व्याकरणसिद्धम्] शामित्रं—यज्ञीयपशुबन्धनस्थानम्, अजः,—छाग इव, छागो यथा अभिमन्त्रितः आलम्भनमधिगम्य बध्यभूमिम् अनुप्रयाति, तद्वदिति विशदार्थः, ("अजा विशुहरच्छागाः" इत्यमरः) आघातं—बध्यभूमिम्, [आहन्यते अत्र इति हन्तेरधिकरणे घञ्] अनुप्रयामि अनुगच्छामीत्यर्थः। श्लोकेऽस्मिन् बिभ्रदित्येकया क्रियया सह प्रस्तुतानां करवीरमालादीनां तथाधर्माभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, तथा च दर्पणः,—"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकक्रियाऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥" इति, स च "अज इव" इत्युपमया सङ्कीर्यते। दर्पणकृन्मते अनेकासु क्रियासु एककारकान्वयसत्त्व एव दीपकालङ्कारः, भोजराजादिप्राचीनालङ्कारिकमते तु एकक्रियायाम् अनेककारकसम्बन्धेऽपीति; तथा च धारणरूपायामेकस्यामेव क्रियायां करवीरमाला-शूल-शोकरूपकर्मकारककदम्बेषु अंस-स्कन्ध-हृदयरूपकरणचितयेन च सम्बन्धात् दीपकालङ्कारोऽत्र प्राचामनुमत एवेति सुधीभिर्विभाव्यम्। इन्द्रवज्रा वृत्तम्॥ २१॥

ण हु अम्हे चांडाला चांडालउलम्मि जादपुव्वा वा ।
जे अहिभवंति साहुं ते पावा ते अ चांडाला * ॥ २२ ॥

न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा वा ।
येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥

"अरे रे चाण्डालाः" इति रोहसेनकृतेन सावज्ञसम्बोधनेन दुःखमनुभवन् स्वदोषं परिहर्त्तुं सयुक्तिकम् उत्तरं ददाति, ण हु इति ।—वयं, घातका अपीति भावः, न खलु—नैव, चाण्डालाः,—कर्म्मणा चाण्डालाः, साधारणकर्म्मचाण्डालवत् नृशंसा इति यावत्, स्वभावक्रूरचाण्डालवत् वयं त्वत्पितरि न किमपि नैष्ठुर्य्यमाचरामः, यतः वध्यस्यास्य अभिलाषानुसारतः त्वां नैवेयत्र इहागन्तुमनुमन्यामहे इत्यर्थः, जीविकार्थमेव वयं नृपस्यैतत् राजशासनमनुपालयामः, न तु आत्मेच्छया इति वक्तृतात्पर्य्यम् ; वा—अथवा, चाण्डालकुले—चाण्डालवंशे, न हि जातपूर्वाः,—उत्पन्नपूर्वाः, [ पूर्व्वस्मिन् जाता इति जातपूर्वाः, राजदन्तादित्वात् परनिपातः ] चाण्डालकुले जातत्वात् जात्या चाण्डाला अपि व्यवहारतः वयं न चाण्डालाः, यदि पूर्व्वजन्मन्यपि चाण्डालाः आस्म, तदा पूर्व्वजन्माभ्यस्तनियतक्रूरकर्म्मसंस्कारवशादेव कर्कशाशयाः अभूम, तद्दर्शनात् कस्यचित् विषमस्य कर्म्मणः विपाकेनैवेदानीं चाण्डालयोनिमध्यगमाम इति अस्य खेदोक्तितात्पर्य्यम् ; [ "वा" इत्यत्र "वि" इति पाठान्तरे—"अपि" इति संस्कृतम् ; चाण्डालकुले जातपूर्वा अपि—प्राक् चाण्डालवंशोद्भूता अपि इत्यर्थः ] तर्हि तत्त्वतः के चाण्डालाः ? इत्यत आह, ये इति ।—ये—ये जना इत्यर्थः, साधुं—सुजनं, निर्दोषमिति भावः, अभिभवन्ति—निगृह्णन्ति, स्वभावनैष्ठुर्य्यात् वृथैव हिंसन्तीत्यर्थः, ते—तादृशा एव घातुका जना इत्यर्थः, पापाः,—पापिनः, नृशंसपदवाच्या इत्यर्थः. ( "नृशंसो घातुकः क्रूरः पापो धूर्त्तस्तु वञ्चकः" इत्यमरः ) ते च—ते एव. चाण्डालाः.—जात्या अचाण्डाला अपि तत्त्वतः कर्म्मणा चाण्डाला इत्यर्थः ; चाण्डालो हि द्विविधः, जन्मना कर्म्मणा च ये तु जन्मना एव चाण्डालाः व्यवहारतश्च न, ते तु क्रूरकर्म्मानुष्ठानात् वस्तुतः न चाण्डालाः, चाण्डालाख्यामात्रधारिणोऽपि ते सज्जनानुसृतपथानुसारितया अनृशंसाचारित्वात् चाण्डालस्वाभाव्यात् विच्युता एवेति भावः । कुले जन्मनः दैवायत्तत्वात् जन्मना पुरुषाणां नीचावचत्वं निर्द्धार्य्यते, व्यवहार एव पुरुषाणां साध्वसाधुत्वविनिर्णये हेतुः, अतः साधुनिग्रहात् राजपुरुषा एव तत्त्वतः चाण्डालाः, नो वयमिति हृदयम् । आर्य्या वृत्तम् ॥ २२ ॥

दारकः। ता (प) कीस मारेध आवुकं ? *

चाण्डालः। दीहाओ ! अत्त लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे। † (फ)

दारकः। वावादेध मं, मुंचध आवुकं। ‡ (ब)

चाण्डालः। दीहाओ ! एवं भणंते चिलं मे (भ) जीव ! §

चारु। [सास्रं (म) पुत्रं कण्ठे गृहीत्वा]—

इदं तत् स्नेहसर्वस्वं सममाढ्यदरिद्रयोः।
अचन्दनमनौशीरं हृदयस्यानुलेपनम्॥ २३॥

* तत् किमर्थं मारयत आवुकम् (पितरम्) ?

† दीर्घायुः ! अत्र राजनियोगः खलु अपराध्यति न खलु आवाम्।

‡ व्यापादयत मां, मुञ्चत आवुकम् (पितरम्)।

§ दीर्घायुः ! एवं भणन् चिरं मे जीव।

---

(प) तत्—तर्हि यदि यूयं न तत्त्वतः चाण्डालाः, तदा इत्यर्थः।

(फ) अत्र—त्वत्पितुर्मारणविषये इत्यर्थः। राजनियोगः,—राजादेशः; राजाज्ञयैव वयं पुण्यश्लोकं चारुदत्तं मारयितुं प्रवृत्ताः, न पुनः स्वेच्छया नृशंसोचितेऽस्मिन् कर्म्मणि नियुक्ताः इति समुदितार्थः; कः खलु पराधीनस्य न्यायान्याय-विचारावसरः ? इति तु हृदयम्।

(ब) व्यापादयत—मारयत यूयमिति शेषः। आवुकं—पितरम्, ("—अथा-वुकः। जनकः—" इत्यमरः)। मुञ्चत—परित्यजत, न मारयतेत्यर्थः।

(भ) एवम्—इत्थं "वावादेध मं" इत्यादिरूपमित्यर्थः। भणन्—अभिदधत्, त्वमिति शेषः। मे—मह्यं मम वा, [यस्य प्रीतिजननोद्देशेन क्रिया अनुष्ठीयते तत्रैव अभिप्रेत्यार्थं चतुर्थी अनुशिष्टा, तथा च अत्र चाण्डालप्रीतिं जनयितुमेव बालस्य एवंकथन-दर्शनात् "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति वार्त्तिकात् चतुर्थी, सम्बन्धमात्र-विवक्षया वा कर्म्मणि षष्ठी], अपरिणतबुद्धेर्बालस्यापि पितरि एवं प्रीतिगर्भभक्त्यादिक-मालोक्य आनन्दविह्वलहृदयेन चाण्डालेनापि तस्य सुदीर्घजीवनं प्रार्थितमिति बोध्यम्।

(म) सास्रम्—अस्रेण—अश्रुणा सहितं यथा तथा, सरोदनमित्यर्थः, [क्रिया विशेषणमेतत्]; अथवा सास्रमिति "पुत्रम्" इत्यस्य विशेषणं, रुदन्तमित्यर्थः।

बालपुत्रस्य तादृशकारुण्यपूर्णवचनप्रवणेन विगलितहृदयः पुत्रालिङ्गनानुभूतां

[ "अंसेन बिभ्रत्" इत्यादिं पुनः पठति। [ अवलोक्य स्वगतम् ] "अमी हि वस्त्रान्तनिरुद्धवक्त्राः" इत्यादि पुनः पठति ]।

विदू। **भो भद्दमुहा! मुंचध पिअवअस्सं चारुदत्तं, मं वावादेध।** *

चारु। **शान्तं पापम्।** (य) [ दृष्ट्वा स्वगतम् ] **अद्य अवगच्छामि।** "परोऽपि बन्धुः समसंस्थितस्य" इत्यादि पठति। [ प्रकाशम् ] "एताः पुनर्हर्म्यगताः स्त्रियो माम्" इत्यादि पुनः पठति ]।

चाण्डालः। **ओशलध अज्जा! ओशलध,** †—

* भो भद्रमुखौ! मुञ्चतं प्रियवयस्यं चारुदत्तं, मां व्यापादयतम्।

† अपसरत आर्य्याः! अपसरत.—

कियतीं निर्वृतिं प्रकाशयन्नाह, इदमिति।—तत्—सर्वेषु लोकेषु प्रसिद्धम्, इद—पुरतः दृश्यमानम् अपत्यरूपं वस्तु इत्यर्थः, स्नेहसर्व्वस्वं—स्नेहस्य—स्नेहस्थायिभाव-वात्सल्यरसस्य इत्यर्थः, सर्व्वस्वं—धनं, सारभूतं धनमिति यावत्, आढ्यदरिद्रयोः—धनिदीनयोः, समम्—अविशेषेण समानसुखदम् इत्यर्थः; इह जगति सर्वासु अवस्थासु सर्वैरेव जनैः समभावेन आस्वाद्यमानमेवम्भूतं पुत्रादन्यत् किमपि वस्त्वन्तरं नास्तीति विशदार्थः, आढ्योऽपि सुतमाश्लिष्य यथा अनिर्वचनीयं सुखमनुभवति, दरिद्रोऽपि तथैव, तत्र किमपि तारतम्यं नास्ति इति भावः; (एवमेव हि भवभूतिराह उत्तररामचरिते सीतातमसाप्रस्तावे—"अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्। आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥" इति) तथा हृदयस्य—उरसः, ("उरस्यपि च वुक्कायां हृदयं मानसेऽपि च" इति त्रिकाण्डशेषः) अचन्दनं—चन्दनरससम्पर्क-शून्यम्, उशीरं—वीरणमूलं, ("स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्" इत्य-मरः) तस्येदम् औशीरं, [ तस्येदमित्यण् ] तत्र भवतीति अनौशीरम्—उशीरसंयोग-सम्बविरहितमित्यर्थः, अनुलेपनं—तादृशस्निग्धसुगन्धिविलेपनद्रव्यमित्यर्थः, पुत्रस्पर्शेन हृदये अतिस्निग्धतानुभवात्, तदीयस्पर्शः चन्दनेन उशीरेण च अनुलेपनादपि अधिकः प्रीतिप्रद इति भावः। अत्र निरपह्नवविषये उपमेयभूते पुत्रे उपमानस्यानु-लेपनस्याभेदाध्यासात् रूपकं, तच्च चन्दनसम्पर्कराहित्यादिरूपस्याधिकस्य वैशिष्ट्य-स्यावगाहनादधिकारूढवैशिष्ट्यरूपम्। पथ्यावक्त्रं वृत्तम्॥ २३॥

(य) पापं—पापजनकम्, अमङ्गलमिति यावत्, वाक्यमिति शेषः। शान्तं—विरतम्, अस्त्विति शेषः, एवमशुभं मा वद इत्यर्थः।

किं पेक्खध शप्पुलिशं अजशवशेण प्पणट्ठजीवाशं ? ।
कूवे खंडिदपाशं कंचणकलशं विअ डुब्बंतं * ॥ २४ ॥

चारु । [ सकरुणं "शशिविमलमयूख" इत्यादि पठति ] ।

अपरः । अले ! पुणो वि घोशेहि । †

चाण्डालः । [ तथा करोति ] ।

चारु ।—

प्राप्तोऽहं व्यसनकृशां दशामनार्य्यां
यस्येदं फलमपि जीवितावसानम् ।

---

* किं पश्यत सत्पुरुषम् अयशोवशेन प्रनष्टजीवाशम् ? ।
कूपे खण्डितपाशं काञ्चनकलसमिव मज्जन्तम् ॥

† अरे ! पुनरपि घोषय ।

---

चारुदत्तावलोकनाय समागतं जनसङ्घम् अपसारयितुमाह, किमिति ।— खण्डितः,—छिन्नः, पाशः,—बन्धनरज्जुः यस्य तम्, अत एव कूपे—उदपाने, मज्जन्तम् अन्तः प्रविशन्तं, क्रुडन्तमित्यर्थः, निमग्नीभवन्तमिति यावत्, जलोत्तोलनसमये घरघट्टाग्रसम्बद्धरज्जुतः विच्युततयेति भावः, काञ्चनकलसमिव—सौवर्णघटमिव, ( यद्यपि सर्व्वत्र मृन्मयघटेन घरघट्टयन्त्रेन जलोत्तोलनं क्रियते इति दृश्यते, तथाऽपि तस्य पार्थिवतया अत्यल्पमूल्येन तेन साम्यकथने महोदारचेतसः चारुदत्तस्य गौरवहानिमाशङ्क्य कलसे काञ्चनविशेषणमुपात्तमिति वेदितव्यम् ) अयशोवशेन— अयशः, -वसन्तसेनावधाभियोगजनितः वृथाकलङ्कः, तद्वशेन—तत्सामर्थ्येन, तदायत्ततयेत्यर्थः, प्रनष्टा—अदर्शनं गता, [ नश्यतेरत्र णोपदेशत्वाभावात् न णत्वं ] जीवस्य—जीवनस्य, आशा यस्य तं तथाविधं, जीवनरक्षणविषये हताशमित्यर्थः, सत्पुरुषं—सुजनं, निरपराधमिति भावः, किं पश्यत ?—किमवलोकयत ? यूयमिति शेषः ; केवलं मिथ्याऽपवादमाश्रित्य विधीयमानं सुजनस्य ईदृशमन्याय्यमवमाननं कैरपि न द्रष्टव्यम्. अत इतः सत्वरम् अपसरत इति भावः । अत्र काञ्चनकलसेन साकं चारुदत्तस्यावैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः । आर्य्या वृत्तम् ॥ २४ ॥

"चारुदत्तेन वसन्तसेना मारिता" इति श्रवणविदारिणीं घोषणां श्रोतुमशक्नुवन् परिविलापमाह, प्राप्त इति ।—अहं—चारुदत्त इत्यर्थः, व्यसनकृशां—व्यसनेन—विपदा कृशां—क्षीणां, शोचनीयामिति यावत्, [ व्यसनकृतामिति पाठे—विपज्जनितामित्यर्थः ] अत एव अनार्य्यां—नितान्तमकीर्त्तिकरतया आर्य्यैः विगर्हितां, दशाम्—

एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ मया हतेति ॥ २५ ॥

[ ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः ]।

स्थावरकः। [ घोषणामाकर्ण्य सवैक्लव्यम् (२) ] कधं ! अपावे चालुदत्ते वावादीअदि !! हग्गे णिअलेण शामिणा बंधिदे। भोदु, आक्कंदामि। शुणाध अज्जा ! शुणाध—एत्थ दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलंडअ-जिण्णुज्जाणं वशंतशेणा णीदा; तदो मम शामिणा "मं ण कामेशि" त्ति कदुअ बाहुपाशबलक्कालेण मालिदा, ण उण एदिणा अज्जेण।

* कथम् ! अपापश्चारुदत्तो व्यापाद्यते !! अहं निगडेन स्वामिना बद्धः। भवतु, आक्रन्दामि। शृणुत आर्याः ! शृणुत—अत्र इदानीं मया पापेन प्रवहणपरिवर्त्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता; ततो मम स्वामिना, "मां न कामयसे"

अवस्थां, दुर्दशामित्यर्थः, प्राप्तः,—लब्धः, यत्र—यस्यां दशायाम्, इदम्—एतत्, अनतिचिरमेवानुभवनीयमित्यर्थः, जीविताबसानं—जीवितस्य—जीवनस्य, आयुष इत्यर्थः, अवसानं—परिसमाप्तिः यत्र तथाभूतं, प्राणदण्डरूपमित्यर्थः फलमपि—चरमपरिणामोऽपीत्यर्थः, प्रसूतमिति शेषः, एषा च—सर्व्वसमक्षमेव उद्घुष्यमाणा स्वकर्णेन श्रूयमाणा चेत्यर्थः, घोषणा—सर्व्वजनसमीपे उच्चैरपवादाख्यानपुरःसरं चाण्डालानां दण्डादेशकीर्त्तनमिति यावत्, मे—मम, मनः,—चित्तं, व्यथयति—पीडयति; कथमेतदित्याह, यदिति।—यत्—यस्मात्, असौ—वसन्तसेना, मया—चारुदत्तेनेत्यर्थः, हता—अर्थलिप्सया बाहुपाशबलात्कारेण मारिता, इति—इत्थम्, इदम्—एतत्, ईदृश्मर्म्मभेदकमिदं वचनमित्यर्थः, श्रोतव्यम्—आकर्णनीयं, स्वकर्णेनैव मयेति शेषः, या मे द्वितीयप्राणभूता आसीत्, यद्विरहेण सर्व्वमिदं जीवजगत् शून्यमिवेदानीं मे प्रतिभाति, स्वजीवनधारणमपि असारतया निष्प्रयोजनं मन्ये, यत्प्रीत्यर्थञ्च जीवनमपि सुखं त्यक्तुमीहे, सा मे प्राणेभ्योऽप्यधिका मयैव मारिता इति यन्मया स्वकर्णेन श्रूयते, तत्तु बधादपि अधिकपीडाकरम् अतः साम्प्रतमतिदुर्दशामापन्नोऽहमिति भावः। प्रहर्षिणी वृत्तम् ॥ २५ ॥

(२) सवैक्लव्यं—वैक्लव्येन—विह्वलतया सह वर्त्तमानम्, अतिव्याकुलं यथा स्यात् तथा इत्यर्थः, ("विक्लवो विह्वलः" इत्यमरः)।

कधं! विदूलदाए ण को वि शुणादि !! ता किं कलेमि? अत्ताणअं पाडेमि? (ख) [विचिन्त्य] जइ एव्वं कलेमि, तदा अज्ज-चालुदत्ते ण वावादीअदि। भोदु, इमादो पाशाद-वालग्ग-पदोलिआदो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। वलं हग्गे उवलदे, ण उण एशे कुलपुत्तविहगाणं

इति कृत्वा बाहुपाशबलात्कारेण मारिता, न पुनरेतेन आर्य्येण। कथम्! विदूरतया न कोऽपि शृणोति !! तत् किं करोमि? आत्मानं पातयामि? यद्येवं करोमि, तदा आर्य्यचारुदत्तो न व्यापाद्यते। भवतु, अस्याः प्रासादबालाग्रप्रतोलिकातः एतेन जीर्णगवाक्षेण आत्मानं निक्षिपामि। वरम् अहमुपरतः, न पुनरेष कुलपुत्रविहगानां

(ख) व्यापाद्यते—विनाश्यते, प्राणघातं हन्यते इत्यर्थः राजपुरुषैरिति शेषः। स्वामिना—प्रभुणा, शकारेणेति यावत्। निगड़ेन—शृङ्खलेन, बद्धः,—संयमितः, अतोऽहं तत्त्वप्रकाशनार्थमितो गन्तुं न शक्नोमीति भावः. आक्रन्दामि—आह्वयामि, एतान् प्रकृततत्त्वं ज्ञापयितुम् उच्चैः विरौमीत्यर्थः, ("आक्रन्दः क्रन्दने स्थाने मित्रदारुणयुद्धयोः" इति मेदिनी)। अत्र—अस्मिन् विषये, उपस्थितघटनायां यत् तत्त्वं, तन्मया कथ्यते, भवद्भिरवहितैस्तदाकर्ण्यतामिति तात्पर्य्यम्. इदानीम्—अधुना, अनतिचिरमेव; यद्वा—अत्र इदानीम्—अधुना अस्मिन् स्थाने, स्थितेन इति शेषः। पापेन—बधनिमित्तभूततया पापीयसा इत्यर्थः। प्रवहणपरिवर्त्तेन—प्रवहणस्य—गोशकटस्येत्यर्थः, परिवर्त्तः,—परिवर्त्तनं, विपर्य्यास इति यावत् तेन; प्राक् किल स्थावरकेण शकारस्याज्ञया जीर्णोद्यानं गच्छता पुरोवर्त्तिनं पन्थानं शकटान्तरेण रुद्धमालोक्य तदपसारयितुं चारुदत्तपक्षद्वारे स्वशकटं संस्थाप्य गतं, तस्मिन्नेवावसरे भ्रमात् स्ववाहनार्थं स्थापितं चारुदत्तशकटमेतदिति मन्यमानया वसन्तसेनया तच्छकटमारोहि, पश्चात् सम्यगपरीक्ष्य चेटेन तच्चालितम्. इत्थं प्रवहण-विपर्य्यासः सङ्घटितः, शकटस्य असमीक्ष्य नयनात् अहमपि निरपराधचारुदत्तविनाश-हेतुरिति चेटस्य आक्षेपोक्तिबीजमवधातव्यम्। कामयसे—अभिलषसि, रमयितुमिति भावः। इति कृत्वा—इति हेतोः, इत्येवमपराधं समारोप्येति यावत्। एतेन—चारु-दत्तेनेत्यर्थः। विदूरतया—विप्रकृष्टतया, आस्फालयोः दर्शकजनानाञ्चातिदूरवर्त्तितयेति यावत्। आत्मानं—देहम्, ("आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः)। पातयामि—अधःक्षिपामि, स्वयमेव इति शेषः।

**वाशपादवे अज्ज-चालुदत्ते। एव्वं जइ विवज्जामि, लद्धे मए पललोए। (व) [ इति आत्मानं पातयित्वा ]। ह्री ह्री ! ण उवलदम्हि ! भग्गे मे दंडणिअले, ता चांडालघोशं शमस्शेशामि। (श) [ दृष्ट्वा उपसृत्य ]। हंहो चांडाला ! अंतलं अंतलं (ष)। ***

वासपादप आर्य्यचारुदत्तः। एवं यदि विपद्ये, लब्धो मया परलोकः। आश्चर्य्यम् ! न उपरतोऽस्मि ! भग्नो मे दण्डनिगडः, तच्चाण्डालघोषं समन्विष्यामि। हंहो चाण्डालाः ! अन्तरमन्तरम्।

( व ) एवं—शृङ्खलाबद्धावस्थायामेव इतः आत्मनः पातनमित्यर्थः। न व्यापाद्यते—न विनाश्यते, चाण्डालद्वयसमीपमुपस्थितः यद्यहं प्रकृतव्यापारं प्रकाशयामि, तदाऽसौ नूनमेव प्राणदण्डात् मुक्तिं लप्स्यते इति भावः। प्रासादबालाग्रप्रतोलिकातः,—प्रासादस्य—इष्टकानिर्म्मितभवनस्य, यः बालः,—अभिनवनिर्म्मितः, अग्रः,—अग्र-भागः, चूड़ास्थगृहम् इति यावत्, तस्य या प्रतोलिका—तत्र गन्तुं या रथ्या, अधिरोहणीति यावत् ततः। ( "रथ्या प्रतोली विशिखा" इत्यमरः ) जीर्णगवाक्षेण—भग्नवातायनपथेन। आत्मानं—स्वम्। कुलपुत्रविहगानां—कुलपुत्राः,—सत्कुल-प्रसूताः जनाः एव, विहगाः,—पक्षिणः, पक्षिभूताः कुलीना इत्यर्थः. [ वासे पादप-त्वारोपादेव कुलपुत्रे विहगत्वाभेदारोपः कृतः इति परम्परितरूपकमलङ्कारः बोध्यः ] तेषां वासपादपः,—आश्रयवृक्षः, तत्सदृश इत्यर्थः; पक्षिणो यथा नीड़ार्थं पादप-माश्रयन्ति, पादपश्च तेषामाश्रयदानेन निःस्वार्थमुपकरोति. तथा ये निर्धना निरा-श्रयाश्च भवन्ति ते एतमेव आवासभूतं शरणम् आप्नुवन्ति, शरणागतांश्च तान् अयम् आश्रयदानेन परिरक्षति. न तत्र कथमपि असम्मतिं प्रकाशयतीति तात्पर्य्यार्थः; अयं हि निराश्रयाणां सत्पुरुषाणामाश्रयप्रद इति सर्व्वथाऽस्य रक्षा विधेयेति भावः। एवं—जीर्णगवाक्षेण महापुरुषप्राणरक्षार्थम् आत्मनिपातने क्रियमाणे सति इत्यर्थः। विपद्ये—म्रिये। लब्धः,—प्राप्तः; [ "लब्धः" इत्यत्र भाविनि भूतवदुपचारः, तेन लप्स्यत्र इत्यर्थः ]। परलोकः,—स्वर्ग इत्यर्थः।

( श ) भग्नः,—छिन्नः, दण्डनिगड़ः,—दण्डस्य—मम पलायनमाशङ्क्य प्रदत्तस्य बन्धनरूपस्येत्यर्थः, निगड़ः,—शृङ्खलः. [ अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः ] शकारः मां दण्डयितुं येन निगड़ेन मत्पादौ बद्धौ कृतवान्, स निगड इति विग्रहार्थः। समन्विष्यामि—घोषणाशब्दं लक्षीकृत्य अनुव्रजामीत्यर्थः।

(ष) अन्तरमन्तरम् अवकाशमवकाशं, देहीति शेषः; [ अत्र सम्भ्रमे द्विरुक्तिः ],

चाण्डालौ। अले! के अंतलं मग्गेदि? *

चेटः। ["मृणाध—" इति पूर्वोक्तं पठति]।

चारु। अये!—

कोऽयमेवंविधे काले कालपाशस्थिते मयि।
अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः? ॥ २६ ॥

भोः! श्रुतं (स) भवद्भिः?—

न भीतो मरणादस्मि केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥ २७ ॥

---

* अरे! कः अन्तरं मृगयते (याचते)?

---

प्रत्यक्षदर्शिनः स्थावरकस्य वाक्येन मिथ्याऽपवादमोचनं भविष्यतीति सम्भाव्य हर्षं प्रकाशयन्नाह, कोऽयमिति।—मयि—चारुदत्ते इत्यर्थः, कालपाशस्थिते—कालस्य—यमराजस्य, पाशे—बन्धनरज्जौ स्थिते—वर्त्तमाने, कालसदृशपालकराजश्रृङ्खलबद्धे इत्यर्थः, अचिरेणैव मरिष्यमाणे सतीति यावत्, एवंविधे—एवम्प्रकारे, काले—समये, मृत्युकवलकल्पे वर्त्तमानसङ्कटसमये इत्यर्थः. शस्ये—धान्ययवादौ, अनावृष्टिहते—अनावृष्ट्या—वर्षणाभावेन, हते—विशुष्के सतीयर्थः, प्रचण्डमरीचिविततमतश्च मृतप्राये सतीति यावत्, द्रोणमेघः,—द्रोणनामा जलदराजविशेष इव. अस्य शस्यवर्द्धकत्वमुक्तं ज्योतिःशास्त्रे यथा—"ज्ञियते शाकवर्षे तु चतुर्भिः शेषितः क्रमात्। आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥ आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः। पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥" इति। उदितः,—उद्गतः, आविर्भूत इत्यर्थः, उपस्थितः इति यावत्, अयं—दृश्यमानो जन इत्यर्थः, कः?—किन्नामधेयः, किम्परिचय इत्यर्थः; यथा द्रोणमेघः अकस्मादाविर्भूतः तीव्रातपदग्धं शस्यं सञ्जीवयति, तथा निर्दयस्य कुनृपतेः पालकस्य अन्यायविचारेण प्राप्तमृत्युदण्डं मां रक्षितुमप्रार्थितमयैवोपस्थितः कारुण्यवारां निधिः अयं कः? इति समुदितार्थः। अत्र किंशब्दवाच्येन स्थावरकेण सह द्रोणमेघस्यावैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ २६ ॥

(स) श्रुतम्?—आकर्णितम्? चेटवाक्यमिति शेषः।

ननु विनश्वरस्यास्य जीवनस्य कृते कथं त्वमेवमुत्कण्ठितो जात इत्याशङ्क्याह, नेति।—मरणात्—मृत्योः, न भीतः,—न शङ्कितः, अस्मि—भवामि, अहं मरिष्यामीति

अन्यच्च,—

तेनाप्यकृतवैरेण क्षुद्रेणाल्पबुद्धिना।
शरेणेव विषाक्तेन दूषितेनापि दूषितः॥ २८॥

न बिभेमीत्यर्थः। ननु यदि मृत्युभीतो नासि, तदा कथमीदृक् विमनायसे? इत्याशङ्क्याह, केवलमिति।—यशः,—कीर्त्तिः, यत् आजन्मनः बहायासेन सञ्चित-मिति भावः, दूषितं—स्त्रीहत्याऽपवादकलङ्कितं कृतमित्यर्थः, "सम्भावितस्य चाकीर्त्ति-र्मरणादतिरिच्यते" इति वक्तुराशयः तेन हि केवलम्—एकमात्र, भीतोऽस्मीति शेषः, मदीयशुभ्रयशसि कालिमाऽऽधायकात् स्त्रीहत्याऽपवादादेव केवलं बिभेमीति भावः। विशुद्धस्य—परिपूतस्य, निर्दोषस्येत्यर्थः, इदानीं स्थावरकचेटवचसा अप-वादविमुक्तस्येति यावत्, मे—मम, मृत्युः,—मरणं, हि—निश्चयेन, पुत्रजन्मसमः,—सुतसम्भवसदृशः, तत्तुल्यानन्ददायक इति यावत्, भवेत्—सम्पद्येत. "पुत्रस्ते जातः" इति अमृतवर्षिवचनश्रवणसमकाले हि पितुः निरतिशयहर्षोदयदर्शनादित्या-शयः; अत्यन्तदुःखावस्थायामपि पुत्रजननं श्रुत्वा तज्जन्यविमलानन्देन पित्रा सर्वं दुःखं यथा सुसहं भवति, तथा अयथाऽऽरोपितहत्याऽपराधकलङ्कितोऽहम् अभवम् इति अत्यन्तदुःखितोऽपि इदानीं चेटवचसा स्त्रीवधापवादविमुक्तः, अतः सुखं मरि-ष्यामीति फलितार्थः। अत्र मृत्योः पुत्रजन्मना सह अवैधर्म्यसाम्यकथनात् उपमा-ऽलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २७॥

सर्व्वसमक्षम् आत्मनः निर्दोषत्वं ज्ञापयितुमाह, तेनेति।—न कृतं—न आचरितं, न प्रदर्शितमिति यावत्, वैरं—शत्रुभावः यस्य तेन, अननुष्ठितविरुद्धाचरणेनेत्यर्थः, कदाऽपि मया मनसाऽपि यस्यापकारः न चिन्तितः तथाभूतेनेति यावत्, तथाऽपि क्षुद्रेण—नीचेन, नीचाशयेनेत्यर्थः, अल्पबुद्धिना—ज्ञाल्मेन, प्रायशो बुद्धिहीनेनेत्यर्थः, कीदृशानिष्टाचरणं किं पापमित्यजानता मूर्खेणेति यावत्, दूषितेनापि—कृतदोषे-णापि, स्वयं स्त्रीवधसाधनात् जातापराधेनापि इत्यर्थः, तेन—धूर्त्ततमेन शकारेणे-त्यर्थः, विषाक्तेन—विषदिग्धेन, अत एव दूषितेन शरेण—बाणेन इव, विषाक्तायो-मुखशिलीमुखवत् ज्ञाकरेण स्त्रीहननापवादेन निष्कलङ्कस्य मे यशसो निकृन्तनात् इति भावः, ["शरेणेव" इत्यत्र "शरेणैव" इति पाठे विषलिप्तबाणवत् अतीव सन्तापदायकतया अतिनिष्ठुरेण शकारेणेत्यर्थः, अस्मिन् पक्षे अत्र रूपकमलङ्कारः] अस्मि—अहम् [अस्मीत्यहमर्थे अव्ययम्] दूषितः,—कलङ्कित इत्यर्थः; नितान्त-नीचाशयः मूर्खः शकारः जानतः कदाऽपि मया नापकृतोऽपि स्वस्वाभाव्येन बसन्त-

चाण्डालौ। थावलअ! अवि (ह) शच्चं भणाशि ? *

चेट:। शच्चं। हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशाद-बालग्ग-पदोलिआए दंडणिअलेण बंधिअ णिक्खित्ते। † (क)

शकार:। [प्रविश्य सहर्षम्]—

मंशेण तिक्खामिलकेण भत्ते शाकेण शूपेण शमच्छकेण।
भुत्तं मए अत्तणअश्श गेहे शालिश्श कूलेण गुलोदणेण ‡ ॥ २८ ॥

* स्थावरक ! अपि सत्यं भणसि ?

† सत्यम्। अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्धा निक्षिप्तः।

‡ मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन।
भुक्तं मयाऽऽत्मनो गेहे शालेयकूरेण गुडौदनेन ॥

सेनामलब्ध्वा सञ्जातमत्सरः स्वयमेव वसन्तसेनां हत्वा आत्मत्राणार्थं तत्प्रियस्य मम जीवननाशार्थं वा मयि तमपराधमारोपितवान्, न त्वहं तत्त्वतो दोषीति भावः। अत्र तत्पदप्रतिपाद्यस्य शकारस्य विषाक्तेन शरेण साद्दमवैधर्म्यसाम्यप्रतीतेः उपमा-ऽलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ २८ ॥

(ह) अपिरत्र प्रश्ने, यथार्थं कथयसि किम् ? इत्यर्थः।

(क) सत्यं—यथार्थं, भणामीति शेषः। कस्यापि—जनस्य, इति सम्बन्ध-विवक्षया षष्ठी, कमपि जनमित्यर्थः। दण्डनिगडेन—दण्डस्य—शासनस्य, निगडः, —शृङ्खलः तेन, [अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः]; यद्वा —दण्डसंलग्नः,—गृहकुड्यप्रोथितदारुविशेषसंयुक्तः, यः निगडः,—आबन्धशृङ्खल इत्यर्थः तेन, [शाक-पार्थिवादित्वात् उत्तरपदलोपी समासः]। बद्धा—संयम्य, करचरणाविति शेषः। निक्षिप्तः,—एकान्ते स्थापित इत्यर्थः।

स हि केनापि मिषेण चारुदत्तं व्यापादयितुं त्यक्ताहारनिद्रः शकारः सम्प्रति चारुदत्तस्य प्राणदण्डाज्ञया कृतार्थम्मन्यः इदानीं हर्षं प्रकाशयन् स्वगृहे निश्चिन्तचित्तेन कृतं स्वभोजनव्यापारं वर्णयति, मांसेनेति।—मांसेन—सुपक्वेन छागादिपिशितेन, तिक्ताम्लेन—तिक्तेन—तिक्तरसेन. कारवेल्लादिना इत्यर्थः तथा अम्लेन—अम्लरसेन, तिन्तिड्यादिना चेत्यर्थः शाकेन—व्यञ्जनार्थसंस्कृतपत्रपुष्पादिना, तिक्तरसवता अम्ल-रसवता च दशविधेन भोजनोपकरणेन इत्यर्थः. ("मूलपत्रे करीराग्रे फलकाण्डादि-रूढकम्। त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम् ॥" इत्युक्तेः) समत्स्यकेन—

[ कर्णं दत्त्वा ] भिस्सकंश-खंखणाए चांडालवाआए शल-शंजोए, जधा अ एश उक्खालिदे वज्झडिंडिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति; ता पेक्खिश्शं। शत्तुविणाशे णाम मे महंते हलक्कश्श पलिदोशे होदि। शुदं अ मए, जेवि किल शत्तुं वावादअंतं पेक्खदि, तश्श अण्णश्शिं जम्मंतले अक्खिलोगे ण होदि; मए क्खु विशगंठिगब्भ-पविट्ठेण विअ कीडएण किं पि अंतलं मग्गमाणेण उप्पाडिदे ताह दलिद्दचालुदत्ताह विणाशे। शंपदं अत्तणकेलिकाए पाशाद-वालग्ग-पदोलिआए अहिलुहिअ अत्तणो पलक्कमं ( ख ) पेक्खामि। [ तथा कृत्वा

• भिन्नकांस्यखङ्खनाया; चाण्डालवाचाया: स्वरसंयोग:, यथा च एष उत्खालितो वध्यडिण्डिमशब्द: पटहानाञ्च श्रूयते, तथा तर्कयामि, दरिद्रचारुदत्तको वध्यस्थानं नीयते इति; तत् प्रेक्षिष्ये। शत्रुविनाशे नाम मम महान् हृदयस्य परितोषो भवति। श्रुतञ्च मया, यो हि किल शत्रुं व्यापाद्यमानं पश्यति, तस्य अन्यस्मिन् जन्मान्तरे अक्षिरोगो न भवति। मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमपि अन्तरं मृगयमाणेन उत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाश:। साम्प्रतम् आत्मीयायां

सव्ययुक्तेन, सूपेन—व्यञ्जनभेदेन. मुद्गादिद्विदलेन सहेत्यर्थ: [ सहार्थे तृतीया, सुष्ठु पीयते असौ इति सूप:, सुपूर्वकात् पिबते: घञर्थे क:, पृषोदरादित्वात् साधु: ] तथा शालीयकूरेण—शालितण्डुलप्रभवेण अन्नविशेषेण, ( कूरशब्दस्यान्नार्थकत्वमुक्तं हलायुधेन ) प्रस्तुतेनेति पदमध्याहार्य्यम्; गुडौदनेन—गुडेन—गुडमिश्रितेन, ओदनेन—पक्वेन अन्नेन. पायसेन इत्यर्थ:, आत्मन: एव—स्वस्यैव गेहे—भवने मया—शकारेणेत्यर्थ:, भक्तम्—अन्नं, ( "भक्तमन्ने तत्परे च" इति हेमचन्द्र: ) भुक्त - भक्षितम्; अहन्तु प्रत्यहमेव स्वगृहे विविधं सुखाद्यं यथेच्छं निश्चिन्तमना भुञ्जे, अतो नास्ति मत्सम: कोऽपि सौभाग्यवानित्याशय:। इन्द्रवज्रा वृत्तम् ॥ २९ ॥

( ख ) भिन्नकांस्यखङ्खनाया:,—भग्नकांस्यवत् अव्यक्तखङ्खननिनादं कुर्वत्या:, विकृतकर्कशस्वराया: इत्यर्थ:, [ खङ्खनं खङ्खनं कुर्वत्या: इत्यर्थे भृशादेराकृतिगणत्वेन खङ्खनशब्दादभूततद्भावेऽर्थे च्विप्रत्यये, पश्चात् पचादित्वादचि स्त्रियां टापि च खङ्खना

इति पदं सिद्धमिति ] चाण्डालवाचायाः,—चाण्डालवचसः, [ वाच्-शब्दात् स्त्रियां वैकल्पिकः टाप्प्रत्ययः, "क्षुधा वाचा दिशा क्रुधा विपाशा च स्रजा रुजा। गिरौषिका ईशविशा पञ्च क्षुधाद्दिगादयः॥" इति दर्शनात् ]। स्वरसंयोगः,—स्वराणां—कण्ठध्वनीनां, संयोगः,—सम्यक् सम्बन्धः, श्रूयते इति परेणान्वयः, कर्कशकण्ठस्वरपरिचयेन एष घातकानां एव इत्यनुमीयते इति तात्पर्य्यम्। उत्स्खलितः,—उद्गमितः, उत्थापित इत्यर्थः, घातुकैरिति शेषः, [ उत्पूर्व्वकात् भौवादिकात् स्खलतेः णिचि कर्मणि निष्ठा, अस्य चलनार्थकत्वेनैव उद्गमनार्थकत्वम्, उद्गमनस्यापि चलनविशेषरूपत्वादिति ]। वध्यडिण्डिमशब्दः,—वध्यानां—राजादेशेन हननीयानामित्यर्थः, डिण्डिमः,—राजाज्ञया अपराधिनां वधकाले वादनीयः वाद्यभेदः, तस्य शब्दः,—स्वनः। पटहानाञ्च—ढक्कानाञ्च, शब्द इति शेषः, [ चकारस्य समुच्चयार्थकत्वेऽपि "पटहानाम्" इति सम्बन्धपदेन अन्वयार्थं "वध्यडिण्डिमशब्दः" इति समस्तपदस्यैकदेशस्य शब्दपदस्य अनुषङ्गेणान्वयो न सम्भवति एकदेशान्वयस्यानङ्गीकारात् इति ऊह्येन पृथक्शब्दपदेनान्वय, तदङ्गीकर्तृमते तु न काचिद्धानिरिति बोध्यम् ]। शत्रुविनाशे—शत्रोः,—अर्थ., चारुदत्तस्येत्यर्थः, विनाशे—हत्यायां, चारुदत्तस्य वधे जाते सतीत्यर्थः। [ "शत्रुविनाश नाम" इत्यत्र "शत्रुविनाशेन" इति पाठान्तरम् ] नाम—सम्भावनायां, परिनिर्वाणं भवतीति सम्भावयामीत्यर्थः। व्यापाद्यमानं—विनाश्यमानम्। [ अत्र "बाबादअमाणं" इति वक्तव्ये, "बाबादअन्तं" इति प्राकृतं, व्यापादयन्तम् - आत्मानं घातयन्तम् इत्यर्थकं पदमुच्चारयन् शकारः अचिरादेव स्वस्य वधानुरूपः पराभवः भविष्यति, न तु जिघांसितस्य चारुदत्तस्य इति भाविनमर्थं भ्रमात् स्वयमेवाभ्यधादिति लक्ष्यम् ]। "अन्यस्मिन् जन्मान्तरे" इति दिरुक्तिः शकारवक्तृकत्वात् न दोषावहेति भाव्यम्। अक्षिरोगी न भवनीति।—शत्रुविनाशदर्शनस्य चक्षुषोरतिसन्तर्पणतया तेन चक्षूरोगी न भवति इति शकाराशयः। बिसस्य—मृणालस्य, ग्रन्थिः,—पर्व्वसन्धिः, तस्य गर्भे—अभ्यन्तरे, प्रविष्टेन—गतेनेत्यर्थः, कोटकेन—क्षुद्रप्राणिविशेषेणेव। किमपि—किञ्चित्। अन्तरम्—अवकाशं, निष्क्रमणमार्गमित्यर्थः। मृगयमाणेन—अन्विष्यता। उत्पादितः,—जनितः, सङ्घटित इत्यर्थः ; मृणालग्रन्थिगर्भप्रविष्टः कोटो यथा ततः निष्क्रमितुं कमपि अवकाशमन्विष्यन् केनचित् छिद्रेण मुक्तिं लभते, तथा वसन्तसेनाहत्याऽपराधजनितायां दुस्तरायामापदि यावतः अवरुद्धप्रायः अहं तस्मात् मुक्तिमन्विष्यन् चारुदत्तस्योपरि तमपराधं पातयित्वा उपस्थितात् महतः सङ्कटात् इदानीं सर्व्वथा निर्मुक्तो जात इति भावः। पराक्रमं—सामर्थ्यं, प्रभुशक्तिमित्यर्थः, चारुदत्तविनाशसाधकं स्वबुद्धिकौशलमिति यावत्।

हृत्वा च] ही ही! एदाह दलिद्दचालुदत्ताह वज्झं णीअ-माणाह एवड्डे जणसम्मद्दे, जं वेलं अम्हालिशे पवले वलमणुश्शे वज्झं णीअदि, तं वेलं कोदिशे (ग) भवे? [निरीक्ष्य] कधं! एशे शे णववलइड्के विअ मंडिदे दक्खिणं दिशं णीअदि। अध किं णिमित्तं मम कीलिकाए पाशाद-बालग्ग-पदोलिआए शमीवे घोशणा णिवडिदा णिवालिदा अ? (घ) [विलोक्य] कधं!! थावलके चेडे वि णत्थि इध!! मा णाम तेण इदो गदुअ

प्रासादबालाग्रप्रतोलिकायामधिरुह्य आत्मनः पराक्रमं पश्यामि। ही ही! एतस्य दरिद्रचारुदत्तस्य वध्यं नीयमानस्य एतावान् जनसम्मर्द्दः, यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो वध्यं नीयते, तस्यां वेलायां कीदृशो भवेत्? कथम्! एष स नववलीवर्द्द इव मण्डितो दक्षिणां दिशं नीयते। अथ किं निमित्तं मदीयायाः प्रासादबालाग्र-प्रतोलिकायाः समीपे घोषणा निपतिता निवारिता च? कथम्!! स्थावरकश्चेटोऽपि

(ग) दरिद्रचारुदत्तस्य—तन्नामधेयस्य दुर्गतस्य सार्थवाहस्येत्यर्थः. दर्शनार्थेति शेषः। वध्यं—वधाय इदं, वधस्थानमित्यर्थः। जनसम्मर्द्दः—जनानां परस्पर-सङ्घर्षणमित्यर्थः, जनतेति यावत् [समर्द्दनम् इति सम्मर्द्दः. सपूर्व्वकात् मृद्नातेः भावे घञि रूपम्]। यस्यां वेलायां—यस्मिन् समये। अस्मादृशः,—अस्मत्सदृशः मादृशः परमैश्वर्य्यशालीत्यर्थः। वरमानुषः,—प्रधानपुरुषः, [नयतेः कर्म्मणि प्रधानकर्म्मणः वरमानुष इत्यस्य उक्तत्वात् प्रथमा]। वध्यं,—वधस्थानम्। नीयते—प्राप्यते। कीदृशः?—किम्प्रकारः? यदि एतस्मिन् दीने वध्यभूमिं नीयमाने तद्दर्शनार्थम् एता-वान् जनसम्मर्द्दः, तर्हि न जाने. लोकोत्तरविभवशालिषु अस्मासु एवं नीयमानेषु असौ कीदृग्भवेदिति समुदितार्थः. [एतेन मूर्खः शकारः स्वस्याचिरादेव वध्यभूमि-नयनं भविष्यतीति विज्ञापितवान्। "एवड्डे" इत्यत्र "एशे वड्डे" इति पाठान्तरं,— "एष वृद्धः" इति संस्कृतं, वृद्धः —उत्तरोत्तरं वृद्धिं प्राप्त इत्यर्थश्च]।

(घ) नववलीवर्द्द इव - अभिनवक्रीतवृषभ इव तरुणवृषभ इव इत्यर्थः वा। मण्डितः,—पुष्पचन्दनादिना भूषितः। दक्षिणां दिशं—याम्यां दिशं, दक्षिणश्मशान-मिति यावत्, [यमभवनमिति व्यज्यते; कर्म्मवाच्ये नयतेर्मुख्यकर्म्मण एव उक्तत्व-नियमात् "एषः" इत्यत्र उक्ते कर्म्मणि प्रथमा, "दिशम्" इत्यत्र तु गौणकर्म्मतया णीयतेति बोध्यम्]। अथ—प्रश्ने। किं निमित्तं—कस्मात् हेतोः, किमर्थमित्यर्थः।

मंतभेदे किदे भविश्शदि; ता जाव णं अणेशामि। * (ङ)
[ इति अवतीर्य्य उपसर्पति ( च ) ]।

चेटः। [ इष्टा ]। भट्टालका! एशे शे (छ) आगदे। *

चाण्डालौ।—

ओशलध देध मग्गं दालं ढक्केध होध तुण्हीआ।
अविणअ-तिक्खविशाणे दुट्टबइल्ले इदो एदि † ॥ ३० ॥

मास्तीह !! मा नाम तेन इतो गत्वा मन्त्रभेदः कृतो भविष्यति; तत् यावदेन-मन्विष्यामि।

* भट्टारकाः! एष स आगतः।
† अपसरत दत्त मार्गं द्वारं पिधत्त भवत तूष्णीकाः।
अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥

घोषणा—घोषणावाक्यमिति यावत्। निपतिता—उद्घोषिता, राजाज्ञासमनुद्घोषण-क्षणकालमेव इति यावत्। निवारिता—निषिद्धा, केनचित् इति शेषः, कथं निपतिता घोषणा अकाले एव निवारिता? इत्याशङ्का।

(ङ) नाम—सम्भावनायां, विकल्पे वा। तेन—स्थावरकचेटेनेत्यर्थः। इतः,—अस्मात् स्थानात्। गत्वा—अपसृत्य, जनसमक्षमिति शेषः। मन्त्रभेदः,—मन्त्रस्य—गुह्यवादस्य, मत्कृतवसन्तसेनाहत्यारूपगुप्तविषयस्येत्यर्थः भेदः,—प्रकाशः, सर्व्वसमक्षं ज्ञापनमिति यावत्, मा कृतः भविष्यति—अनुष्ठितः न सम्पत्स्यते; असौ हि दुष्टाशयः चेटः इष्टगात् सुरचितस्थानात् इदानीमेव पलायितवान्, तत् किमसौ मे सर्व्वमेव गुह्यविषयं प्राकाशयत् किल, यदि हि तेन गुप्तवादः सर्व्वसमक्षं प्रकाशितः स्यात्, तर्हि मे महाननर्थः आपद्येत इति, अत एव मया त्वरितमेव तदनुसरणं कर्त्तव्यमिति, तर्हि मे गुप्तरहस्यमसौ भङ्क्तुं न शक्नुयादिति भावः। यद्येवं तर्हि अविलम्बेनैव तद्विधेय-मित्याह, यावदिति।—एतद्धि सम्भ्रमसूचकम् अव्ययम्। एनं—स्थावरकम्। अन्विष्यामि—अनुसन्दधामि, अन्यत् सर्व्वं परित्यज्य एनमेव अनुव्रजामि इत्यर्थः।

(च) अवतीर्य—अवरुह्य, प्रासादाग्रादिति शेषः। उपसर्पति—उप—समीपे, सर्पति—गच्छति, चाण्डालादीन् इति शेषः।

(छ) भट्टारका इति चाण्डालानामामन्त्रणम्। एष सः—यः वसन्तसेनां बाहुपाशबलात्कारेण मारितवान् सः असौ मत्प्रभुः शकार इत्यर्थः।

स्थावरकमुखात् शकारस्य दुश्चेष्टितमाकर्ण्य ततोऽन्येषामपि अपकारमाशङ्क्य पौराणाम् अप्रमादमवस्थानमुपदिशतः, अपसरतेति।—अपसरत—अपगच्छत, इतो

शकारः। अले! अले! अंतलं अंतलं देध। [उपसृत्य] पुत्तका! थावलका! चेड़ा! एहि, गच्छम्ह।*

चेटः। ही ही अणज्ज! वशंतशेणिअं मालिअ ण पलितुट्टेशि? शंपदं पणइजण-कप्पपादवं अज्जचालुदत्तं मालइदं ववशिदे शि? † (ज)

* अरे! अरे! अन्तरमन्तरं दत्त। पुत्रक! स्थावरक! चेट! एहि गच्छाव:।

† ही ही अनार्य! वसन्तसेनां मारयित्वा न परितुष्टोऽसि? साम्प्रतं प्रणयिजनकल्पपादपमार्य्यचारुदत्तं मारयितुं व्यवसितोऽसि।

दूरं पलायध्वमित्यर्थः मार्गं—पन्थानम्, अबाधागमनार्थमिति भावः, दत्त—अर्पयत, दुर्विनीतपशुरूपस्य शकारस्य इति शेषः, शकारस्याबाधागमनार्थं मार्गावरोधं त्यजतेत्यर्थः, द्वारं—कपाटमित्यर्थः, स्वस्वगृहस्येति भावः, पिधत्त—बध्नीत, [अपिपूर्व्वकात् दधातेः लोटि रूपं, "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति वचनात् अपेः अकारस्य पाक्षिको लोपः] इतः पलाय्य गृहं गत्वा गृहकपाटं रुन्ध इत्यर्थः, अहा,—भवनस्थाः सर्व्वे गृहकपाटम् आवृणुत इत्यर्थः, अन्यथा उद्दामककुद्मानयम् उन्मुक्तद्वारमार्गेण गृहं प्रविश्य युष्मान् सर्व्वान् निर्य्यातयिष्यतीति भावः; तूष्णीकाः,—मौनिनः, [तूष्णीं शीलं येषां ते इति शीलार्थे कन्, निपातनात् मलोपश्च] भवत—स्त, अन्यथा एष कदाऽपि कस्यापि उक्तिविशेषस्य अन्यथाऽर्थं गृहीत्वा महदनिष्टमुत्पादयिष्यतीति भावः; कथमेवमकस्मादुपद्रवप्रचार इत्याशङ्क्याह, अविनयेति।—अविनयं—दुःशीलता इत्यर्थः, [विनयस्याभावः अविनयम् इत्यव्ययीभावः] तदेव तीक्ष्णं—निशितं, सूक्ष्माग्रमित्यर्थः, विषाणं—शृङ्गं यस्य तादृशः, दुष्टव्यवहाररूपसूक्ष्माग्रविषाणभीषण इत्यर्थः, दुष्टबलीवर्द्दः—दुर्द्दान्तवृषभः, [अत्र शकारे दुष्टबलीवर्द्दाभेदारोपात् तद्वत् तस्य औद्धत्यमूर्खत्वाद्यातिशय्यं सूच्यते] इतः,—अस्यां दिशि, अस्मदभिमुखमित्यर्थः, एति—आगच्छति। अत्र अप्रस्तुतात् दुष्टबलीवर्द्दात् प्रस्तुतस्य खलशकारस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, तथा अविनये तीक्ष्णविषाणताद्यारोपाध्यासात् रूपकम्, एवं परार्द्धगतवाक्यार्थस्य पूर्व्वार्द्धगतवाक्यलभ्यार्थस्य कारणत्वादेः निष्पादकतया अवतारणात् काव्यलिङ्गालङ्कारश्चेत्येतेषामलङ्काराणां परस्परसापेक्षतया संस्थितेः सङ्करः। आर्य्या वृत्तम् ॥ १० ॥

(ज) ही इति विषादद्योतकमव्ययं, विषादातिशय्यद्योतनार्थञ्च "ही ही" इति द्विरुक्तिः, ("ही दुःखे हेतावाख्यातः,—" इति मेदिनी); ही ही इत्यस्य एकपदत्वे तु

शकारः। ण हि लदणकुंभ-शलिशे हगे इत्थिअं वावा-देमि। * (भ)

सर्वे। अहो! तुए मालिदा, ण अज्ज-चालुदत्तेण। † (ञ)

शकारः। के एव्वं भणादि? ‡

सर्वे। [ चेटमुद्दिश्य ] णं एसो साहू। §

शकारः। [ अपवार्य (ट) स्वगतं सभयञ्च ] अविदमादिके! अविद-

* न हि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि।

† अहो! त्वया मारिता, न आर्य्यचारुदत्तेन।

‡ क एवं भणति?

§ ननु एष साधुः।

विस्मयार्थे प्रयोगोऽयं बोध्यः, ("अहो अह्नो विस्मयसम्भ्रमयोः" इति मेदिनी); "वसन्त-सेनां मारयित्वापि न परितुष्टोऽसि, सम्प्रति चारुदत्तमपि मारयितुमुद्युक्तोऽसि? अहो! ते दुर्ज्जनता!" इति विस्मयस्यैव प्रतीतेः। अनार्य्य!—असाधो! दुर्ज्जन इत्यर्थः। प्रणयिजनकल्पपादपं—प्रणयिजनानां—याचकजनानां, स्निग्धजनानां वा, ("प्रणयः प्रश्रये प्रेम्णि याञ्चाविस्रम्भयोरपि" इति मेदिनी) कल्पपादपः,—अभिलषित-दायी स्वनामख्यातः सुरतरुविशेषः तं, तत्स्वरूपमित्यर्थः; कल्पतरुर्यो यथा प्रार्थना-मात्रमेव याचकेभ्योऽभिलाषानुरूपं वस्तु ददाति, तथा अयमपि अर्थिनां सर्व्वविधमभि-लाषं प्रार्थनामात्रमेव पूरयतीति विशदार्थः। व्यवसितः,—उद्युक्तः प्रवृत्त इत्यर्थः।

(भ) रत्नकुम्भसदृशः,—रत्नपूर्णकलसतुल्यः; रत्नपूर्णः कुम्भो यथा महामूल्य-पदार्थपूर्णतया अन्तःसारवान्, तद्वत् महासत्त्वेन अतुलविभवेन च सम्पन्नतया सारवान् अहं धनलिप्सया नैव स्त्रियं हतवान्, न मे अर्थाभावः कश्चिदस्ति, न वाऽहं निःसत्त्वः, अतः मयि एतादृशदुष्कर्म्मानुष्ठानं कथमपि न सम्भवतीति भावः, यद्वा,—रत्ननिर्म्मितः कुम्भः रत्नकुम्भः, स हि यथा सुदृश्यः बहुमूल्यश्च भवति, तद्वत् सुरूपः वरपुरुषश्च अहं न रत्नभूतां स्त्रियं हतवानित्यर्थः।

(ञ) अहो इति विस्मयार्थकमव्ययं, साधुरयं स्थावरकः समागत्य "चारुदत्तेन सा न हता, अपि तु शकारेणैव" इति साक्ष्यं ददाति, शकारस्तु सर्व्वथा तदपलपति इति विस्मयकारणम्।

(ट) अपवार्य—आच्छाद्य, जनान्तरेभ्यः पराहृत्य मुखं तिरोधाय चेत्यर्थः, तथा च दर्पणकारः,—"—तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य पराहृत्य प्रकाश्यते॥" इति।

मादिके ! कधं थावलके चेडे सुट्ठु ण मए शंजदे !! एशे क्खु मम अकज्जश्श शक्खी । ( ठ ) [ विचिन्त्य ] एव्वं (ड) दाव कलइश्शं । [ प्रकाशम् ] अलिअं भट्टालका ! हंहो ! एशे चेडे शुवण्णचोलिआए मए गहिदे, पिट्टिदे, मालिदे, बद्धे अ, ता किदवेले एशे जं भणादि, किं शव्वं शच्चं ? (ढ) [ अपवारितकेन चेटस्य कटकं प्रयच्छति । सैरवम् (ण) ] पुत्तका ! थावलका ! चेडा ! एदं गेण्हिअ अण्णधा (त) भणाहि । *

* हन्त ! हन्त ! कथं स्थावरकश्चेटः सुष्ठु न मया संयतः !! एष खलु मम अकार्य्यस्य साक्षी । एवं तावत् करिष्यामि । अलीकं भट्टारकाः ! हंहो ! एष चेटः सुवर्णचौरिकया मया गृहीतस्ताड़ितो मारितो बद्धश्च, तत् कृतवैर एष यत् भणति, किं सर्वं सत्यम् ? पुत्रक ! स्थावरक ! चेट ! एतद्गृहीत्वा अन्यथा भण ।

( ठ ) आविद्माद‌िके !—भय-विस्मय-खेदसूचकमव्ययमिदं, विभक्तिस्तु भयाद्यौनामातिशय्यबोधनार्थम् । सुष्ठु—सम्यक्, दृढ़मित्यर्थः । संयतः,—बद्धः, निगड़ित इति यावत् । एषः,—अयं, चेटः स्थावरक इत्यर्थः । अकार्य्यस्य—वसन्तसेनाहत्यारूपानुचितकर्म्मण इति भावः, [“स्वामीश्वराधिपति—” ( २।३।३९ पा० ) इत्यादिसूत्रेण अत्र साक्षिशब्दयोगात् षष्ठी, पक्षे सप्तम्यपि भवितुमर्हति ]। साक्षी—प्रत्यक्षदर्शी ।

(ड) एवम्—अन्येषामगोचरेण चेटहस्ते सुवर्णकटकरूपोत्कोचदानानुष्ठानमित्यर्थः ।

( ढ ) अलीकं—मिथ्या, चेटोऽयं यत् वदति, तत् सर्व्वमेव अयथार्थमित्यर्थः । भट्टारका इति दर्शकानां सम्बोधनम् ; भट्टाराः,—पूज्याः तेषां समूहाः भट्टारकाः,—भो मान्या इत्यर्थः । ( समूहार्थे कन् ] । यद्यपि नाट्योक्तौ भट्टारकशब्दः नृपस्यैव बोधकतया प्रयुज्यते, तथाऽपि आत्मापराधप्रकाशशङ्कया शकारस्य उद्भ्रान्तत्वात् शकारभाषितत्वात् वा एवंविधः याट्टच्छिकप्रयोगः सोढव्यः । सुवर्णचौरिकया—सुवर्णानां—स्वर्णालङ्काराणामित्यर्थः, चौरिका—चौर्य्यं तया, सुवर्णापहरणेन हेतुना इत्यर्थः । [ चौराणां कर्म्म इत्यर्थे चौरशब्दात् कर्म्मणि ठन् ठक् वा, ततः स्त्रियामापि चौरिका इति पदं सिद्धम् । केचित्तु “शुवण्णचोलिआए” इति प्राकृतस्य “सुवर्णचौरिकायाः” इति पञ्चम्यन्तसंस्कृतं पठित्वा हेतौ पञ्चमीं, सुवर्णचौर्य्याद्धेतोरित्यर्थञ्च वदन्ति ]। तत्—तस्मात्, मयैव बहुधा निर्य्यातितत्वादित्यर्थः । कृतवैरः,—कृतं—मया अनुष्ठितमित्यर्थः, वैरं—विद्वेषाचरणं, मारणादिरूपमिति यावत् यस्य सः,

चेटः। [गृहीत्वा] पेक्खध पेक्खध भट्टालका! हंहो! (थ) शुवण्णेण मं पलोभेदि। *

शकारः। [कटकमाच्छिद्य (द)] एशे शे शुवण्णके, जश्श कालणादो मए बद्धे। [सक्रोधम्] हंहो चांडाला! मए क्खु एशे शुवण्ण-भंडाले णिउत्ते, शुवण्णं चोलअंते मालिदे, पिट्टिदे; ता जदि ण पत्तिआअध, ता पिट्ठिं दाव पेक्खध। † (ध)

* पश्यत पश्यत भट्टारकाः! हंहो! सुवर्णेन मां प्रलोभयति।

† एतत् तत् सुवर्णकं, यस्य कारणात् मया बद्धः। हंहो चाण्डालाः! मया खलु एष सुवर्णभाण्डारे नियुक्तः, सुवर्णं चोरयन् मारितस्ताडितः, तत् यदि न प्रत्ययध्वं, तदा पृष्ठं तावत् पश्यत।

तस्कारोचितदण्डदानेन समुत्पादितमन्युभाव इत्यर्थः। "किम्" इत्यनन्तरं "तत्" इति पदमध्याहरणीयं, यत्तदोर्नित्यसम्बन्धात्। तत्—चेटीकम्। सर्वं—सकलम्। किं सत्यम्?—किं प्रकृतम्? कृतवैरस्य अस्य ईर्ष्याप्रयुक्तं वचनम् आमूलं सत्यं भवितुमर्हति किम्? नैवेत्यर्थः। जातविरोधः जनः वैरनिर्यातनार्थं मिथ्याभूतं दोषं सत्यमिति कृत्वा प्रकाशयति, अतः तत् नैव सुधीभिः प्रमाणतया ग्राह्यमिति भावः।

(ण) अपवारितकेन—अपवारितं—"तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाशते" इति दर्पणोक्तलक्षणकः गोपनीयविषयज्ञापकः नाटकीयवक्तृचेष्टाविशेषः, तदेव इति स्वार्थे कनि अपवारितकं तेन, अन्येभ्यः परावृत्य केवलं बोद्धव्यस्यान्तिकं स्वीयरहस्यप्रकाशनार्थं चेष्टाविशेषाश्रयणेनेत्यर्थः। कटक—सुवर्णवलयमित्यर्थः। स्वैरकं—स्वैरमेवेति स्वैरकं—मन्दं मन्दमित्यर्थः, मृदुस्वरेणेति यावत्। [स्वार्थे कन्]।

(त) अन्यथा—अन्यप्रकारं, मया पूर्वं यदुक्तं तन्न सत्यं, न शकारेण वसन्तसेना मारिता, परन्तु चारुदत्तेनैव इत्येवं-रूपमित्यर्थः।

(थ) हंहो इति सम्बोधनसूचकं विस्मयार्थकं वाऽव्ययम्।

(द) आच्छिद्य—बलादाकृष्येत्यर्थः।

(ध) प्रत्ययध्वं—विश्वसित। पृष्ठं—पृष्ठदेशं, पश्चाद्भागमित्यर्थः. चेटस्येति शेषः; प्राक् वसन्तसेनां हन्तुं शकारेणादिष्टश्चेटः परलोकभयात् तदादेशं कथमपि नाङ्गीकरोत्, तदैव तेन रुष्टः शकारः पृष्ठदेशे तं बहुधा निर्दयम् अताडयत्, तेनैव हि अस्य पृष्ठदेशे प्रहारचिह्नानि जातानि; सम्प्रति तु तान्येव प्रदर्श्य, "सुवर्णहरणादेव

चाण्डालौ। [दृष्ट्वा (म)] शोहणं भणादि। वितत्ते चेडे किं ण पलवदि? * (प)

चेटः। हीमादिके! ईदिशे दाशभावे, जं शच्चं कंपि ण पत्तिआअदि!! (फ) [सकरुणम्] अज्ज चालुदत्त! एत्तिके मे विहवे। † (ब) [इति पादयोः पतति]।

---

* शोभनं भणति। वितप्तश्चेटः किं न प्रलपति?

† हन्त! ईदृशो दासभावः, यत् सत्यं कमपि न प्रत्याययति!! आर्य्यचारुदत्त! एतावान् मे विभवः।

---

मयाऽयं प्रहृतः, तस्यैव एतानि चिह्नानि" इत्यादि स्वीयं वचः सुदृढं कर्त्तुं चेटस्य पृष्ठदेशं प्रदर्शयितुमस्यायमुद्योगः इति बोध्यम्।

(म) दृष्ट्वा, पृष्ठदेशमिति शेषः।

(प) शोभनं—सुष्ठु, युक्तियुक्तमित्यर्थः। वितप्तः,—विशेषेण तप्तः, प्रहार-जनितवेदनासमुद्भूतशोकसम्मिश्रेर्ष्याक्रोधसन्तप्त इत्यर्थः। किं न प्रलपति?—किं विरुद्धं न भाषते? सर्व्वमेव विरुद्धं भाषितुमीष्टे इत्यर्थः; स्वामिनि विरक्ताः दासाः तं निर्य्यातयितुम् अलीकानपि दोषान् आरोप्य तमभियुञ्जते इत्यपि सम्भावयितुं शक्यते इति भावः। ["प्रलपति" इत्यत्र "प्रतपति" इति पाठे—किं न प्रतपति?—शोक-सन्तप्तः किं न अनुतिष्ठति इत्यर्थः, नास्ति हि अकार्य्यं किमपि क्रोधान्धानामिति भावः।

(फ) हन्त इति खेदसूचकमव्ययम्। ईदृशः,—एवंविधः, भृत्यानां यथा-विध्यनुष्ठीयमानेष्वपि कर्म्मसु, यथायथमभिधीयमानेष्वपि वचःसु च सततमेव प्रभूणां भूयस्तया अविश्वसनीय इति यावत्। दासभावः,—दासत्वं, परकीयभाग्योपजीवित्व-मिति यावत्। यत्—यतः, दासत्वादेव हेतोरित्यर्थः। सत्यं—तथ्यं, प्रकृतं वस्तु इत्यर्थः, यत्र नास्ति काऽपि विप्रतिपत्तिस्तादृशमपि पदार्थमिति यावत्। कमपि—प्रभुं, तदितरं वा कञ्चिदित्यर्थः। प्रत्याययति—विश्वासयति; दासजनस्य सत्यमपि वाक्यं न कोऽपि तथ्येन विश्वसितीत्यर्थः, अहं हि दासः, शकारस्तु मम प्रभुः, अतः खलु चाण्डालैः मम सत्यमपि वचनमुपेक्ष्य मिथ्याभूतं तद्वचनमेव श्रद्धया परिगृहीत-मित्येव वक्तुः विषादबीजम्। ["कंपि" इत्यत्र "किंपि" इति पाठे—"किमपि" इति संस्कृतम्। किमपि—किञ्चिदपि, वाक्य-व्यवहारादिकमिति यावत्। सत्यं—सत्यमिति कृत्वा इत्यर्थः, सत्यत्वेनेति यावत्। प्रत्याययति, आत्मानमिति शेषः]।

(ब) एतावान्—एतत्परिमितः, प्रभोः कोपमुपेक्ष्यापि घातक-पौरादिसर्व्वजन-

चारु। [ सकरुणम् ]—

उत्तिष्ठ भोः ! पतित-साधुजनानुकम्पिन् !
निष्कारणोपगतबान्धव ! धर्म्मशील ! ।
यत्नः कृतोऽपि सुमहान् मम मोक्षणाय
दैवं न संवदति किं नु कृतं त्वयाऽद्य ? ॥ २१ ॥

समर्थ प्रकृतार्थप्रकाशनरूप इति यावत्। मम विभवः,—सामर्थ्यं, भवतो रक्षणे प्रकृतमभिदधता मया सामर्थ्यानुरूपः प्रयत्नः कृतः, न हि मे अतःपरं किमपि सामर्थ्य-मस्तीति भावः।

परोपचिकीर्षया स्वजीवनं तृणाय मन्यमानं प्रासादाग्रप्रतोलिकातः शृङ्खल-संयमितमेवात्मानं पातयन्तमनं स्थावरकम् अकृतकार्य्यतया पादपतितं विलपन्तमालोक्य तं सान्त्वयन्नाह, उत्तिष्ठेति।—भोः! पतितान्—विपन्नान्, साधुजनान्—सत्पुरुषान्, निरपराधानित्यर्थः, अनुकम्पते—दयते यः तत्सम्बोधने, विपन्नसज्जनोपकारिन्! इत्यर्थः, निष्कारणोपगतबान्धव!—निः—नास्ति, कारणम् उपकारकरणादिरूपो हेतुः यस्मिन् तद्यथा स्यात्तथा, उपगतः,—प्राप्तः, अयाचिततयैवोपस्थित इत्यर्थः, यो बान्धवः,—सुहृत् तत्सम्बोधने, अकृत्रिमप्रणयिन्! इत्यर्थः, कृत्रिममित्रत्वादिकन्तु उपकारादिकारणजन्यं, तादृशकारणाभावात् त्वयि तु तत् सहजमिति वक्तुराशयः; तथा धर्म्मशील!—धर्माचरणपरायण! [ "—बान्धवधर्म्मशील!" इति समस्त-पाठे तु—निष्कारणं—निर्निमित्तम्, उपकारादिहेतुं विनाऽपि इत्यर्थः, उपगतं—प्राप्तं, सञ्जाताकाङ्क्षमित्यर्थः, बान्धवधर्म्मे—बन्धुकृत्ये, बन्धुभिरनुष्ठेयोपकाराद्याचरणे इति यावत्, शीलं—स्वभावः यस्य तत्सम्बुद्धौ, नियताहेतुकपरोपकाराचरणपरा-यण! इत्यर्थः ] उत्तिष्ठ—उत्थितो भव, प्राणपातिचेष्टयाऽपि प्रतिकूलदैववशेन अकृतकार्य्यस्य विवशस्य ते पादपतनं न युज्यते इति भावः। कथं न युक्तं इत्याशङ्क्याह, यत्न इति।—त्वया—भवता, अद्य—इदानीम्, पूर्व्वक्षण एव इत्यर्थः, मम—मे, मोक्षणाय—प्राणदण्डादिमुक्तये, किं न कृतम्?—अनुष्ठितम्? अपि तु सर्व्वमेव सहृत्कार्य्यं कृतमित्यर्थः; (किन्तु) सुमहान्—सातिशयः, बलवत्तम इति यावत्, यत्नः,—आयासः, प्रभोरसन्तोषमुपेक्ष्यापि सत्यमभिधाय मम रक्षणार्थं निर्बन्धातिशयरूप इति यावत्, कृतः,—आचरितोऽपि, (केवल) दैवं—दुर्भाग्यं, दुरदृष्टमित्यर्थः, पूर्व्वजन्मकृतमशुभसाधनं कर्म्मेति यावत्, ("पूर्व्वजन्मकृतं कर्म्म तद्दैवमिति कथ्यते" "स्वमेव कर्म्म दैवाख्यं विद्धि देहान्तरार्जितम्" "प्राग्जन्मनि कृतं

चाण्डालौ। भट्टके! पिट्टिअ एदं चेडं णिक्कालेहि। * (भ)

शकारः। णिक्कम ले! [इति निष्क्रामयति (म)]। अले चांडाला! किं विलंबेध? मालेध एदं। † (य)

चाण्डालौ। यदि तुवलशि, ता शअं ज्जेव मालेहि। ‡ (र)

रोह। अरे चांडाला! मं मालेध, मुंचध आवुकं। §

---

* भट्टक! ताडयित्वा एतं चेटं निष्कासय।

† निष्क्राम रे! अरे चाण्डालाः! किं विलम्बध्वम्? मारयतैनम्।

‡ यदि त्वरयसे, तदा स्वयमेव मारय।

§ अरे चाण्डालाः! मां मारयत, मुञ्चत आवुकम् (पितरम्)।

---

कर्म शुभं वा यदि वाऽशुभम्। दैवशब्देन निर्दिष्टमिह जन्मनि तद्बुधैः॥" इति स्मरणात्), न संवदति—नानुकूलयति, नानुकूलं भवतीत्यर्थः; भवान् यथा मयि स्वत एव अनुकूलः, तथा चेत् दैवमप्यभविष्यत्, तदा अनायासेनैवाहमस्मात् अलीकाभियोगकृतप्राणदण्डात् विमुक्तिमलप्स्ये, मयि तु साम्प्रतं तस्यैव सम्पूर्णप्रतिकूलतया त्वया कृतोऽयं सुमहानपि पुरुषकारः ऊषरभूमावुप्तं बीजमिव विफलो जात इति भावः; यद्वा—न संवदति—न प्रमाणयति, सत्यमपि त्वद्वाक्यं प्रमाणत्वेन न स्वीकरोतीत्यर्थः; "संवादः प्रामाण्यम्" इति तान्त्रिकाः; अथवा दैवं—नियतिः, जन्मान्तरीयकर्मपरिपाक इत्यर्थः, न संवदति—न वशीकरोति, विपक्षभूतान् जनानिति शेषः, [संपूर्वकात् वदतेः वशीक्रियार्थकत्वं कोषप्रसिद्धम्। "वशक्रिया संवदनम्" इत्यमरः]। अत्र पतितसाधुजनानुकम्पित्वादिविशेषणामन्वयपदानां साभिप्रायत्वतया परिकरालङ्कारः। वसन्ततिलकं वृत्तम्॥ २१॥

(भ) ताडयित्वा—प्रहृत्य इत्यर्थः। निष्कासय—निष्क्रामय, इतः अपसारय इत्यर्थः।

(म) निष्क्रामयति, चेटम् इति शेषः।

(य) विलम्बध्वं—चिरयत; मारयत—विनाशयत। एनम्—एतं, चारुदत्तमित्यर्थः।

(र) त्वरयसे—त्वरां करोषि, अस्मानिति शेषः, [त्वरते इत्यस्य घटादित्वात् णिचि कृते लटि रूपम्] विलम्बं न सहसे चेदित्यर्थः। स्वयमेव—आत्मनैव, अस्मन्निरपेक्षत्वमेवेत्यर्थः। मारय—जहि।

शकारः। अपुत्तं ज्जेव एदं मालेध। *

चारु। सर्वमस्य मूर्खस्य सम्भाव्यते; तद्गच्छ पुत्र! (ल) मातुः समीपम्।

रोह। किं मए गदेण कादव्वं? † (व)

चारु।—

आश्रमो वत्स! गन्तव्यो गृहीत्वाऽद्यैव मातरम्।
मा पुत्र! पितृदोषेण त्वमप्येवं गमिष्यसि॥ ३२॥

* सपुत्रमेव एतं मारयत। † किं मया गतेन कर्त्तव्यम्?

(ल) सर्व्वं—सकलमेवेत्यर्थः, सपुत्रस्यैव मम निधनादिरूपं सर्व्वविधमेव दुष्कर्म इति यावत्। मूर्खस्य—मूढस्य, हिताहितज्ञानवर्जितस्येत्यर्थः। अस्य—एतस्य, शकारस्येत्यर्थः। सम्भाव्यते—तर्क्यते, अनेन मूर्खेण सर्व्वमप्यकार्य्यं कर्तुं शक्यमित्यनुमीयते इत्याशयः। तत्—तस्मात्, मया सह तवापि विनाशस्य सम्भाव्यमानत्वादित्यर्थः। पुत्र!—वत्स! रोहसेन! इत्यर्थः।

(व) गतेन—यातेन, मातृसमीपमिति शेषः; इह त्वामेवं विपन्नमशरणं विहाय मातृसमीपं गत्वा अहं किं करिष्यामि? इति समुदितार्थः।

पुत्रकृतप्रश्नस्य प्रतिवचनं दातुं मातृसमीपं गत्वा कर्त्तव्यमुपदिशन्नाह, आश्रम इति।—वत्स!—हे तात! मातरं—जननीं धूतामिति यावत्, गृहीत्वा—अवलम्ब्य, मात्रा सार्द्धमित्यर्थः, मातरं सहकृत्येति यावत्, अद्यैव—एतस्मिन्नहन्येव, [अद्यैवेत्यनेन अवधारणात् अणुकालमपि नगरेऽस्मिन् अवस्थानकृतः विलम्बो न कार्य्य इति आशयः सूचितः। एवशब्दस्यात्र नियोगार्थकत्वं, नियोगश्चावधारणम्, अत एव सन्धौ एकारस्य वृद्धिः, अनियोगार्थकत्वे तु एवकारस्य सन्धौ पररूपमेकारादेशः, तेन च अद्येवेति पदं भवति; तथा च वार्त्तिकम् "एवे चानियोगे" इति] आश्रमः—मुनिजनतपःस्थानं, नियमानिर्निकेतनतया निवास इति भावः, गन्तव्यः,—यातव्यः, त्वयेति शेषः। आश्रमगमनाश्रिय यथापूर्वं गृहावस्थाने, महाधनेनाप्यपरितुष्टेन मूर्खशकारेण पुत्रस्यापि विनाशो मा भूदित्याह, मेति।—पुत्र!—हे तनय! त्वमपि पितृदोषेण—पितृकृतवसन्तसेनावधमूलकेनारोपितापराधेन, एवम्—ईदृशम्, अवस्थाप्राणदण्डमित्यर्थः, मा गमिष्यसि—न प्राप्स्यसि इत्यर्थः। अत्रावस्थितस्य ते विपत्तिर्न सम्भाविता, यतः, यदि कदाचिदयं प्रतिहिंसाप्रवृत्तिपरवशः शकारः महाधनेनाप्यपरितुष्यन् वसन्तसेनाघातकस्य पुत्रोऽयमत्रद्य्यधिकारी जीवतीति राज्ञे निवेदयेत्,

तत् वयस्य! गृहीत्वैनं व्रज। (श)

विदू। भो वअस्स! एव्वं तुए जाणिदं, तुए विणा अहं प्पाणाइं धारेमि त्ति? * (ष)

चारु। वयस्य! स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः। (स)

विदू। [स्वगतम्] जुत्तं णेदं, तधा वि ण सक्कुणोमि पिअवअस्स-विरहिदो प्पाणाइं धारेदुं त्ति, ता ब्रह्मणीए दारअं सम-

* भो वयस्य! एवं त्वया ज्ञातं, त्वया विनाऽहं प्राणान् धारयामि इति?

† युक्तं नेदम्; तथाऽपि न शक्नोमि प्रियवयस्यविरहितः प्राणान् धर्तुमिति,

तदा अविचारकः पालकोऽपि, अयमपि जीवन् पितृवत् स्त्रीत्वादिकमकार्यमग्रतः करिष्यतीति विचिन्त्य त्वां घातयेत्, अतस्त्वया मात्रा सह अविलम्बेनैव कुराजशासितादस्मात् नगरात् पलायितव्यमिति भावः। पथ्यावक्त्रं वृत्तम्॥ २२॥

(श) तत्—तस्मात्, ममापराधेन अस्यापि प्राणविनाशसम्भवात् इत्यर्थः। वयस्य!—सखे! विदूषकस्यामन्त्रणमेतत्। एनं—पुत्रं रोहसेनमित्यर्थः। व्रज—गच्छ, आश्रमं गृहं वेति शेषः।

(ष) ज्ञातम्?—विदितं किम्? मनसि चिन्तितं किम्? इत्यर्थः; त्वयि उपरतेऽपि अहं जीवामि इति त्वया स्थिरीकृतं किम्? येनेदानीं रोहसेनं गृहीत्वा मामपि आश्रमं गन्तुमादिशसि? इति समुदितार्थः; [ "ज्ञातम्" इति ज्ञाधातोः अतीते निष्ठा, न तु वर्त्तमाने, तथा सति ज्ञानार्थकानां वर्त्तमाने निष्ठायां तत्कर्त्तरि "क्तस्य च—" (२।३।६७ पा०) इति षष्ठीनियमात्, "त्वया" इत्यत्र षष्ठ्यापत्तिः। न च भाषणसमकालमेव कथनमिति निष्ठायाः सम्भव इति वाच्यम्, अतीतार्थकत्वेनापि व्याख्यातुं शक्यत्वात्, "बहोः कालात् प्रभृति किं भवता एतदेव विज्ञातमासीत्?" इत्येवम् अतीतकालाभिप्रायकस्य वक्तृतात्पर्यस्य सम्भवादित्यनुसन्धेयम् ]।

(स) स्वाधीनजीवितस्य—स्वाधीनं—स्वायत्तम्, स्वायत्तमित्यर्थः, जीवितं—जीवनं, प्राणधारणकाल इति यावत् यस्य तस्य, यावदायुः स्वच्छन्देनैव जीवितुं समर्थस्य, न तु ममेव राजाधीनजीवितस्य इति यावत्। प्राणपरित्यागः,—मदर्थं स्वेच्छया जीवनविसर्जनम् आत्महननमिति यावत्। न युज्यते—न सङ्गच्छते, आत्महननस्य महापातकजनकत्वादिति भावः।

पिअ प्पाणपलिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सं। (ङ)
[प्रकाशम्] भो वअस्स! पराणेमि एदं लहुं † (क)। [इति सकण्ठग्रहं पादयोः पतति (ख)। दारकोऽपि रुदन् पतति]।

शकारः। अले! णं भणामि, शपुत्ताकं चालुदत्ताकं वावादेध त्ति। *

चारु। [भयं नाटयति]।

चाण्डालो। णहि अम्हाणं ईदिशी लाआणत्ती, जधा शपुत्तं चालुदत्तं वाआदेध त्ति; (ग) ता णिक्कम ले दालआ!

तत् ब्राह्मणे दारकं समर्प्य प्राणपरित्यागेन आत्मनः प्रियवयस्यमनुगमिष्यामि। भो वयस्य! पराणयामि एतं लघु।

* अरे! ननु भणामि, सपुत्रकं चारुदत्तं व्यापादयतेति।

† न हि अस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयत

(ङ) इदं—स्वेच्छया प्राणविसर्ज्जनरूपं कर्म्म, आत्महननम् इत्यर्थः। न युक्तं—नोचितं, यतः अन्धतामिस्राः असूर्य्या नाम लोकाः आत्मघातिनः प्रपद्यन्ते इति ऋषयः अनुमुवन्ति, अतः स्वेच्छया जीवनविसर्ज्जनं नैव कर्त्तव्यमिति भावः; आत्मघातिनः तादृशलोकप्राप्तिरुक्ता वाजसनेयसंहितोपनिषदि यथा,—"असूर्य्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥" इति। तथाऽपि—आत्महननस्य तादृशभीषणनरकसाधनत्वेन सर्व्वथाऽयुक्तत्वे सत्यपीत्यर्थः। प्रियवयस्यविरहितः,—प्रियवयस्येन—प्राणाधिकसुहृदा, चारुदत्तेनेत्यर्थः, विरहितः—विच्छिन्नः, आजीवनं सङ्गसुखवञ्चित इति यावत्। ब्राह्मण्ये—चारुदत्तपत्न्यै धूतायै इति यावत्। दारकं—बालकं, रोहसेनमित्यर्थः। अनुगमिष्यामि—अनुसरिष्यामि, मरिष्यामीति भावः।

(क) पराणयामि—आवर्त्तयामि, स्थानादस्मात् मातृसमीपं प्रापयामीत्यर्थः। एतम्—इमं, बालकमित्यर्थः। लघु—शीघ्रम्; भवदादेशादचिरादेव बालमिमं स्थानान्तरमपसारयामीति समुदितार्थः।

(ख) सकण्ठग्रहं—कण्ठस्य—गलदेशस्य, ग्रहः,—बाहुयुगलेन ग्रहणमित्यर्थः, तेन सह वर्त्तमानं यथा तथा; आदौ कण्ठे गृहीत्वा आलिङ्ग्य पश्चात् पादयोः पतनमिहावगन्तव्यम्।

(ग) अस्माकं—घातकानाम्, आवयोरित्यर्थः। ईदृशी—वक्ष्यमाणरूपा,

णिक्कम। [इति निष्क्रामयत:]। इमं तइअं घोसणट्ठाणं, ताडेध डिंडिमं। †

[पुनर्घोषयत:]।

शकारः। [स्वगतम्] कधं एशे ण पत्तिआअंति पौला!! [प्रकाशम्] हंहो चालुदत्ता! बडुका! ण पत्तिआअदि एशे पौलजणे, ता अत्तण-कीलिकाए जीहाए (घ) भणाहि, "मए वशंतशेणा मालिदे" त्ति। *

† इति, तन्निष्क्राम रे दारक! निष्क्राम। इदं तृतीयं घोषणास्थानं, ताड़यत डिण्डिमम्।

* कथमस्य न प्रत्याययन्ति पौराः!! अरे चारुदत्त! वटुक! न प्रत्याययति एव पौरजनः; तदात्मीयया जिह्वया भण, "मया वसन्तसेना मारिता" इति।

सपुत्रचारुदत्तहननरूपेत्यर्थः। राजाज्ञप्तिः,—राज्ञः,—नृपतेः पालकस्येत्यर्थः, आज्ञप्तिः,—आदेशः, वयं हि राजादेशानुवर्त्तिनः, राजादेशश्च एकाकिन एव चारुदत्तस्य हननरूपः, अतो न राजादेशवहिर्भूतं पुत्रस्यापि हननमनुतिष्ठाम इति चाण्डालाशयः।

(घ) कधं—कस्मात्, किमर्थमित्यर्थः। अस्य—चारुदत्तकृतापराधस्य, इमं चारुदत्तकृतवसन्तसेनाहननरूपमपराधमित्यर्थः, [अस्येति सम्बन्धविवक्षया "भजे शम्भो-श्चरणयोः" इतिवत् कर्म्मणि षष्ठी, "षष्ठी शेषे" (२।३।५० पा०) इति सूत्रे दीक्षितेनैव सिद्धान्तितत्वात्] न प्रत्याययन्ति—न प्रतियन्ति, न विश्वसन्तीत्यर्थः, [प्रतिपूर्व्वकस्य आदादिकस्य एतेः स्वार्थे णिचि लटि रूपमेतत्, चुरादिभिन्नानामपि स्वार्थे णिचि प्रयोगो दृश्यते, तथा हि कालिदासः,—"दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषम्" इति, "दशवर्षसहस्राणि रामो राज्यमकारयत्" इति च, अत एव दीक्षिताः,—"णौ गमिरबोधने (२।४।४६ पा०) इति सूत्रव्याख्यानावसरे प्रेरणार्थं विनैव णिचः शुद्धस्य मूलधातोरेवार्थेन अविशेषमाहुः; तथा हि,—"नितान्तप्रेषणात् धातोः हेतुमतो शुद्धेन तुल्योऽर्थः, तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि सिद्धम्" इति। "तुष्यतु दुर्ज्जनः" इति न्यायेनोच्यते पक्षान्तरम्,—"आत्मानम्" इति णिजन्तकाले कर्म्मतापन्नं प्रयोज्य-कर्त्तृपदमूह्यमवाप्नोति वेदितव्यम्; एवञ्च "आत्मा (मनः) न प्रत्येति" इत्यणिचि प्रयोज्यकर्त्तुः आत्मनः णिचि कर्म्मत्वं, तेन, पौराः आत्मानं न प्रत्याययन्ति—विश्वासयन्ति, "चारुदत्त एव स्त्रीहत्याकारी" इति कथमपि न स्वीकुर्व्वन्ति इत्याशयः]।

चारु। [तूष्णीमास्ते] (ङ)

शकारः। अले चंडालगोहे! ण भणादि चालुदत्त-बडुके, ता भणावेम्ह दुमिणा जज्जल-वंशखंडेण शंखलेण (च) तालिअ तालिअ। *

* अरे चाण्डालगोह! न भणति चारुदत्त वटुकः, तद्भाणयत अनेन जर्जरवंशखण्डेन शङ्कलेन ताडयित्वा ताडयित्वा।

इतः किञ्चित् पूर्वं ५१३ पृष्ठे "पौरादिकै" इत्यादिचूर्णके "पत्तिआअदि" इति प्राकृतस्य "प्रत्याययति" इति संस्कृतमस्ति, अतः पूर्व्वापरसङ्गत्यनुरोधेन "कधं एदं ण पत्तिआअंति पौरा" इत्यादि शकारोक्तौ "पत्तिआअंति" "पत्तिआअदि" इति प्राकृतद्वयस्य "प्रत्याययन्ति" "प्रत्याययति" इति संस्कृतेनानुवाद एव न्याय्यः। केचित्तु उक्तप्राकृतद्वयं "प्रत्ययन्ते" "प्रत्ययते" इत्येवं संस्कृतेनानुवदन्ति ; तथा चात्र भौवादिकस्य अयधातोः प्रयोग इति स्वोक्तिविरोधः प्रतीयते ; यतः प्राक् प्रत्याययति इत्यत्र इणधातोः णिचि रूपमेवाकलितम्, अत्र तु अयधातोः ; एतद्धि उक्तिवैषम्यं दृष्ट्वा अस्माभिः यथामति सामञ्जस्यं पूर्वापरविरोधेनैव सुसंरचितमिति ध्येयम् ; "एदं" इत्यस्य "एतं" इत्यनुवादस्तु विवक्षया षष्ठीं विनैव खाभीप्सितार्थसंसाधकतया साधीयानिति मन्यामहे। आत्मीयया खीयया। जिह्वया—रसनया, स्वमुखेनेति यावत्।

(ङ) तूष्णीं—मौनी, किमपि प्रत्युत्तरमव्याहरन्नित्यर्थः।

(च) भाणयत—वाचयत। जर्जरवंशखण्डेन—जीर्णवेणुशकलेन, भग्नप्रायवंशखण्डरूपेणेति यावत्। शङ्कलेन—छिद्रमताड़नदण्डेन ; यावदयं स्वमुखेन वसन्तसेनाया हत्यां मयैव कृतेति न स्वीकरोति, तावत् शङ्कलेन प्रहारं प्रहारम् अपराधं स्वोकारयतेत्यर्थः। [कस्मिंश्चिदप्यभिधाने शङ्कलशब्दस्य प्रयोगः यद्यपि न दृश्यते, तथाऽपि प्राकृतोऽयं शब्द इति मन्यमानैः प्राचीनैः प्रकृतार्थमनुसृत्यैवं व्याख्यातमित्यनुमीयते ; यद्वा—लिपिकरप्रमादवशात् ककारमोचेण "शृंखलेन" इत्यत्र "शंखलेन" इति आयातमिति, अतः बहुषु पुस्तकेषु तथैव पाठो दृश्यते इति अनुमिनुमः। "इमिणा" इत्यत्र "खंखनिणा" तथा "शंखलेण" इत्यत्र "खिंखलेण" इति पाठान्तरद्वये—खङ्खायमानेनेति आद्यस्य संस्कृतानुवादे मारणसमकालमेव "खं खम्" इति शब्दं कुर्व्वता" इत्यर्थः, तथा "शङ्कलेन" इति द्वितीयस्य संस्कृतानुवादे, शङ्कलेन—अपराधिनः बन्धनार्थं नीयमानेन निगडेनेत्यर्थः]।

चाण्डालः। [प्रहारमुद्यम्य (क)] भो चालुदत्त! भणाहि। *

चारु। [सकरुणम्]—

प्राप्यैतद्व्यसन-महार्णव-प्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः।
एको मां दहति जनापवादवह्निः
वक्तव्यं यदिह मया हता प्रियेति॥ ३३॥

* भोः चारुदत्त! भण।

(क) प्रहारं—प्रह्रियते—ताड्यते अनेन इति प्रहारः तं, प्रहारसाधनमित्यर्थः, वध्यखड्गमिति यावत्। [प्रपूर्व्वकात् हरतेः करणे घञ्] उद्यम्य—उत्तोल्य इत्यर्थः; अकरुणेन प्रतिहिंसापरवशेन शकारेण निर्द्दयं प्रहृत्य मारयितुमादिष्टोऽपि तदादेश-लङ्घने राजकोपमाशङ्कमानः, तथा अन्यतः तत्त्वतो निरपराधस्य तस्य ब्राह्मणस्य गात्रे दण्डं पातयितुमतितरां बिभ्यच्चाण्डालः केवलं दण्डमुद्यम्य तं भीषितवान्, न तु अधर्म्मभयाद् एकशोऽपि प्रहृतवानिति शकारापेक्षया अतिनीचस्य चाण्डालस्यापि चित्तस्य प्रसारो दर्शित इति बोध्यम्।

प्राणदण्डादेशनाद्यविषमः सम्प्रति सर्व्वजनसमक्षं प्राणाधिकायाः वसन्तसेनायाः अलीकं स्वकर्तृकहननं कथमपि स्वीकर्त्तुमपारयन् सविषादमाह, प्राप्येति।—एतत् —अनुभूयमानं, सुदुस्तरमित्यर्थः. व्यसनमेव—विपत्तिरेव, ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः) महार्णवः—विशालसमुद्रः, तस्मिन् प्रपातं—पतनं, निमज्जनमित्यर्थः, प्राप्य—अधिगम्य, दुस्तरागाधविपत्सागरे पतित्वाऽपि इत्यर्थः, (अपिरत्र अध्याहरणीयः) मे—मम, त्रासः,—भयम्, अचिरेणैवाहमेभिः हनिष्ये इति मृत्युभीतिरित्यर्थः, न अस्ति—न भवति न च—नापि, मनसः,—चित्तस्य, विषादः,—अकालमृत्युजनितं दुःखम्, अस्ति इति पूर्व्वेण अन्वयः। यद्येवमविवेकिनो राज्ञः पालकस्य प्राणदण्डादेशात् न भीतोऽसि, न वा निष्कारण दण्डादेश-मवाप्य कश्चिद्विषादमनुभवसि तत् कथमेवं विमनायसे? कातरश्च दृश्यसे? इत्याशंसायामाह, एक इति।—एकः—केवलः, ("एके मुख्यान्यकेवलाः" इत्यमरः) जनानां—लोकानाम्, अपवादः,—निन्दावादः, नूनं वसन्तसेना अनेनैव हता, यतोऽसौ वध्यस्थाने स्वमुखेन स्वयमेव "अहं वसन्तसेनां हतवान्" इत्यभिधत्ते, इति अवस्तुतः सर्व्वजनकृत दोषारोपणमिति यावत्, स एव वह्निः,—अनलः, मां—चारुदत्तमित्यर्थः, सततचिन्तासन्तापशुष्कमिति भावः, दहति—तापयति, नितरां दुःखी-

शकारः। [पुनस्तथैव] (ञ)।

चारु। भो भोः पौराः! ["मया खलु नृशंसेन—" इत्यादि पुनः पठति]।

शकारः। वावादिदा।*

चारु। एवमस्तु। (झ)

प्रथमचाण्डालः। अले! तव अत्त वज्झवालिआ (ञ)।†

द्वितीयचाण्डालः। अले! तव।‡

---

* व्यापादिता। † अरे! तव अत्र वध्यपालिका। ‡ अरे! तव।

---

करोतीत्यर्थः; यत्—यस्माद्धेतोः, मया—चारुदत्तेनेत्यर्थः, प्रिया—प्रीतिप्रदा वसन्तसेनेत्यर्थः, हता—मारिता इति—इत्थम्, इह—वध्यस्थाने, वक्तव्यं—सर्व्वसमक्षं स्वमुखेनैवोच्चारयितव्यमित्यर्थः; प्राणदण्डादेरपरात् नाहं किञ्चिदपि बिभेमि, न वा किञ्चित् विषीदामि, केवलम् "अहमेव वसन्तसेनाहन्ता" इति स्वमुखोच्चारणात् दृढीभूतः दुरपनेयश्च सर्व्वजनप्रत्ययकरः मिथ्याभूतः जनापवादः मामतीव दुःखयतीति समुदितार्थः। अत्र निरपह्नवविषये उपमेये व्यसने महार्णवतादात्म्याध्यासात्, तथा प्रकृते तादृशे जनापवादे वह्नितादात्म्याध्यासात् रूपकद्वयमलङ्कारः। प्रहर्षिणी वृत्तम्॥ २२॥

(ञ) "पुनस्तथैव" इत्यस्य कविवाक्यपरत्वे—पुनः,—भूयोऽपि। तथैव—तद्रूपमेव, पूर्व्ववत् पुनरपि शकारः "हंहो चालुदत्ता वडुका!" इत्यादिकम्, "अले चंडालगोहे" इत्यादिकं वा कथयतीत्यर्थः। शकारोक्तिपरत्वे तु—पुनस्तथैव इति चारुदत्तं प्रति शकारस्य अधिक्षेपवचनं बोध्यम्; एतदर्थस्तु—पुनः,—भूयोऽपि, तथैव—पूर्व्ववदेव, कातरवचनमित्याशयः, वदसि? इति शेषः; नाद्यापि हत्यापराधं स्वीकरोषि, केवलम् अयथावाग्जालेन पौरानेव प्रतारयसि? इति भावः।

(झ) एवम्—इत्थं, त्वदुक्तमेवेत्यर्थः, मयैव व्यापादिता इत्येवंरूपमिति यावत्; तथा च, भवता "मया व्यापादिता" इति यदुक्तं, तदेव सत्यमस्तु इति उत्तरयितुराशयः; शकारवचसि मयेत्यस्मच्छब्देन शकारस्यैव बोधनात्, वसन्तसेनायाः हननकर्तृत्वं शकारे एव बोध्यते इति शकारवाक्ये चारुदत्तस्य अनुमोदनं युज्यते एवेति बोध्यम्।

(ञ) वध्यपालिका—वध्यस्य पालिका—घातनपर्य्यायः; अहन्तु इतः पूर्व्वं बहुशो हतवान्, इदानीं तु तव पर्य्याय आपतित इति भावः।

प्रथमः। अले! लेक्खअं (ट) कलेम्ह। [इति बहुविधं लेखकं (ठ) कृत्वा] अले! जइ मम केलिका वज्झवालिआ, ता चिट्ठदु दाव मुहुत्तअं (ड)। *

द्वितीयः। किं-णिमित्तं ? †

प्रथमः। अले! भणिदो म्हि पिदुणा सग्गं गच्छन्तेण, अधा,—"पुत्त वीरअ! जइ तुह वज्झवाली होदि, मा सहसा वावादअसि वज्झं"। ‡ (ढ)

द्वितीयः। अले! किं-णिमित्तं ? §

* अरे! लेखकं कुर्मः। अरे! यदि मदीया बध्यपालिका, तदा तिष्ठतु तावत् मुहूर्त्तकम्।

† किं-निमित्तम् ?

‡ अरे! भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा—"पुत्र वीरक! यदि तव बध्यपालिका भवति, मा सहसा व्यापादयसि बध्यम्"।

§ अरे! किं-निमित्तम् ?

(ट) लेखकं—लेख एव इति लेखकं—लिखनं, बध्यपालिकानिर्णयार्थं रेखापातमिति यावत्।

(ठ) लेखकं—लेख एव इति लेखकम्, अनिर्द्दिष्टरेखापातमित्यर्थः, घातुकौ केवलं कस्य हननपर्य्याय इदानीम् आपतति इति निर्णेतुं नानाविधरेखापातं तत्तत्-कालप्रसिद्धमकुरुतां, तेन च ताभ्यां हननक्रमः निरधारीत्याशयः; अथवा एतेन अनुमीयते चैतत्, यत् पुरा किल चाण्डालानां समाजप्रचलिता एषा प्रथा आसीत्, येन राजशासनात् नरहत्याकरणकाले तस्माज्जायमानं पापमपनोदयितुं स्वाभीष्टदेवतां प्रस्तुत्य घातुकाः नानाविधं तत्कालप्रसिद्धं लेखकमकार्षुरिति, अतः चाण्डालहननसमये तामेव पद्धतिम् एतावपि अनुसस्रतुरिति।

(ड) मुहूर्त्तकं—दण्डद्वयमितं कालं, किञ्चित्कालमिति वाऽर्थः।

(ढ) सहसा—अकस्मात्, अविचारितं यथा तथेत्यर्थः। व्यापादयसि—मारयसि, [अत्र अनुज्ञार्थे विधिवत्तेऽपि आशंसायां लट्प्रयोगो बोध्यः] किञ्चित्काल-प्रतीक्षणं कृत्वा मारयेति समुदितार्थः।

प्रथमः। कदा वि कोवि साहू अत्थं दइअ वज्झं मोआवेदि। कदा वि लाओ पुत्ते भोदि, तेण वड्ढावेण सव्ववज्झाणं मोक्खो होदि। कदा वि हत्थी बंध खंडेदि, तेण संभमेण वज्झे मुक्के होदि। कदा वि लाअपलिवत्ते होदि, तेण सव्ववज्झाणं मोक्खो होदि। * (ण)

* कदाऽपि कोऽपि साधुरर्थं दत्त्वा बध्यं मोचयति। कदाऽपि राज्ञः पुत्रो भवति, तेन वृद्धिमहोत्सवेन सर्व्वबध्यानां मोक्षो भवति। कदाऽपि हस्ती बन्धं खण्डयति, तेन सम्भ्रमेण बध्यो मुक्तो भवति। कदाऽपि राजपरिवर्त्तो भवति, तेन सर्व्वबध्यानां मोक्षो भवति।

(ण) साधुः,—सुजनः, परदुःखासहिष्णुरिति यावत्। अर्थं—धनं. बध्यस्य जीवनविनिमयक्रयमित्यर्थः। दत्त्वा—प्रदाय, राज्ञे इति शेषः; [ एतेन प्राचीनकाले प्रचलितं दण्डविधेः द्वैविध्यं प्रदर्शितम्; तथा हि,—कुत्रचित् यथाविधिप्राणादिदण्डविधानं. कुत्रचिच्च दण्डार्हविमोचनार्थं प्राणादिदण्डविनिमयेन तज्जीवनादिमूल्योचितस्य अर्थस्य परिग्रह इति ]। वृद्धिमहोत्सवेन—वृद्ध्या—अभ्युदयेन हेतुना, पुत्रजन्मादिजनितेनेति भावः, यः महोत्सवः प्रकृष्टानन्दप्रकाशकव्यापारानुष्ठानं तेन, सुतसम्भवाद्यभ्युदयनिमित्तकापारानन्दप्रकाशकव्यापारेणेत्यर्थः। बन्धं—बध्यते अनेन इति बन्धः तं, शृङ्खलमित्यर्थः, [ बध्नातेः करणे घञ् ]। खण्डयति—भनक्ति। तेन—शृङ्खलभङ्गेनेत्यर्थः। सम्भ्रमेण—संवेगेन, दन्तिनः आकस्मिकशृङ्खलभङ्गजनितभयवशात् नागरिकाणां रक्षिपुरुषाणाञ्च यत् इतस्ततः पलायनं, तज्जनितया त्वरयेत्यर्थः। राजपरिवर्त्तः,—नृपतिपरिवर्त्तनं. पूर्व्वभूपतिं विनाश्य पराजित्य वा अन्येन भूपतिना सिंहासनाधिकारे कृते नवस्य भूपतेरधिकारप्रवर्त्तनमिति यावत् [ अनेन पालकस्य विनाशः, आर्य्यकस्य च तद्राज्यलाभः अनतिचिरमेव भविष्यति इति सूचितम् ]। तेन—राजपरिवर्त्तन। सर्व्वबध्यानां—प्राणदण्डेन दण्डनीयानां सर्वेषामेव जनानामित्यर्थः। मोक्षः,—मुक्तिः, प्राणदण्डाद्विमोचनमित्यर्थः; नवाभिषिक्तो हि नृपतिः प्रकृतिषु स्वौदार्य्यप्रदर्शनार्थं मम सिंहासनाधिरोहणोत्सवसमये कस्यापि आधिर्मा भूत्, सर्व्वा एव प्रजा अविशेषेणैव उत्सवमनुभवन्तु इति मन्यमानः सर्व्वानेव बध्यान् मोचयति इति; तथा च एतेषु किमपि चेत् अस्य मुक्तये उद्भवेत् तदा अयमपि मुक्तिं लब्धुं शक्नुयादिति भावः; [ एतेन चारुदत्तस्यापि मोक्षः अचिरभावीति सूच्यते ]।

शकारः। किं किं ? लाअपलिवत्ते होदि !! * (त)

चाण्डालः। अले ! वज्झवालिआए लेक्खअं (थ) कलेम्ह। †

शकारः। अले ! शिग्घं मालेध चालुदत्ताकं। ‡ [ इत्युक्त्वा चेटं गृहीत्वा एकान्ते स्थितः ]।

चाण्डालः। अज्ज चालुदत्त ! लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे चांडाला; ता शुमलेहि, जं शुमलिदव्वं। § (द)

---

* किं किम् ? राजपरिवर्त्तो भवति !!

† अरे ! बध्यपालिकाया लेखकं कुर्म्मः।

‡ अरे ! शीघ्रं मारयत चारुदत्तम्।

§ आर्य्य-चारुदत्त ! राजनियोगः खलु अपराध्यति, न खलु वयं चाण्डालाः; तत् स्मर, यत् स्मर्त्तव्यम्।

---

(त) किं किमिति ससम्भ्रमप्रश्ने; यद्बलेन मम ईदृक् प्रभुत्वं, मदेकाश्रयभूतस्य भगिनीपतेः तस्य राज्ञः पालकस्यापि किं परिवर्त्तनं भविष्यति ? इत्याशङ्कमानस्य शकारस्य भयविस्मयसम्भ्रमद्योतनार्थमेव द्विर्वचनं बोद्धव्यम्; नवाभिषिक्तनृपस्याधिकारे तु स्वकीयप्रभुत्वादिकं किमपि न स्थास्यति, चारुदत्तोऽपि मुक्तो भूत्वा निखिलमेव भूतार्थं तत्समीपे प्रकाशयति चेत् तदा स्वस्य अवश्यमेव दण्डनीयत्वमित्यादिसम्भावनया च भयादिकं बोध्यम्; अथवा,—चाण्डालानां मुखे राजपरिवर्त्तो भवति इति अशुभसूचकं वचनं श्रुत्वा तेषामविवेचपरबोधकवाक्यमिदम्; तथा च—युष्माकमेतादृशी स्पर्द्धा, यत् अस्मत्समक्षमेव एवं वक्तुं प्रभवथ ? इत्याशयः।

(थ) बध्यपालिकायाः,—बध्ये—हन्तुमिष्टे जने, या पालिका—पर्य्यायदिवसः तस्याः, बधार्हव्यक्तिनां पर्य्यायदिवसस्येत्यर्थः, [ पलति—गच्छति निर्द्दिष्टदिवसं या सा इति व्युत्पत्त्या भौवादिकस्य पलतेः इनि ततः स्वार्थे कनि स्त्रियां टापि पालिकेति सिद्धम् ] लेखकं—लिखनं, बध्यपालिकानिर्णयार्थं रेखापातमिति यावत्।

(द) राजनियोगः,—राजादेशः। अपराध्यति—दुष्यति, तव मारणविषये इति भावः; राजनियोगपरतन्त्रा वयं राजादेशेनैव त्वां मारयामः, अतो मात्र वयमपराद्धाः भवाम इति तात्पर्यम्। स्मर्त्तव्यम्—अन्तिमसमये स्मरणीयम् इष्टमन्त्रादिकं पुत्रकलत्रादिकं वा इति यावत्।

चाह।—

प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात् कथञ्चित्।
सुरपति-भवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥ ३४ ॥

भोः! क्व तावन्मया गन्तव्यम्?

चाण्डालः। [ भगवती दर्शयित्वा ] अले। एदं दीशदि दक्खिण-मशाणं,जं पेक्खिअ बज्झा झत्ति प्पाणाइं मुंचंति। पेक्ख पेक्ख, *—

* अरे! एतत् दृश्यते दक्षिणश्मशानं, यत् प्रेक्ष्य बध्या झटिति प्राणान् मुञ्चन्ति। पश्य पश्य,—

मिथ्याऽपवादग्रस्तस्य धर्मनिष्ठस्य आत्मनः अयथाऽऽरोपितं कलङ्कमपनोदयितुं धर्म-शरणपूर्व्वकं कलङ्कनिदानभूतां वसन्तसेनां आरभ्याह, प्रभवतीति।—भाग्यदोषात्—दुरदृष्टनिमित्तात्, दुर्द्दैववशादित्यर्थः, अद्य—अस्मिन् दिवसे, प्रबलपुरुषाणां—राज-पुरुषाणाम्; यद्वा,—प्रबलपुरुषस्य—राजानुग्रहात् शक्तिमतो नरस्य, शकारस्येत्यर्थः, वाक्यैः,—वचनैः, मिथ्याभूतैरिति भावः, दूषितस्यापि—अपराद्धस्यापि, मे—मम, धर्म्मः, सुकृतं, नियतानुष्ठितसुकर्म्मफलमित्यर्थः, शुभादृष्टविशेष इति यावत्, यदि—चेत्, कथञ्चित्—किञ्चिन्मात्रमपि, प्रभवति—प्रभाववान् भवति, मदाचरितधर्म्मस्य यदि किञ्चिदपि प्रभावो विद्यते इत्यर्थः, यदि कदाऽपि मया धर्माचरणं कृतमिति यावत्, तदा तद्बलेनेति पूरणीयं, सुरपतिभवनस्था—सुरपतेः,—इन्द्रस्य, यद्भवनं—गृहं स्वर्ग इत्यर्थः तत्र तिष्ठति या सा स्वर्गस्थेत्यर्थः, वा—अथवा, यत्र तत्र—यस्मिन् कस्मिन्नपि लोके इत्यर्थः स्थिता—वर्त्तमाना, सा एव—वसन्तसेना एव, स्व-स्वभा-वेन—निजया दोषविनिर्मुक्तया प्रकृत्या, कलङ्कं—वृथाऽपवादरूपं कालिमान, ममेति शेषः, व्यपनयतु—अपसारयतु, स्वयमागमनेन शोधयतु इत्यर्थः, यद्यहं कदाऽपि धर्म्मानुष्ठानमकार्षं, यदि वाऽहं यथार्थतो निर्दोषोऽभूवं, तदा मम तत्सुकृतबलेन वसन्तसेनैव मूर्त्तिमती इहागत्य मत्कलङ्कमवश्यमेव क्षालयिष्यति इति समुदितार्थः। [ अनेन वसन्तसेनायाः अचिरभावि आगमनं सूचितम् इति बोध्यम् ]। मालिनी वृत्तम् ॥ ३४ ॥

अद्धं कलेबलं पड़ि-बुत्तं कट्टंति दीहगोमाआ।

अद्धं पि शूललग्गं वेशं विअ अट्टहाशश्श * ॥ ३५ ॥

चारु। हा! हतोऽस्मि मन्दभाग्यः। (ध) [ इति सावेगम् (न) उपविशति ]

शकारः। ण दाव गमिश्शं, चालुदत्ताअं वावादअंतं (प) दाव पेक्खामि। [ परिक्रम्य दृष्ट्वा ] कध उवविट्टे ? †

---

* अर्द्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः।

अर्द्धमपि शूललग्नं वेश इवाट्टहासस्य ॥

† न तावद्गमिष्यामि, चारुदत्तक व्यापाद्यमानं तावत् पश्यामि। कथमुपविष्टः ?

प्रदर्शितस्य दक्षिणश्मशानस्य भीषणत्वं वर्णयन्नाह, अर्द्धमिति।—दीर्घाः—आयतकलेवरा इत्यर्थः, विपुलोन्नतावयवा इति यावत्, यद्वा—दीर्घाः,—आयताः, शूलस्थमृतदेहभक्षणार्थं तदुपरि सम्मुखस्थचरणद्वयस्थापनात् स्वाभाविकप्रमाणापेक्षया दीर्घत्वेन प्रतीयमाना इत्यर्थः. ये गोमायवः,—शृगालाः, प्रतिवृत्तं—शूलात् अधः लम्बितम्, अर्द्ध कलेवरं—देहस्य निम्नार्द्धांशमित्यर्थः, कटिदेशात् पादपर्य्यन्तमिति यावत्, ( "पुंस्यर्द्धोऽर्द्ध समेंऽशके" इत्यमरः ) कर्षन्ति—आकृष्य खण्डयन्ति, भक्षयन्तीत्यर्थः,शूललग्नं—शूलसंसक्तं, शूलविद्धमिति यावत्, अर्द्धम्—ऊर्द्धावयवमित्यर्थः, अपि, अट्टहासस्य—अत्युच्चहासस्य, विशति अस्मिन् इति व्युत्पत्त्या वेशः,—आधार इत्यर्थः, इव, दृश्यते इति शेषः। शूलोपरि स्थितस्य प्रेतशरीरार्द्धांशस्य सदशनमुखविच्छिन्नतया, मुखस्य च प्राणवियोगावसरे व्यायततया दन्तकिरणानां परितः प्रसृतत्वात् तत् अट्टहासस्याधारस्वरूपमिव अभूदिति भावः। अत्रोपमेयभूतस्य शूलस्थप्रेतशरीरार्द्धस्य उपमानभूताट्टहासात्मकतया सम्भावनात् उत्प्रेक्षाऽलङ्कारः; तथा च दर्पणे—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति। आर्य्या वृत्तम् ॥ ३५ ॥

( ध ) हा इति विषादे; वध्यस्थाने शूलारोपितानां प्रेतानां बीभत्साकारदर्शनेन परदुःखासहिष्णोः, तेषां मरणकालिकवेदनादिकम् अनुमाय अतिक्लिष्टस्य च चारुदत्तस्य "एवमेव दीनां दशाम् अपवाददूषितः अहमपि अचिरात् गमिष्यामि, न च मे कलङ्कक्षालनावसरः समुपस्थितः" इत्येवं चिन्तैव विषादकारणं, न तु मृत्युभयम् इति बोध्यम्।

( न ) सावेगम्—आवेगेन—प्रदर्शितकारणसमुत्पन्नमनःक्षोभजनितेषदुद्वेगेन सह यथा तथेत्यर्थः।

( प ) व्यापाद्यमानं—विनाश्यमानं, घातुकाभ्यामिति शेषः।

चाण्डालः। चालुदत्त! किं भीदेशि? *

चारु। [ सहसोत्थाय ] मूर्ख! [ "न भीतो मरणादस्मि केवलं दूषितं यशः,—" इत्यादि पुनः पठति ]।

चाण्डालः। अज्ज चालुदत्त! गअणदले पडिवशंता चंदशुज्जा वि विपत्तिं लहंति, किं उण जणा मलण-भीलुआ माणवा वा? लोए कोवि उट्ठिदे पडदि, कोवि पडिदो वि उट्ठेदि। † (फ)—

उट्ठंत पडंताह वशण-पाडिआ शवश्श उण अत्थि।
एदाइं हिअए कदुअ शंधालेहि अत्ताणअं ‡ ॥ ३६ ॥

---

* चारुदत्त! किं भीतोऽसि?

† आर्यचारुदत्त! गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते, किं पुनर्जना मरणभीरुका मानवा वा? लोके कोऽपि उत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते।—

‡ उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति।
एतानि हृदये कृत्वा सन्धारयात्मानम् ॥

(फ) गगनतले—आकाशतले विपदागमनसम्भावनारहिते इति भावः। विपत्तिं—राहुग्रासमित्रावरणादिरूपां विपदमित्यर्थः। मरणभीरुकाः,—मरणात्—मृत्योः, भीरुकाः,—भयशीलाः, [ बिभ्यति ये इति व्युत्पत्त्या भियः कर्तरि क्रुप्रत्ययः, ततः स्वार्थे कन्; यद्वा,—"क्रुकन्नपि वाच्यः" (वा०) इति क्रुकन् ] अत्युच्चैरवतिष्ठमानौ महाप्रभावौ सूर्याचन्द्रमसावपि यदा राहुणा ग्रस्तौ विपत्तिं लभमानौ, तदा का कथा मरणधर्मिणाम् अतितुच्छानां मर्त्यानां पुनः विपन्नतायाम् इति समुदितार्थः; [ एतेन कदाचित् दैवदुर्विपाकवशात् राहुणा ग्रस्तावपि सूर्याचन्द्रमसौ यथा अचिरादेव तस्मात् मुक्तिं लभमानौ अचिरात् प्रतिभातः, तथा विधिवशादेव विपत्कवलपतितोऽप्ययमचिरादेव मुक्तिमधिगच्छन् सुतरां भास्यतीत्यर्थो ध्वन्यते ]। "जनाः" "मानवाः" इति पुनरुक्तिस्तु लौकिकव्यवहारवचनत्वात् न दोषावहा। लोके—जगति, उत्थितः,—अभ्युदयमापन्नः, उन्नतपदवीमारूढ इत्यर्थः। पतति—भ्रश्यति, दुरवस्थां प्राप्नोतीत्यर्थः। उत्तिष्ठते—उन्नमति, उन्नतिं सम्पदं वा समधिगच्छति इत्यर्थः, [ उत्पूर्वकात् तिष्ठतेः "उदोऽनूर्ध्वकर्मणि" (१।३।२४ पा०) इति सूत्रात् आत्मनेपदम् ]।

[illegible]मिव जागतिकानां मानवानां सुखदुःखसम्पदापदादिषु चक्रवत् नियत-

परिवर्त्तिशीलत्वं पुनर्भङ्ग्यन्तरेणाह, उत्तिष्ठत्पतत इति।—उत्तिष्ठत्पततः,—कदाचित् उत्तिष्ठतः,—उद्गच्छतः, कदाचिच्च पततः,—अधो गच्छतः, [उत्तिष्ठंश्च पतंश्चेति तयोः समाहारे एकत्वे क्लीवत्वे च प्राप्ते उत्तिष्ठत्पततदिति क्लीवैकवचनान्तं पदं सिद्धं, "द्वन्द्वश्च प्राणितूर्य्य— इति प्रकरणबहिर्भूतानामपि समाहारद्वन्द्वो भवत्येव, तेन सर्व्वो द्वन्द्वो विभाषैकवद्भवति" इति तत्त्वबोधिनीकाराः] शवस्यापि—कुणपस्यापि, मृत-देहस्यापीत्यर्थः, पुनः वसनपातिका—वसनम्—अवस्थानं, जीवनमित्यर्थः, पातिका—पतनञ्चेत्यर्थः, [पात एव इति पातिका. पततेः भावे घञि, स्वार्थे च कनि स्त्रियां टाप्; वसनञ्च पातिका चेति समाहारे निपातनात् वसनपातिकेतिपदं सिद्धम्; यद्वा—वसन-सहिता पातिका इति वसनपातिका. शाकपार्थिवादित्वादुत्तरपदलोपी समासः] अस्ति —विद्यते इत्यर्थः; कदाचित् कश्चित् मृतकल्पः जनः मृतबुद्ध्या प्रेतस्थानं नीयमानः चाण्डालैः दृष्टः. तदानीमपि अविगतप्राणस्य तस्य पुनः संज्ञायामापतितायां पाणि-पादादीनामीषत्सञ्चालनं दृष्ट्वा तैरेव चाण्डालैः मृतस्यापि उत्थानपतनं सम्भवतीति निर्द्धारितम्; अथवा कदाचित् मृतशरीरे दाहार्थं प्रज्वलितचितायां संस्थापिते उच्छलदग्न्युत्तापेन दह्यमानप्रेतस्य शरीरं सञ्चालितं दृष्टं, तेनैतत् निरधारि यत् मृतोऽपि कदाचित् उत्थानपतनं लभते इति; यद्वा—पिशाचोपहतस्य मृतदेहस्यापि उत्थानं पतनञ्च सम्भवति इति कुसंस्काराविष्टनीचजनकिंवदन्ती प्रचरति. एवञ्च प्रेतस्थाने भूताविष्टं हि मृतशरीरं कदाचित् समुत्थाय दण्डायते. ततश्च क्षणात् अधो निपततीति चाण्डालैः कदाचित् श्रुतम्, अतः अनेन चाण्डालेन स्वसंस्कारानुरूपा स्वधियोऽनुरूपा च युक्तिः प्रदर्शितेति; तथा च यदि मृतानामपि प्रायश एषा अवस्था दृश्यते, तदा जीवतस्तवापि पुनरुत्थानं भवितुमर्हति इत्यत्र किमु वक्तव्यमिति भावः; एतानि—मदुदीरितानि युक्तिमन्ति वचनानीत्यर्थः, हृदये—मर्म्मणि, कृत्वा—निधायेत्यर्थः, स्थिरचेतसा समालोच्येति यावत्, आत्मानं—स्वं, सन्धारय—संस्थापय, स्थिरीकुरु इत्यर्थः, मा विचलितो भव इति यावत्; यदा व्यपगतजीवः शवोऽपि कदाचित् जीवति तदा जीवन्मनुष्यः कदाचित् दुर्द्दैववशात् पतति, कदाचिच्च सौभाग्यात् पुन-रुत्पतति इत्यत्र किमु वक्तव्यमिति भावः, [एतेन दुर्द्दैववशात् इदानीं विपन्नस्यापि ते अचिरादेव पुनरभ्युदयः नासम्भव इति गम्यते]। अत्र मृतशरीरस्यापि उत्थान-पतनं सम्भवति, का कथा जीवनवताम् इति दण्डापूपन्यायादर्थान्तरापतनादर्था-पत्तिरलङ्कारः। आर्य्या वृत्तम्। यद्यप्यत्र पादान्तस्याक्षरस्य गुरुभावमङ्गीकृत्यापि न सप्तपञ्चाशन्मात्रा भवन्ति, तथाऽपि गुरुप्रयत्नेनोच्चार्य्य आर्य्यात्वमनुसन्धेय-मिति ॥ ३६ ॥

[ द्वितीयचाण्डालं प्रति ] **एदं चउट्ठं घोसणट्ठाणं, ता उग्घोसम्ह।** *
[ पुनस्तथैवोद्घोषयत: ]।

चारु। **हा प्रिये वसन्तसेने!** [ "शशिविमलमयूख—" इत्यादि पुन: पठति ]।

[ तत: प्रविशति ससम्भ्रमा वसन्तसेना भिक्षुश्च (ब) ]।

भिक्षु:। **हीमाणहे! पट्ठाणपलिस्संतं समस्सासिअ वसंतसेणिअं णअंते अणुग्गहिदम्हि पव्वज्जाए। उवासिए! कहिं तुमं णइस्सं?** † (भ)

वस। **अज्ज-चारुदत्तस्स ज्जेव गेहं; तस्स दंसणेण मिअंकणस्स विअ कुमुदिणिं आणंदेहि मं।** ‡ (म)

* एतत् चतुर्थं घोषणास्थानं, तदुद्घोषयाव:।

† आश्चर्यम्! प्रस्थानपरिश्रान्तां समाश्वास्य वसन्तसेनिकां नयन् अनुगृहीतोऽस्मि प्रव्रज्यया। उपासिके! कुत्र त्वां नेष्यामि?

‡ आर्य्य-चारुदत्तस्यैव गेहम्; तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीम् आनन्दय माम्।

(ब) ससम्भ्रमा—सत्वरा, द्रुतगामिनीति यावत्। सम्भ्रमोऽत्र चारुदत्तदर्शनोत्कण्ठया बोध्य:। भिक्षु:,—बौद्धश्रमणक:, श्रमणकधर्म्मावलम्बी संवाहक इति यावत्।

(भ) प्रस्थानपरिश्रान्तां—प्रस्थानेन—अध्वपर्य्यटनेन, प्राक् जीर्णोद्यानात् विहारनयनकाले, इदानीं विहारादानयनकाले च इति भाव:, परिश्रान्तां—खिन्नाम्। समाश्वास्य—सान्त्वयित्वा, आश्वस्तां कृत्वेत्यर्थ:। नयन्—प्रापयन् तस्या ईप्सितप्रदेशमिति शेष:। प्रव्रज्यया—प्रव्रज्या—सन्न्यास: तया, सन्न्यासग्रहणेनेत्यर्थ:, अनुगृहीत:,—अभ्युपपन्न:, उपकृत इति यावत्, प्रव्रज्याफलेनैव वसन्तसेनाया आघातजनितमूर्च्छाऽपनोदनपूर्व्वकजीवनरक्षणेन तत्कृतोपकारस्य स्वाभीष्टप्रत्युपकारसम्पादनादिति भाव:। यद्वा,—यदि मया पूर्वं प्रव्रज्या परिगृहीता नाभविष्यत्, तदा मया सार्द्धं गच्छन्तीमिमां तरुणीमालोक्य सर्वे मामसत्स्वभावं मन्यमाना: नूनमनिन्दिष्यन्, अत: सा एवेदानीं प्रत्युपकारनिरतस्य मम लोकापवादात् संरक्ष्य भूयांसमुपकारमकरोत् इति तात्पर्य्यम्। नेष्यामि—प्रापयिष्यामि।

(म) "आर्य्यचारुदत्तस्यैव" इत्यत्र एवकारस्य अन्ययोगव्यवच्छेदार्थकतया

भिक्षुः। [स्वगतम्] कदलेण मग्गेण पविशामि ? (य) [विचिन्त्य] लाश्रमग्गेण ज्जेव पविशामि। उवाशिए! एहि, इमं लाश्रमग्गं। [आकर्ण्य] किं णु क्खु एशे लाश्रमग्गे महंते कलश्रले (र) शुणोश्रदि ? *

वस। [अग्रतो निरूप्य] कधं पुरदो महाजणसमूहो ? अज्ज! जाणाहि दाव किमेदं त्ति। विसमभरक्कंता विश्र वसुंधरा, एश्रवासोसदा उज्जइणी वट्टदि। † (ल)

* कतरेण मार्गेण प्रविशामि? राजमार्गेणैव प्रविशामि। उपासिके! एहि, अयं राजमार्गः। किं नु खलु एष राजमार्गे महान् कलकलः श्रूयते ?

† कथं पुरतो महान् जनसमूहः ? आर्य्य! जानीहि तावत् किं नु इदमिति। विषमभाराक्रान्तेव वसुन्धरा, एकवासोन्नता उज्जयिनी वर्त्तते।

"न त्वन्यस्य" इत्यर्थो लभ्यते; गेहं - भवनं, मम इति शेषः; "कुत्र त्वां नेष्यामि" इति पूर्वोक्तभिक्षुप्रश्नस्योत्तरमिदम्। तस्य—चारुदत्तस्य। मृगलाञ्छनस्य—मृगः,—शशः, लाञ्छनं—चिह्नं यस्य तस्य, शशधरस्येत्यर्थः। कुमुदिनीमिव—कैरविणीमिव, कुमुदलतिकामिवेत्यर्थः; कुमुदबान्धवोदये हि कुमुदकुसुमान्येव प्रफुल्लन्ति इति कविसमयप्रसिद्धत्वादेव चन्द्रकुमुदिन्योर्नायकनायिकाभावः प्रसिद्धः; कुमुदिनी चन्द्रं दर्शयित्वा यथा आनन्दयति, तथा चारुदत्तं दर्शयित्वा मामपि आनन्दयेति तु समुदितार्थः। अत्र "इन्दुः कुमुदबान्धवः" इत्यादि पर्य्यायान् विहाय मृगलाञ्छन-पदनिर्द्देशात् शुभ्रकिरणे चन्द्रमसि यथा कृष्णवर्णः मृगरूपः कलङ्कः शैत्यधावल्यादि-गुणसमूहयोगात् न लोकवादाय प्रभवति, तथा सर्व्वगुणाकरस्य चारुदत्तस्यापि गणिकाऽऽसक्तिरूपः कलङ्कः न लोकापवादाय कल्पते इति ध्वन्यते; तथा कुमुदिन्याः रविविकाशित्वात् वेश्यानाञ्च निशोदये एव प्रमोदप्रकर्षोदयात् गणिकायाः वसन्त-सेनायाः कुमुदिनीसाम्यञ्च सुसङ्गच्छते एवेति बोध्यम्।

(य) कतरेण—राजमार्गः तथा नागरिकैर्झटिति गमनार्थमाविष्कृतो ग्राम्य-पथश्चेति मार्गद्वयं विद्यते, एतयोः द्वयोः केन इत्यर्थः।

(र) किं—कथम्। नु—वितर्के। एषः,—श्रूयमाणः। कलकलः—कोलाहलः।

(ल) जनसमूहः,—जनतेत्यर्थः। जानीहि—कमपि पृष्ट्वा अवबुध्यस्व इत्यर्थः; अथवा, जानीहि तावत्—जानासि किम् ? इत्यर्थः। उज्जयिनी—तदभिधाना एषा नगरी। एकवासोन्नता—एकस्मिन्—एकत्रैव प्रदेशे, वासः अवस्थानं भूमावित्यर्थः, श्री

चाण्डालः। इमं अ पच्छिमं घोशणट्ठाणं; ता तालेध डिंडिमं, उग्घोशेध घोशणं। [तथा कृत्वा] भो चालुदत्त! पडिवालेहि, (व) मा भाआहि, लहुं ज्जेव मालीअशि। *

चारु। भगवत्यो देवताः! (श)

भिक्षुः। [श्रुत्वा ससम्भ्रमम् (ष)] उवाशिए! तुम किल चालुदत्तेण मालिदाशि त्ति चालुदत्तो मालिदुं णीअदि। †

---

* इदञ्च पश्चिमं घोषणास्थानम्; तत्ताड़यत डिण्डिमम्, उद्घोषयत घोषणाम्। भोः चारुदत्त! प्रतिपालय, मा भैः, शीघ्रमेव मार्य्यसे।

† उपासिके! त्वं किल चारुदत्तेन मारिताऽसीति चारुदत्तो मारयितुं नीयते।

---

वासः,—व्यापाद्यमानं चारुदत्तं सहानुभूतिं प्रकाशयितुं समवेतानाम् उज्जयिनीवासिनामवस्थानमित्यर्थः, तेन उन्नता—उच्चा, वर्त्तते—विद्यते, अत एव वसुन्धरा—पृथिवी. [वसूनि धनानि धरति या सा इति व्युत्पत्त्या "संज्ञायां भृतॄवृजिधारिसहितपिदमः" (३।२।४६ पा०) इति सूत्रेण वसूपपदात् धरतेः संज्ञायां खच् स्त्रियां टाप् च]। विषमभाराक्रान्तेव—विषमेण—दारुणेन, दुःसहेनेत्यर्थः, भारेण—गुरुत्ववद्द्रव्येण, आक्रान्तेव—पीड़ितेव, [इति उत्प्रेक्षा]; उज्जयिनीस्थानां सर्वेषामेव जनानां चारुदत्तदर्शनार्थमेकत्र समवेतत्वात् अत्यन्तमाक्रान्ता धरणीयं खिद्यते इवेति भावः। अत्र भाराक्रान्तत्वे एकवासीन्नतत्वरूपहेतोः निष्पादकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(व) प्रतिपालय—प्रतीक्षस्व, स्थिरीभव इत्यर्थः, मत्तः आघातं लब्धुमिति शेषः; प्रहारसमये चञ्चले लक्ष्ये प्रहारः सम्यक् न भवति, अतः अचञ्चलः सन् तिष्ठ इत्याशयः, इदानीमेव त्वां घातयामीति भावः।

(श) भगवत्यः,—"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गणा॥" इत्युक्तलक्षणवत्यः; अत्र समग्रैश्वर्य्यवीर्य्यादिसम्पन्नत्वमितार्थकभगवत्त्वविशेषितदेवताऽऽमन्त्रणस्यायमाशयः,—देवतानाम् ऐश्वर्य्यादिसम्पन्नत्वात् ताः स्वप्रभावेण मां रक्षितुं समर्थाः, अतः ताः मां स्वप्रभावेण रक्षन्तु इति।

(ष) श्रुत्वा—चाण्डालाभ्यामुद्घुष्यमाणां चरमां पञ्चमीं घोषणामाकर्ण्येत्यर्थः। ससम्भ्रमं—[illegible], भयहेतूद्वेगसहितमिति वाऽर्थः॥

वस। [ससम्भ्रमम्] हद्धी! हद्धी! कधं!! मम मंदभाइणीए किदे अज्ज-चालुदत्तो वावादीअदि? भो:! तुरिदं तुरिदं आदिसेहि मग्गं। * (स)

भिक्षुः। तुवलदु तुवलदु बुद्धोवाशिआ अज्ज-चालुदत्तं जीअंतं शमश्शाशिदुं। अज्जा! अंतलं अंतलं देध। † (ह)

वस। अन्तरमन्तरम्। (क)

* हा धिक्! हा धिक्! कथम्!! मम मन्दभागिन्याः कृते आर्य्यचारुदत्तो व्यापाद्यते? भोः! त्वरितं त्वरितमादिश मार्गम्।

† त्वरतां त्वरतां बुद्धोपासिका आर्य्यचारुदत्तं जीवन्तं समाश्वासयितुम्। आर्य्याः! अन्तरमन्तरं दत्त।

---

(स) मन्दभागिन्याः.—मन्दः यः भागः इति कर्म्मधारये, सः अस्याः अस्तीत्यर्थे इनि ङीपि च मन्दभागिनी—दुर्भगा इत्यर्थः तस्याः, प्रेयसः असम्भावितहननवार्त्ता-माकर्ण्य अतिविह्वला आत्मनि अवज्ञा कृतेति। कृते—निमित्तं, [कृते इति विभक्त्यन्त-प्रतिरूपकमव्ययम्, "अर्थे कृते च तादर्थ्ये कथितं इयमव्ययम्" इति वचनात्] ममैव मारणाभियोगेन अस्य प्राणदण्डादेशस्य जातत्वादिति भावः। मार्गं—चारुदत्त-समीपगमनोपयोगिपथमित्यर्थः। आदिश—आज्ञापय, प्रदर्शय इति यावत्।

(ह) त्वरतां—सत्वरा भवतु, शीघ्रमागच्छतु इत्यर्थः, [सम्भ्रमे द्विरुक्तिः]। जीवन्तं—सप्राणम्, इदानीमपि जीवदवस्थायां वर्त्तमानम् इत्यर्थः। समाश्वासयितुं,—सम्यगाश्वस्तं कर्त्तुं, प्रीणयितुमित्यर्थः, त्वं जीविता तिष्ठसि इति ज्ञापनेन घातक-हस्तात् परित्राय तस्य स्थिरां निर्वृतिं जनयितुमिति यावत्। अन्तरम्—आवयो-र्गमनोचितमवकाशमित्यर्थः, चारुदत्तमेवं व्यापाद्यमानं दृष्ट्वा समवेतां जनतामुन्मथ्य यथेच्छं सत्वरं गन्तुमसमर्थस्य भिक्षोरेवं ससम्भ्रमोक्तिर्वेदितव्या।

(क) "अन्तरमन्तरम्" इति वसन्तसेनायाः असमाप्तवाक्यं निरतिशयसम्भ्रम-वैक्लव्यसूचकम्; संस्कृतभाषाप्रयोगस्तु तया चारुदत्तस्य जीवननाशशङ्काजनितोत्कण्ठया अतीवावेगवशात् सहसैव कृत इति ज्ञेयम्; एवं हि क्वचित् क्वचित् वैदग्ध्य-ज्ञापनार्थं संस्कृतकथनम् आलङ्कारिकाणामप्यनुमतं, तथा हि दर्पणे,—"योषित्सखी-बालवेश्याकितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥" इति।

चाण्डालः। अज्ज-चालुदत्त! शामिणिओओ अवलज्झदि, (ख) ता शुमलेहि जं शुमलिदव्वं। *

चारु। किं बहुना? (ग) ["प्रभवति—" इत्यादि श्लोकं पठति]।

चाण्डालः। [खड्गमाकृष्य] अज्ज-चालुदत्त! उत्ताणे भविअ शमं चिट्ठ एक्कप्पहालेण मालिअ तुमं शग्गं णेम्ह। † (घ)

* आर्य्य-चारुदत्त! स्वामिनियोगोऽपराध्यति; तत् स्मर यत् स्मर्त्तव्यम्।

† आर्य्य-चारुदत्त! उत्तानो भूत्वा समं तिष्ठ, एकप्रहारेण मारयित्वा त्वां स्वर्ग नयामः।

(ख) स्वामिनियोगः,—स्वामिनः,—प्रभोः, राज्ञ इति यावत्, नियोगः,—आज्ञा, वधादेश इत्यर्थः। अपराध्यति—दुष्यति, वाक्यव्यवहारादिना तव निरपराधत्वे विश्वस्ता अपि वयं यत् त्वामिदानीं व्यापादयितुम् उद्युक्ताः, तत्र अपरिहार्य्यस्य राजादेशस्यैव दोषः वयन्तु राजनियोगपरतन्त्रा इति अन्यथाचारिणोऽप्यत्र निरपराधा एवेति भावः।

(ग) किं बहुना?—अस्मिन् स्मर्त्तव्योपदेशे अधिकेन उक्तेन किम्? इत्यर्थः : इतो नाधिकं स्मर्त्तव्यमस्तीति भावः।

(घ) उत्तानः—ऊर्द्धमुखः इत्यर्थः, उन्नमितग्रीव इति यावत्, ("उत्तानम-गभीरे स्यादूर्द्धास्यशयिते त्रिषु" इति मेदिनी)। समं—समानम्, ऋजुकं यथा तथेत्यर्थः। एकप्रहारेण—एकेनैव खड्गाघातेनेत्यर्थः। [यद्यपि चाण्डालः प्राक् राज्ञा पालकेन शूले समारोप्य चारुदत्तं घातयितुमादिष्टः, तथापि कथं हि तेन राजादेशमुल्लङ्घ्य स्वेच्छया चारुदत्तहननाय खड्गः उत्तोलित इति शङ्कमानान् प्रत्युच्यते, तथा हि—चारुदत्तहनने चाण्डालयोः स्वतः स्वारसिकी इच्छा नासीत्, केवलं राजादेशानुपालनायैव तत्र तयोः प्रवृत्तिः; आर्य्यकशर्विलकादिभिः नगर्यां विद्रोहे जनयितव्ये यदि भाग्यात् राजपरिवर्त्तनवशात् चारुदत्तविमुक्तिर्भवेदिति सम्भावनया नाश्वो कियत्कालं कालक्षेपोऽक्रियतेति; अत एवोक्तचेतस्पूर्व्वमेकेन चाण्डालेन यत् वध्यपालिकायाम् आपतितायां सहसा बध्य न व्यापादयेत्येव पित्रा आदिष्टमिति, तथा च पितुः राज्ञश्चादेशमुभयमेवानुसततया संरक्षितं तेन प्रथमत एव वध्यः शूले नारोपितः, वाग्वितण्डया पूर्व्वं क्षणं क्षिपत्वा सहसा बध्यस्याव्यापादनार्थं खड्गेन समोद्योगमभिनीय च पितुराज्ञा प्राक् पालिता, ततश्च प्रहर्त्तुमीहमानस्य स्वस्य हस्तात् खड्गपतनमभिनीय तावुभावेव चाण्डालौ चारुदत्तं शूले समारोपयितुमीषत्तु-

चारुदत्तः। [ तथा तिष्ठति ]।

चाण्डालः। [ प्रहर्त्तुमीहते। खड्गपतनं हस्तादभिनयन् (ङ)] हो!! कधं!*—

आअड्डिदे शलोशं मुट्ठिए मुट्ठिणा गहीदे वि।

धलणीए कीश पडिदे दालुणके अशणिशण्णिहे खग्गे!! † ॥३७॥

जधा एदं संवुत्तं, तधा तक्केमि, ण विवज्जदि अज्जचालुदत्ते त्ति। भअवदि! शंज्झवाशिणि! पशीद पशीद, अवि

---

* हो!! कथम्!—

† आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि।

धरण्यां किमिति पतितो दारुणकोऽशनिसन्निभः खड्गः!! ॥

‡ यथा एतत् संवृत्तं, तथा तर्कयामि, न विपद्यते आर्य्यचारुदत्त इति। भगवति!

रिति पूर्व्वापरग्रन्थाभिप्रायं विचार्य्य, "कथमेवम् एताभ्यां राज्ञः पालकस्यापि आदेशः समुल्लङ्घितः" इति केऽपि नाशङ्कनीयमिति सर्वं सुस्थम्।

(ङ) ईहते—चेष्टते, उद्यतो भवतीत्यर्थः। अभिनयन्—नाट्येन प्रदर्शयन्नित्यर्थः।

इदानीमात्मानमीप्सितवधस्य निरपराधस्य चारुदत्तस्योपरि दृष्टणामानुकूल्यमुत्पादयितुमेव निरन्तरं वधाभ्यस्तात् हस्तात् अकस्मात् खड्गस्खलनमभिनयन् सप्रकाशमाह, आकृष्ट इति।—सरोषं—सक्रोधं यथा तथेत्यर्थः, तत्र शकारस्य वर्त्तमानत्वात् तत्समचं कृत्रिमक्रोधप्रदर्शनपुरःसरमिति, चारुदत्तं निरपराधं जानन्नपि राजपरतन्त्रतया अनन्यगतिकं निरपराधं जिघांसुमात्मानं प्रति क्रोधप्रदर्शनपुरःसरमिति वा भावः; आकृष्टः,—करवालाधारात् आकृष्य उत्तोलित इत्यर्थः, वध्यस्य हननार्थमिति भावः, अशनिसन्निभः,—वज्रसदृशः अमोघाघात इति भावः, दारुणकः,—भीषणः, सुतीक्ष्ण इति यावत्, खड्गः,—असिः, मुष्टौ—त्सरौ, खड्गमूलभागे इत्यर्थः, मुष्टिना—बद्धपाणिना, दृढमुष्टिना इत्यर्थः, ("—मुष्टिर्द्वयोः पलं। बद्धपाणौ त्सरौ—" इति मेदिनी। "त्सरुः खड्गादिमुष्टौ स्यात्" इति च अमरः) गृहीतोऽपि—धृतोऽपि, किमिति—कथं, धरण्यां—भूमौ, पतितः!!—स्खलितः!! सहसा विच्युतः!! इत्यर्थः; कदाऽप्यभूतपूर्व्वमीदृक्पतनं यदिदानीं संवृत्तं, तत् तस्य किमपि कारणमस्ति इति दर्शकानां विस्मयमुत्पादयितुं किंचित्कालक्षेपविधायकव्यापारोऽनुसृत इति वेदितव्यम्। आर्य्याभेदान्तर्गतं गीतिवृत्तं तल्लक्षणमुक्तं वृत्तरत्नाकरे यथा—"आर्य्या-प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥" कोर्मात छन्दोऽनुरोधात् लघुतया पाठ्यम्॥ ३७॥

णाम चालुदत्तश्श मोक्खे भवे? तदो अणुग्गहिदं (च) तुए चांडालउलं भवे। ।।

सह्यवासिनि! प्रसीद प्रसीद, अपि नाम चारुदत्तस्य मोक्षो भवेत्? तदाऽनुगृहीतं त्वया चाण्डालकुलं भवेत्।

(च) चारुदत्तं हन्तुं कथमप्यनभिलाषुकः अलीकं खड्गपतनाभिनयं कुर्व्वन्, परितः दण्डायमानानां दर्शकानां भूयसा आनुकूल्यमुत्पादयितुमेव श्लोकोक्तमद्भुतरसाप्लुततया विस्मयोत्पादकं वस्तु पुनः चूर्णकेन भङ्ग्यन्तरेणाभिधत्ते, यथेति।—यथा—यतः; हस्तोत्तोलनसमकालमेवेत्यर्थः। एतत्—इदं, दृढमुष्टिना सबलं गृहीतस्यापि खड्गस्य झटिति स्खलनमित्यर्थः। संवृत्तं—जातम्। तथा—तत इत्यर्थः। तर्कयामि—सम्भावयामि। विपद्यते—विपन्नो भवति, मरिष्यति इत्यर्थः, हननोद्योगाभिनयं कुर्व्वतः चण्डालस्य एवंविधा उक्तिः कृत्रिमा किलेत्यवधातव्यम्; [विपद्यते इति विपूर्व्वकात् पदधातोर्भविष्यत्सामीप्ये "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा०) इति लट्]। सह्यवासिनि!—सह्यः—स्वनामप्रसिद्धः भारतीयसप्तकुलपर्व्वतानामन्यतमः पर्व्वतविशेषः [तथा हि किराते अष्टादशसर्गे "भुजरया इव सह्यमहीभृता पृथुनि रोधसि सिन्धुमहोर्मयः" इति; स हि पर्व्वतः पुणाख्यनगरस्य पश्चिमोत्तरस्यां दिशि समुद्रवेलामभितः किंयद्दूरमवतिष्ठते, "पश्चिम घाट" इति पर्व्वतविशेषस्य असौ अंशविशेष एवेति आख्यायते आधुनिकैः, अस्मादेव पर्व्वतात् गोदावरी नदी समुद्भूतेति] सह्यवासिनि!—तत्स्थे! तदधिष्ठातृदेवते! इत्यर्थः; सा हि तवत्यानां चाण्डालानां कुलदेवता किल इति तत्सम्बोधनम्। अपि—प्रश्ने। नाम—सम्भावनायाम्। मोक्षः,—मुक्तिः। भवेत्?—स्यात्? चारुदत्तस्य मुक्तिसम्भावना अस्ति किम्? इति समुदितार्थः, [भवेदिति सम्भावनायां लिङ्; अपिशब्दात् मोक्षस्य भवनसमर्थार्थकत्वप्रतीतौ तु "उताप्योः समर्थयोर्लिङ्" (३।३।१५२ पा०) इति सूत्रेण लिङ्]। तदा—यदि मुक्तिर्भवेत् तर्हीत्यर्थः। अनुगृहीतम्—अनुकम्पितम्; दीनशरणस्य सर्व्वजनमाननीयस्य निरपराधस्य ब्राह्मणस्य चारुदत्तस्य हत्यानिमित्तकापराधाभावात्, इत्थं तद्धनने प्रवृत्तस्य स्वस्य हस्तात् खड्गभ्रंशरूपप्रतिबन्धकोत्पादनात् न केवलं माम्, अपि तु सर्व्वमेव चाण्डालकुलं प्रति देव्या अनुग्रहः प्रदर्शित इति वक्तुराशयः। [एतेन चारुदत्तस्य निरपराधस्य हनने चाण्डालानां लोकमपीच्छा नासीदिति व्यज्यते]।

अपरः। जधाणत्तं (छ) अणुचिट्ठम्ह। *

प्रथमः। भोदु, एव्वं (ज) करेम्ह। † [इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः]।

चारु। ["प्रभवति—" इत्यादि पुनः पठति]।

भिक्षुः वसन्तसेना च। [दृष्ट्वा (झ)] अज्जा! मा दाव मा दाव। ‡ (ञ)

वस। अज्जा! एसा अहं मंदभाइणी, जाए कारणादो एसो वावादीअदि। §

चाण्डालः। [दृष्ट्वा]—

तुलिदं का उण एशा अंश-पडंतेण चिउलभालेण।
मा मेत्ति वाहलंती उट्ठिदहत्था इदो एदि? ¶ ॥ ३८ ॥

---

* यथाऽऽज्ञप्तमनुतिष्ठावः। † भवतु, एवं कुर्वः।

‡ आर्य्याः! मा तावत् मा तावत्।

§ आर्य्याः! एषा अहं मन्दभागिनी, यस्याः कारणादेष व्यापाद्यते।

¶ त्वरितं का पुनरेषा अंसपतता चिकुरभारेण।
मा मेति व्याहरन्ती उत्थितहस्ता इत एति? ॥

(छ) यथाऽऽज्ञप्तम्—आज्ञप्तम्—आज्ञप्तिः, आदेश इति यावत्, तदनतिक्रम्य, यादृशमाज्ञप्तं तादृशमित्यर्थे अनतिक्रमेऽव्ययीभावः, आदेशानुरूपमित्यर्थः; यतः आवां शूलेन घातयितुमेवोपदिष्टौ, न तु खड्गेन हन्तुमित्यपरस्य चाण्डालस्याशयः; राज्ञा हि शूलारोपणेन हन्तुमादिदेश, त्वन्तु खड्गेन हन्तुमुपाक्रमथाः, तन्न युज्यते इति शूलमारोप्यैव एनं हनिष्याव इति समुदितार्थः।

(ज) एवं—यथाऽऽदेशमनुष्ठानमित्यर्थः।

(झ) दृष्ट्वा—दूरतः चारुदत्तं शूले आरोपयितुमुद्यतमवलोक्येत्यर्थः।

(ञ) मा तावत् मा तावत्—नैव नैव, एनं शूलं आरोपयेति शेषः।

ससम्भ्रममागच्छन्तीं वसन्तसेनां दृष्ट्वा वितर्कयति, त्वरितमिति।—अंसे—स्कन्धदेशे पतता—विलुठता, स्कन्धविलम्बिना इत्यर्थः, चिकुरभारेण—कुन्तलकलापेन उपलक्षिता, आलुलायितकेशपाशतया अंसपतितचिकुरभारक्लिष्टकाया इति यावत्, [इत्थम्भूतलक्षणे तृतीया। एतेन चारुदत्तः आत्मनः कृते एव विपद्यमानोऽभूदित्या-

वसं। अज्ज-चारुदत्त ! किंस्सेदं ? * [इति उरसि पतति]।

भिक्षुः। अज्ज-चालुदत्त ! किंस्सेदं ? † [इति पादयोः पतति]।

चाण्डालः। [सभयमपसृत्य (ट)] कधं ! वशंतशेणा ! णं क्खु अम्हेहिं शाहू ण वावादिदे। ‡ (ठ)

भिक्षुः। [उत्थाय] अले ! जीवदि चालुदत्ते ? §

चाण्डालः। जीवदि वश्शशदं। ¶ (ड)

* आर्य-चारुदत्त ! किं नु इदम् ? † आर्य-चारुदत्त ! किं नु इदम् ?

‡ कथं ! वसन्तसेना ! ननु खलु अस्माभिः साधुर्न व्यापादितः।

§ अरे ! जीवति चारुदत्तः ?

¶ जीवति वर्षशतम्।

---

कार्ये तद्दर्शनव्याकुलायाः वसन्तसेनायाः सम्भ्रमात् केशविभ्रंशो जात इति सूचितम्। चि इत्यव्यक्तं शब्दं कुरति रौति इति व्युत्पत्त्या चिशब्दात् कुरतेः तौदादिकात् "इगुपध—" (३।१।१३५ पा०) इति सूत्रेण कर्त्तरि कः। "चिकुरः कुन्तलो बालः" इत्यमरः] उत्थितहस्ता—उत्थितौ—उन्नतौ, हस्तौ—करौ यस्याः सा, निरपराध-स्यास्य वधनिषेधार्थमुत्तोलितकरा सतीत्यर्थः, का पुनः,—किन्नामधेया खल्वित्यर्थः, एषा—परिदृश्यमाना रमणी इत्यर्थः, मा मा—न हि, न हि, [अत्र दैन्ये सम्भ्रमे वा द्विरुक्तिः न कथितपदत्वदोषाधायिका] इति—एतावन्मात्रं, व्याहरन्ती—भाषमाणा, त्वरितं—सत्वरं यथा तथेत्यर्थः, इतः,—अस्यां दिशि इत्यर्थः, एति ?—आगच्छति ?। आर्या वृत्तम्॥ ३८॥

(ट) अपसृत्य—दूरं गत्वेत्यर्थः, तत्स्थानादिति शेषः।

(ठ) ननु इति सम्भ्रमे आमन्त्रणे वाऽव्ययम्। खलु इति निश्चये। साधुः,—निर्दोषः अनपराधी चारुदत्त इति यावत्; यदि साधुममुं चारुदत्तमहं हन्यां, तदा मम महाननर्थः आपद्येत, भाग्येनैव मया हन्तुमुद्यतेन निरपराधस्यास्य वधः न संसाधित इति स्वस्थैर्य्यसम्पादनार्थं चाण्डालेनैतदभिहितमिति बोध्यम्।

(ड) "अरे ! जीवति चारुदत्तः ?" इति भिक्षुकृतप्रश्नस्य समुचितम् उत्तरं दातुं चाण्डालः केवलं "जीवति" इति प्रतिवचनम् अनुक्त्वा भङ्ग्यन्तरेण न केवलम् अद्यापि जीवति, अपि तु वर्षशतं—शतवत्सरान् व्याप्य जीविष्यति इति अभिहितवानिति वेदितव्यम्।

वस। [ सहर्षम् ] पच्चुज्जीविदम्हि। * ( ढ )

चाण्डालः। ता जाव एदं वुत्तं रस्सो जसवाडगदस्स ( ण ) णिवेदेम्ह। †

[ इति निष्क्रामतः ( त ) ]।

शकारः। [ वसन्तसेनां दृष्ट्वा सत्रासम् ] हीमादिके! केण गब्भदासी जीवाविदा? उक्कंताइं ( थ ) मे प्पाणाइं; भोदु, पलाइश्शं। ‡ [ इति पलायते ]।

चाण्डालः। [ उपसृत्य ( द ) ] अले! णं ( ध ) अम्हाणं ईदिशो

* प्रत्युज्जीविताऽस्मि। † तत् यावदेतद्वृत्तं राज्ञो यज्ञवाटगतस्य निवेदयावः।

‡ आश्चर्य्यम्! केन गर्भदासी जीविता? ( जीवनं प्रापिता ) उत्क्रान्ता मे प्राणाः; भवतु, पलायिष्ये।

( ढ ) प्रत्युज्जीविता - पुनर्जीविता, अहन्तु चारुदत्तः वधार्थं नीयते इति वार्त्ताश्रवणात् मृतैवासम्, इदानीं तं जीवन्तमाकर्ण्य पुनर्जीवनं लब्धवतीवेति तात्पर्य्यम्।

( ण ) तत्—तस्मात्, यतो वसन्तसेना जीवति अत इत्यर्थः। यावत् इति साकल्ये सर्व्वमेवेत्यर्थः। एतत् वृत्तम्—इमं व्यापारं, वसन्तसेना जीवतीति वार्त्तामित्यर्थः। यज्ञवाटगतस्य—यज्ञस्थानस्थितस्य, ( "वाटी मार्गे द्रुतिस्थाने स्यात् कुटीवास्तुनोः स्त्रियाम्" इति मेदिनी )। राज्ञः,—नृपतेः पालकस्येत्यर्थः, [ सम्बन्धमात्रविवक्षायां कर्म्मणि षष्ठी ]।

( त ) निष्क्रामतः,—निष्क्रमितुं प्रवृत्तौ भवतः इत्यर्थः।

( थ ) गर्भदासी—आजन्मनः परिचारिका इत्यर्थः। जीविता?—जीवनं प्रापिता? [ जीवतेर्णिचि निष्ठायां रूपमिदम् ]। उत्क्रान्ताः,—उत्—ऊर्द्ध्वं, क्रान्ताः,—गताः, स्वदेहात् अपसृता इत्यर्थः, देहान्तरं प्राप्ता इति शेषः; वसन्तसेनां दृष्ट्वा मम प्राणाः स्वदेहे न सन्तीवेति मन्ये, इदानीं नितरां भयव्याकुलः संशयितजीवितश्चाहमस्मीति भावः।

( द ) उपसृत्य—द्वितीयचाण्डालस्य समीपं गत्वा।

( ध ) ननु इति प्रत्युक्तौ; द्वितीयचाण्डालोक्तं "ता जाव" इत्यादि वाक्यं श्रुत्वा तस्य प्रत्युत्तरसूचकमेतदिति, अथवा अवधारणे, अस्माकमीदृशी एव राजाज्ञप्तिरित्यर्थः।

लाआणुत्तो, जेण ण्णा वावादिदा, तं मालेध त्ति; ता लट्ठिअ-णालअं ज्जेव अणेम्ह । *

[ इति निष्क्रान्तौ ] ।

चारु। [ सविस्मयम् ( न ) ]

केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।
अनावृष्टिहते शस्ये द्रोणवृष्टिरिवागता ? ॥ ३९ ॥

[ अवलोक्य च ]—

वसन्तसेना किमियं द्वितीया ? समागता सैव दिवः किमित्थम् ? ।
भ्रान्तं मनः पश्यति वा ममैनां वसन्तसेना न मृताऽथ सैव ॥४०॥

* अरे । ननु अस्माकमीदृशी राजाज्ञप्तिः, येन सा व्यापादिता, तं मारयत इति ; तत् राष्ट्रियश्यालमेवान्विष्याव: ।

( न ) सविस्मयं—साश्चर्यं यथा तथेत्यर्थः, आहेति शेषः, अत्र असम्भाव्य-जीवितां वसन्तसेनामुपस्थितां दृष्ट्वा चारुदत्तस्य विस्मयोऽजनीति बोद्धव्यम् ।

अकस्मात् मृत्युकवलितकल्पमात्मानम् असम्भावितोपायेन मुक्तप्रायं सम्भाव्य सहर्ष-विस्मयमाह, केयमिति ।—अनावृष्टिहते—अनावृष्ट्या—अवग्रहेण, वर्षणाभावेनेत्यर्थः, हते—नष्टे, प्रचण्डभानुकरेण विदग्धे इत्यर्थः, शुष्कप्राये इति यावत्, शस्ये—चेत्रस्थे धान्ययवगोधूमादौ, द्रोणवृष्टिरिव—द्रोणनाम्नः शस्यप्रपूरकात् मेघात् पतितवृष्टिरिवेत्यर्थः, ( पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः" इति प्रागुक्तज्योतिषतत्त्ववचनात् द्रोण-मेघस्य शस्यप्रपूरकत्वं बोध्यम् ) शस्त्रे—वधसाधने खड्गे इत्यर्थः, अभ्युद्यते—अभि—सर्व्वतोभावेन, लक्ष्यीकृत्य वा, उद्यते—मम कण्ठदेशं लक्ष्यीकृत्य उत्थापिते सतीत्यर्थः, अत एव मृत्युवक्त्रगते—मर्त्योः,—कालस्य, वक्त्रं—मुखं, तद्गते—तत्र प्रविष्टे, मृत्यु-कवलितप्राये इत्यर्थः, मयि—चारुदत्ते, मम हतभाग्यस्य जीवनरक्षार्थम् इत्याशयः, [ विषयाधिकरणे सप्तमी ] आगता—अकस्मादुपस्थिता, इयम्—एषा स्त्रीत्यर्थः, का ? —किन्नामधेया ? मृत्युकवलात् मां प्रत्यावर्त्तयितुं केयमुपस्थिता ? अत्र इदंपद-वाच्यया वसन्तसेनया सह द्रोणवृष्टेर्वैधर्म्यसाम्यप्रतिपादनादुपमाऽलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ ३९ ॥

सर्वैर्मृतत्वेन निश्चिततया असम्भाव्यागमनां मूर्त्तिमतीं वसन्तसेनां समागता-मालोक्य सैवेयम् ? उत तत्समानाकृतिरपरा वा काचित् ? इति वितर्कयति, वसन्त-सेनेति ।—इयं—दृश्यमाना, मत्पुरःस्था रमणीत्यर्थः, वसन्तसेना—स्वनामप्रसिद्धा

अथवा,—

> किं नु स्वर्गात् पुनः प्राप्ता मम जीवातुकाम्यया ?।
> तस्या रूपानुरूपेण किमुतान्येयमागता ?॥ ४१ ॥

मन्मयसीति यावत्, किम् ? अथवा द्वितीया ?—अपरा, वसन्तसेनाव्यतिरिक्ता कापि किम् ? इत्यर्थः ; किंवा सैव—मया पूर्व्वम् उपभुक्ता वसन्तसेना एव इत्यर्थः, इत्थम्—एवम्प्रकारेण, मरणानन्तरं तदर्थं व्यापाद्यमानस्य मम प्राणरक्षार्थं पुनर्देहं धृत्वेत्यर्थः, दिवः,—स्वर्गात्, समागता—समुपस्थिता किम् ? स्वसुकृतपरिपाकेण त्रिदिवमधिगताऽपि प्रेयसी मम निर्निमित्तवधकातरा मां घातकात् परित्रातुं पार्थिवीं तामिव मूर्त्तिं पुनः परिगृह्य इह समुपेता किम ? इति निष्कृष्टार्थः ; वा—अथवा, भ्रान्तं—भ्रमार्त्तं, मम—मे, मनः,—चित्तम, एनां—पुरोवर्त्तिनीं नारीं, वस्तुतः वसन्तसेनातः भिन्नामपि इति भावः, पश्यति—अवलोकयति, वसन्तसेनैवेयमिति कृत्वा, तद्भिन्नायामेवैतस्यां तद्बुद्धिमुत्पादयतीत्यर्थः, अतस्मिन् तद्बुद्धेरेव भ्रमरूपत्वादित्याशयः, मम प्रियतमा न। वसन्तसेना मृतैवेति सत्यं, मन्मनस्तु सततं तद्भावनाऽऽसक्ततया सर्व्वं जगत् तन्मयमेव पश्यति इति भावः ; अथ—अथवा, पक्षान्तरे इत्यर्थः, वसन्तसेना—स्वनामप्रसिद्धा गणिकेत्यर्थः, न मृता—न उपरता, सैव—चरमसाक्षात्कारकालेऽपि या मया सङ्गता सा एव इयमित्यर्थः, नेयं तदन्या काऽपीत्याशयः। अत्र प्रकृतापकृतयोः वसन्तसेना-तद्भिन्नयोः नार्य्योः द्वयोरेव तुल्यबलतया स्थितेः एकशेषं कर्त्तुमशक्यत्वात् आदौ संशयः, स च "न मृताऽथ सैव" इत्यनेन उपसंहारे निश्चयसत्त्वात् निश्चयान्त एवेति बोध्यम ; तदुक्तं विश्वनाथपादैः,—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः। शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥" इति। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिर्वृत्तम्॥ ४० ॥

उक्तमेवार्थं प्रकारान्तरेणाह, किं न्विति।—मम—मे, जीवातोः,—जीवनस्य, काम्या—इच्छा तया, जीवनरक्षणेच्छया इत्यर्थः, [ "जीवेरातुः" इति १ पा० ७९ उणादिसूत्रात् जीव्यते अनेनेत्यर्थे जीवेरातुः। "जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे" इति मेदिनी ] स्वर्गात्—दिवः, पुनः,—द्वितीयवारमित्यर्थः, प्राप्ता—आगता, किं नु ? ( किं नु इति वितर्के ) पूर्व्वं जीवद्दशायां बहुशः प्राप्ता, इदानीं मृत्वाऽपि पुनः किं मद्दुःखकातरा सुरलोकादिह समुपस्थिता ? इति तात्पर्य्यार्थः, उत—अथवा, इयम्—एषा, परिदृश्यमानेत्यर्थः, अन्या—अपरा काऽपीत्यर्थः तस्याः,—वसन्तसेनायाः, [ अत्र यच्छब्दाभावेऽपि प्रक्रान्तत्वात् तच्छब्देन वसन्तसेनाया एव बोधः,

वस। [सास्रम् (प) उत्थाय पादयोर्निपत्य] अज्ज-चालुदत्त! सा ज्जेव अहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा (फ)। *

[नेपथ्ये] अच्चरिअं!! अच्चरिअं!! जीवदि वसंतसेणा। †

[इति सर्वे पठन्ति]।

चारु। [आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्ष-गद्गदाक्षरम् (ब)] प्रिये! वसन्तसेना त्वम्? !!

वस। सा ज्जेवाहं मंदभाआ। ‡

---

* आर्य्य-चारुदत्त! सैवाहं पापा, यस्याः कारणादियं त्वया असदृशी अवस्था प्राप्ता।

† आश्चर्य्यम्!! आश्चर्य्यम्!! जीवति वसन्तसेना।

‡ सैवाहं मन्दभाग्या।

यत्तदोर्नित्यसम्बन्धत्वेऽपि प्रक्रान्तप्रसिद्धानुभूतार्थकत्वे तच्छब्दस्य यच्छब्दाकाङ्क्षाया विनिवृत्तेरिति बोध्यम्] रूपस्य—आकृतेः, अङ्गसंस्थानस्येत्यर्थः, अनुरूपेण—साम्येन, तत्सदृश्याकृतिविशिष्टा सती इत्यर्थः, [रूपानुरूपेणेति इत्थम्भूतलक्षणे प्रकृत्यादिभ्यः वा तृतीया। रूपस्य योग्यमित्यर्थे अव्ययीभावे "तृतीयासप्तम्योर्बहुलम्" (२।४।८४ पा०) इति सूत्रेण तृतीयायाः अमभावस्य वैकल्पिकत्वात् पक्षे तृतीयाविभक्तेः सत्त्वमिति, रूपानुरूपमित्यपि पदान्तरमत्र भवतीति ज्ञेयम्] आगता किम्?—उपस्थिता नु? अत्र द्वयोरेव पक्षयोः तुल्यबलतया स्थितेः एकतरस्याप्यनिर्णयात् अन्ते च संशयस्यैव पर्य्यवसानाच्च शुद्धः सन्देहो नाम अलङ्कारः। पथ्यावक्त्रं वृत्तम्॥ ४१॥

(प) सास्रम्—अश्रुसेकपूर्व्वकं यथा तथेत्यर्थः, ("अस्रः कोणे कचे पुंसि क्लीवमश्रुणि शोणिते" इति मेदिनी)।

(फ) पापा—पापीयसीत्यर्थः, [पापमस्या अस्तीत्यर्थे अर्श-आदित्वात् मत्वर्थीये अचि स्त्रियां टाप्]। असदृशी—अननुरूपा, अतीव घृणतया भवतः अयोग्या इत्यर्थः। प्राप्ता—अधिगता।

(ब) स्पर्शसुखं—पादपतितवसन्तसेनायाः अङ्गसम्पर्कजनितानन्दमित्यर्थः। अभिनीय—नाट्येन प्रदर्श्य। हर्षगद्गदाक्षरं—हर्षेण—वसन्तसेनास्पर्शजनितानन्देन, गद्गदम्—अव्यक्तस्वरप्रयोगेणोच्चारितम्, अक्षरं—वर्णसमूहः यस्मिन् तद्यथा तथेत्यर्थः, आहेति शेषः।

चारु। [निरूप्य (भ) सहर्षम्] कथं! वसन्तसेनैव!! [सानन्दम्]—

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता?॥ ४२॥

(भ) निरूप्य—वसन्तसेनैव इयं न वेति विशेषेणावलोक्य इत्यर्थः।

स्वप्राणेभ्योऽप्यधिकां वसन्तसेनां जीवन्तीं पुरतः समागतां दृष्ट्वा हर्षं प्रकाशय-न्नाह. कुत इति।—मयि—चारुदत्ते इत्यर्थः, मृत्युवशं—मृत्योः,—मरणस्य, वशम्—अधीनतां, कृतान्तकवलमित्यर्थः, प्राप्ते—गते सति, [प्राणदण्डस्य अवश्यम्भावित्वेन ज्ञानात् एवम् अतीतप्रयोगो बोध्यः] बाष्पाम्बुधाराभिः,—प्रियतमस्य मे प्राणदण्डा-देशश्रवणजनितैरश्रुप्रवाहैरित्यर्थः, पयोधरौ—कुचौ, स्नपयन्ती—अभिषिञ्चन्ती सती, [अनुपसर्गस्य स्नातेरादादिकस्य णिचि ह्रस्वस्य वैकल्पिकविधानात्, शत्रन्तात् तस्मात् ङीपि स्नापयन्तीति वैकल्पिकमन्यदपि रूपं भवितुमर्हतीति, अपि चाकर्मकस्नातेः णिचि प्रयोज्यकर्तृभूतयोः पयोधरयोः कर्मत्वं ज्ञेयम्] विद्येव—स्वयं मूर्त्तिमती मृतसञ्जीवनी विद्येवेत्यर्थः, [इत्युपमा] कुतः,—कस्मात् स्थानात्, समुपागता?—समुपस्थिता? पुरा यथा मृतसञ्जीवनी विद्या मृतासुरसैन्यसमक्षं समुपस्थिता स्वप्रभावेण अचिरा-देव मृतानसुरानुज्जीवयति स्म, तथा त्वमपि स्वयमिहागत्य मृत्युकवलितकल्पं मां द्राक् प्रत्युज्जीवयसीति निष्कर्षः। [दैत्यगुरुः शुक्राचार्य्यः विद्यायामस्यामतीव अभिज्ञः आसीत् इति श्रूयते, एतयैव चासौ देवासुरसङ्ग्रामनिहतानि असुरसैन्यान्यजीजिव-दिति पौराणिका आमनन्ति। यद्वा,—विद्या—इतराविविक्तात्मज्ञानं, "विद्ययाऽमृत-मश्नुते" (मनु० १२ अ० १०४ श्लोकः) इति स्मृतेः; सा च विद्या द्विविधा, परा अपरा चेति; यया अक्षरमधिगम्यते, सा परेत्युच्यते, ऋग्वेदादिलक्षणा च अपरा, सा च अध्ययनाध्यापनरूपा; एवम्भूताया विद्यायाः विद्वद्ब्राह्मणसन्निधानगमनोप-वर्णनमपि दृश्यते; तथा हि, द्वितीयाध्याये चतुर्द्दशाधिकशततमसङ्ख्याकश्लोके मनुः,—"विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मां मा दास्तथा स्यां वीर्य्यवत्तमा॥" इति। विद्या हि कदाचिदध्यापकं विद्वत्पुरुषमुपागत्य, "तवाहं निधिरस्मि" इति कथयन्ती निधिभूतायाः स्वस्याः रक्षणं तमेव विद्वांसं ब्राह्मणं याचितवती चेत्येवंविधार्थाभिप्रायिका कुल्लुकभट्टादिव्याख्या द्रष्टव्या; तथा छान्दोग्य-ब्राह्मणेऽपि,—"विद्या ह वै ब्राह्मणमाजगाम, तवाहमस्मि, त्वं मां पालय, अनर्हते मानिने नैव मा दाः, गोपाय मां, श्रेयसी तेऽहमस्मि॥" इति]। यद्वती विद्याऽधिष्ठात्री देवी यथा स्वतः कञ्चित् अध्यापकब्राह्मणमुपेतवती, तथा रोदयमाना इयं वसन्तसेना

प्रिये वसन्तसेने !—

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे।
अहो ! प्रभावः प्रियसङ्गमस्य मृतोऽपि को नाम पुनर्ध्रियेत ? ॥४३॥

मृत्युवशप्राप्तं ब्राह्मणं मामुपगतवतीति एतावन्मात्रं साम्यमवलम्ब्य वसन्तसेनया सार्द्धम् उपमेयभूताया: विद्याया: उपमानोपमेयभाव: प्रदर्शित:, अत एव अत्रापि पद्ये उभयरूपेण साम्यप्रदर्शनात् पूर्व्ववदेवोपमाऽलङ्कार:। अत "बाष्पं ऊष्मणि नाऽस्रे" इति मेदिनीवचनात् बाष्पपदेनैव नयनसलिलार्थबोधात् अश्रुपदं पुनरुक्तमेव इति पुनरुक्तत्वदोष: उन्नेय:। पथ्यावक्त्रं वृत्तम् ॥ ४२ ॥

वसन्तसेनाया: कृते विगतप्रायप्राणोऽपि पुन: तयैव संरक्षितप्राणोऽहमभवमिति विचिन्त्य सानन्दं प्रियजनसमागमस्य अलौकिकं प्रभावमाह, त्वदर्थमिति।—त्वदर्थं— त्वमेव अर्थ:,—निमित्तं यस्मिन् तद्यथा तथेत्यर्थ:, तव निमित्तमिति यावत्, [ क्रिया-विशेषणमेतत् ] विनिपात्यमानं—विनाश्यमानं, घातकैरिति शेष:, शकारवचनात् "अहं किल तव हत्याकारी" इति निश्चिन्वानै: राजपुरुषै: मयि त्वद्घातकत्वभ्रमेण मत्प्राणदण्डविधानादित्याशय:, एतत्—परिदृश्यमानं, मे—मम, देहं—शरीरं, ("कायो देह: क्लीबपुंसो:" इत्यमरशासनात् अत्र देहशब्दस्य क्लीबत्वं) त्वयैव—भवत्या एव, प्राक् प्राणदण्डादेशस्यापि निमित्तीभूतया त्वयैव, न तु अन्यया कयाऽपीत्यर्थ:, प्रतिमोचितं—रक्षितं, रक्षिभ्यो घातकेभ्यो वा विमुक्तबन्धनं कृतमित्यर्थ:, पूर्वं यदेव दुर्दैववशात् मम नाशकारणमासीत्, तदेवेदानीं सौभाग्योदयात् जीवनकारणम् अजनि इत्यहो ! एकस्मिन्नेव वस्तुनि विरुद्धकार्यजनकत्वमिति भाव:। ननु कथं एकस्यैव वस्तुन: परस्परविरुद्धोभयफलविधायकत्वमिति चेत् अलौकिकशक्तिमत: प्रिय-जनसमागमस्य प्रभावादित्यवेहीत्याह, अहो इति।—प्रियसङ्गमस्य—कान्तसमागमस्य, प्रणयिजनसङ्गतेरित्यर्थ:, अहो !—विस्मयकर इत्यर्थ:, अनिर्व्वचनीय इति यावत्, प्रभाव:—सामर्थ्यं, माहात्म्यमित्यर्थ:; ननु सौ प्रभाव: कीदृश: ? इत्याशङ्कायां तमेव वर्णयन्नाह, मृत इति।—क:,—को जन:, नाम—सम्भावनायां, मृतोऽपि—परेतोऽपि, गतप्राण: सन्नपीत्यर्थ:, पुनर्ध्रियेत ?—भूयोऽवतिष्ठेत ? पुनर्जीवेत् ? इत्यर्थ:, [ तौदादिकादात्मनेपदिन: धृधातो: कर्त्तरि लिङि रूपमेतत् ] न कोऽपीत्याशय:; मन्ये, प्रियसङ्गमात् ऋते मृतकल्पं सञ्जीवयितुमिह नान्यपरं किमपि वस्त्वन्तरमिति, यत: गतप्रायजीवनोऽपि अहं केवलं प्रियजनसमागमप्रभावेणैव उज्जीवामि, तथा चास्य शक्तिरनिर्वचनीया एवेति भाव:; "विप्रलम्भोऽपि लाभाय सति प्रियसमागमे"

अपि च, प्रिये! पश्य,—

> रक्तं तदेव वरवस्त्रमियञ्च माला
> कान्तागमेन हि वरस्य यथा विभाति।
> एते च वध्यपटह-ध्वनयस्तथैव
> जाता विवाह-पटह-ध्वनिभिः समानाः॥ ४४॥

इति तात्पर्य्यम्। अत्र एकस्मिन् वसन्तसेनारूपवस्तुनि देहविनिपातकत्वधर्म्मयोगे पुनः तत्रैव देहप्रतिमोचकत्वकथनं न सम्भवति, नाशकत्व-रक्षकत्वयोः परस्परं विरोधात्, एवञ्चापाततः प्रतीयमाने अस्मिन् विरोधे सत्यपि वसन्तसेनायाः अदर्शन-कालकृतन्तु विनिपातनं, समागमकालकृतन्तु प्रतिमोचनमिति भिन्नकालिकत्वात् बन्धन-मोचनयोरेकस्मिन्नाधारे कालभेदेन सत्तायामविरोधात् पर्य्यवसाने प्राक्तविरोध-परिहारेण विरोधाभासो नाम अलङ्कारः; तथा प्रियसङ्गमप्रभावस्य विस्मयजनकत्वं प्रति मृतस्यापि पुनरुज्जीवकत्वरूपकारणस्य समर्थकतया अर्थान्तरन्यासः, इत्यनयोः पर-स्परनिरपेक्षतया संस्थितेः संसृष्टिः। इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम्॥ ४३॥

ईश्वरेच्छया विषस्यापि कदाचित् अमृतायमानत्ववत् निरतिशयमन्तापकराणामेतेषां वध्यलक्षणवसनमाल्यादीनां तावकीनसमागमात् इदानीं हृदयमन्तर्पकतया विपरीत-भावावगमात् परमशोभाऽऽधायकत्वमित्याह, रक्तमिति।—तदेव—इदमेव, [वध्य-दशायाम् अतिक्लेशप्रदत्वेन अनुभूततया इदानीं प्रत्यक्षविषयस्यापि तच्छब्देन निर्देशः, पूर्व्वानुभूतत्वबोधनाय यच्छब्दनिरपेक्ष-तच्छब्दप्रयोगस्य आलङ्कारिकसम्मतत्वात्; तथा च "इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥" इति नियमात् तदिदमोः परोक्षापरोक्षवाचित्वेन विभिन्नार्थकत्वेऽपि अत्र तच्छब्दः प्रत्यक्षीक्रियमाणेऽपि वस्त्रे पूर्व्वानुभूतत्वबोधनाय इदमर्थे प्रयुक्त इति बोध्यम्]; रक्तं—रक्तवर्णं, वरवस्त्रम्—उत्कृष्टपट्टवसनं, तथा इयं—दृश्यमाना, इदानीमपि मया कण्ठे परिहिता इत्यर्थः, माला—स्रक् च, वध्यलक्षणकरवीरमाला इत्यर्थः, कान्तागमेन—कान्तायाः,—प्रियायाः, प्रीतिनिलयायाः इत्यर्थः, आगमः,—उपस्थितिः, प्राप्तिरित्यर्थः तेन, पक्षे—कान्तायाः,—वध्वाः, आगमः,—लाभः तेन, यद्वा,—कान्तायाः आगमो यस्मादिति व्युत्पत्त्या विवाहेनेत्यर्थः, वरस्य यथा—वरस्येव, हि—निश्चितं, विभाति—शोभते; इदानीं प्रेयस्यास्तव लाभेन मम वध्यदशायां परिधीयमानमेतत् वसनं, तथा करवीरकुसुममाल्यञ्च नवोढावल्लभस्य वरस्य विवाहपट्ट-वसन-माल्यवत् अतितरां रमणीयतामाधत्ते इति भावः; च—तथा, एते—श्रूयमाणाः

वस। अदिदक्खिणदाए किं णेदं ववसिदं (म) अज्जेण ? *

* अतिदक्षिणतया किं नु इदं व्यवसितमार्य्येण ?

इत्यर्थः, वध्यपटहस्य—वध्यवधघोषणार्थं ताड्यमानस्य वाद्यविशेषस्येत्यर्थः, ध्वनयः,—शब्दाः, तथैव—तादृगेव, रक्तवस्त्रादिवस्तुजातं यथा वैवाहिकमाङ्गल्यद्रव्यानुकारि भवति तद्वदेवेत्यर्थः, विवाहपटहध्वनिभिः,—परिणयकाले वाद्यमानपटहशब्दैरित्यर्थः, समानाः,—तुल्याः, जाताः,—सम्पन्नाः ; रक्तवस्त्रादिकं परिदधानस्य वरस्य वरस्त्री-लाभे यथा आनन्दातिशयो जायते, तथा एतादृशीमापदमापन्नस्यापि मम हृदय-वल्लभायाः तव अकस्मादधिगमेन ततोऽप्यधिकालौकिकहर्षो जातः इत्यहो ! प्रिय-सङ्गमस्य प्रभावः, येन सम्यक् प्रतिकूलानामपि एतेषां परमानन्दसन्दोहजनकत्वेन क्षणेनैव अनुकूलवरचिह्नसमानतया परिणतिर्जातेति हृदयम् ; [ वैवाहिकवेशरूपतया परिणतेन रक्तवस्त्रादिना विभूषितस्य मे त्वया सार्द्धमद्य विवाह एव सञ्जातः, इतः परं कदाऽपि मां मा त्याक्षीरिति वक्तुरभिप्रायः ; आर्य्यकेण राज्ञा सन्तुष्टेन अचिरादेव वसन्तसेना वधूशब्दप्रयोगेण संवर्द्धिता भविष्यतीति भाव्यर्थदर्शनादेवमत्रावगम्यते इति वेदितव्यम् ]। अत्र प्रतिकूलानामपि वस्तूनां रक्तवसन-करवीरमाला-वध्यपटहध्वनीनां वैवाहिकवस्तुरूपत्वेन परिणमय्य नायकस्य आनुकूल्यकारत्वेनोपवर्णनात् अनुकूलो-ऽलङ्कारः ; तल्लक्षणं यथा दर्पणे,—"अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्" इति, तथा वध्यचिह्नभूतानां तत्तद्वस्तुजातानां तादृशैः वैवाहिकमाङ्गल्यजनकवस्तुभिः सहावैधर्म्यसाम्यप्रतिपादनादुपमाऽलङ्कारश्च इत्यनयोरङ्गाङ्गिभावतया संस्थितेः सङ्करः। वसन्ततिलकं वृत्तम् ॥ ४४ ॥

(म) अतिदक्षिणतया—मयि गणिकायां प्रदर्शितया अत्युदारतया इत्यर्थः, ("दक्षिणे सरलोदारौ" इत्यमरः) ; अत्रायमाशयोऽनुमीयते, तथा हि—वसन्त-सेनाया मनसि तदानीम् ईदृशी आशङ्का समुदपद्यत, यत् चारुदत्तः तत्संसृष्टां सत्य-घटनाम् अधिकरणे सर्व्वसमक्षं प्रकाशयिष्यत् चेत् तदा नूनम् अधिकरणिकस्तं मोदयिष्यदिति, किन्तु तथा कृते "वसन्तसेनाविरहितस्य मे जीवनं चिरसन्तापकर-तया निष्प्रयोजनम्" इति चारुदत्तस्य आशयो न सिध्येदिति सत्यप्रकाशेन स्वजीवन-रक्षायामुदासीनश्चारुदत्तः वसन्तसेनायां यं किल अनुपममनुरागं प्रकाशितवान्, आत्मनः हति कृतेन तेनातिलज्जिता वसन्तसेना "प्राणव्ययेनापि परमाधमायां मयि अतिदृशौदार्य्यप्रकाशः कदाऽपि न युज्यते" इति आन्तरीणक्षतज्ञतामकाशेनाभि-व्यनक्तीति। नु इति प्रश्ने। व्यवसितम्—अनुष्ठितमित्यर्थः।

चारु। प्रिये! त्वं किल मया हतेति, (य)—

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना।
नरके पतता तेन मनागस्मि निपातितः॥ ४५॥

वस। [कर्णौ पिधाय] संतं पावं; तेण म्हि राअसालेण वावादिदा।*

चारु। [भिक्षुं दृष्ट्वा] अयमपि कः?

* शान्तं पापं, तेनास्मि राजश्यालेन व्यापादिता।

(य) किलेति अलीके (चारुदत्तेन वसन्तसेनाहननस्य अलीकतया तस्य तत्त्वप्रदर्शनार्थमेव अत्र किलशब्दः प्रयुक्तः)। मया—चारुदत्तेनेत्यर्थः। हता—मारिता। इति—इत्थम्, अभियोगमारोप्य इति शेषः, "निपातितः" इति वक्ष्यमाणश्लोकस्थपदेनान्वयः।

स्वावस्थाविपर्य्ययस्य कारणं प्रियतमायै पुनः किञ्चिदाह, पूर्वेति।—पूर्वानुबद्धवैरेण—पूर्व्वजातशत्रुभावेण, (चारुदत्तं प्रति सम्बद्धानुरागतया यदा वसन्तसेना सानुनयं याचमानमपि शकारमुपेक्षितवती, ततः प्रभृति असौ दुष्टशकारः तावुभौ प्रत्येव अत्यन्तं क्रुद्धः प्रतिहिंसासाधनपरवशतया समुपजातवैरश्चाभवदिति बोध्यम्) प्रभविष्णुना—राजश्यालतया निरतिशयप्रभावशालिना, निग्रहानुग्रहसमर्थेनेत्यर्थः, नरके—निरये, पतता—आत्मानं निक्षिपता इत्यर्थः, अकारणपरद्रोहाचरणादिति भावः, [पतता इत्यत्र भविष्यत्सामीप्ये वर्त्तमानप्रयोगो बोध्यः, तेन नरके पतिष्यता इत्यर्थो लभ्यते] सम्प्रति वसन्तसेनायाः साक्षाद्दर्शनात् शकारकृताभियोगस्य मिथ्यात्वनिश्चयेन, तथा शकारनिगृहीतया वसन्तसेनया अचिरादेव स्वनिग्रहप्रकारं स्वयमेव अधिकरणे प्रकाश्य करिष्यमाणेनाभियोगेन च अचिरादेव तस्यैव प्राणदण्डो भविष्यति, ततश्च महापापिनस्तस्य नरकपतनं शीघ्रमेव अवश्यम्भावीति भावः; अथवा, यदि राजश्यालकतया तस्य इह कोऽपि दण्डो न भवति, तथाऽपि परलोके एतस्य नरकदण्डः अवश्यमेव भविष्यतीत्यावेदयितुं "नरके पतता" इत्युक्तमिति वेदितव्यम्; तेन—दुर्वृत्ततया अतिप्रसिद्धेन, शत्रुणा—रिपुणा, शकारेणेत्यर्थः, मनाक्—प्रायशः, जीवितया स्वयमागतया त्वया मृत्युकवलात् अधुनैव मम रक्षितत्वात् न सम्पूर्णरूपेणेति भावः, निपातितः,—निक्षिप्तः, विनाशित इत्यर्थः, अस्मि—भवामि, मया त्वं हतेति तेन दुष्टेन कथनादेव अहं निहतप्राय एवाभवमित्यर्थः। पथ्यावक्त्रं वृत्तम्॥ ४५॥

वस। तेण अणज्जेण वावादिदा, एदिणा अज्जेण (र) जीवाविदम्हि। *

चारु। कस्त्वम् अकारणबन्धुः? (ल)

भिक्षुः। ण पच्चभिजाणादि मं अज्जो? अहं शे अज्जश्श चलण-शंवाह-चिंतए शंवाहके णाम; जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलकेत्ति अलंकालपण-णिक्कीदेम्हि, तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्तेम्हि। एशा वि अज्जा पवहण-विपज्जाशेण पुप्फकलंडक-जिण्णुज्जाणं गदा, तेण अ अणज्जेण "ण मं बहुमण्णेशि" त्ति बाहुपाशबलक्कालेण मालिदा, मए दिट्ठा। † (व)

* तेनानार्य्येण व्यापादिता, एतेन आर्य्येण जीविता (जीवं प्रापिता) अस्मि।

† न प्रत्यभिजानाति मामार्य्यः? अहं स आर्य्यस्य चरणसंवाहचिन्तकः संवाहको नाम; द्यूतकरैर्गृहीतः एतया उपासिकया आर्य्यस्यात्मीय इति अलङ्कार-पण-निष्क्रीतोऽस्मि, तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि। एषा अपि आर्य्या प्रवहणविपर्य्यासेन पुष्पकरण्डक-जीर्णोद्यानं गता, तेन च अनार्य्येण "न मां बहु मन्यसे" इति बाहुपाशबलात्कारेण मारिता, मया दृष्टा।

(र) अनार्य्येण—असाधुना, दुर्वृत्तेन इत्यर्थः। तेन—शकारेणेत्यर्थः। एतेन—समीपस्थेन परिदृश्यमानेन अनेनेत्यर्थः। आर्य्येण—साधुवृत्तेन, भिक्षुणा इति यावत्।

(ल) अकारणबन्धुः,—अहेतुकमित्रं, मयैतस्य कदाऽपि कस्मिन्नपि उपकारे अकृतेऽपि एतेन प्राणसमाया वसन्तसेनाया जीवनरक्षणादिति भावः।

(व) प्रत्यभिजानाति—स्मृत्या अवबुध्यते, परिचिनोतीत्यर्थः। आर्य्यः,—मान्य-चारुदत्त इत्यर्थः। चरणसंवाहचिन्तकः,—चरणयोः—पादयोः, संवाहं—संसेवन-कार्य्यं, परिचर्य्याकर्म्म इत्यर्थः, चिन्तयति—कर्त्तव्यतया भावयति यः तथाभूतः, कथं चरणसंवाहनेन प्रभोः सन्तोषं विधास्यामीति चिन्तापर इत्यर्थः, उपासिकया—उपासनशीलया वसन्तसेनया इत्यर्थः। आर्य्यस्य—पूज्यस्य, भवत इति शेषः। आत्मीयः,—आत्मसम्बन्धी, दासजन इत्यर्थः। इति—इति हेतोः। अलङ्कारपण-निष्क्रीतः,—अलङ्कारः,—भूषणम्, एव पणः,—मूल्यं तेन, तद्दानेनेत्यर्थः, निष्क्रीतः,

[ नेपथ्ये कलकलः ]।—

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः।

—विमोचित इत्यर्थः, द्यूतकरहस्तादिति शेषः। अस्मि—भवामि। [ "अलंकालपण" इत्यत्र "अलंकालएण" इति पाठान्तरे—"अलङ्कारेण" इति संस्कृतम् ]। तेन—सभिकादिकृतात्याचारजन्यतया अतिप्रसिद्धेनेत्यर्थः। द्यूतनिर्वेदेन—द्यूतात्—द्यूतक्रीडाऽभ्यासजनितात्मनिग्रहादित्यर्थः, जातो यः निर्वेदः—वैराग्यं तेन। शाक्यश्रमणकः,—बौद्धसंन्यासी। एषा—इयं, पुरतः परिदृश्यमाना इत्यर्थः। आर्य्या—माननीया, वसन्तसेना इत्यर्थः। प्रवहणविपर्य्यासेन—शकटव्यत्ययेन। तेन—सर्व्वविधानिष्टसाधकतयाऽतिप्रसिद्धेन शकारेणेत्यर्थः। अनार्य्येण—असाधुना, पापीयसेत्यर्थः। बहु मन्यसे—आद्रियसे, स्वेच्छया कामयसे इत्यर्थः। इति—एवं कथयतेत्यर्थः, मारिता—मृतकल्पा कृता, ( सजीवतया वसन्तसेनायाः प्रत्यक्षदर्शिनः संवाहकस्य वाक्ये "मारिता" इत्यस्य "हता" इत्यर्थः कथमपि न युज्यते इति लक्षणया एवमेव व्याख्येयम् )। मया—संवाहकेन। दृष्टा—साक्षात्कृता, मृतकल्पा पर्णराशिभ्यन्तरशायिता वसन्तसेनेति शेषः; वल्कलशोषणार्थं तत्र गतेन भिक्षुणा तदवस्थायास्तस्याः तत्र दर्शनात् इति बोध्यम्; मारणसमये भिक्षोस्तत्रानुपस्थितेस्तत्कर्तृकमारणदर्शनासम्भवात् "मए दिट्ठा" इति प्राकृतस्य हत्याक्रियादर्शनार्थकत्वमाशङ्कमानेन केनचित् असङ्गतबुद्ध्या अयमंशः उपेक्षितः।

प्रियसुहृदः आर्य्यकस्य राज्यप्राप्तिजनितमानन्दं सूचयितुं नेपथ्यास्थः शर्व्विलकः स्वाभीष्टदेवस्तुतिमुखेन अचिराधिरूढराजासनस्य तस्य विजयमाशंसते, जयतीति।—दक्षयज्ञस्य—दक्षस्य—तदाख्यप्रजापतेः, यः यज्ञः,—यागः, तेनानुष्ठीयमानः क्रतुरित्यर्थः तस्य, हन्ता—नाशकः, वृषभकेतुः,—वृषध्वजः, शिव इत्यर्थः, जयति—सर्व्वोत्कर्षेण वर्त्तताम्; यज्ञवाटगतस्य पालकस्य हननात् परमतीव हृष्टः शर्व्विलकः तदनुरूपतया आदौ यज्ञदीक्षितघातिनः भगवतः शिवस्य स्तुतिं कृतवानिति वेदितव्यं, ( दक्षप्रजापतिस्तु ब्रह्मणः दशसु पुत्रेषु एकतम आसीत्, तस्य अनेकासु कन्यासु चन्द्रः सप्तविंशतिं कन्याः, कश्यपः त्रयोदश, भगवान् शङ्करस्तु एकां दाक्षायणीमुपयेमे, एकदा स्वसौ प्रजापतिः महाक्रतुं विरचय्य सर्व्वान् देवान् ऋषींश्चाहूतवान्, परन्तु तदीयां दुहितरं सतीं, जामातरं शङ्करञ्च नाजुहाव; सती तु पित्रा अनाहूताऽपि तदीयं यज्ञस्थलमगादिति तेन अतीवावमानिता तत्रैव देहं तत्याज; भगवान् हरस्तु

तदनु जयति कर्त्ता शुभ्रकैलासकेतुं
विनिहतवरवैरी चार्य्यको गां विशालाम् ॥ ४६ ॥

यदेतं वृत्तान्तमशृणोत्, तदैवातिक्रुद्धः तत्र गत्वा स्वगणपतिं वीरभद्रं सस्मार, ततश्च पुरतः समागतं वीरभद्रं दृष्ट्वा तं यज्ञं विनष्टुमादिदेश; तेनादिष्टश्च वीरभद्रः गणगणोपेतः तत्र प्रवृत्तः। तांश्च तथा भीषणानवलोक्य यज्ञः स्वयमतिभीतः मृगरूपं धृत्वा पलायमानः तेष्वेकेन शिरोविरहितश्चक्रे इति पौराणिकी वार्त्ता) तदनु—तत्पश्चात्, भेत्ता—सेनानीत्वात् शत्रुव्यूहभेदकारी, क्रौञ्चशत्रुः,—क्रौञ्चस्य—दैत्यविशेषस्य, तदाख्यपर्व्वतस्य वा, शत्रुः,—शातयिता, निसूदनः इत्यर्थः, [ "क्रौञ्चो द्वीपविशेषे स्यात् पक्षिपर्व्वतभेदयोः" इति मेदिनी। कार्त्तिकेयस्य क्रौञ्चाख्यदैत्यस्य हन्तृत्वमुक्तं मगेन्द्रसंहितायाम्; यथा,—"क्रौञ्चे ( द्वीपे ) क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे। स्कन्देन युद्धा सुचिरं चित्रमायी सुमायिना ॥ स शैलस्तस्य दैत्यस्य ख्यातश्चिह्नेण कर्म्मणा। केतुतामगमत् तस्य नाम्ना क्रौञ्चः स उच्यते ॥" इति ]; यद्वा —भेत्ता—रन्ध्रकरणार्थं शरजालेन श्वेतगिरेः सन्निकृष्टस्य क्रौञ्चाख्यगिरेः विदारक इत्यर्थः; [ जलधरसमये येन रन्ध्रेण राजहंसा मानसे सरसि यान्ति, कार्त्तिकेयेन हिमाचलस्थस्य क्रौञ्चाचलस्य तादृशम् एकं रन्ध्रम् अकारि, तेनैवास्य "भेत्ता" "क्रौञ्चदारणः" इति संज्ञाद्वयं जातमिति पौराणिकाः आमनन्ति। कार्त्तिकेयेन क्रौञ्चाख्यपर्व्वतविशेषस्य भेदकथा भारते वनपर्व्वणि २२४ अध्याये उक्ता; तथा हि,—"धनुर्विकृष्य व्यसृजत् बाणान् श्वेते महागिरौ। बिभेद स ( कार्त्तिकेयः ) शरैः शैलं क्रौञ्चं हिमवतः सुतम् ॥" इत्यादि। आगमेऽपि एतद्विवरणं दृश्यते यथा, "मानसस्थायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्ते" इति। अन्यत्र तु अन्यथाऽप्युपवर्णितं दृश्यते; तथा च मेघदूते जामदग्न्यस्य क्रौञ्चभेदकथामाश्रित्य कालिदासेन—"प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान् हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्" इति वर्णितं, तत्र रन्ध्रं परशुरामेण कृतमिति तद्व्याख्याने विवृतं मल्लिनाथपादैः,—"पुरा किल भगवतो देवात् धूर्जटेः धनुरुपनिषदमधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चं शिखरिणमतिनिशितविशिखमुखेन हेलया मत्पिण्डभेदं भित्त्वा ततः क्रौञ्चभेदादेव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःचौरनिधौ निखिलमपि जगज्जालमाप्लावितम्" इति, भृगुनन्दन-कार्त्तिकेयाभ्यामन्योऽन्यं विवदमानाभ्यामेवं क्रौञ्चविदारणमकारीति क्रौञ्चभेदनं क्वचित् कार्त्तिकेयेन, क्वचिच्च परशुरामेण कृतमित्युपवर्णितमिति न विरोध इति बोध्यम् ] षण्मुखः,—कार्त्तिकेयः, जयति;

[ प्रविश्य सहसा शर्व्विलकः ]।

शर्व्विलकः।—

हत्वा तं कुनृपमहं हि पालकं भोः!
तद्राज्ये द्रुतमभिषिच्य चार्य्यकं तम्।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतञ्च चारुदत्तम्॥ ४७॥

शर्व्विलकस्य सेनानायकत्वेन स्वाभीष्टतया देवसेनान्यः कार्त्तिकेयस्य स्तुतिः तेन कृतेति वेदितव्यम्; तदनु—तदनन्तरमित्यर्थः, विनिहतः—विनाशितः, वरः,—श्रेष्ठः, वैरी—शत्रुः, पालकः इत्याशयः येन सः, विनिपातितप्रधानारिपुरित्यर्थः, आर्य्यकः,—तदाख्यः प्राक् सिद्धादेशप्राप्तराज्यः गोपालदारक इत्यर्थः, शुभः,—धवलः, यः कैलासः,—तदाख्यपर्व्वतः, स एव केतुः,—विजयसूचकश्वेतपताका सीमाचिह्नं वा यस्याः तां, कैलासपर्व्वतपर्य्यन्तामित्यर्थः, ("केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी) (नृपाणामियं हि रीतिरस्ति, यत्, यावती भूः तैः अधिक्रियते, तत्सीमानिर्द्देशार्थं सर्वेभ्यः तावत्पर्य्यन्तस्य आत्मविजितत्वज्ञापनार्थञ्च सीमान्तप्रदेशे स्वसङ्केतशालिनी विजयपताका निखन्यते इति) विशालां—विस्तीर्णां, कृत्स्नां—सम्पूर्णां, गां—पृथ्वीं, जयति स्वायत्तीकरोत् इत्यर्थः; यद्वा,—जयति—परितः स्वप्रतापं प्रकीर्य्य पृथिव्यां सर्वोत्कर्षेण व र्त्तते इत्यर्थः। मालिनी वृत्तम्॥ ४६॥

नेपथ्योक्तं पालकराज्ये आर्य्यकस्याधिकारमिदानीं सर्व्वसमक्षमुद्दिश्य स्वस्यागमनप्रयोजनमाह, हत्वेति।—भोः!—इति नागरिकानुद्दिश्य सम्बोधनम्; अहम्—एषोऽहं शर्व्विलक इत्यर्थः, तं—प्रजापीड़कत्वेन अतिप्रसिद्धं कुनृपं—कुत्सितराजानम्, अदण्ड्यदण्डानुष्ठानादिना परिहीनराजधर्म्माणमित्यर्थः, पालकं—तदाख्यमुज्जयिनीपतिमित्यर्थः, हत्वा—विनाश्य, तद्राज्ये—तस्य—पालकस्य, राज्ये—राजकर्म्मणि, प्रागधिकृते राष्ट्रे इत्यर्थः, तं—पूर्वं सिद्धादेशेन भवाविनराज्यतया अतिप्रसिद्धम्, आर्य्यकं—तदाख्यं गोपालदारकमित्यर्थः, द्रुतम्—अविलम्बितं यथा स्यात् तथेत्यर्थः, अधुनैवेति यावत्, अभिषिच्य—अभिषिक्तं कृत्वा, राज्याधिकारप्राप्त्यर्थं पूतत्वसम्पत्तये च तीर्थोदकैः स्नपयित्वा इत्यर्थः, तस्य—आर्य्यकस्य, शेषभूतां—चरमाम्, [ एतेन अस्या एव चरमाज्ञात्वाभिधानात् अनेन नृपतिकार्य्यमन्यत् सर्व्वमनुष्ठितमिति व्यज्यते! अत्र "प्रसादान्निजनिर्म्माल्यदाने शेषेति कीर्त्तिता" इति विश्ववचनं प्रमाणत्वेन उद्धृत्य केचिदेवं व्याचक्षते, तथा हि,—शेषभूतां—प्रसाददत्तनिर्माल्यदामरूपामित्यर्थः, इति;

हत्वा रिपुं तं बलमन्त्रिहीनं,
पौरान् समाश्वास्य पुनः प्रकर्षात् ।
प्राप्तं समग्रं वसुधाऽधिराज्यं
राज्यं बलारेरिव शत्रुराज्यम् ॥ ४८ ॥

तत्र मन्त्रच्छले, उज्ज्वलिखितकोषे, तथा, "—ग्रेषः सङ्कर्षणे बले। अनन्ते ना प्रसादेन स्वनिर्माल्यार्पणे स्त्रियाम्" इति मेदिनीकोषे च "ग्रेषा" इति आकारान्तशब्दस्यैव प्रसाददत्तनिर्माल्यदानार्थकत्वदर्शनात्, प्रकृते तु अकारान्तशब्दात् तादृशार्थलाभस्य कथमपि असम्भवादिति सुधीभिर्विभाव्यम् ] आज्ञाम् आदेशं, चारुदत्तस्य बन्धनमोचनविज्ञापिकामिति भावः शिरसि—मूर्ध्नि, विधाय—कृत्वा, बहुमानास्पदतया तदादेशं सादरं गृहीत्वेति यावत्, व्यसनगतं—विपन्नं, चारुदत्तं मोक्ष्ये—विपदः मोचयिष्यामि, रक्षिष्यामीत्यर्थः। मतव्याख्याने मुचनेः त्यागार्थकत्वे एव सकर्मकत्वस्य, बन्धनरहितीभावार्थकत्वे तु अकर्मकत्वस्य व्यवस्थापितत्वात् अत्र च मुचधातोर्बन्धनरहितीभावार्थकतया णिचि एवास्य "मोचयिष्यामि" "मोचयिष्ये" वा इत्येवंरूपस्य प्रयोगस्य समीचीनतया "मोक्ष्ये" इति प्रयोगस्य व्याकरणलक्षणहीनत्वादस्य च्युतसंस्कारतादोषदुष्टत्वमवगन्तव्यम्। प्रहर्षिणीवृत्तम् ॥ ४७ ॥

मन्त्रि-बलादिसहायशून्यस्य राज्ञः पालकस्य विजयकार्यं, राष्ट्रविप्लवभीतानां पौराणाञ्च समाश्वासनमुल्लिखन् पालकराज्ये आर्यकाधिकारं पुनर्घोषयति, हत्वेति।—बलानि च—सैन्यानि च, मन्त्रिणश्च—अमात्याश्च, तैः हीन—परित्यक्त, विरहितं वा, अस्माक पराक्रमं दृष्ट्वा सर्व्वे एव बलामात्यादयः भीतिविह्वलाः तं परित्यज्य पलायिताः, न कोऽपि तद्रक्षार्थम् अग्रेसरा जाता इति भावः; भेदोपायमवलम्ब्य अस्माभिः राज्ञः पालकस्य बलवतां संसर्गकानां सैन्यानां, तथा सुयोग्यानां मन्त्रिणाञ्च परस्परं वियोगे जनिते असौ सुजेयः आसीत् इति तात्पर्यम्, [ एतेन स्वपक्षीयाणां पराक्रमातिशय्य, तथा पालके सर्वेषामेव प्रकृतिवर्गाणामननुरक्तत्वञ्च सूचितम्; "बलमन्त्रिहीनम्" इत्यत्र "बलनिवहीनम्" इति पाठान्तरम् ] तं—प्रजापीडकत्वेन प्रसिद्धं, रिपुं—शत्रुं, पालकमित्यर्थः, हत्वा—विनाश्य, मयेति भावः, प्रकर्षात्—निजप्रभावोत्कर्षमाश्रित्य, [ ल्यब्लोपे पञ्चमी ] पुनः पौरान्—पुरवासिनः, राजकृतोपद्रवेण व्याकुलान् इति भावः, समाश्वास्य—आश्वासदानेन सान्त्वयित्वेत्यर्थः, कुतोऽपि मा भैष्ट इत्यादिवचनेन राजानं प्रति, तेषां भयाभावं समुत्पाद्य इति यावत्, अत एव वसुधाऽधिराज्यं—वसुधायाः,—समग्रायाः चितेः अधिराज्यं - साम्राज्यम्, आधिपत्यमिति यावत्,

[ श्यती निरूप्य ] भवतु, अत्र तेन भवितव्यं, यत्र अयं जनपदसमवायः। अपि नाम अयम् आरम्भः क्षितिपतेः आर्य्यकस्य आर्य्यचारुदत्तस्य जीवितेन सफलः स्यात्? (श) [ त्वरिततरमुपसृत्य ] (ष) अपयात जाल्माः! (स) [ दृष्ट्वा सहर्षम् ] अपि ध्रियते चारुदत्तः सह वसन्तसेनया। सम्पूर्णाः खलु अस्मत्स्वामिनो मनोरथाः, (ह)—

[ अधिको राजा इति प्रादितत्पुरुषे अधिराजः, ततः तस्य कर्म्म इत्यर्थे "राजन्यगुराद्यत्" ( ४।१।१३७ पा० ) इति यत् ] यस्मिन् तत् तथाभूतं, समग्रपृथिवीतलाधिपत्यनिदानभूतमित्यर्थः, बलारेः,—बलनामकदैत्यरिपोः, इन्द्रस्येत्यर्थः, राज्यमिव—राजपदमिव, इन्द्रत्वमिवेत्यर्थः, ऐन्द्रपदवदतिसुखास्पदमिति भावः, समग्रं—सम्पूर्णं, शत्रोः,—पालकस्य, राज्यं—तदधिकृतराष्ट्रमित्यर्थः, प्राप्तं—लब्धं, विजितमिति यावत्, आर्य्यकेणेति शेषः। अत्रोपमेयभूतस्य शत्रुराज्यस्य बलारिराज्येन साङ्गमवैधर्म्यसाम्यप्रतिपादनात् उपमाऽलङ्कारः। इन्द्रवज्रा वृत्तम्॥ ४८॥

(श) भवतु—अस्तु, आर्य्यकविजयादिसंसृष्टः भूतवृत्तान्तः इदानीमनालोचित एवेति शेषः, परमोपकारकस्य आर्य्यचारुदत्तस्य घातुकहस्तात् रक्षणात् पूर्वं विगतविषयालोचनया कालक्षेपो न कर्त्तव्य इत्याशयः। अत्र—अस्मिन्, पुरोवर्त्तिनि स्थाने इत्यर्थः। तेन—आर्य्यचारुदत्तेन इत्यर्थः। भवितव्यं—वर्त्तितव्यं, स्थातव्यमित्यर्थः। यत्र—यस्मिन् स्थाने। जनपदसमवायः,—जनपदानां—जनानां, ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी) समवायः,—सङ्घातः, वर्त्तते इति शेषः। अपि—प्रश्ने। नाम—सम्भावनायाम्। आरम्भः,—पालकहननोद्योगः, आर्य्यकस्य नूतनराजपदे प्रतिष्ठानमित्यर्थः। जीवितेन—चारुदत्तजीवनरक्षणेन। सफलः,—फलवान्, सार्थक इत्यर्थः; चारुदत्तस्य जीवनरक्षणेन आर्य्यकराज्यलाभस्य साफल्यसम्प्राप्तिः भवेत् किम्? इति समुदिताशयः।

(ष) त्वरिततरम्—अतिशीघ्रं, द्रुतपदमित्यर्थः, उपसृत्य—समागत्य, जनपदसमवायमिति शेषः।

(स) अपयात—अपसरत। जाल्माः,—मूर्खाः, इतरजना इत्यर्थः; दीनैकशरणानां महाजनानां वधदर्शनं शास्त्रासङ्गतमिति चारुदत्तस्य वधं द्रष्टुमागतान् प्रति अवज्ञया एवमभिहितमिति ज्ञेयम्।

(ह) अपि ध्रियते—जीवति एव, अपिकारोऽत्र एवार्थे। वसन्तसेनया सह

दिष्ट्या भोः ! व्यसन-महार्णवादपारात्
उत्तीर्णं गुणधृतया सुशीलवत्या ।
नावेव प्रियतमया चिरान्निरीक्षे
ज्योत्स्नाढ्यं शशिनमिवोपराग-मुक्तम् ॥ ४८ ॥

—वसन्तसेनया सार्द्धं, यथा वसन्तसेना जीवति तथैवायमपीत्यर्थः ; वसन्तसेना अनेन मारितेति अस्यापि वधादेशश्रवणात् उभयोरेव मरणं सम्भावितमासीत्, इदानीन्तु पुरतः एव उभयोरेव जीवतोर्दर्शनादेवं सहर्षोक्तिर्बोध्या । सम्पूर्णाः,— सर्व्वथा सिद्धाः, सफला जाता इत्यर्थः । अस्मत्स्वामिनः,—अस्माकं प्रभोः, आर्य्यकस्य इत्यर्थः । मनोरथाः, अभिलाषाः, चारुदत्तस्य जीवनरक्षणविषयका इति भावः ।

वसन्तसेनासहितं चारुदत्तं जीवितं दृष्ट्वा हर्षं प्रकाशयति, दिष्ट्येति ।—भोः !—हे, नागरजना इति शेषः, नावेव—तरण्येव, गुणधृतया—गुणः,—अनुरागादिरित्यर्थः, अन्यत्र रज्जुः, तेन धृतया—आकृष्टयेत्यर्थः, एकत्र प्रेयसः उज्जीवनार्थम्, अन्यत्र च वाहनार्थमिति भावः, सुशीलवत्या—सच्चरित्रया, प्रियतमया—प्रेयस्या वसन्तसेनया कत्र्या, अपारात्—एकत्र अप्रतीकार्य्यात्, अन्यत्र—दुस्तरतया अशक्यपारगमनादित्यर्थः, अनुत्तरणीयादिति यावत् व्यसनं—विपदेव, महार्णवः,—प्रशस्तसागरः तस्मात्, दुस्तरविपद्विशालवारिधेरित्यर्थः, उत्तीर्णं—मुक्तं, पारं गतमित्यर्थः, निस्तीर्णापारापत्पारावारमिति यावत्, आर्य्य-चारुदत्तमिति शेषः, उपरागात्— राहुग्रासात्, [ शकाराक्रमणादिति च व्यज्यते ] मुक्तं—परित्यक्तं, ज्योत्स्नया—चन्द्रिकया, [ वसन्तसेनयेति ध्वन्यते ] आढ्यं—युक्तं, सम्पूर्णमण्डलमित्यर्थः, शशिनमिव—राकाचन्द्रमिव, ["पूर्णिमाप्रतिपत्सन्धौ ग्रस्यते राहुणा शशी" इत्युक्तेः पौर्णमासीप्रतिपत्सन्धाविव राहुग्रासस्य दर्शनात् ] दिष्ट्या —भाग्यवशेनेत्यर्थः, [ दिष्ट्येति हर्षभाग्यादिसूचकमव्ययम् ] चिरात्—बहुकालात् परमित्यर्थः, निरीक्षे —पश्यामीत्यर्थः । अत्र उपमेयभूते व्यसने उपमानभूतस्य महार्णवस्याभेदारोपात् निरङ्गं रूपकमलङ्कारः, अपि च उपमेयभूतया प्रियतमया सार्द्धं नावः अवैधर्म्यसाम्यप्रतिपादनादुपमा, सा च "गुणधृतया" इति विशेषणश्लेषस्य साम्यमात्रनिर्व्वाहकत्वपरतया उपन्यासात् श्लेषानुप्राणिततया श्लिष्टा विज्ञेया. अपि च विशेषणबलादुपस्थितस्य चारुदत्तस्य उपमेयभूतस्य शशिना सहावैधर्म्यसाम्यप्रतीतिश्चोपमा, इत्येषामलङ्काराणामन्योऽन्यनैरपेक्ष्येण संस्थितेः संसृष्टिः । प्रहर्षिणी वृत्तम् ॥ ४८ ॥

तत् कृतमहापातकः कथमिव एनमुपसर्पामि? अथवा, सर्व्वत्र आर्जवं (क) शोभते। [प्रकाशमुपसृत्य बद्धाञ्जलिः] (ख) आर्य्य-चारुदत्त!

चारु। ननु! (ग) को भवान्?

शर्वि।—

येन ते भवनं भित्त्वा न्यासापहरणं कृतम्।
सोऽहं कृतमहापापस्त्वामिव शरणं गतः॥ ५०॥

---

(क) कृतमहापातकः,—कृतम्—आचरितं, महापातकं—ब्राह्मणस्वामिक-सुवर्णचौर्य्यरूपं महापापं येन सः, [विप्रस्वामिकस्वर्णापहरणस्य महापातकत्वमुक्तं (मनु० ११ अ० ५५ श्लो०) यथा,—"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥" अत्र स्तेयपदस्य ब्राह्मणस्वामिकसुवर्णहरण-परत्वं कुल्लूकभट्टव्याख्यायां दृष्टम्। अस्य च शर्व्विलकस्य ब्राह्मणचारुदत्तगृहे सन्धि-खननपूर्वकं स्वर्णालङ्कारहरणं पूर्व्वमुक्तम्]। कथमिव—इवशब्दोऽत्र वाक्यालङ्कारे, केन वा प्रकारेण इत्यर्थः। एनं—चारुदत्तम्। आर्जवम्—ऋजुत्वं, सरलता इत्यर्थः, मन्ये प्राक्तनतदीयसुवर्णापहरणजनितां लज्जां विहायाधुना सरलभावेन दीनशरणस्यास्य समीपे गमनम् अशोभनं न भविष्यतीति वक्तुराशयः।

(ख) प्रकाशं—स्पष्टं, प्रत्यक्षं यथा तथेत्यर्थः, चारुदत्तसमक्षम् इति यावत्। उप-सृत्य—समीपं गत्वा इत्यर्थः, जनसङ्घान्तरालावस्थितं तत्समीपगमने शङ्काऽऽकुलमात्मानं समीपगमनेन प्रकाशीकृत्य इति यावत्। बद्धाञ्जलिः,—कृताञ्जलिः, आह इति शेषः।

(ग) ननु इति आमन्त्रणार्थकमव्ययम्।

अपरिचितपूर्व्वस्य स्वस्य नामजात्यादिमात्रकथने चारुदत्तस्य सम्यक्तया तत्परि-चयज्ञानासम्भवात् सहजपरिचायकेन पूर्व्वानन्यसाधारणकर्म्मोल्लेखेन स्वपरिचयमाह, येनेति।—येन—महापातकिना, ते—तव, दीनतया प्रशान्ततया च विस्रब्धसुप्तस्य इति भावः, भवनं—गृहं, भित्त्वा—विदीर्य्य, तद्गृहे सन्धिं कल्पयित्वा इत्यर्थः, न्यासस्य —वसन्तसेनया रक्षितस्य सुवर्णभाण्डस्य, अपहरणं—मोषणं, चौर्य्यमित्यर्थः, कृतं—विहितं, गणिकासक्तचित्ततया मदनिकां वसन्तसेनातः मोचयितुमिति भावः, कृत-महापापः,—कृतम्—आचरितं, महत्—उत्कटमित्यर्थः, विप्रस्वर्णापहरणादित्याशयः, पापं—दुष्कृतं, महापातकरूपमिति भावः येन तथोक्तः, सः,—तादृशः, अहं—शर्व्विलकः इत्यर्थः, त्वामिव—भवन्तमेव, दीनदैन्यविमोचनेन बमौदार्य्यादिगुणेन च

चारु। सखे! मैवम्। त्वया असौ प्रणयः (घ) कृतः।
[ इति कण्ठे गृह्णाति ] ( ङ )।

शर्वि। अन्यच्च,—

आर्य्यकेणार्य्यवृत्तेन कुलं मानञ्च रक्षता।
पशुवत् यज्ञवाटस्थो दुरात्मा पालको हतः॥ ५१॥

अतिप्रसिद्धमिति भावः, शरणं—रक्षितारं, गतः,—प्राप्तः, अस्मि इति शेषः; त्वयि कृतापराधः महापातकी अहं स्वमुखेनैव स्वदोषं स्वीकृत्य शरणं गच्छामि, तदानीं प्रियतमायां मदनिकायाम् अत्यनुरागेण विमोहितचेतसया दूषितकुलाचारस्य मम पूर्व्वकृतमपराधजातमात्मगुणेन क्षमस्वेति भावः। पथ्यावक्त्रं वृत्तम्॥ ५०॥

(घ) सखे!—मित्र! शर्व्विलक! इत्यर्थः, (तत्कृतापराधस्य परिमार्ज्जनाज्ञापनार्थं पूर्व्वकृतापकार्य्येण सञ्जातनिर्वेदं शर्व्विलकं सखिसम्बोधनेन आहूतवानिति वेदितव्यम्)। एवम्—उक्तरूपं, शरणागतत्वादिवचनमित्यर्थः, मा—न, वादीरिति शेषः। असौ—मद्गृहात् स्वर्णालङ्कारापहरणरूपव्यापारः इत्यर्थः। प्रणयः,—प्रीतिसम्पादनार्थं परिहासः इत्यर्थः; तदिदमनुष्ठानं यदि परिहासकृतं न स्यात्, तदा कथं मम गृहात् बहुमूल्यं तं सुवर्णालङ्कारं निर्विवादम् अपहृत्यापि तत्फलं स्वयं किञ्चिदनुपभुज्यैव मम प्रियतमायै वसन्तसेनायै एव तद्दानं सम्भवेत्? इति; तथा च वसन्तसेनास्वामिकस्यैवालङ्कारस्य प्रकारान्तरेण तद्धस्ते एव समर्पणात् एतत् परिहासादन्यत् किमपि वक्तुं न शक्यते इति भावः।

(ङ) कण्ठे गृह्णाति—सकण्ठग्रहम् आलिङ्गतीत्यर्थः, कण्ठग्राहं स्वजति इति यावत्।

इदानीं चारुदत्तस्य नीचवधवार्त्ताज्ञापनेन प्रीतिं जनयितुं प्रथमतः पालकविनाशवार्त्तां ज्ञापयति, आर्य्यकेणेति।—आर्य्यं—साधु, अनुकरणीयमित्यर्थः, वृत्तं—चरितं यस्य तेन, गोपदारकत्वेऽपि न नीचप्रकृतिनेति भावः, कुलं—सन्ततिं, प्रजानां वंशधारामिति यावत्, दुराचारपालकस्य प्रजापीडकत्वादिति भावः, मानं—सम्मानं, पालकेनावमानितानां प्रजानामिति भावः, रक्षता—पालयता, [ पालकस्य उत्पीडनेन जनानां मानवतां कुलवताञ्च वंशलोपः तथा मानात्ययश्च अनेकशः अभूत्, भवानपि तत्र प्रकृष्टनिदर्शनम्, अतः तद्विनाशेन आर्य्यकस्य तेषां कुलमानरक्षितत्वमिति वक्तुराशयः ] आर्य्यकेण—दीनशरणेन त्वया प्राक् स्वप्रवहणदानविमोचितेन तन्नाम्ना गोपालदारकेणेत्यर्थः, यज्ञवाटस्थः,—यज्ञशालास्थितः, दुरात्मा—दुष्टान्तःकरणः,

चारु। किम्?

शर्वि।—

**त्वद्यानं यः समारुह्य गतस्त्वां शरणं पुरा।**
**पशुवत् वितते यज्ञे हतस्तेनाद्य पालकः॥ ५२॥**

चारु। शर्विलक! योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्य्यकनामा त्वया मोचितः? (च)

पालकः,—तदाख्यः उज्जयिनीपतिः, पशुवत्—छागादिरिव, दीनः पशुर्यथा यज्ञशालायां यजमानेन निर्द्दयं हन्यते, तद्वदित्यर्थः, [एतेन असहायस्य निरस्त्रस्य तस्य निर्द्दयभावेन मारणं सूचितम्] हतः,—मारितः; उत्पीड़ितप्रजानां कुलमानादीनां रक्षार्थं, तथा राष्ट्रे सुचिरां शान्तिञ्च स्थापयितुं साधुचेता आर्य्यकः दुष्टनृपतिं तं पालकं हतवान्, न तु राज्यलिप्सया इति निष्कर्षः। यद्यपि शर्व्विलकः स्वयमेव पालकं हतवानिति प्रागुक्तम्, अत्र तु आर्य्यककृतहननोक्तेः विरोधः आयाति इति, तथाऽपि शर्व्विलकादिभिः पालकहनने आर्य्यकस्य सर्व्वथा आनुकूल्यं कृतं, येन विना आर्य्यकः तद्धनने कथमपि प्रभुर्न भवेदिति, अत एव आर्य्यकवत् परम्परया शर्व्विलकादीनामपि पालकहन्तृत्वमायातमित्यविरोधः द्रष्टव्यः; अथवा सैन्यादिकृतस्य जयस्य पराजयस्य वा राज्ञः एव फलभुक्त्वात् तज्जय-पराजययोः राजकर्त्तृकत्वव्यपदेशवत् अत्र शर्विलककृतपालकहननस्य आर्य्यककर्त्तृत्वम् इति। पथ्यावक्त्रं वृत्तम्॥ ५१॥

पालकहन्तृत्वेन आर्य्यकस्य परिचयज्ञापनार्थं पूर्व्ववृत्तान्तमुक्त्वा पुनरपि चारुदत्तेन पृष्टः पालकविनाशवार्त्तां प्रकाशयति, त्वद्यानमिति। -पुरा -प्राक्, यः,—यो जनः, कारागारात् पलायित इति भावः, त्वद्यानं -वसन्तसेनानयनार्थं पुष्पकरण्डकजीर्णोद्यानं प्रति चेटेन चालितं तव प्रवहणमित्यर्थः, समारुह्य—अधिरुह्य, त्वां—भवन्तं, शरणं—रक्षितारं, गतः,—प्राप्तः, आश्रयत्वेन लब्ध इत्यर्थः, आसीदिति शेषः, तेन—पूर्व्वोक्तरूपेण भवता विमोचितेन आर्य्यकेणेत्यर्थः, अद्य—एतस्मिन् दिवसे, वितते—विस्तृते, यज्ञे—यज्ञक्षेत्रे इत्यर्थः, पालकः पशुवत् हत इत्यन्वयः, व्याख्या तु पूर्व्ववत्। यद्यपि पूर्व्वश्लोकेन एव एवार्थः प्रतिपादितः, तथाऽपि तत्र केवलं पालकस्य प्रजापीड़कत्वमात्रमेव वक्तव्यमासीत्, अत्र तु तद्विमोचनं चारुदत्तौदार्य्येण जातमिति कृतज्ञतां प्रकाशयितुं पुनः तादृशमेवार्थमवतारितवानिति वेदितव्यम्, अतः नास्ति तेन सह अस्य पौनरुक्त्यमिति। पथ्यावक्त्रं वृत्तम्॥ ५२॥

(च) कूटागारे—कारागृहे इत्यर्थः; बद्धः—संयमित इत्यर्थः। त्वया मोचितः,—भवता मुक्तबन्धनः कृतः; स एव पालकं हतवान् किम्? इति चारुदत्तप्रश्नस्याशयः।

शर्वि। यथाह (छ) तत्रभवान्।

चारु। प्रियं नः प्रियम्। (ज)

शर्वि। प्रतिष्ठितमात्रेण तव सुहृदा आर्य्यकेण उज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम्। तत् प्रतिमान्यतां प्रथमः सुहृत्प्रणयः। (झ) [परिवृत्य] (ञ) अरे रे! आनीयतामयं पापो राष्ट्रियशठः। (ट)

(छ) यथा—यदित्यर्थः, तत्रभवान् यद्वदति तदेवेति भावः।

(ज) प्रियं नः प्रियम्—अस्माकं सम्बन्धे इयम् अतीव प्रियवार्त्ता इत्यर्थः; निरपराधस्यास्य विमोचनेन, कुनृपतेः पालकस्य हननेन चास्माकमतीव प्रियकार्य्यमनुष्ठितं भवतेति वक्तुः सातिशयहर्षसूचकमेतद्वचनमिति विभाव्यम्।

(झ) प्रतिष्ठितमात्रेण—राज्ये अभिषिक्तेन एवेत्यर्थः, सिंहासनलाभक्षणे एवेत्याशयः। सुहृदा—मित्रेण, [राजरोषात् परित्रातुं पलायनार्थं चारुदत्तेन तस्मै प्रवहणं प्रदत्तं, तेन चानेन आर्य्यकस्य सुहृत्कार्य्यं कृतमिति बोध्यम्]। उज्जयिन्याम्—उज्जयिनीनगरे, प्रतिष्ठितमात्रेण इत्यनेनान्वयः। वेणातटे—वेणानामनद्याः, तटे—तीरसमीपे इत्यर्थः। कुशावत्यां—तदाख्यायां कुशप्रतिष्ठितनगर्य्यां, दक्षिणकोशलस्य राजधान्यामित्यर्थः, तथा च रामायणे—"कोशलेषु कुशं वीरमुत्तरेषु तथा लवम्। अभिषिच्य महात्मानावुभौ रामः कुशीलवौ॥" इति। कालपरिवर्त्तनेन पुरातनीनां नदीनां नगरीणाञ्चेदानीं विलोपात् सम्राजः अशोकस्याधिकारज्ञापके भुवः चित्रे (मानचित्रे) चानुल्लेखात् एतासामवस्थितिस्थाननिर्णयो दुर्घट एवेति। राज्यं—राजपदं, राजत्वमित्यर्थः। अतिसृष्टं—दत्तं, तुभ्यमिति शेषः। प्रतिमान्यतां—सुहृद्दत्तोपायनत्वेन स्वीक्रियतां, कृतज्ञतानिदर्शनभूततया सादरं प्रदीयमानत्वादित्याशयः। प्रथमः,—आद्यः, पूर्वं कदाऽप्यकृत इति यावत्; [एतेन सर्व्वथा प्रत्याख्यानानर्हत्वं सूचितम्]। सुहृत्प्रणयः,—सुहृदः—मित्रस्य, आर्य्यकस्येत्यर्थः, प्रणयः,—प्रीतिदानं, कुशावतीराज्यसम्प्रदानरूपमिति भावः।

(ञ) परिवृत्य—प्रत्यावृत्य, नेपथ्याभिमुखमिति शेषः।

(ट) राष्ट्रियशठः,—राष्ट्रियेषु—राजश्यालेषु, ("राजश्यालस्तु राष्ट्रियः" इत्यमरः) शठः,—धूर्त्तः यावन्तो राजश्यालाः सन्ति, तत्सर्व्वापेक्षया अतीव प्रवञ्चकः इत्यर्थः; यद्वा,—राष्ट्रियः,—राष्ट्रियकः, शठः,—धूर्त्तः, राजश्यालकः शकार इत्यर्थः।

[नेपथ्ये]। यथाऽऽज्ञापयति शर्विलकः।

शर्वि। आर्य्य! ननु अयमार्य्यको राजा विज्ञापयति, इदं मया युष्मद्गुणोपार्ज्जितं राज्यं, तदुपयुज्यताम्। (ठ)

चारु। अस्मद्गुणोपार्ज्जितं राज्यम्!! (ड)

[नेपथ्ये] अरे रे राष्ट्रियश्यालक! एह्येहि, स्वस्याविनयस्य फलमनुभव]।

[ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद्बाहुबद्धः (ढ) शकारः]।

शकारः। हीमादिके!—

एव्वं दूलमदिक्कंते उद्दामे विअ गद्दहे।

आणीदे क्खु हगे बद्धे कुड़े अस्से व्व दुक्कले * ॥ ५३ ॥

---

* अहह!—एवं दूरमतिक्रान्तः उद्दाम इव गर्द्दभः।
आनीतः खल्वहं बद्धः कुक्कुरोऽश्व इव दुष्करः॥

(ठ) मया—आर्य्यकेण, युष्माकं—चारुदत्तप्रभृतीनामित्यर्थः, गुणैः,—प्रवहणदानादिरूपैः साहाय्यदानादिभिः उपार्जितं—लब्धम्, अधिकृतमिति यावत्। तत्—तस्मात्, युष्माकमेवानुग्रहेण सर्व्वस्य राज्यस्य लाभादित्यर्थः। उपयुज्यतां—भुज्यताम्, आत्मीयमिति कृत्वा एतत् कुशावतीराज्यम् उपभोगविषयीक्रियतामित्यर्थः।

(ड) "अस्मद्गुणोपार्जितम्" इत्यादि वाक्यं चारुदत्तस्य विस्मयद्योतकम्; तथा च—क्षुद्रस्य मे का शक्तिः तत्साहाय्यकरणे? स्वपराक्रमेणैव आर्य्यकेण विपत्सागरमुत्तीर्य्य राज्यं लब्धं, नात्र मया कृता काचित् सहायतेति चारुदत्तवाक्यस्याशयः।

(ढ) पुरुषैः,—रक्षिपुरुषैः। अधिष्ठितः,—अनुगतः, गृहीत इत्यर्थः। पश्चाद्बाहुबद्धः,—पश्चात्—पृष्ठदेशे, बाहू—भुजौ. बद्धौ—संयतौ यस्य तथाभूतः, पृष्ठनिगड़ितभुजः इत्यर्थः।

स्वीयबन्धनावस्थां विवृणोति, एवमिति।—उद्दामः,—उच्छृङ्खलः, उन्मुक्तबन्धन इत्यर्थः, गर्द्दभ इव—रासभ इव, एवं—पूर्वोक्तप्रकारेण, "भोदु—पलाइश्शं" इत्यादिरूपं पूर्वं मनसा पर्य्यालोच्येत्यर्थः, दूरमतिक्रान्तः,—भयादतिदूरं पलायितः, (इदानीमितः पलायनस्यासम्भवितत्वमज्ञात्वैव पलायनप्रवृत्ततया स्वस्य गर्द्दभायितत्वं प्रदर्शितमिति बोध्यम्) दुष्करः,—दुःखेन साधयितुं शक्यः असाध्य इत्यर्थः, अन्यः,—अपरः, कुक्कुर इव—श्वा इव, अहं बद्धः,—संयतः सन्, खलु—निश्चितम्, आनीतः,—

[ दिशोऽवलोक्य ] शमंतदो उवट्ठिदे एशे लट्ठिअबंधे ; ता कं दाणिं अशलणे शलणं व्वजामि ? (ण) [ विचिन्त्य ] भोदु. तं ज्जेव अब्भुववण्ण-शलणवच्छलं ( त ) गच्छामि। [ इत्युपसृत्य ] अज्ज-चालुदत्त ! पलित्ताआहि पलित्ताआहि। * [ इति पादयोः पतति ]।

[ नेपथ्ये ] अज्ज-चालुदत्त ! मुंच मुंच, वावादेम्ह एदं। †

शकारः। [ चारुदत्तं प्रति ] भो अशलण-शलणे ! ( थ ) पलित्ताआहि। ‡.

* समन्तत उपस्थित एष राष्ट्रियबन्धः ; तत् कमिदानीमशरणः शरणं व्रजामि ? भवतु, तमेव अभ्युपपन्न-शरण-वत्सलं गच्छामि। आर्य्य-चारुदत्त ! परित्रायस्व परित्रायस्व।

† आर्य्य-चारुदत्त ! मुञ्च मुञ्च, व्यापादयाम एतम्।

‡ भो अशरण-शरण ! परित्रायस्व।

उपस्थापितः, अस्मि इति शेषः। अत्र गर्द्दभेन कुक्कुरेण च सह शकारस्य अवैधर्म्य-साम्यप्रतीतेरुपमाद्वयम्। पथ्यावक्त्रं वृत्तम्॥ ५३॥

( ण ) समन्ततः,—परितः, चतुर्द्दिक्षु इत्यर्थः, ( "समन्ततस्तु परितः सर्व्वतो विष्वगित्यपि" इत्यमरः )। राष्ट्रियबन्धः,—राष्ट्रियस्य—राजश्यालस्य मम, बन्धः,—विपक्षः, शत्रुवर्ग इत्यर्थः, [ बध्यतेऽनेनेति बन्धः. करणे घञ्. ] अथवा—बन्धः,—बन्धनं, विपदित्यर्थः ; [ भावे घञ् ] [ "लट्ठिअबंधे" इत्यत्र "लश्टिअबंधु" इति प्राकृतपाठः क्वचित् दृश्यते, तस्य तु "राष्ट्रियबन्धुः" इति संस्कृतम् ; तदर्थस्तु—राष्ट्रियस्य—शकारस्य ममेत्यर्थः, बन्धुः,—स्वजनः, सर्व्वत मम आत्मीयाः विपन्नं मां द्रष्टुं समुपागताः वर्त्तन्ते इत्यर्थः ]। अशरणः,—निराश्रय इत्यर्थः। कं, जनमिति शेषः। शरणं व्रजामि—आश्रयं प्राप्नोमि, आश्रयत्वेन कमवलम्ब्य आत्मरक्षां करिष्यामीत्यर्थः।

( त ) अभ्युपपन्नानाम्—अभि—सर्व्वतोभावेन, उपपन्नानां—समीपमागतानां, शरणागतानामित्यर्थः. विपन्नानामिति भावः, शरणे—रक्षणे, वत्सलः,—स्नेहयुक्तः तम्, आपन्नरक्षितारमित्यर्थः।

( थ ) अशरणशरण !—अशरणस्य—नास्ति शरणं—रक्षिता यस्य तथोक्तस्येत्यर्थः, निराश्रयस्येति यावत्, शरणं—रक्षिता, आश्रयदाता इत्यर्थः, तत्सम्बोधने, निराश्रय-बान्धव ! इत्यर्थः।

चारु। [सानुकम्पम्] (द) अहह! (ध) अभयमभयं शरणागतस्य।

शर्वि। [सावेगम्] (न) आः! अपनीयतामयं चारुदत्त-पार्श्वात्। [चारुदत्तं प्रति] ननु! उच्यतां किमस्य पापस्य अनु-ष्ठीयतामिति, (प)—

आकर्षन्तु सुबध्यैनं? श्वभिः सङ्खाद्यतामथ?।
शूले वा तिष्ठतामेषः? पाट्यतां क्रकचेन वा? ॥ ५४ ॥

चारु। किमहं यत् ब्रवीमि, तत् क्रियते?

शर्वि। कोऽत्र सन्देहः?

शकारः। भट्टालका! चालुदत्त! शलणागदे म्हि, ता पलित्ताआहि पलित्ताआहि, जं तुए शलिशं, तं कलेहि, पुणो ण ईदिशं (फ) कलिश्शं। *

* भट्टारक! चारुदत्त! शरणागतोऽस्मि, तत् परित्रायस्व परित्रायस्व, यत् तव सदृशं, तत् कुरु, पुनर्न ईदृशं करिष्यामि।

(द) सानुकम्पं—सदयम्।

(ध) अहह इति परदुःखासहिष्णुतया अतिक्लेशज्ञापकमव्ययम्, ("अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः" इति मेदिनी)।

(न) सावेगं—क्रोधजनितत्वरासहितमित्यर्थः।

(प) ननु इति आमन्त्रणे। अनुष्ठीयतां—विधीयतां, क्रियतामित्यर्थः, युष्माभिरिति शेषः; इदानीमस्य यादृशो दण्डः समुचितः भवति, असावचिरेणैव भवद्भिः विधातव्यः इत्यर्थः।

महापातकिनश्चास्य दण्डप्रकारं पृच्छति, आकर्षन्तु इति।—एनं—शकारं, सुबध्य—पादयोः दृढं बद्धा इत्यर्थः, आकर्षन्तु—देशात् देशान्तरं नयन्तु, रक्षिण इति शेषः, अथ—अथवा, एषः,—अयम्, आनीतः राष्ट्रिय इत्यर्थः, श्वभिः—कुक्कुरैः सङ्खाद्यतां—भोज्यतां, [खादतेः णिचि कर्मणि लोटि रूपं, "श्वभिः" इति प्रयोज्यकर्त्तुः न कर्मत्वं, खादतेः तन्निषेधादिति] वा—अथवा, शूले—तदाख्यमारणसाधनयन्त्रविशेषे, तिष्ठतां—वर्त्ततां, इमं शूले आरोपयन्तु वा इत्यर्थः; वा—किंवा, क्रकचेन—करपत्रेण, पाट्यतां—विदार्य्यताम्, [अत्र सर्व्वत्र सम्प्रश्ने लोट्]। पथ्यावक्त्रं वृत्तम् ॥ ५४ ॥

(फ) सदृशम्—अनुरूपं, प्रकृतियोग्यमित्यर्थः। कुरु—विधेहि, यत्र कुरु

पौरा:। [ नेपथ्ये ] वावादेध, किं-णिमित्तं पादकी जीवा-वीअदि ? * (ब)

वस। [ वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्य उपरि क्षिपति (भ) ]।

शकार:। गब्भदाशीधीए ! (म) पशीद पशीद, ण उण मालइश्शं ता पलित्ताआहि। †

शर्वि। अरे रे ! अपनयत। आर्य्यचारुदत्त ! आज्ञाप्यतां, किमस्य पापस्य अनुष्ठीयताम् ?

चारु। किमहं यत् ब्रवीमि, तत् क्रियते ?

शर्वि। कोऽत्र सन्देह: ?

चारु। सत्यम् ?

शर्वि। सत्यम्।

चारु। यद्येवं, (य) शीघ्रमयम्—"।

* व्यापादयत, किं-निमित्तं पातकी जीव्यते ?

† गर्भदासीपुत्रि ! प्रसीद प्रसीद, न पुनर्मारयिष्यामि, तत् परित्रायस्व।

भवान् जात: तत्र कदाऽपि आश्रित: न त्यज्यते निहन्यते वा इति आ-जन्मन: स्वत:-सिद्धां तामेव प्रकृतिमाश्रित्य शरणागतं मामिदानीं परित्रायस्वेति भाव:। ईदृशम्—एवंविधं, त्वन्निर्यातनार्थं यादृक् क्रूराचरणं पूर्वं मया कृतं, तादृगित्यर्थ:।

( ब ) जीव्यते—जीवनेन धार्य्यते, सप्राण: विमोच्यते इत्यर्थ:. युष्माभिरिति शेष:।

( भ ) शकारस्य उपरि—शकारस्य कण्ठदेशे इत्यर्थ:, ( वसन्तसेनया शकारस्य कण्ठे वध्यमालाक्षेपणेन, स्वस्य चारुदत्तस्य च निर्य्यातनजनिताक्रोशेन शर्व्विलक-कृतकर्त्तव्यजिज्ञासायाम् "अयं वध्य एव" इति प्रत्युत्तरं छलेन प्रदत्तम् इत्यवधेयम् )।

( म ) गर्भदासीपुत्रि !—गर्भदास्या:,—आ-गर्भवासात् कल्पितपरिचारिकाया:, पुत्रि !—तनये ! [ पुत्रशब्दात् गौरादित्वात् स्त्रियां ङीष्, गौरादेराकृतिगणत्वात्, तथा च, "सुता तु दुहिता पुत्री" इति त्रिकाण्डशेष: ]। आत्मजीवनरक्षार्थं विनीतभावेन प्रसादभिक्षासमयेऽपि "गर्भदासीपुत्रि !" इति सावज्ञसम्बोधनं शकारस्य मूर्खताऽनुरूपमेवेति विभावनीयम्।

( य ) एवम्—इत्थम्, अहं यत् ब्रवीमि तदेव क्रियते चेदित्यर्थ:।

शर्वि। किं हन्यताम् ? (र)

चारु। न हि, न हि, "—मुच्यताम्।

शर्वि। किमर्थम् ?

चारु। शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः। शस्त्रेण न हन्तव्यः—" (ल)

शर्वि। एवं (व) तर्हि श्वभिः खाद्यताम् ?

चारु। न हि,"—उपकारहतस्तु कर्त्तव्यः। (श)

शर्वि। अहो! आश्चर्य्यम् !! (ष) किं करोमि, वदतु आर्य्यः ?

(र) शकारनिर्य्यातने विलम्बासहिष्णुना शर्व्विलकेन चारुदत्तस्य "शीघ्रमयम्" इत्यसम्पूर्णवाक्यस्य "मुच्यताम्" इति तदभिप्रेतप्रत्युत्तरबोधकक्रियापदमुच्चारयितुमवसरमदत्त्वैव स्वाभिप्रायानुकूलं "किं हन्यताम्" इति प्रतिवचनं तद्वाक्यशेषत्वेन उपादाय वितर्कितमित्यवगन्तव्यम्।

(ल) एवं-कृतापराधस्यापि विमुक्तेः कारणमाह, शत्रुरिति।—कृतापराधः,—कृतदोषः, शत्रुः,—रिपुः, शरणं—रक्षकम्, उपेत्य—प्राप्य, पादयोः,—चरणयोः, पतितः,—विलुठितः, स्वजीवनभिक्षार्थमित्यर्थः, अत इति शेषः, शस्त्रेण—मारणसाधनेन केनाप्यायुधेनेत्यर्थः, न हन्तव्यः,—न विनाशयितव्यः, शरणार्थिनां रक्षणमेव धर्म्मशास्त्रकृतामनुमतं, न तु तद्धननमिति तात्पर्य्यम्।

(व) चारुदत्तोक्तं "शस्त्रेण न हन्तव्यः" इति "किमर्थम्" इति स्ववाक्यस्य प्रतिवचनं प्रकारान्तरसाध्यहननविषयकमेव इति अवबुध्यैव वितर्कयति, एवमिति।—एवं—शस्त्रेण न हन्तव्यश्चेदित्यर्थः।

(श) एतावता ग्रन्थेन "किमर्थम्" इति शर्विलकप्रश्नस्योत्तरं दत्त्वा, पुनः शर्विलकेन "एवम्" इत्यादिग्रन्थेन पृष्टस्योत्तरमाह, न हीति।—न हि—नैव, "श्वभिः खाद्यताम्" इत्यपि नेत्यर्थः; तर्हि किं कर्त्तव्यमित्यत्राह, उपकारेति।—उपकारहतस्तु—उपकारेण—अनुग्रहप्रदर्शनेनेत्यर्थः, हतस्तु—विनष्ट एवेत्यर्थः, [तुकारः एवार्थे] कर्त्तव्यः,—विधेयः, कृतापकारस्य शत्रोरुपकारे कृते स हतप्रायः एव भवतीति भावः; शत्रौ शरणार्थिनि उपकृतिविधानं हननादपि अधिकफलप्रदं, शरीरजयाद्धि मनोजयः साधीयानिति सङ्क्षेपः।

(ष) आततायिनं प्रति चारुदत्तस्य सदयव्यवहारदर्शनेन "अहो! आश्चर्य्यम् !!"

चारु। तत् मुच्यताम्।

शर्वि। मुक्तो भवतु। [इति मोचयति]।

शकारः। हीमादिके! (ख) पच्चुज्जीविदेम्हि!! * [इति पुरुषैः (ह) सह निष्क्रान्तः]।

[नेपथ्ये कलकलः। पुनर्नेपथ्ये] एसा अज्जचारुदत्तस्स बहुआ अज्जा धूदा पदे वसणंचले विलग्गंतं दारअं आक्खिवंती बाप्फ-भरिद-णअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि। † (क)

---

* आश्चर्य्यं! प्रत्युज्जीवितोऽस्मि!!

† एषा आर्य्यचारुदत्तस्य बधूरार्य्या धूता पदे वसनाञ्चले विलगन्तं दारकमाक्षिपन्ती बाष्प-भरित-नयनैः जनैः निवार्य्यमाणा प्रज्वलिते पावके प्रविशति।

---

इति एकार्थकाव्ययशब्दद्वयप्रयोगेण तदुदारतायां स्वविस्मयातिशय्यं प्रकटीकृतमिति वेदितव्यम्।

(ख) "हीमादिके" इत्यव्ययपदं गतप्रायतया अप्रत्याशितरक्षणस्य स्वजीवनस्य पुनःप्राप्त्या आनन्दातिशय्यमेव प्रकटयति शकारस्य, न तु चारुदत्तस्य औदार्य्यदर्शनेन विस्मयमिति ज्ञेयम्, अतिमूर्खे अकृतज्ञे शकारे कृतज्ञताया एकान्ततोऽसम्भवात् इति। आनन्दप्रकाशाय आश्चर्य्यार्थकपदप्रयोगः शकारे वक्तरि न विस्मयमावहति।

(ह) पुरुषैः,—रक्षिपुरुषैरित्यर्थः।

(क) पदे—चरणे, वसनाञ्चले—परिधेयांशुके, विलगन्तं—लुठन्तं, मातुरञ्चलं धृत्वा तदनुपदं गच्छन्तमिति यावत्, अग्नौ आत्मप्रक्षेपणव्यापारात् मातरं निवारयितुमिति शेषः, अत्र अञ्चलशब्दशक्त्या वसनप्रान्तार्थबोधेऽपि पुनः वसनशब्दोपादानादस्य प्रान्तमात्रार्थकत्वमुपादातव्यमिति। दारकं—बालकं, रोहसेनमित्यर्थः। आक्षिपन्ती—अपसारयन्ती अञ्चलं धृत्वा प्राणविसर्ज्जनोन्मुखां मातरं प्रोक्तव्यवसायात् निवारयन्तं बालं सुदूरं नयन्तीत्यर्थः। बाष्पभरितनयनैः,—अश्रुपूर्णलोचनैः; (अग्नौ आत्मविसर्ज्जनोद्यतायाः धूतायाः चारुदत्तस्य च वियोगसम्भावनया शोकाकुलानां जनानामेवमश्रुपूर्णनयनत्वं बोध्यम्)। निवार्य्यमाणा—निषिध्यमाना, व्यवसायादस्मात् निवर्त्तस्व इति भूयसा अनुरुध्यमाना अपि इत्यर्थः। प्रज्वलिते पावके—प्रज्वलितेऽग्नौ, प्रविशति—आत्मानं निक्षिपति धूतया [illegible]मस्तु चारुदत्तस्य प्राणदण्डादेशश्रवणात् पतिं मृतप्राय-

शर्वि। [आकर्ण्य नेपथ्याभिमुखमवलोक्य] कथं चन्दनकः !! चन्दनक ! किमेतत् ?

चन्दनकः। [प्रविश्य] किं ण पेक्खदि अज्जो महाराअप्पासादं दक्खिणेण महंतो जणसंमद्दो (ख) वट्टदि ? ["एसा" इत्यादि पुनः पठति] कहिदं अ मए तीए, जधा,—"अज्जे ! मा साहसं करेहि, जीअदि अज्ज-चारुदत्तो" त्ति, परंतु दुक्खवावुडदाए (ग) को सुणेदि ? को पत्तिआएदि ? *

चारु। [सोद्वेगम्] हा प्रिये ! जीवत्यपि मयि किमेतत् व्यवसितम् ? [ऊर्द्ध्वमवलोक्य दीर्घं निश्वस्य च]—

* किं न पश्यति आर्यः महाराजप्रासादं दक्षिणेन महान् जनसम्मर्दो वर्त्तते ? कथितञ्च मया तस्यै, यथा —"आर्ये ! मा साहसं कुरुष्व, जीवति आर्य-चारुदत्तः" इति परन्तु दुःखव्यापृततया कः शृणोति ? कः प्रत्ययते ?

मनुमाय तदन्वारोहणेच्छया अकारीति वेदितव्यम् ; सती पतिविरहिता जीवनं क्षणमपि धर्त्तुं नेच्छति, अतः चारुदत्तः मृतः इति श्रवणात् प्रागेव पावके प्रवेशोद्योगः तस्या दृश्यते इति सुधीभिर्विभाव्यम्।

(ख) महाराजप्रासादं—महाराजभवनमित्यर्थः, [महाराजप्रासादमित्यत्र "एनबन्यतरस्याम्—" (५।३।३५ पा०) इत्यादि सूत्रेण एनप्प्रत्ययनिष्पादितेन "दक्षिणस्यां दिशि" इत्यर्थकेन दक्षिणेनेतिपदेन योगे "एनपा द्वितीया" (२।३।३१ पा०) इति द्वितीया ; महाराजभवनस्य दक्षिणभागे इति समुदितार्थः] महाराजशब्देनात्र आर्यकः लक्षित इत्यवगन्तव्यम्। "प्रासादो देवभूभुजाम्" इत्यमरोक्तौ प्रासादशब्दस्य राजभवनवाचकत्वेन विवक्षिततया तेनैव प्रोक्तार्थप्रतीतेर्लाभात् पुनः महाराजशब्दोपादानं नवाभिषिक्तेन महाराजेन आर्यकेण अधिकृतस्य पालकभवनस्य बोधायेति विभाव्यम्। जनसम्मर्दः—जनानां परस्परमर्द्दः, जनतेत्यर्थः।

(ग) साहसं—"सहसा क्रियते यत्तु तत् साहसमिहोच्यते" इति लक्षणात् अविमृष्यकारिणां कर्म्म इत्यर्थः, पौर्व्वापर्य्यमज्ञात्वा अविमृश्यकारिकाविवेकिककार्य्यारम्भमिति भावः। दुःखव्यापृततया—दुःखेनाभिभूततया

न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते ! यदपि ।
उचितं तथाऽपि परलोकसुखं न पतिव्रते ! तव विहाय पतिम् ॥५५॥

[ इति मोहमुपागतः ] ।

शर्वि । अहो ! प्रमादः, (घ)—

त्वरया सर्पणं तव मोहमार्य्याऽत्र चागतः ।
हा धिक् ! प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥ ५६ ॥

पत्नीं स्वस्य चिरवियोगासहिष्णुतया अग्निप्रवेशप्रवृत्तां श्रुत्वा अतीव व्याकुलः तद्गुणादिकं स्मारं स्मारं विलपति, नेति ।—चारुचरिते !—पांशुलत्वादिदोषरहिततया हे विशुद्धस्वभावे । धूते ! इत्याशयः, यदपि - यद्यपि, भवच्चरितानि—भवत्याः,—तव चरितानि—पातिव्रत्यलक्षणानीत्यर्थः, महीतलस्थितिसहानि—महीतलं—भूतलं, स्थितिः—अवस्थानं, तां सहन्ते इति तथोक्तानि, पृथिवीतलावस्थानयोग्यानि इत्यर्थः, [ महीतलस्थितीत्युपपदात् सहते इत्यस्माद्धातोः कर्त्तरि पचादित्वादचि रूपम् ] न, भवन्ति इति शेषः, भवच्चरित्राणि दिवौकसामनुरूपाणीति भावः, तथाऽपि भवच्चरित्रस्य देवसदनवासयोग्यत्वेऽपि इत्यर्थः, पतिव्रते !—पतिः—पतिशुश्रूषणमेव, व्रत—नियमः यस्याः तथोक्ता, यद्वा —पतिः व्रतमिव सदोपास्यः यस्याः तथोक्ता, तत्सम्बोधने, हे पतिपरायणे इत्यर्थः पतिं—मां, विहाय—त्यक्त्वा, एकाकिनं विसृज्य इत्यर्थः तव – एकपत्न्याः भवत्याः परलोके—लोकान्तरे, स्वर्गे इत्यर्थः, यत् सुखं—स्वर्गभोगजनितमित्यर्थः, तदुपभोक्तुमिति शेषः, न उचितं—न युक्तं, पतिव्रतायास्ते एकाकिन्याः स्वर्गसुखभोगः अयुक्तः तथात्वे पातिव्रत्यभङ्गापत्तिरिति भावः । पतिव्रतालक्षणमाह हारीतः,—“आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥” इति । अत्र पराङ्गोपनिबद्धार्थस्य परलोकसुखोपभागौचित्याभावरूपस्य प्रतियोगिनं प्रत्यौचित्यं प्रति पूर्व्वार्द्धवाक्यार्थस्य महीतलस्थितिसहत्वाभावस्य हेतुत्वेनोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रमिताक्षरा वृत्तं,—“प्रमिताक्षरा स-ज-स-सैः कथिता” इति लक्षणात् ॥ ५५ ॥

(घ) अहो ! इति खेदे । प्रमादः,—अनवधानता, कर्त्तव्यार्थस्याचिरादननुपालनम् इत्यर्थः चारुदत्तस्य आकस्मिकमोहस्य बध्वाः धूतायाः अग्निप्रवेशनिवारणरूपकर्त्तव्यार्थानुपालनस्यान्तरायभूतत्वादित्याशयः ।

प्रमादस्वरूपमेव विशदीकृत्याह, त्वरयेति ।—तत्र—तस्मिन् स्थाने, धूतायाः वह्निप्रवेशस्थाने इत्यर्थः, त्वरया—शीघ्रं, [ प्रकृत्यादिभ्यस्तृतीया ] सर्पणं—गमनम्,

वस। समस्ससिदु अज्जो, तत्थ गदुअ जीवाबेदु अज्जा, अस्सधा अधीरत्तणेण अणत्थो संभावीअदि। * (ङ)

चारु। [समाश्वस्य सहसोत्थाय] हा प्रिये! क्वासि? देहि मे प्रतिवचनम्। (च)

चन्द। इदो इदो अज्जो। † [इति सर्वे परिक्रामन्ति]।

* समाश्वसितु आर्य्यः, तत्र गत्वा जीवयतु आर्य्याम्, अन्यथा अधीरत्वेन अनर्थः सम्भाव्यते।

† इत इत आर्य्यः।

अस्माकमुचितमिति पदद्वयमध्याहार्य्यम्; किन्तु अत्र—अस्मिन् प्रदेशे च, आर्य्यः,—चारुदत्तः, मोहं—मूर्च्छां, ज्ञानराहित्यमित्यर्थः अकस्मात् प्रेयस्या वह्निप्रवेशवार्त्ताश्रवणादिति भावः आगतः.—प्राप्तः। हा धिक्! [एतद्धि आक्षेपोक्तिमात्रं. धिगित्यव्ययस्य केनापि योगाभावात् न द्वितीयापत्तिः], प्रयस्य—प्रियसुहृदः आर्य्यकस्य अकारणं कारादण्डदातुः सिद्धादेशेन सञ्जातराज्याधिकारशङ्कस्य ज्ञातस्य पालकस्य प्रतिहिंसया प्रियतमायाः मदनिकायाः भावस्य रेभिलस्य गृहे स्थापनात् प्रभृति राज्यावाप्तिपर्य्यन्तस्य उद्योगस्य, वैफल्यं—निष्फलता, सर्व्वतोमुखं—सर्व्वतः,—सर्व्वस्मिन् वस्तुनि, मुखं—प्रारम्भः, प्रसक्तिरित्यर्थः यस्य तत्, सर्व्वतोगामीत्यर्थः, सर्व्वप्रकारेण उपगतमिति यावत्, दृश्यते—अवलोक्यते। तथा हि, धूतायामग्नौ प्रविष्टायां तच्छोकेन आर्य्यचारुदत्तः नूनं प्राणांस्त्यक्ष्यति, यत्प्राणरक्षार्थमस्माभिः ईदृशः प्रयासः कृतः तस्मिन् चारुदत्ते च मृते उपकारकस्य जीवनरक्षणासामर्थ्यात् प्रियसुहृदार्य्यकोऽपि अतिशयेन खिन्नः न जाने किं करिष्यति इति विभाव्य "हा धिक्" इति आक्षेपगर्भनिर्भर्त्सनार्थकम् अव्ययपदमुपात्तमिति बोध्यम्। पथ्यावक्त्रं वृत्तम्॥ ५६॥

(ङ) समाश्वसितु—आश्वस्तो भवतु, धैर्य्यमवलम्बतु इत्यर्थः। तत्र—धूताया वह्निप्रवेशस्थले। आर्य्यां—मान्यां धूतामित्यर्थः। अन्यथा—त्वरितं तत्रागमने इत्यर्थः। अधीरत्वेन—धूताया धैर्य्याभावेन हेतुना, चापल्यदोषस्य स्त्रीणां स्वाभाविकत्वादित्याशयः। यद्वा—अन्यथा—आश्वस्तो न भवति चेत्, अधीरत्वेन—धैर्य्याभावेन, धूताया अग्निप्रवेशवार्त्ताश्रवणजनितेन तव धैर्य्यविलोपेन इत्यर्थः, अनर्थः,—अनिष्टं, धनायाः अग्नौ प्राणविसर्ज्जनरूप इत्यर्थः। सम्भाव्यते—अनुमीयते।

(च) मे—मह्यम्। प्रतिवचनं—मद्वाक्यस्य प्रत्युत्तरमित्यर्थः।

[ ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन् विदूषकेण
अनुगम्यमानो ( क ) रोहसेनो रदनिका च ]।

धूता। [ सास्रम् ] जाद ! मुंचेहि मं, मा विग्घं करेहि, भीआमि अज्जउत्तस्स अमंगलाकण्णणादो। * ( ज ) [ इति उत्थाय अञ्चलमाकृष्य पावकाभिमुखं परिक्रामति ( झ ) ]।

रोह। माद ! अज्जए ! पड़िवालेहि मं, तुए विणा ( ञ ) ण सक्कुणोमि जीविदं धारेदुं। † [ इति त्वरितमुपसृत्य पुनः अञ्चलं गृह्णाति ]।

विदू। भोदीए दाव बम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरंति ( ट ) रिसीओ। ‡

---

* जात ! मुञ्च मां, मा विघ्नं कुरु, बिभेमि आर्य्यपुत्रस्य अमङ्गलाकर्णनात्।

† मातः ! आर्य्ये ! प्रतिपालय मां, त्वया विना न शक्नोमि जीवितं धारयितुम्।

‡ भवत्यास्तावत् ब्राह्मण्या भिन्नत्वेन चिताऽधिरोहणं पापमुदाहरन्ति ऋषयः।

---

( क ) यथानिर्द्दिष्टा—उक्तानुरूपा, "पट्टे बसणंचले विलग्गंतं" इत्यादिरूपया प्रागुक्तया दिशा यादृशी वर्णिता, तादृशी इत्यर्थः। चेलाञ्चलं—वस्त्रप्रान्तं, मातुर्धूताया इति शेषः ; अत्र चेलशब्दस्य प्रयोगे सत्यपि अञ्चलशब्दस्य प्रान्तमात्रार्थकत्वाङ्गीकारात् न पौनरुक्त्यदोषः, केवलम् अञ्चलशब्देनैव विवक्षितार्थलाभेन गतार्थत्वादिति शङ्का न करणीया। अनुगम्यमानः,—अनुस्रियमाणः, पश्चाद्वर्त्तिविदूषकेण सान्त्वनार्थं साग्रहमनुधाव्यमान इत्यर्थः।

( ज ) विघ्नं—प्रतिबन्धम्, अग्निप्रवेशे इति भावः। अमङ्गलाकर्णनात्—प्राणविनाशरूपाशुभवार्त्ताश्रवणादित्यर्थः।

( झ ) पावकाभिमुखम्—अनलसम्मुखम्, अग्निं लक्ष्यीकृत्य इत्यर्थः, [ अभिगतः मुखम् इत्यभिमुखः इति प्रादिसमासः, ततः, पावक एव अभिमुखः पुरोवर्त्ती भवति यस्यां क्रियायां तत् यथा तथेत्यर्थः ]। परिक्रामति—अग्निप्रवेशात् प्राग्गकुर्त्तोधमानं प्रदक्षिणमाचरतीत्यर्थः।

( ञ ) प्रतिपालय—परिरक्ष। [ "माद ! अज्जए ! पड़िवालेहि" इत्यत्र "दाव अज्जए ! पड़िवालेसु" इति पाठान्तरे—"तावदार्य्ये ! प्रतिपालयस्व" इति संस्कृतम् ; तथात्र तावदिति वाक्यालङ्कारे ]। त्वया विना—त्वामन्तरेण, [ त्वयेति विनायोगे तृतीया ]।

( ट ) ब्राह्मण्याः,—ब्राह्मणभार्य्या इत्यर्थः। भिन्नत्वेन—पृथक्त्वेन, पत्युर्मृतदेह-

भूता। वरं पावाचरणं, ण उण अज्जउत्तस्स अमंगला-कसणं। * (ठ)

अबि। [पुरोऽवलोक्य] आसन्नहुतवहा आर्य्या, तत् त्वर्य्यतां त्वर्य्यताम्। (ड)

चाह। [त्वरितं परिक्रामति]।

* वरं पापाचरणं, न पुनरार्य्यपुत्रस्य अमङ्गलाकर्णनम्।

सान्निध्यमन्तरेणेति यावत्। चिताऽधिरोहणं—चितायां—देहदाहार्थं प्रज्वलित-काष्ठायां चुल्ल्यामित्यर्थः, अधिरोहणम्—आरोहणम्। उदाहरन्ति—कथयन्ति। ननु देशान्तरमृतस्य भर्त्तुः देहाप्राप्तौ सतीनां स्त्रीणां पत्युः पादुकाद्वयम् उरसि निधाय प्रज्वलितचितायां प्रवेशनम् अन्वारोहणधर्म्म उक्तम्; तथा च स्मृतिः,—"देशान्तरे मृते पत्यौ साध्वी तत्पादुकाद्वयम्। निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्॥" इति; एवञ्च स्थानान्तरमृतस्य भर्त्तुः चारुदत्तस्य देहप्राप्तेरयोगात् धूतायाः एतदन्वारोहणं कथं पापजनकत्वेनोत्कीर्त्तितमिति चेत्, मैवं, प्रोक्तविधानं हि क्षत्रियादीनामेव, न तु विप्राणां, तथा च उशनसोक्ता शुद्धितत्त्वधृता स्मृतिः,—"पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति। अन्यासामेव नारीणां स्त्रीधर्मोऽयं परः स्मृतः॥" इति; तथा च, "ब्रह्मचर्य्यं तदन्वारोहणं वा" इति सूत्रात् ब्राह्मण्याः धूतायाः धर्म्मशास्त्रानुसारतः यावज्जीवं ब्रह्मचर्य्यानुपालनमेव कर्त्तुमुचितमिति वक्तुरभिप्रायः।

(ठ) पापाचरणं—शास्त्रविधिलङ्घनरूपमनुचितानुष्ठानं, पत्युसहकृतचिताऽऽरोहणरूपमिति यावत्। वरं—मनाक्प्रियम्। अमङ्गलाकर्णनं, न वरमिति पूर्वेणान्वयः; आर्य्यपुत्रस्य निधनरूपामङ्गलवार्त्ताऽऽकर्णनात् पापाचरणमपि साधीय इति भावः।

(ड) आसन्नहुतवहा—आसन्नः,—समीपवर्त्ती, हुतवहः—अग्निः यस्याः तथाभूता, अग्निसमीपस्था इत्यर्थः, जाता इति शेषः। आर्य्या—धूता। तत्—तस्मात्, आसन्नहुतवहं त्वरितमेवात्मविसर्ज्जनोद्योगदर्शनादित्यर्थः। त्वर्य्यतां—सत्वरेण भूयतां, यतः आर्य्या अग्नेरत्यासन्ना जाता, अतो मन्ये, इदानीमेव अग्निं प्रवेक्ष्यतीति, तत् सत्वरमागत्य निवार्य्यतामियम्, अन्यथा आत्मविसर्ज्जने अनर्थः पदमधिकरिष्यतीति भावः।

धूता। रअणिए! अवलंब दारअं, जाव अहं समीहिदं करेमि। * (ढ)

चेटी। [सकरुणम्] अहं पि जधोवदेसिणि म्हि भट्टि-णीए। † (ण)

धूता। [विदूषकमवलोक्य] अज्जो दाव अवलंवेदु। ‡

विदू। [सावेगम्] (त) समीहिद-सिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो, अदो भोदीए अहं अग्गणी होमि। § (थ)

* रदनिके! अवलम्बस्व दारकं, यावदहं समीहितं करोमि।

† अहमपि यथोपदेशिन्यस्मि भट्टिन्याः।

‡ आर्य्यस्तावत् अवलम्बताम्।

§ समीहितसिद्धेः प्रवृत्तेन ब्राह्मणोऽग्रे कर्त्तव्यः, अतो भवत्या अहम् अग्रणी-र्भवामि।

(ढ) अवलम्बस्व—धारय, अवलम्बीत्यर्थः। समीहितम्—अभीष्टम्। करोमि—साधयामीत्यर्थः।

(ण) यथोपदेशिनी—यथा—यादृक्, उपदेशः,—शिक्षा तद्वती, भवदा-चरितदृष्टान्तानुवर्त्तिनीत्यर्थः, भवती कर्म्मणा यथा उपदिशति, तदनुकारिणी इति यावत्; अनुजीविनीनां भर्तृदृष्टान्तानुसरणौचित्यात् अहमपि भवतीं विहाय स्थातुं न शक्ष्यामि, अतः भवती यदाचरति, तथाभूतमेव उपदेशं शिरसि निधाय तदेवा-चरिष्यामीति भावः।

(त) सावेगं—शोकजनितत्वरासहितमित्यर्थः।

(थ) समीहितसिद्धेः—अभीष्टकार्य्यसाधनार्थमित्यर्थः, प्रवृत्तेन—उद्यतेन, जनेनेति शेषः। ब्राह्मणः,—विप्रः, अग्रमित्यर्थः। अग्रे कर्त्तव्यः—पुरस्कार्य्यः, ब्राह्मणं पुरतो निधाय अभीष्टसिद्धेः कर्त्तव्यम् इत्यर्थः। अहमग्रणीर्भवामि—परलोके पतिसमागमसम्पत्तये पतिलोकं जिगमिषोः भवत्या वैधज्वलनप्रवेशस्य पुरत एव वैधकर्म्मणि अग्रे ब्राह्मणस्यैव नियोज्यत्वेन विधानादहं ब्राह्मण एव अग्रतः स्थापयितुमुचितः इति भावः, बन्धुवियोगदुःखमसहमानोऽहं पूर्व्वमेव वह्नौ प्रविशामीति हृदयम्।

धूता। कधं, पच्चादिट्ठम्हि दुवेहिं !! (द) [बालकमालिङ्ग्य] जाद! तुमं ज्जेव पज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअ-दाणाअ। अदिक्कंते किं मणोरहेहिं? (ध) [सनिश्वासम्] ण क्खु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि !!। * (न)

चारु। [आकर्ण्य सहसोपसृत्य] अहमेव पर्य्यवस्थापयामि बालिशम्। (प) [इति बालकं बाहुभ्यामुत्थाप्य वक्षसा आलिङ्गति]।

* कथं, प्रत्यादिष्टाऽस्मि द्वाभ्याम् !! जात! त्वमेव पर्य्यवस्थापय आत्मानम् अस्माकं तिलोदकदानाय। अतिक्रान्ते किं मनोरथैः? न खलु आर्य्यपुत्रस्त्वां पर्य्यवस्थापयिष्यति !!

---

(द) प्रत्यादिष्टा—निराकृता, ("प्रत्यादेशो निराकृतिः" इत्यमरः)। द्वाभ्यां—विदूषकरदनिकाभ्याम्; अत एवकार ऊहनीयः, तेन द्वाभ्यामेवेत्यर्थः।

(ध) पर्य्यवस्थापय—प्रतिपालय, त्वं स्वयमेव आत्मानं रक्ष, सान्त्वय इति वाऽर्थः, इदानीं रक्षकान्तरस्याभावादिति भावः। तिलोदकदानाय—अतिलजल-दानार्थमित्यर्थः। अतिक्रान्ते—अतीतविषये, मनोरथैः,—अभिलाषैः, किम्?—किं फलम्? न किमपीत्यर्थः; अहन्तु वह्नौ अधुना अप्रविष्टाऽपि प्रविष्टा एवेति मत्वा स्वचेतसि स्थैर्य्यमाधातव्यं, गतकल्पाया ममानुशोचनया न कोऽपि ते फलोदयोऽस्तीति तात्पर्य्यम्।

(न) आर्य्यपुत्रः.—तव पिता। खलु—निश्चितमेव। न पर्य्यवस्थापयिष्यति—सान्त्वयिष्यति, स तु आर्य्यपुत्रः सम्प्रति परलोकपथिक एव, अतः कुतोऽपि ते अधुना रक्षणाशा नास्ति, तदात्मनैव आत्मानं धृत्वा परलोकयियासूनामस्माकं निवापाञ्जलये त्वं सुचिरं जीव्याः, मा भूः अस्मद्वंशीयानां पिण्डलोपः इति हृदयम्।

(प) पर्य्यवस्थापयामि—सान्त्वयामि, रक्षामि वा। बालिशं—बालकं, ("शिशावज्ञे च बालिशः" इत्यमरः) धूतायां दीर्घं निश्वस्य "न खल्वार्य्यपुत्रस्त्वां पर्य्यवस्थापयिष्यति" इत्यादिकं सखेदमुक्तवत्यां, तस्याः शोकं नाशयितुम् "अहमेव पर्य्यवस्थापयिष्यामि" इत्यादिचारुदत्तवाक्यलब्धैः बालकसंरक्षणरूपैरर्थैः परस्याः स्ववियोग-जनितचिन्ताऽधैर्य्यादिदूरीकरणेन स्थिरीकरणात्, लब्धार्थैः शोकादिकृतास्थैर्य्यादि-नाशनरूपं कृतिनामक निर्वहणाङ्गसन्धेरङ्गमिदं वेदितव्यं, "लब्धार्थशमनं कृतिः" इति दर्पणोक्तलक्षणात्।

धूता। [विलोक्य] अम्हहे! अज्जउत्तस्स ज्जेव सर-संजोओ!! (फ) [पुनर्निपुणं निरूप्य (ब) सहर्षम्] दिट्ठिआ अज्जउत्तो ज्जेव एसो, पिअं मे पिअं। * (भ)

बालकः। [विलोक्य सहर्षम्] अम्हो! आवुको मं परिस्सजदि!! (म) [धूतां प्रति] अज्जए! वड्ढीअसि, (य) आवुको ज्जेव मं पज्जवट्ठावेदि। † [इति प्रत्यालिङ्गति]।

* अहो! आर्यपुत्रस्यैव स्वरसंयोगः!! दिष्ट्या आर्यपुत्र एवैषः, प्रियं मे प्रियम्।

† अहो! आवुको मां परिष्वजति!! आर्ये! वर्द्धसे, आवुक एव मां पर्यव-स्थापयति।

(फ) अहो!—आश्चर्यम्! दुराचारे पालके शासितरि ग्रामप्राणदण्डाज्ञस्य चारुदत्तस्य मुक्तिगत्यन्तिकासम्भवात् सर्व्व एव राज्यवासिनः तज्जीवने निराशा जाता: इति मनसाप्यप्रतर्क्यपुनर्दर्शनस्य तस्य इदानीं सहसा पुनः समागमः धूतादीनां विस्मयहेतुरजनीति बोध्यम्। स्वरसंयोगः,—स्वरस्य—कण्ठध्वनेः, संयोगः,—प्रयोगः, सम्बन्ध इत्यर्थः, श्रुतपूर्व्वस्वरस्य परिचयः इति यावत्, स्वरसादृश्यात् अयमार्य्यपुत्र एवेति विभाव्यते इति तात्पर्य्यम्।

(ब) निपुणं सम्यगित्यर्थः। निरूप्य—निश्चित्य, सविशेषदर्शनेन चारुदत्त एवायमिति सुदृढं स्थिरीकृत्य इत्यर्थः।

(भ) "प्रियं मे प्रियम्" इत्यादिग्रन्थेन चिराकाङ्क्षितदर्शनस्य प्रियस्य अप्रत्याशितसमागमेन हृष्टायाः नायिकायाः वाञ्छितसमागमलाभोपवर्णनात् वाञ्छितसमागमरूपम् आनन्दनामकं निवर्हणसन्ध्यङ्गमिदं वेदितव्यम्, "आनन्दो वाञ्छितागमः" इति दर्पणकृदुक्तेः।

(म) आवुकः,—पिता, ("अथावुको जनकः,—" इत्यमरः) परिष्वजति—आलिङ्गति; ["ष्वन्ज्ञो ञि ञ आलिङ्गने" इति गणपाठे औणादिकस्यालिङ्गनार्थकस्य ष्वन्जधातोरात्मनेपदित्वेऽपि परिपूर्व्वकस्य तस्य "परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्" इत्यादौ बहुशः परस्मैपदे प्रयोगदर्शनात् "अथाकृतमनित्यम्" इति न्यायेन परस्मैपदित्वमपीति नात्र काऽप्यनुपपत्तिरिति ध्येयम्]।

(य) वर्द्धसे—वृद्धिं गताऽसि, अवयुक्ता भवतीत्यर्थः, सम्भावितनाशस्य मे पितुः

चाह। [धूर्तां प्रति]—

**हा प्रेयसि! प्रेयसि विद्यमाने कोऽयं कठोरो व्यवसाय आसीत्?।**
**अम्भोजिनी लोचनमुद्रणं किं भानावनस्तङ्गमिते करोति?॥५७॥**

इदानीं पुनः प्राप्त्या त्वं सौभाग्यवती जाता, तेन चाहमपि सौभागिनेयः भवामीति तात्पर्य्यम्।

प्रियतमं प्राप्तप्राणदण्डं निश्चित्य ज्वलदग्निप्रवेशेन आत्मघातोद्यतां धूतामविमृश्य-कारित्वेन सादरमनुयुङ्क्ते, हेति।—हा इति शोकसूचकमव्ययम्; प्रेयसि!—हे प्रिय-तमे! [प्रियशब्दात् द्वयोरेकोत्कर्षे गम्यमाने "द्विवचन—" (५।३।५७ पा०) इति ईयसुन्, ततः स्त्रियां ङीप्] प्रेयसि—प्रियतमे, पत्यौ इत्यर्थः, विद्यमाने—वर्त्तमाने सति एवेत्यर्थः, कठोरः,—निष्ठुरः, निर्द्दय इत्यर्थः, अयम्—एषः, आचर्य्यमाणः अग्नि-प्रवेशोद्योगरूपः इत्यर्थः, कः,—कीदृशः, व्यवसायः,—उद्योगः, तवेति शेषः, आसीत्? —अभवत्? सर्व्वथा अयुक्त एवासीदिति भावः, भानौ—सूर्य्ये, अनस्तं गमिते—स्वदशम् अस्तशिखरमनधिनिश्रति सतीत्यर्थः, [गमिते इत्यत्र स्वार्थे एव णिच्-प्रत्ययो बोध्यः] यद्वा,—अनस्तं गमिते—अस्ताचलमप्रापिते, विधिना इति शेषः, [अस्मिंस्तु पक्षे गमिते इत्यत्र प्रेरणार्थे एव णिच्प्रयोगः] अम्भोजिनी—पद्मिनी, लोचनमुद्रणं—नेत्रनिमीलनं, नेत्रस्वरूपपद्मनिमीलनमित्यर्थः, करोति किम्?—विदधाति किम्? नैव करोतीत्यर्थः। मयि जीवत्येव तव अयम् अग्निप्रवेशेन प्राणपरित्यागसमारम्भरूपः निर्द्दयव्यवहारः अनुचित एवेति भावः। अत्र प्रियतमे विद्यमाने प्रेयस्याः तदर्थम् अग्निप्रवेशसमारम्भः, सवितरि अस्ताचलम् अनारूढे अम्भोजिन्याः लोचनमुद्रणमिव नितान्तमयुक्त इति समानधर्म्मवद्वस्तुद्वयस्य परस्परं बिम्बप्रतिबिम्बभावावगमात् दृष्टान्तालङ्कारः, तथा अम्भोजिनी-भान्वोः लिङ्गसामान्येन नायिका-नायकव्यवहारप्रतीतेः समासोक्तिः, किञ्च, "करोति किम्?" इत्यस्य "नैव करोति" इत्यर्थापत्तेः अर्थापत्तिश्च, इत्येतेषामङ्गाङ्गिभावेनाव-स्थानात् सङ्करः, तथा "प्रेयसि प्रेयसि" इति पदयोः स्वरव्यञ्जनसंहतेः क्रमेणावृत्त्या पादाद्य-यमकालङ्कारश्चेति पूर्व्वोक्तेन सङ्करेण सह संसृष्टिः। "अनस्तं गमिते" इत्यत्र प्रतिषेधस्य प्राधान्यावगमात् नञः प्रसज्यप्रतिषेधार्थकतया क्रियया सह एव साक्षात् अन्वयार्थं "न गमिते" इति कृत्वा प्राधान्येनैव तन्निर्द्देश उचित आसीत्, अतः तत्पुरुषसमासे पर्य्युदासतया नञः गुणीभावे विधेयत्वाभावमतेः अविमृष्टविधेयांशत्वरूपः दोषः उन्नेयः। इन्द्रवज्रा वृत्तम्॥ ५७॥

धूता। अज्जउत्त! अदो ज्जेव सा अचेदणेत्ति चुंवीअदि। * (र)

विदू। [दृष्ट्वा सहर्षम्] ही ही, भो! एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि!! अहो! सदीए पहावो!! जदो ज्जलण-प्पवेस-व्ववसाएण ज्जेव पिअसमागमं प्पाविदा। (ल) [चारुदत्तं प्रति] जेदु जेदु पिअवअस्सो। †

चारु। एहि मैत्रेय! [इत्यालिङ्गति]।

चेटी। अहो! संविधाणअं!! (व) अज्ज! वंदामि। ‡ [इति चारुदत्तस्य पादयोः पतति]।

* आर्य्यपुत्र! अत एव सा अचेतनेति चुम्ब्यते।

† आश्चर्य्यं भोः! एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते!! अहो! सत्याः प्रभावः!! यतो ज्वलन-प्रवेश-व्यवसायेनैव प्रियसमागमं प्रापिता। जयति जयति प्रियवयस्यः।

‡ अहो! संविधानकम्!! आर्य्य! वन्दे।

(र) अत एव—भानौ अनस्तमिते सरोजिन्या नेत्रानिमीलनादेवेत्यर्थः। सा—अम्भोजिनी, भवती दृष्टान्तभूता पद्मिनीति यावत्। अचेतना इति चुम्ब्यते—अचेतनेति वाचा स्पृश्यते इत्यर्थः, जडा इति जनैरभिधीयते इति यावत्; वक्त्र्या अयमाशयः,—आर्य्यपुत्र! सा हि भानुभामिनी अम्भोजिनी अचेतना, तेन एव भावि साम्यदर्शनं विभाव्य शोचितुमशक्ता, पत्युः भानोः अस्ताचलगमनात् परमेव स्वभावात् विरहक्लशा चक्षुषी निमीलयति, अहन्तु सचेतना भाविदुःखानुशीलनचमतया तव विपदार्त्ताश्रवणात् प्रागेव आत्मानं वह्नौ विस्रष्टुं प्रवृत्ता आसम्, अचेतन-सचेतनयोरयमेव विशेषः इति।

(ल) सत्याः,—पतिव्रतायाः। प्रभावः—माहात्म्यम्। यतः,—येन सतीप्रभावेनेत्यर्थः। ज्वलनेति।—ज्वलनम्—अग्निः, तत्र प्रवेशाय—गाहनाय. यो व्यवसायः,—अध्यवसायः, उद्यम इत्यर्थः तेन, ज्वलदनलावगाहोद्यममात्रेणैवेति यावत्; पतिवियुक्ता रमणी देहं विसृज्य विविधव्रताचरणजसुकृतपरिपाकेण परलोकं गत्वा एव पतिसमागमं लभते इति श्रूयते; पतिव्रताचरणीयस्य पतिवियोगानन्तरमनलप्रवेशेनात्मदहनस्य अनिर्वाच्यमाहात्म्यादियन्तु अग्नौ अप्रविश्यापि प्रवेशोपक्रमादेव सतीधर्म्मप्रकटनेन मृतप्रायं पतिं पुनर्लब्ध्वा अलौकिकपातिव्रत्यमाहात्म्यफलभूतम् इहैव तत्समागममलभतेति भावः।

(व) संविधानकं—सङ्घटनं, दैवसम्मेलनं, दम्पत्योरनयोरतर्कितमिलनं वा इत्यर्थः।

चारु। [ पृष्ठे करं दत्त्वा ] रदनिके ! उत्तिष्ठ। [ इति उत्थापयति ]।

धूता। [ वसन्तसेनां दृष्ट्वा ] दिट्टिआ कुसलिणी (श) बहि-णिआ ? *

वस। अहुणा कुसलिणी संवुत्तम्हि। † (ष) [ इति अन्योऽन्यमालिङ्गतः ]।

शर्वि। दिष्ट्या जीवितसुहृद्वर्ग (स) आर्य्यः।

चारु। युष्मत्प्रसादेन। (ह)

शर्वि। आर्य्ये वसन्तसेने ! परितुष्टो राजा भवतीं वधूशब्देन अनुगृह्णाति। (क)

* दिष्ट्या कुशलिनी भगिनी ?

† अधुना कुशलिनी संवृत्ताऽस्मि।

(श) कुशलिनी—क्षेमवती, वर्त्तते ? इति शेषः, भगिनि ! अपि कुशलं ते ? इति समुदितार्थः।

(ष) अधुना—सम्प्रत्येव, जीवन्तीं त्वां जीवन्तमार्य्यचारुदत्तञ्च दृष्ट्वेव इत्यर्थः, न तु इतः प्रागिति भावः, भवतीनां कुशलेनैव मे कुशलमिति तु फलितम्।

(स) दिष्ट्या—भाग्येनैव, न त्वन्येन केनापि हेतुनेति भावः। जीवितसुहृद्वर्गः,—जीवितः—प्राणैर्धृतः, रक्षित इत्यर्थः, सुहृदां—धूता वसन्तसेनादीनां प्रियजनानां, वर्गः,—समूहः यस्य तथाभूतः, वर्त्तते इति शेषः, भाग्यबलेनैव आर्य्यस्य सुहृद्वर्गः जीवितस्तिष्ठतीति तात्पर्य्यार्थः।

(ह) युष्मत्प्रसादेन—युष्माकमनुग्रहेण, एतेन स्वस्य विनयातिशयं प्रकटीकृतम्, ( "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी )।

(क) परितुष्टः,—स्वप्रियतमचारुदत्तकृतोपकारेण अतिप्रीत इत्यर्थः। राजा—नवनृपतिः, आर्य्यक इत्यर्थः। वधूशब्देन—वधूः,—विवाहिता स्त्री, ( "वधूर्जाया स्नुषा स्त्री च" इत्यमरः ) तच्छब्देन—"वधूः" इति पदेन, चारुदत्तस्य पाणिगृहीती धूता यथा वधूः, तथा भवती अपि वधूरेव, इदानीं न पुनर्गणिकात्वेन गण्यते इति भावः। अनुगृह्णाति—अनुग्रहं करोति, प्रसीदति इत्यर्थः, इतः पूर्व्वं वधूसम्बोधनम् अनधिगतवतीं त्वां तच्छब्देन आमन्त्र्य स्वीयां प्रसन्नतां प्रकटयति इति भावः।

वस। अज्ज ! कदत्थम्हि। * (ख)

शर्वि। [ वसन्तसेनामवगुण्ठ्य (ग) चारुदत्तं प्रति ] आर्य्य ! किमस्य भिक्षोः (घ) क्रियताम् ?

चारु। भिक्षो ! किं तव बहुमतम् ? (ङ)

भिक्षुः। इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणे मे पव्वज्जाए बहुमाणे संवुत्ते। † (च)

चारु। सखे ! दृढोऽस्य निश्चयः; तत् पृथिव्यां सर्व्वविहारेषु कुलपतिरयं (छ) क्रियताम्।

---

* आर्य्य ! कृतार्थाऽस्मि।

† इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणो मम प्रव्रज्यायां बहुमानः संवृत्तः।

---

(ख) कृतार्था—सिद्धप्रयोजना, सफलमनोरथा इत्यर्थः. चिरादाकाङ्क्षितस्य चारुदत्तवधूपदस्य लाभादिति भावः।

(ग) अवगुण्ठ्य—शिरोवसनेन तस्याः मुखम् आच्छाद्य, वधूपदेन तस्याः अलङ्कृतत्वादिति भावः, [ अवगुण्ठ्य—प्रावारकेणाच्छाद्य इति केचित्। एतेन वसन्तसेनायाः गणिकात्वपरिहारेण आर्य्यकोक्तवधूपदाभिधानस्य सार्थकता सम्पादितेति बोध्यम् ]

(घ) अस्येति पुरःस्थं भिक्षुं प्रति अङ्गुलिनिर्देशपूर्व्वकं तत्प्रदर्शनम्, अतः इदमा निर्देश इति बोध्यम्। भिक्षोः,—शाक्यश्रमणकस्य संवाहकस्येत्यर्थः।

(ङ) बहुमतम्—आदृतम्, अभीप्सितमित्यर्थः, किं ते अभिलषितमपूर्णमस्ति तत् प्रकाशय, येनाचिरादेव तत् तुभ्यं प्रदातुमस्माभिः चेष्टिष्यते इति फलितार्थः।

(च) इदं—किञ्चित् पूर्व्वमेव दृष्टमित्यर्थः। ईदृशम्—एवम्भूतम्। अनित्यत्वं—अनवस्थायित्वम्, असारत्वमित्यर्थः, सर्व्वस्यैव विषयस्येति शेषः। प्रव्रज्यायां—सन्न्यासाश्रमे। बहुमानः,—आदरातिशयः। संवृत्तः,—सञ्जातः, अतः निस्पृहस्य मे न किमपि अभीप्सितमस्ति, यत् त्वया प्रसङ्गेन साधयितव्यमिति तात्पर्य्यार्थः।

(छ) अस्य—भिक्षोः। निश्चयः,—सर्व्वमिदमनित्यमित्यादिनिर्वेदोत्पादितः सिद्धान्त इत्यर्थः। दृढः,—स्थिरः, दुरपनेयतया दृढभित्तिप्रतिष्ठित इति यावत्; अनेन अस्माकं यादृक् उपकारः कृतः, तत्प्रतिदानस्य इह असम्भवत्वेऽपि अस्मै कश्चित् राज्यांशं दत्त्वा एनं साक्षात् [illegible]भोगनिरतं करिष्यामीति मे बलवती वासना

शर्वि। यथाऽऽह (ञ) आर्य्यः।

भिक्षुः। पिअं णो पिअं।*

वस। संपदं जीवाविदम्हि ! † (झ)

शर्वि। स्थावरकस्य किं क्रियताम् ?

चारु। सुवृत्तः अदासो भवतु। ते चाण्डालाः सर्व्वचाण्डालानामधिपतयो भवन्तु। चन्दनकः पृथिवीदण्डपालको भवतु। तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्व्वमासीत्,वर्त्तमाने तथैव अस्तु। (ञ)

* प्रियं नः प्रियम्। † साम्प्रतं जीविताऽस्मि।

आसीत्, किन्तु इदानीमस्य वाक्येन एनं सङ्घारामे कृतदृढ़विश्वयमवगम्य सा परित्यज्यते इति हृदयम्। तर्हि अस्य किं क्रियतामित्याशङ्कायामाह, तदिति। – तत्—तस्मात्, प्रव्रज्याश्रमे दृढ़प्रत्ययतया संसारसुखे अनासक्तत्वादित्यर्थः। पृथिव्याम्—भुवि, विद्यमानेषु इति शेषः। सर्वविहारेषु सर्वेषु बौद्धमठेषु। कुलपतिः,—अध्यक्षः,सर्व्वमठाध्यक्षः इत्यर्थः।

(ञ) यथाऽऽह—यत् ब्रवीतीत्यर्थः, भवता यदुक्तं, तत् तथैव भविष्यतीति समुदिततात्पर्य्यम्।

(झ) वसन्तसेनाया जीवनरक्षणरूपस्य भिक्षुकृतोपकारस्य प्रत्युपकारार्थं चारुदत्तः शर्व्विलकेन भिक्षुं सर्व्वविहाराध्यक्षं कारितवान्, स्वप्रियेण चारुदत्तेन कृतस्य प्रत्युपकारिम् आत्मकृतत्वेन मन्यमाना चासौ हर्षभरात् जीविताऽस्मीति उक्तवती, उपकारिणः प्रत्युपकाराकरणे जीवितवैफल्यमिति वक्त्र्या आशयः। [ "जीवाविदम्हि" इति प्राकृतस्य "जीवापिताऽस्मि" इति संस्कृतं केचित् पठन्ति, तथात्वे,—जीवं –जीवनम्, आपिताऽस्मि— प्रापिताऽस्मि इत्यर्थः, प्रियचारुदत्तेनेति शेषः, उपकारिणः प्रत्युपकारकरणेन तत्परिशोधादिति भावः ]।

(ञ) सुवृत्तः,—सुचरित्रः, स्थावरक इत्यर्थः; [ सुवृत्तेति निर्विसर्गपाठोऽपि क्वचित् दृश्यते, तथात्वे सुवृत्तेति शर्व्विलकसम्बोधनम्। अदासो भवतु, स्थावरक इति शेषः ]। अदासः,—दासत्वविमुक्तः। पृथिवीदण्डपालकः,—पृथिव्याम्—भुवि, दण्डस्य—अपराधिनाम् अपराधोचितनिग्रहस्य, पालकः,—संरक्षकः विधायको वा, दुष्टदमनाधिकारिणां सर्वाध्यक्षः इत्यर्थः। राष्ट्रियश्यालस्य—शकारस्य [ अत्र "राजश्यालस्तु राष्ट्रियः" इत्यमरवचनात् राष्ट्रियशब्देनैव विवक्षितार्थलाभसम्भवात् श्यालपदमधिकमेवेति ध्येयम् ]। यथैव—यादृशी पूर्व्वं क्रिया—कार्य्यं, सेवकत्व

शर्वि। एवं यथाऽऽह आर्य्यः, परमिमं मुञ्च मुञ्च, (ट) व्यापादयामि।

चारु। अभयं शरणागतस्य। ("शत्रुः कृतापराधः" इत्यादि पठति)।

शर्वि। तदुच्यतां, किं ते भूयः प्रियं (ठ) करोमि ?

चारु। अतः परमपि (ड) प्रियमस्ति ?—

दानादानसम्मानसुखसम्भोगादिलक्षणो व्यापारः इत्यर्थः। पूर्वे—प्राक्, पालकस्याधिकारकाले इत्यर्थः। वर्त्तमाने—इदानीम्, अस्मदधिकारकालेऽपीत्यर्थः। ["वर्त्तमाने" इत्यत्र "वर्त्तमाना", इति पाठान्तरे,—तथैव वर्त्तमाना—सम्प्रत्यपि तथैव स्थिताऽस्तु इत्यर्थः]। अत्र दानीयपात्राणां प्रियभाषणेन सन्तोषविधानात्, तथा शत्रुमित्रनिर्विशेषेण यथायोग्यं सर्वेभ्यः आधिपत्यादिदानाच्च इदं सामदानादिरूपं भाषणं नाम निर्वहणसन्ध्यङ्गं वेदितव्यं, "सामदानादि भाषणम्" इति दर्पणलक्षणात्।

(ट) आर्य्यः,—मान्यः, चारुदत्त इत्यर्थः। यथा—यत्। आह—कथयति। एवम्—इत्थं, तथैव इत्यर्थः अस्तु इति शेषः। परं—केवलमित्यर्थः, ["एवं यथाऽऽह आर्य्यः" इत्यनेन आदेशस्वीकाररूपवाक्यार्थसमाप्तावपि पुनः "परम्" इत्यनेन प्रियसुहृदः चारुदत्तस्य प्रीतिमुत्पादयितुं तदुक्तौ स्वसम्मतिप्रदर्शनं, पुनः आततायिशकारकृतेन अयथानिर्य्यातनेन पापीयसस्तस्य दण्डविधानप्रार्थनञ्च सूच्यते]। एनं—शकारम्। मुञ्च—त्यज, [मुञ्च मुञ्चेति द्विरुक्तिस्तु शकारनिग्रहार्थम् आग्रहातिशय्यसूचिका बोध्या]। व्यापादयामि—विनाशयामि। भवता यद्यदादिष्टं तत् सर्व्वं तथैव भविष्यति, स्थावरकस्य दासत्वविमोचनं, घातुकचाण्डालयोः तत्समाजाधिपत्यं, चन्दनकस्य पृथिवीदण्डपालकत्वञ्च भवदाज्ञया अक्षुण्णमेव भवतु, केवलं तव आततायिनः शकारस्य यथापूर्व्वमवस्थानविनिमयेन बधमात्रं प्रार्थये, तस्य बधं विना मम प्रतिहिंसाया अनिवृत्तेरिति शर्व्विलकस्याशयः।

(ठ) अथेदानीं काव्योपसंहारं कर्त्तुं ग्रन्थकारः सर्वेषामभीप्सितवस्तुसम्प्रदानं नायकमुखेन समुद्दीप्य शर्व्विलकमुखेन ग्रन्थसमाप्तिमवतारयति, तदिति।—भूयः,—पुनः, अन्यदिति यावत्। प्रियं—प्रीतिजननं कर्म्मेत्यर्थः। अत्र अभिप्रेतवस्तूनां सर्वेषामेव लाभोत्कीर्त्तनात् अभिवाञ्छितदानप्राप्तिरूपं काव्योपसंहारनामकमेतत् निर्वहणसन्ध्यङ्गं वेदितव्यम्।

(ड) अतःपरमपि—अस्मादधिकमपि, स्त्रीहत्याऽपवादविमुक्ति-वसन्तसेनालाभादिरूपप्रियप्राप्तेरप्यदपीत्यर्थः।

लब्धा चारित्रशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्य्यकः शास्ति राजा ।
प्राप्ता भूयः प्रियेयं प्रियसुहृदि भवान् सङ्गतो मे वयस्यो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ? ॥ ५८ ॥

जगति यानि अभिवाञ्छितानि तानि तु प्राप्तान्येव, अतो लब्धावशेषं नास्त्यन्यदितः किमपि इति विशिष्यावेदयितुं लब्धानि वस्तूनि विशदीकृत्य प्रपञ्चयति, लब्धेति ।—चारित्रस्य—चरित्रमेव चारित्रं—सौशील्यम् इत्यर्थः तस्य, वसन्तसेनाहत्याऽपवादेन कलुषीकृतस्येति शेषः, शुद्धिः,—वसन्तसेनावधरूपात् दुरपनेयारोपितापवादात् विमुक्तिरित्यर्थः, लब्धा—संवाहक-स्थावरकादीनामनुग्रहेण प्राप्ता, मयेति शेषः ; यथा हि स्वभावशुद्धं वस्तु बाह्यैः मलीमसैः समाच्छादितं सत् प्रथमतः कलुषितं भवति, पश्चात् पावनैः सलिलैः प्रक्षालितं पुनः स्वाभाविकीं शुद्धिमुपैति, तद्वत् स्वभावशुद्धं मच्चरित्रमपि पापेन शकारेण कलुषीकृतं पुनः पुण्यात्मभिः संवाहकादिभिः विशुद्धमजनीति तात्पर्य्यम् ; एषः,—अयं, पुरतः दण्डायमानः शकारः इत्यर्थः, शत्रुरपि—रिपुरपि, सम्प्रत्येव मां घातयितुमीहमानो-ऽपीत्यर्थः, चरणनिपतितः,—पदतले पतितः, शरणागत इति यावत्, अत एव मुक्तः,—परित्रातः, दण्डविधानमकृत्वैव परित्यक्त इत्यर्थः, "विनिपातप्रतीकारः संरम्भो हि महात्मनाम्" इति स्मरणात् चरणपतनादेव सज्जनानां क्रोधः शाम्यमुपैति इति भावः ; प्रियसुहृत्—प्रियमित्रम्, आर्य्यकः —तन्नामा गोपालदारकः, प्रोत्खातम्—उत्पाटितम्, अरातीनां—शत्रूणां, मूलम्—आदिः, रिपुमहीरुहशिफाभूतपालकनृपतिरित्यर्थः येन तादृशः, [अनेन रिपुकुलस्य पुनरङ्कुरोत्पत्तिसम्भावनाऽपि निराकृता इति बोध्यम् ] अत एव राजा —नृपतिः सन्नित्यर्थः, अचलां—भुवं ("भूर्भूमिरचलाऽनन्ता" इत्यमरः) शास्ति—नियमयति, पृथिव्यां दुष्टान् निगृह्णन् शिष्टान् पालयतीत्यर्थः ; तथा इयम्—एषा मृत्युमुखात् परिभ्रष्टेति यावत्, प्रिया—प्रणयिनी वसन्तसेनेत्यर्थः, भूयः,—पुनरपि, प्राप्ता—अधिगता, एवं मे मम, वयस्यः —प्रियबन्धुः, भवान्—त्वं, शर्व्विलक इत्यर्थः, प्रियसुहृदि—प्रियमित्रे आर्य्यके मयि वा, सङ्गतः—मिलितः, अतिरिक्तम् - अधिकञ्च, एभ्य इति शेषः किं लभ्यम् ?—प्राप्तव्यम् ? अस्तीति शेषः ; अधुना—इदानीम्, अहं भवन्तं—त्वां, यत् अपरम्—अन्यत्, एभ्यः अतिरिक्तमित्यर्थः, प्रार्थये—याचे, सुहृद्भिर्भवद्भिः सम्पादितसकलेप्सिततया न किमपि मे अपरं प्रार्थयितव्यमस्तीति भावः । अत्र प्रार्थनाऽभावं प्रति पूर्व्वपादत्रयगतवाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स्रग्धरा वृत्तं,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥ ५८ ॥

कांश्चित् तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित् पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान्।
अन्योऽन्यं प्रतिपक्ष-संहतिमिमां लोकस्थितिं बोधयन्
एष क्रीडति कूपयन्त्र-घटिकान्याय-प्रसक्तो विधिः॥ ५९॥

इदानीं प्राक्तनीम् आत्मीयामवस्थां स्मरन् विधेः विलसितस्य अचिन्तनीयवैषम्यं प्रदर्शयति, कांश्चिदिति।— कूपयन्त्रं—कूपस्य—स्वनामख्यातस्वल्पपरिसरगभीरजलाशयस्य, यन्त्रं—जलोत्तोलनसाधनम्, अरघट्टापरनामकः "कपिकल" इति वङ्गभाषाप्रसिद्धः उपायविशेषः इत्यर्थः, तस्य या घटिका—क्षुद्रघटी, रज्ज्वा ग्रीवायां बद्धः जलोत्तोलनपात्रभेदः इत्यर्थः, [ ह्रस्वः ( क्षुद्रः ) घटः इति घटिका, घटशब्दात् क्षुद्रार्थे "ह्रस्वे" ( ५।३।८६ पा०) इति कन्, ततः स्त्रियां टाप् ] तस्याः न्यायः,—आचरणं, नियम इत्यर्थः, तत्र प्रसक्तः,—रतः, प्रवृत्त इत्यर्थः, तदनुरूपव्यवहारक इति यावत्, एषः विधिः,—दैवम्, अविज्ञेयप्रसर इति यावत्, अन्योऽन्यं—परस्परं प्रतिपक्षाणां—विरोधिनां, धनित्वाधनित्वोन्नत्यवनतिप्रभृतिधर्म्माणामिति यावत्, संहतिं—समष्टिरूपाम्, इमाम्—एतां, सदा सर्वैरेव अनुभूयमानामित्यर्थः, लोकस्थितिं—लोकव्यवहारं, संसारगतिमित्यर्थः, बोधयन्—ज्ञापयन् सन्, क्रीडति—दीव्यति ; [ दैवं हि पुरुषाधिष्ठितं, तेन हि आश्रयभूतस्य नमनोन्नमनेन आश्रयिणः तस्य यथात्वमव्याहतमेवेति विधेः कूपयन्त्रवद्व्यवहारः सुसङ्गत एवेति ज्ञेयम् ] कीदृशं हि तत् दैवविलसितं, येन जनाः निरन्तरं यन्त्रारूढमूर्त्तिवत् नर्त्यन्ते? इति तदेव विशदीकृत्याह, कांश्चिदिति।—अयं विधिः कांश्चित्—कियतः, जनान् इति शेषः, तुच्छयति—तुच्छान्—निर्धनत्वाल्लोकैः घृणितान्, धनमानादिराहित्येन सारभूतानपि असारान् करोतीत्यर्थः ; [ तुच्छान् करोति इति तुच्छशब्दात् "तत्करोति तदाचष्टे" ( वा० ) इति णिचि तुच्छिनामधातोर्लटि रूपम् ] कांश्चित्—कियतः, तुच्छानपि जनानित्यर्थः, प्रपूरयति—धनमानादिभिः पूर्णान् करोति ; कांश्चित् उन्नतिं—वृद्धिं, नयति—प्रापयति, उन्नतपदारूढान् करोतीत्यर्थः ; कांश्चित् पातविधौ—पातनविषये, करोति—स्थापयति, अधः पातयतीत्यर्थः ; पुनः कांश्चित् आकुलान्—विविधदुर्घटनादिभिः व्याकुलान्, शोकमोहादिभिर्विपर्य्यस्तानित्यर्थः, नयति—करोतीत्यर्थः, कूपयन्त्रस्य सञ्चलनजनितोन्नमनावनमनाद्यनुसारेण तन्निबद्धा घटिका अपि यथा चालिता सती उन्नता अवनताः पूर्णा रिक्ताश्च भवन्ति, तथा दैवस्य प्रातिकूल्यानुकूल्यादिवशात् शरीरिणोऽपि इत्यहो! अविभावनीयमेतत् विधेः विलसितमिति भावः। अत एकस्यैव विधेः तुच्छी-

तथाऽपि इदम् अस्तु भरतवाक्यम्, (ढ)—
क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्व्वसम्पन्नशस्या
पर्जन्यः कालवर्षी सकलजनमनो-नन्दिनो वान्तु वाताः।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्म्मनिष्ठाश्च भूपाः॥ ६० ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति संहारो नाम दशमोऽङ्कः॥ १० ॥

करणाद्यनेकक्रियाभिः कर्त्तृत्वेनाभिसम्बन्धात् दीपकालङ्कारः। शार्दूलविक्रीडित वृत्तम्॥ ५९ ॥

(ढ) तथाऽपि—सर्व्वविधे प्रियकर्म्मणि सम्पन्नेऽपि यदि अन्यत् किञ्चित् प्रियप्रार्थनं विद्यते, तदा इत्यर्थः। इदं—वक्ष्यमाणरूपमित्यर्थः। भरतवाक्यं—भरतस्य—तदाख्यनाट्यशास्त्रप्रवर्त्तकमुनिविशेषभूमिकाऽवलम्बिनः नटस्य, वाक्यं—वचनम्, इष्टार्थाशंसनसूचकवचनरचनमित्यर्थः; नाट्याचार्य्ये भरते तच्छास्त्रोपजीविनां स्वेषां प्रगाढ़ां भक्तिं सूचयितुं तद्वाक्यत्वेन स्ववाक्यमवतारितमिति ज्ञेयम्। अत्र नाट्यारम्भमुखेणैव जगतः शान्तिसंस्थापनप्रार्थनापरत्वेन नटेनोत्कीर्त्तितं प्रजापालकानां श्रीमतां राज्ञां तच्छासितानां देशानां शुभस्य शान्तेश्चाशंसनरूपं प्रशस्तिनामकं निर्वहणसन्धेः चरममङ्गमिदं वेदितव्यं, "नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति दर्पणोक्तलक्षणात्।

तदेव भरतवाक्यमाह, क्षीरिण्य इति।—गावः,—सौरभेय्यः, क्षीरिण्यः,—दुग्धवत्यः, सन्तु—भवन्तु, परम्परया आज्याद्युत्पादकतया तासामेव सृष्टिमूलत्वादिति भावः, वसुमती—पृथिवी, सर्वसम्पन्नशस्या—सर्वतोभावेन सम्पन्नानि—परिपूर्णानि, शस्यानि—यवगोधूमादीनि यस्यां तादृशी, विविधशस्यपरिपूर्णा इत्यर्थः; यद्वा,—सम्पन्नानि—अतिवृष्ट्याद्यात्मक-ईतिरूपप्रतिबन्धरहिततया सुपक्वानि, यानि शस्यानि—वृक्षादीनां फलानि, "वृक्षादीनां फलं शस्यम्" इत्यमरोक्तेः, तथा कलम-कलायादीनि क्षेत्रगतानि च, "शस्यं क्षेत्रगतं प्राहुः" इत्युक्तेः, ततश्च, सर्व्वाणि—विविधानि, सम्पन्नशस्यानि यस्यां तथाविधा, विविधस्वादुफलसुगन्धिकुसुमसुपक्वशस्य-प्रभृतीनि यावत्, भवतु—अस्तु; पर्जन्यः,—मेघः, काले—यथासमये, वर्ष—वारि ददाति ... तादृशः, भवतु इति शेषः; वाताः,—वायवः, सकलजन ... सर्वलोकानां, मनः

—चेतांसि, नन्दयन्ति—उत्फुल्लयन्तीति तथोक्ताः सन्तः, धान्तु—वहन्तु ; जन्मभाजः,—जन्मिनः, उत्पत्तिमन्तः प्राणिनः सर्वे इत्यर्थः, मोदन्तां—हृष्यन्तु, सुखेन तिष्ठन्तु इत्यर्थः ; ब्राह्मणाः—विप्राः, सततं—सर्व्वदा, अभिमताः,—यथाविधि स्वधर्म्मस्य अनुष्ठानवन्तः, सर्वेषां हितकारितया वर्त्तमानत्वात् सर्व्वत्र समं समादृता इति वा, तथा सन्तः,—साधवः, सदाचारपरायणा इत्यर्थः, सन्तु—भवन्तु ; च—तथा, श्रीमन्तः,—लक्ष्मीवन्तः, प्रशमिताः,—निराकृताः, रिपवः—शत्रवः यैः तादृशाः, निष्कण्टकाः, पराक्रमशालिन इत्यर्थः, धर्म्मनिष्ठाः,—धर्म्मपरायणाः, भगवन्मनुप्रदर्शितराजधर्म्मानपालिन इत्यर्थः, भूपाः,—नृपतयः, पृथ्वीं—धरणीं, पान्तु—रक्षन्तु, दुष्टान् दण्डयन्तु शिष्टांश्चानुपालयन्त्वित्यर्थः । "अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्तमाम्" इति सारस्वतालङ्कारवचनात् स्वरचितकाव्यान्ते कविना निबद्धा नायकाभिलाषानुसारिणी आशीरियमित्यपि बोध्यम् । स्रग्धरा वृत्तमिदम् ॥ ६० ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन पण्डितकुलपतिना बि, ए. उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायाममलाख्यायां मृच्छकटिकव्याख्यायां

दशमोऽङ्कः ॥ १० ॥



तथाऽपि इदम् अस्तु भरतवाक्यम्, (ढ)—

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्व्वसम्पन्नशस्या
पर्जन्यः कालवर्षी सकलजनमनो-नन्दिनो वान्तु वाताः।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्म्मनिष्ठाश्च भूपाः॥ ६०॥

[इति निष्क्रान्ताः सर्वे]।

इति संहारो नाम दशमोऽङ्कः॥ १०॥

करणाद्यनेकक्रियाभिः कर्त्तृत्वेनाभिसम्बन्धात् दीपकालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ५९॥

(ढ) तथाऽपि—सर्व्वविधे प्रियकर्म्मणि सम्पन्नेऽपि यदि अन्यत् किञ्चित् प्रियप्रार्थनं विद्यते, तदा इत्यर्थः। इदं—वक्ष्यमाणरूपमित्यर्थः। भरतवाक्यं—भरतस्य—तदाख्यनाट्यशास्त्रप्रवर्त्तकमुनिविशेषभूमिकाऽवलम्बिनः नटस्य, वाक्यं—वचनम्, इष्टार्थाशंसनसूचकवचनरचनमित्यर्थः; नाट्याचार्य्ये भरते तच्छास्त्रोपजीविनां स्वेषां प्रगाढ़ां भक्तिं सूचयितुं तद्वाक्यत्वेन स्ववाक्यमवतारितमिति ज्ञेयम्। अत नाट्यगुरुमुखेनैव जगतः शान्तिसंस्थापनप्रार्थनापरत्वेन नटेनोत्कीर्त्तितं प्रजापालकानां श्रीमतां राज्ञां तच्छासितानां देशानां शुभस्य शान्तेश्चाशंसनरूपं प्रशस्तिनामकं निर्वहणसन्धेः चरममङ्गमिदं वेदितव्यं, "नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति दर्पणोक्तलक्षणात्।

तदेव भरतवाक्यमाह, क्षीरिण्य इति।—गावः,—सौरभेय्यः, क्षीरिण्यः,—दुग्धवत्यः, सन्तु—भवन्तु, परम्परया आज्याद्युत्पादकतया तासामेव वृष्टिमूलत्वादिति भावः, वसुमती—पृथिवी, सर्वसम्पन्नशस्या—सर्वतोभावेन सम्पन्नानि—परिपूर्णानि, शस्यानि—यवगोधूमादीनि यत्र तादृशी, विविधशस्यपरिपूर्णा इत्यर्थः; यद्वा,—सम्पन्नानि—अतिवृष्ट्याद्यात्मक-ईतिरूपप्रतिबन्धरहिततया सुपक्वानि, यानि शस्यानि—वृक्षादीनां फलानि, "वृक्षादीनां फलं शस्यम्" इत्यमरोक्तेः, तथा कलम-कलायादीनि क्षेत्रगतानि च, "शस्यं क्षेत्रगतं प्राहुः" इत्युक्तेः, ततश्च, सर्व्वाणि—विविधानि, सम्पन्नशस्यानि यस्यां तथाविधा, विविधस्वादुफलसुगन्धिकुसुमसुपक्वशस्यसमूहेति यावत्, भवतु—अस्तु; पर्जन्यः,—मेघः, काले—यथासमये, वर्षति—वारि ददाति यः तादृशः, भवतु इति शेषः; वाताः,—वायवः, सकलजनानां—सर्व्वलोकानां, मनांसि

—[illegible] दयन्ति—उत्फुल्लयन्तीति तथोक्ताः सन्तः, वान्तु—वहन्तु ; जन्मभाजः,—जन्मिनः, उत्पत्तिमन्तः प्राणिनः सर्व्वे इत्यर्थः, मोदन्तां—हृष्यन्तु, सुखेन तिष्ठन्तु इत्यर्थः ; ब्राह्मणाः—विप्राः, सततं—सर्व्वदा, अभिमताः,—यथाविधि स्वधर्म्मस्य अनुष्ठानवन्तः, सर्व्वेषां हितकारितया वर्त्तमानत्वात् सर्व्वत्र समं समादृता इति वा, तथा सन्तः,—साधवः, सदाचारपरायणा इत्यर्थः, सन्तु—भवन्तु ; च—तथा, श्रीमन्तः—लक्ष्मीवन्तः; प्रशमिताः,—निराकृताः, रिपवः—शत्रवः यैः तादृशाः, निष्कण्टकाः, पराक्रमशालिन इत्यर्थः, धर्म्मनिष्ठाः,—धर्म्मपरायणाः, भगवन्मनुप्रदर्शितराजधर्म्मानुपालिनः इत्यर्थः, भूपाः;—नृपतयः, पृथ्वीं—धरणीं, पान्तु—रक्षन्तु, दण्ड्यान् दण्डयन्तु शिष्टांश्चानुपालयन्त्वित्यर्थः। "अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्तमाम्" इति सारस्वतालङ्कारवचनात् स्वरचितकाव्यान्ते कविना निबद्धा नायकाभिलाषानुसारिणी आशीरियमित्यपि बोध्यम्। स्रग्धरा वृत्तमिदम् ॥ ६० ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन पण्डितकुलपतिना बि, ए. उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायामामलाख्यायां मृच्छकटिकव्याख्यायां

दशमोऽङ्कः ॥ १० ॥

